॥ श्रीः ॥

# समर्पणम् ।

दिव्ये सौगतदीप्तदावपतिते श्रौताख्यधर्मद्रुमे
यस्तं शङ्करमस्करीन्द्रजलमुग्रूपो ह्यरक्षत्पुरा ।
योऽनन्यान्भजकान्फलत्यविरतं चिन्तामणिः केवल-
स्तस्य श्रीकमलेश्वरस्य चरणे भृङ्गायते वामनः ॥ १ ॥

दत्तात्रेय-विरूपाक्ष-वैद्यनाथमुनीन्क्रमात् ।
वन्दे व्याकरण-न्याय-मीमांसाशास्त्रसद्गुरून् ॥ २ ॥

पितृकल्पो मम भ्राता दत्तात्रेयोऽतिवत्सलः ।
गङ्गाजलान्तरङ्गा च सत्यभामा प्रजावती ॥ ३ ॥

स्वाहाहविर्भुजौ किं नु ब्रह्मवर्चसभास्वरौ ।
आहिताग्नी सदाचारौ तथा तौ सोमपीथिनौ ॥ ४ ॥

सत्त्वश्रद्धागुणौ मूर्तौ छायेवाऽन्योन्यसंश्रयौ ।
तावहं दम्पती नौमि धियो नैर्मल्यसिद्धये ॥ ५ ॥

श्रीजानकीरामचन्द्रकृपातः कमलेश्वरे ।
वामनेनार्प्यते दर्शपूर्णमासप्रकाशकः ॥ ६ ॥

---

॥ श्रीशंकरः शरणम् ॥

---

समुपजोषमद्य माकाश्यं नीयते दर्शपूर्णमासप्रकाशः स्वोपज्ञः पण्डितवरेण्यैश्चुलुकितव्याकरणमीमांसापाथोभिरस्मत्प्रियसुहृद्भिर्मीमांसाशिरोमणिभिः किंजवडेकराख्यवामनशास्त्रिभिरिति यत्सत्यमधिरोहामः परां किल काष्ठामानन्दस्य ।

तथा तथा किल सोऽयं प्रकाशयति प्रबन्धो दार्शपौर्णमासिकान् मन्त्रद्रव्यदेवतादिकान् पदार्थानध्येतॄणामनुशीलयितॄणां च, यथा यथा मुहुर्मुहुः पापठ्यतेऽनुशील्यते च । नैकोऽपि तथाविधो विषयोऽवशिष्यते दर्शपूर्णमासयोर्योऽत्र मीमांसाप्रयोगशास्त्रैकवाक्यताप्रदर्शनपुरःसरं यथासंप्रदायं विमृश्य साधकबाधकप्रमाणजातानि न मीमांसितो ग्रन्थकृता, यश्च पक्षप्रतिपक्षपरिग्रहपूर्वकं विमृश्य न निर्धारितः । इति नैतत्परोक्षं प्रेक्षावताम् । यद्यपि नाऽऽवश्यकं निसर्गत एव हृदयंगमविषयभासुरस्यास्य प्रबन्धस्य प्रास्ताविकवि[illegible]खनं तथाऽपि समुदाचारः प्रतिपत्तव्य इति किंचिदिव प्रस्तूयते प्रबन्धेऽ[illegible]मुनितदेवापूर्वतामाचष्टे यत्—अद्य यावदुपलब्धेषु श्रौतनिबन्धेष्वप्रतिपादित[illegible]र्शपूर्णमासाप्रयोगशास्त्रयोः संवादफलको विचारः प्रादुर्भावितः ।

अत्र केचित्प्रत्यवतिष्ठन्ते—ननु भोः कुतोऽयमाटोपः प्र[illegible]
यावता दर्शपूर्णमासादीनि श्रौतानि कर्माणि महान्तमाया[illegible]
नानि शुभानेवोदर्कान् प्रसुवीरन्, न पुनरननुष्ठीयमाना[illegible]
योऽयं यदनुष्ठीयन्ते कर्माणि, शुभोदर्कमनाकाङ्क्ष[illegible]
परिजह्युः श्रौतानि कर्माणि, न पुनस्ततो मनागपि[illegible]

नैतन्मनोज्ञम्—एतावता पूर्वपक्षिभि[illegible]
नास्तीति ननु प्रतिपिपादयिषितोंऽशः । [illegible]
परःशतानि प्रमाणवचनानि अग्न्या[illegible]
नामवश्यानुष्ठेयत्वरूपं नित्यत्वमक्त[illegible]
ष्यन्ति । तथा हि " नानाहिताग्नि[illegible]
" यावज्जीवं दर्शपूर्णमासाभ्यां[illegible]
इत्यादीनि वचांसि वीप्सा[illegible]

स्पष्टमेवाकरणे प्रत्यवायजनकत्वं बोधयन्ति । नित्यत्वं नैमित्तिकत्वं चावश्यानुष्ठे-
यत्वरूपं परिष्क्रियमाणं फलतः, अकरणे प्रत्यवायजनकत्व एव पर्यवसास्यति ।
यथा चैतत्तथा पराक्रान्तं टुप्टीकातन्त्ररत्नादिप्रबन्धरत्नेषु भट्टपादपार्थसारथिमि-
श्रप्रभृतिभिः । किंच "यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं
गच्छति" इति गौतमवचनात् "यस्य" "सः" इति शब्दाभ्यां तादृशसंस्का-
राभाववतः पुंसो ब्रह्मसंपत्त्यभावो द्योत्यते । तेषु च संस्कारेषु दर्शपूर्णमास-
ज्योतिष्टोमादीनि श्रौतकर्माणि परिगणितानि नित्यत्वं चाकरणे प्रत्यवाया-
पादकत्वम् । नैमिकत्वं तु स्वान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकानुष्ठान-
कत्वं पर्यष्कारि प्राच्यैर्दार्शनिकैः । तत्रोभयत्राप्यनुष्ठानाभावे प्रत्यवैति पुमा-
न्नित्यविशिष्टम् । अत एव श्रुतिस्मृतिसूत्रेष्वकुर्वतः पातकित्वश्रवणम् । "अकु-
र्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते
नरः ॥" "यस्याग्नौ न क्रियते न तद्भोक्तव्यम् ।" इति । कल्पयांबभूव
भगवानापस्तम्बोऽपि सूत्रप्रबन्धेनानुष्ठानातिशयं सूत्रयन्दर्शपूर्णमासयोर्नि-
त्यताम् । यथा—"ताभ्यां यावज्जीवं यजेत" "त्रिंशतं वर्षाणि"
जीर्णो वा विरमेत" इति । ईश्वरस्मृतिरपि यज्ञादिकर्मणामवश्यानुष्ठेयत्वमभि-
अकरणे प्रत्यवायं प्रत्याययति—"यज्ञदानतपःकर्म न त्याज्यं कार्यमेव
तस्य तु संन्यासः कर्मणो नोपपद्यते ॥" इति । अत एव च भगवान्
पि— सूत्रयांबभूव "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "विहि-
कर्मापि" अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति । भग-
पि—"आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि
ग्निहोत्रं जुहोतीत्यादिना विहितत्वादिति व्याचख्यौ ।
र्णमासादीनां कोऽधिकारीति चिन्तायां निरणायि भग-
क्षणे विधेः प्रवर्तकत्वस्य सर्वमीमांसकसंप्रतिपन्न-
विधयोऽपि प्रवर्तका इत्येव मन्तव्यम् । प्रवर्तना
यन्ती भावनायामिष्टभाव्यकत्वं बोधयति ।
पुरुष एवाधिकारी; फलस्वाम्यं हि
"जातपुत्रः कृष्णकेशोऽग्नीनादधीत"
र्थी समर्थो विद्वानित्यधिकारलक्षण-

प्रधानानामितिकर्तव्यताकाङ्क्षायां केनचित्साद‍ृश्येन प्रकृतिविकृतिभावं पर्यालोच्य प्रकृतिभूतादेव कर्मणोऽङ्गानि अतिदेशेन नीयन्ते, इतीयं मर्यादा मीमांसकानाम् । "प्रकृतिवद्विकृतिः कर्तव्या" । इति ह्यतिदेशवाक्यम् । दर्शपूर्णमासाख्यं च कर्म तेन तेन साद‍ृश्येन सर्वासामपि राजसूयाश्वमेधवाजपेयप्रभृतिकर्माङ्गाणामन्यासामपि नित्यनैमित्तिककाम्यानामिष्टीनां प्रकृतिभूतं सत्स्वान्येवाङ्गजातान्यतिदेशेनोपसंक्रामयति । तत्र तत्र, एतदीयान्यङ्गान्यविज्ञाय, अन्या इष्टयः कथमपि नानुष्ठातुं पार्यन्त इति दर्शपूर्णमासप्रकाशं निर्मिमाणैः श्रीवामनशास्त्रिभिर्बहु किलोपकृतं धर्म्यद्विजवर्गेषु । सोऽयं प्रकृतिविकृतिविचारो महामुनिना सप्तमाष्टमयोः सामान्यतो विशेषतश्च भूयसा प्रपञ्चेनोपावर्णि, इति तत्रैव विकीर्यतां दृष्टिः संख्यावद्भिः ।

अथ केचिदाशङ्केरन्—"दर्शपूर्णमासादीनां नित्यकर्मणां यथावत् सर्वाण्यङ्गान्यनुष्ठातुं दुष्कराणीति तत्परित्यागे च कर्मवैकल्यं तस्मिंश्च सति वैयर्थ्यं सप्रयाससमाचरितानां कर्मणाम् । सर्वथा च कर्मपरित्यागे प्रत्यवाय एवेति सेयमुभयतस्पाशा रज्जुर्धार्मिकं बाढमासञ्जयति । कथमिमां विच्छिद्य मोक्ष्यतां तपस्वीति । तामिमामाशङ्कां पर्यहार्षीन्मीमांसकपरमेश्वरो महामुनिर्जैमिनिः षष्ठे सर्वशक्त्युपसंहाराधिकरणे । तत्र हि—"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्यादिवाक्येषु किं सर्वाङ्गोपसंहारेणैवाधिकार उत यावच्छक्यमेवाङ्गजातमुपसंहृत्येति विशय्य सर्वाङ्गयुक्तमेव प्रधानं फलं प्रसवितुं प्रभवति न केनचिदङ्गेन विना कृतमिति पूर्वपक्षं प्रापय्य सिद्धान्तितम्—दर्शपूर्णमासशब्दप्रतिपाद्या आग्नेयादयः षड्यागा यावज्जीवपदवाच्यजीवननिमित्तत्वेन संबध्यन्ते । निमित्तस्य चैष स्वभावो यन्नैमित्तिकमनुष्ठापयति नैमित्तिकाश्च प्रकृते, आग्नेयादय एवेति जीवने निमित्ते तेषामनुष्ठानमावश्यकत्वं प्राप्नुयाद्गृह्णीयाच्च यथासंभवमङ्गानि तावतैव च शास्त्रवशात्फलसिद्धिरिति । अतो यथासंभवमङ्गान्युपसंहृत्यानुष्ठिते प्रधाने न किंचिदप्यवद्यमिति विच्छिन्नैवोभयतस्पाशा रज्जुः ।

प्रयोगयाथात्म्यज्ञानाय च तत्र तत्रानेन ग्रन्थकृता मीमांसान्यायप्रदर्शनपूर्वकं निरणायिषत ते ते विप्रतिपन्ना विषयाः । ननु किं पुनः प्रयोजनं मीमांसाशास्त्रस्य जाग्रत्सु यथावत्प्रदर्शकेषु कल्पसूत्रेष्वित्येतच्चोद्यमवतरति । तत्र ब्रूमः—न खलु मीमांसामन्तरा यथाशास्त्रं कर्माऽऽचरितुं धृष्णुयाद्विचक्षणः कोऽपि । आचष्टे च तत्रभवान् भट्टकुमारिलः—

स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १ ॥
केचिदाहुरसावर्थः केचिन्नासावयं त्विति ।
तन्निर्णयार्थमप्येतत्परं शास्त्रं प्रणीयते ॥ २ ॥ इति ।

सत्स्वपि कल्पसूत्रेषु यथावदाचारविधायकेष्वापाततस्तदर्थमभिसंधाय यथाभिलषितमाचारानन्यथयन्ति भूयांसः । अन्यथयन्तोऽपि न विमनायन्ते । केन वाऽत्र निदानेन भाव्यमिति चेद्विमृश्येत तदा मीमांसाशास्त्रानभिज्ञत्वमेव हेतुरिति प्रतिपद्येत । अतो ह्यवश्यमेवाध्येयं याज्ञिकंमन्यमानैर्मीमांसाशास्त्रम् । यथावन्मीमांसानवबोधेन कथं कदर्थ्यन्ते प्रयोगा इत्येतत्केषुचिद्विषयेषु प्रदर्शयितुमिच्छामः—अथ केचित्प्रद्विषन्तो वैदिककर्माणि, आचक्षाणाश्च तेषां कलियुगेऽननुष्ठेयत्वं, प्रदर्शयन्तश्चान्यार्थानि प्रमाणानि, व्यामोहयन्त्यर्धमुग्धानां हृदयानि तेषामियं प्रक्रिया "अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ।" इति स्मृतिवचनेन, कलिवर्ज्यप्रकरणे, अग्न्याधानाग्निहोत्रादेः कलौ निषिद्धत्वादननुष्ठानमेव श्रौतकर्मणामीदृशे कालेये काले वरमिति । किंच "चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता" । इत्यनेन चतुःशताधिकचतुःसहस्राब्दोत्तरत्वविशिष्टकलिकालत्वावच्छेदेन त्रेतापरिग्रहपदोपलक्षिताग्न्याधेयसंन्यासयोर्निषेधाच्च वर्जनीयत्वमेव सिद्धम् । न च भ्रमितव्यम् । "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे" । इत्यनेन पूर्वोक्तनिषेधयोरपवाद एव प्रोक्त इति । चातुर्वर्ण्यसद्भावस्य पूर्वोक्तचतुःशताधिकचतुःसहस्राब्दरूपकलियुगे प्राक्तनभाग एव संभाव्यमानत्वेन यावद्वर्णविभाग इतिवचनस्य पूर्वोक्तनिषेधापवादकत्वायोगात् । नाप्याशङ्कनीयम्—"अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया ॥ इति निर्णयसिंधूदाहृतवचनेन" सर्वाधानस्य निषेधः पूर्वयुगाश्रय इति पदस्वारस्यात्, न पुनरर्धाधानस्येतिव्यवस्थायाः सूपपादत्वमिति । उक्तयुक्त्या "चत्वार्यब्दसहस्राणि, यावद्वर्णविभागोऽस्ति" इतिवचनयोरेकवाक्यत्वप्रतिपादनाच्चतुःशताधिकचतुःसहस्राब्दोत्तरकलिकाले कस्याप्याधानस्याननुष्ठानसिद्धेः, इति ।

तदेतदज्ञानविजृम्भितम् । यावद्वर्णविभागोऽस्तीत्यादिवचनस्य हि एष समञ्जसतमोऽर्थः—यथावर्णविभागो नाम वर्णव्यवस्था सा च परस्परमसंकीर्ण

स्वरूपा । तथा च, असंकीर्णपरस्परधर्मकब्राह्मणाब्राह्मणप्रातिनैयत्यमनेन पदेन लभ्यते,। तथा वेदः प्रवर्तते इत्यस्यापि सकलश्रौतकर्मानुष्ठानोपयोगिकल्प सूत्रादिप्रयोगप्रबन्धसाहित्येन वेदप्रचाररूपोऽर्थो विवक्षितः । अत एव च वर्तेत इत्यनुक्त्वा प्रवर्तेत इत्युपसृष्टस्य प्रयोगः स्वारस्यमश्नुते । तथा च कलावपि यावति काले कल्पसूत्रादिसहितः श्रौतकर्मोपयुक्तः सकलवेदप्रचारोऽसंकीर्णधर्मकब्राह्मणादिवर्णसद्भावश्च जागर्ति तावति काले श्रौतकर्मणामनुष्ठानं तावत्येव च काले श्रौतस्मार्तकर्मानुष्ठाननिष्ठवरिष्ठश्रोत्रियागारेष्वपेक्षितभिक्षालाभसंभवाद्भिक्षूणामपि पारिव्राज्यग्रहणं युक्ततरमिति ।

" अग्न्याधेयं, गवालम्भं, चत्वार्यब्दसहस्राणि " इत्यादिना निषेधस्तु साङ्गवेदसंपन्नानेकश्रोत्रियब्राह्मणसाहाय्यसाध्यानां श्रौतकर्मणां कलौ दुष्करत्वाभिप्रायेण नेतव्यः, वस्तुतस्तु श्रीमत्कमलाकरभट्टादिभिरभ्युपेता व्यवस्था प्रशस्ततरा प्रतिभाति । तर्हि " चत्वार्यब्दसहस्राणि " इति वचनस्य " अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया " इति लौगाक्षिवचनानुसारेण कलिपूर्वभागे चतुःशताधिकचतुःसहस्राब्दात्मके सर्वाधानं कुटीचकादिसर्वविधसंन्यासं चाङ्गीकृत्य तदुपरितनभागे सर्वाधानकुटीचकादिसंन्यासनिषेधपरत्वमिति व्याख्याय यावद्वर्णविभागवचनसिद्धकालपर्यन्तमर्धाधानपारमहंस्ययोश्चाऽऽचरणं निष्प्रत्यूहमिति सामञ्जस्यमुपावर्णि ।

कौस्तुभकृतस्त्वमुमेवार्थं भङ्ग्यन्तरेण समर्थयन्ति—लौगाक्षिवचनगतस्य पूर्वयुगाश्रयेत्यस्य कृतयुगाश्रयेत्यर्थकत्वम् । श्रौतस्मार्ताग्निपृथक्कृत्यैक्ययोरुभयोरपि कृतयुगाश्रयत्वप्रतिपादनं स्तुत्यर्थम् । "वसन्ते ब्राह्मणोऽग्निमादधीत " " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इत्यादिशास्त्रेण सार्वकालिकत्वेन प्राप्तयोः सर्वविधाधानसर्वविधसंन्यासयोश्चत्वार्यब्दसहस्राणीति वचनेन चतुःशताधिकचतुःसहस्राब्दोत्तरत्वविशिष्टकलित्वावच्छेदेन, अग्न्याधेयं गवालम्भमिति वचनेन सामान्यतः कलिकालत्वावच्छेदेन च प्रतिषेधप्रसक्तौ तत्प्रतिप्रसवार्थं वचनमिदं प्रवृत्तं ' यावद्वर्णविभागोऽस्ति ' इति । प्रसक्तप्राप्तिकस्य प्रमाणान्तरेण निषेधप्रसक्तौ पुनर्विधानं प्रतिप्रसव इति तल्लक्षणमाचक्षतेऽध्वरमीमांसका इति ।

अपरे पुनरेनमेवांशं प्रकारान्तरेणोपपादयन्ति–" चत्वार्यब्दसहस्राणि " इति वचने " कलेर्यदा गमिष्यन्ति " इत्यत्र, आगमिष्यन्तीति पदं विभज्य

कलिसंबन्धीनि आगमिष्यन्ति, अब्दसहस्राणि, अब्दशतानि, च यदा चत्वारि चत्वारि संपद्यन्ते तदुपलक्षिते, अल्पावशिष्टे कलितुरीयपादेऽन्या-धेयं पारिव्राज्यं न कर्तव्यमित्यर्थः। अत एव च चतुःशताधिकचतुःसहस्राब्दो-त्तरकालिकानां श्रीपरशिवावतारश्रीचिदम्बरदीक्षितश्रीमदप्पय्यदीक्षितप्रभृतीनां सर्वतन्त्रस्वतन्त्राणामग्न्याधेयपूर्वकसाग्निचित्यमहाव्रतप्रभृति महायागानुष्ठानं, तत्समकालिकत्वेनैव संभाव्यमानानां श्रीमधुसूदनसरस्वतीब्रह्मानन्दसर-स्वतीप्रभृतीनां सर्वज्ञशिरोमणीनां पारमहंस्यमपि सामञ्जस्यमश्नुत इति।

स्थिते चैवं महानिबन्धसदाचाराद्यनुरोधिनि शास्त्रार्थे मन्दमतिव्यामो-हनमात्रफलकमाधानादीनां कलिनिषिद्धत्वप्रतिपादनेन यत्केषांचिच्छास्त्रार्थ-व्याकुलीकरणं तत्किं सत्पथप्रद्वेषमूलकं स्यात्, उत शास्त्रतत्त्वार्थाप्रतिपत्तिनि-मित्तकमाहोस्विदुभयमूलकमेव भवेदिति स्वयमेव विदांकुर्वन्तु विचक्षणव-रेण्या इति॥

इदं चैकमपरं पण्डितमानिभिः कैश्चिदुद्भाव्यमानं चोद्यं नः कर्णपथमव-तरति, यत्— यदिदं दर्शपूर्णमासादि कर्मजातं, यश्च तच्चोदको भागः, अकृतकानां वचसां, स सर्वोऽप्यविद्यावद्विषय एव। सर्वो वैदिको लौकिकश्च व्यवहार आत्मानात्मनोरितरेतराध्यासं पुरस्कृत्यैव प्रावर्तिष्टेति श्रुतीनामेव, अप्रामाण्यापत्तौ द्रागेव तदुपजीविनां कर्मवृन्दानां भ्रान्तिमूलकत्वम्। तथा च सप्रपञ्चं प्रत्यपीपदन् भगवत्पादाः— "तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि च शास्त्राणि च" इति। तस्माद्विफलः खल्वयं प्रयासो दर्शपूर्ण-मासादिश्रौतकर्मप्रतिपादकानां प्रबन्धानां प्रणयनं नाम, सर्वथा तदिदमकुड्ये चित्रायितमिति।

तत्र चैषा समाहितिः प्रतिपत्तव्या। बाढम्। हन्त वेदान्तरीत्या, अधिक्षि-पसि चेत्कर्माणि महान्नः प्रमोदः। यदि पुनरधिक्षिपन् संसारमूलमध्यासं प्रवाहतोऽनादिमुत्तीर्णोऽसि तदा, अभिवन्दामहे पादौ। यदि च लीयसेऽ-नाद्यविद्याजलधौ तदा न जात्वपि त्वां मोक्ष्यन्ति श्रौतानीमानि कर्माणि। कः खल्वाचष्टे, अद्वितीयब्रह्मवादी श्रुतीनां पारमार्थिकं प्रामाण्यम्। किं तु सांव्यावहारिकं प्रामाण्यं प्रत्येति जातु निशातमतिः। तच्च व्यवहारकालाबा-ध्यत्वं ब्रह्मज्ञानेतराबाध्यत्वं वा व्यवहारकालश्चाविद्यावच्छेदकः समयः। अक-र्त्रभोक्तृब्रह्मात्मैकत्वविज्ञानेन समूलमुन्मथिते पुनरध्यासे 'वेदा अवेदा भवन्ति' इत्यादिश्रुतिभिः "न शास्त्रं न शिष्यो न शिक्षा न शास्ता" इत्याद्य-

भियुक्तोक्तिभिश्चाऽऽत्माभिन्नस्य सर्वस्याप्यपारमार्थिकत्वमिति महाजनक्षुण्णः पन्थाः। यदा पुनरसङ्ग आत्मनि मानुषत्वब्राह्मणत्वगृहस्थत्वादीनि पूर्वपूर्वाभ्यासपरम्परया समनुगतान्यध्यस्यसि तदा वेदप्रामाण्यं तद्विहितकर्मानुष्ठानं चावश्यं प्रतिपत्तव्यम्। अद्वितीयात्मवेदिनश्च किं नु खल्ववशिष्यते 'कार्यं कर्ता करणं चेति'' ज्ञेयं ज्ञानं ज्ञाता चेति' अतः फल्गुतरोऽयं कर्मणामुपालम्भः। यथा चैतत्तथा सप्रपञ्चं सोपपत्तिकं च शारीरकभाष्यभाट्टवार्त्तिकप्रभृतिमहानिबन्धेषूपपादितं तच्च तत्रैवानुसंधेयं तत्त्वधिषणैरिति विरमामः।

अस्मिंश्च दर्शपूर्णमासप्रकाशे ग्रन्थकृदुपन्यभान्त्सीदध्येतॄणां सौकर्याय निम्ननिर्दिष्टान् विषयान्।

आदित आपस्तम्बपरिभाषासूत्रम्, आपस्तम्बदर्शपूर्णमाससूत्रम्, आश्वलायनीयदर्शपूर्णमासहौत्रसूत्रम्, तदीयं ब्रह्मसूत्रं चेत्येतानि समग्राणि मूलमात्राणि, ततश्च कपर्दिस्वामिभाष्यहरदत्ताचार्यवृत्तिभ्यां समुद्भासितमापस्तम्बपरिभाषासूत्रम्, अद्य यावदनुपलब्धया अप्रकाशितया च श्रीमद्रामाण्डारप्रणीतया धूर्तस्वामिभाष्यवृत्त्या, रुद्रदत्तकृतसूत्रदीपिकया च समुल्लसितम्, आपस्तम्बदर्शपूर्णमाससूत्रम्, सूत्रार्थकुमुदपार्वणशर्वरीशसमशीलेन देवत्रातभाष्येण गार्ग्यनारायणवृत्त्या च सनाथितं श्रीमदाचार्याश्वलायनदर्शपूर्णमाससूत्रं न्यवेशि कल्पसूत्रभाष्यवृत्तिप्रामाणिकपरम्पराणां मिथः संवादमनुरुध्य तथा किलोपनिबद्धा हौत्राध्वर्यवब्रह्मत्वादयः पञ्च प्रयोगाः, यथा—निरीक्षितमात्रा एव ते व्युत्पित्सूनां व्युत्पन्नानां च सुस्पष्टं सोपपत्तिकं सशास्त्रार्थं च बुद्धिविषयतामवगाहन्ते। दर्शपूर्णमासप्रयोगसमवेतानि विधिवाक्यानि तत्तच्छास्त्रार्थनिर्णायकमीमांसाधिकरणप्रदर्शनपुरःसरमर्थतोऽनूदितानि, मन्त्राश्च संहितायामाम्नाताः सायणभाष्योपनिबन्धनेन स्फुटीकृताः। अयं त्वत्र पुनर्विशेषः काममभिनवामेव श्रियं पुष्णाति प्रबन्धस्यास्य यत्—सौत्रा अपि मन्त्राः शाखान्तराम्नाता अद्यत्वे पुनरनुपलब्धभाष्यवृत्तिका व्ययीकृत्यापरिमितमात्मनो मस्तिष्कं स्वयमेव सुबोधं व्याख्याता इति दर्शपूर्णमासभावनाकाङ्क्षितेतिकर्तव्यतापूरकाः प्रयोगाविध्यनुगृहीताश्च संभारा उद्देशक्रममनुरुध्य निरदेशिषतेति नूनं यथा यथा वयं पश्यामस्तथा तथा सर्वाङ्गहृदयंगमतैवास्य प्रबन्धस्य दृढं नाश्चित्ते पदं धत्ते नूनं सुबहूपकृतमनुगृहीतं च ग्रन्थकृता दर्शपूर्णमासप्रयोगजिज्ञासूनां ब्राह्मणानां कदम्बमिति यद्युदीर्येत तर्हि नैतद्वचोऽत्युक्तिकोटीमाटी-

केत । सर्वथाऽपूर्वमिदं दर्शपूर्णमासप्रकाशाभिधं ग्रन्थरत्नं भगवतः परेशितुरकम्पयाऽनुकम्पया शाश्वतं समयं सर्वेषां विदुषां समादरणीयतामेवानुविन्दत्विति बाढमाशास्ते—

श्रीमज्जगद्गुरुशंकराचार्याज्ञाधारको धारवाडनगरस्थसंस्कृतपाठशालाध्यापकः } उप्पिनबेट्टागेरिः श्रीनागेशशास्त्री ।



# प्रास्ताविकं किंचित् ।

आसीत्पूर्वं प्रवृत्तिः संस्कारमीमांसां संस्कारानुष्ठानोपयोगिनीं प्रणीय श्रौतविषयग्रन्थान्प्रणेतुम् । तदनुसारमाधानपद्धतिरग्निहोत्रचन्द्रिकेति प्रबन्धद्वयं श्रीपरमेशकृपया समाप्तिमगात् । अथ च दर्शपूर्णमासानुष्ठानसाधकोऽपि प्रबन्धः प्रणेय इति प्रवृत्तिरुदभूत् । तयैव चायं दर्शपूर्णमासप्रकाशाख्यग्रन्थस्य प्रथमो भागो विद्वद्गोचरी क्रियते द्वितीयोऽपि नातिचिरात्प्रसिद्धिमापाद्येत । तत्र च द्वितीये भागे देवत्रातभाष्यप्रथमोऽध्यायो दर्शपूर्णमासमन्त्रभाष्यं दर्शपूर्णमासमीमांसा दर्शपूर्णमासप्रयोगप्रायश्चित्तप्रभृतयो विषयाः स्फुटी भविष्यन्ति । अस्मिंश्च प्रथमे भाग आपस्तम्बाश्वलायनाचार्योपदिष्टं प्रयोगशास्त्रं संहितारूपं न्यवेशि । तेन चाध्ययनाध्यापनादिषु बहूपकारः स्यादिति मन्ये । आसीच्च प्राक्(१)एषां सूत्राणां संहितेति महाभाष्यकारनिर्देशोऽत्र मानम् । तत्र च भगवतः पाणिनेः सूत्राणां भाष्ये भगवान्पतञ्जलिराह— ‘ अथवैकयोगः करिष्यते ’ इति । अन्यदप्यत्र विनिगमकं प्रदर्शनीयम् । यानि हि समाम्नातारो बह्वृचाः समामनन्ति भगवदाश्वलायनाचार्यप्रणीतश्रौतगृह्यसूत्राणि तानि संहितापक्षमवलम्ब्यैव । अतो नासंगतमस्माकममीषां कल्पानां दर्शपूर्णमासप्रयोगप्रतिपादकानां संहितापक्षावलम्बनं नाम । ननु के कल्पाः, कानि सूत्राणि ।

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

कल्पयन्ति ते कल्पाः । तथा च कल्पसूत्रलक्षणं व्याख्यायि मयूखमालिकायां सोमेश्वरभट्टैः—‘ क्रतुप्रयोगं पाठमात्रेण स्पष्टं

---

(१) वस्तुतस्तु कल्पः सूत्रमित्यनर्थान्तरम् । उभावपि शब्दावनर्थान्तरे दृष्टौ कल्पसूत्राधिकरणे मीमांसायाम् । तत्र हि प्रयोगशास्त्रमित्युभयं संगृहीतम् । यश्चायं विभागो भट्टैः प्रत्यपादि न विशेषोऽत्र गमकं वयम् । शिष्टाचारस्तु—आपस्तम्बसूत्रः, बौधायनसूत्रः, आश्वलायनसूत्रः, इत्येवोपलभ्यते । तैत्तिरीयारण्यके ब्रह्मयज्ञानुवाके ‘ कल्पान्गाथा ’ इति श्रूयते । तत्र भाष्ये कल्पाः कल्पसूत्राणि प्रयोगप्रतिपादकानि, इति । भगवानाचार्योऽप्यसूसुचद्गृह्ये—अथ स्वाध्यायमधीयीतेतिसूत्रे ‘ कल्पा’निति । व्याचख्यौ च तत्र वृत्तिकृत् “सूत्राण्येवं कल्पा” इति ।

कल्पयन्ति ये बौधायनीयादयो ग्रन्थास्ते कल्पाः '। ' एतत्तीर्थमित्याचक्षते, ऋचं पादग्रहणे ' इत्यादिस्वकृतसंज्ञापरिभाषादिभिः प्रयोगस्य सूचकान्याश्वलायनीयादीनि सूत्राणीति विवेकः । अत्र च यज्ञायुधानां प्रतिकृतयः सप्रमाणं, यज्ञियसंभाराश्च सप्रयोजनाः, विधिवाक्यानां दिशो दर्शनं चातुर्मास्यविहारो विषयानुक्रमश्चेत्येते विषया यथायथं न्यवेशिषत । तथा च भागद्वयात्मकोऽयं ग्रन्थो यथा खलु प्रयोगमीमांसाशास्त्रयोरेकवाक्यता भवेत्तथा प्राणायि । विपरिवर्तमाने कालचक्रे समुपलभ्यते कश्चन कालांशो यत्र यजमानर्त्विजः शास्त्रीयं स्वीयकार्यजातं विस्मृत्य शा..नि.धुरपारम्परामात्रावलम्बिनो भवन्ति तदेतदसमञ्जसम् । यथा गैर्वाण्या भाषया व्यवहर्तॄणां व्याकरणज्ञानं यथाऽत्यावश्यकं तथा धार्मिकाचाराणामनुष्ठाने मीमांसाशास्त्रमत्यावश्यकम् । कथं नु नाम देववाणीं प्रयोजयन् प्रकृतिप्रत्ययसुबन्ततिङन्तनामधातुतद्धितकृदन्तसमासादीन्विस्मृत्य स्वकार्यं निर्वाहयेत् । तथैव कथं नु नाम श्रौतधर्मानुष्ठाता मीमांसां विस्मृत्य स्वकार्यभाग्भवेत् । यत आश्वलायनापस्तम्बकात्यायनबौधायनप्रभृतिभिः प्रणीतानि कल्पसूत्राणि प्रयोगशास्त्रत्वेनाभिधीयन्ते तद्व्यवस्थापका मीमांसाग्रन्था इति प्रयोगमीमांसाशास्त्रयोः संबन्धः । तत्र मीमांसाशास्त्रे प्रधानाङ्गभावनाविधिपरिसंख्यानियमाधिकारव्यतिषङ्गपार्वणप्रयाजानुयाजानुषङ्गोत्कर्षापकर्षविरुद्धत्रिकपदार्थानुसमयकाण्डानुसमयपृषदाज्यादिपारिभाषिकशब्दानां यथायथं वर्णनमुपलभ्यते । यज्ज्ञानं विनर्त्विग्भिः कर्मानुष्ठानं यथाशास्त्रं पारयितुमशक्यमतो मीमांसाशास्त्रज्ञानमत्यावश्यकम् । तथा चोक्तमभियुक्तैः—" इतिकर्तव्यताभागं मीमांसा पूरयिष्यति " इति । किंचाङ्गप्रधानकर्मानभिज्ञतया कर्मणि वैपरीत्यमुद्भवति । कुतश्चित्केवलमङ्गानुष्ठानं, क्वचिच्च केवलं प्रधानानुष्ठानं संभवति । तथोपदेशातिदेशप्रकृतिविकृतीना ज्ञानं यथायथमभिगम्यैवर्त्विग्यजमानसंज्ञां लभते नान्यथा । अतस्तादृग्ज्ञानस्य यथा सौलभ्यं स्यात्तथा प्रयतितव्यमिति मनसिकृत्य ग्रन्थोऽयं प्राणायि । दर्शपूर्णमासौ हि प्रकृतित्रयान्तर्गतैका प्रकृतिः । अस्याश्च यथार्थानुष्ठानज्ञानेन विना

याश्च विकृतिभूताः सोमाश्वमेधराजसूयप्रभृतीनां महायज्ञानामङ्गभूता इष्टयः, आग्रयणवैश्वानरीक्षामवतीष्ट्यादयो नैमित्तिक्यस्ताश्च न यथाशास्त्रमनुष्ठातुं पार्यन्ते। आम्नाये हि दर्शपूर्णमासमन्त्राः प्रथममाम्नाताः सन्त्येतदप्यत्र निदर्शनम्। सूत्रकारा अपीममेव क्रमं समस्वरमङ्गीचक्रुः। गृह्यकर्माण्यपि स्थालीपाकप्रभृतीनि दर्शपूर्णमासोपजीव्यतयैव प्रवर्तन्ते। सोऽयं सर्वेष्टिस्थालीपाककर्मप्रकृतिभूतो दर्शपूर्णमासप्रयोगो द्व्यहसाध्यः स च प्रथमतः पौर्णमास्यामेवाऽऽरभ्यते नामायाम्। अयं नित्यकर्मभूतो यावज्जीवादिश्रुत्या विहितत्वात्। सोऽयं प्रयोगश्चतुर्भिर्ऋत्विग्भिः सपत्नीकयजमानेन कार्यानुसारं परिकर्मिभिश्च साध्यः। ते चर्त्विजः, अन्यूनाङ्गाः, अनतिरिक्ताङ्गाः, नातिदीर्घाः, नातिह्रस्वाः। परिमाणतश्चतुरङ्गुलयः षडङ्गुलयो वा न भवन्ति। यून ऋत्विजो वृणीत इत्येके। इत्याचार्यसूत्रम्। ऋत्विजो वृणीत इत्यप्याचार्यसूत्रमृत्विग्वरणं वैधमिति ग्राहयति। तच्च सोम एव समन्त्रकं वरणम्। दर्शपूर्णमासादिषु तु कार्यानुसारेण लौकिकरीत्या स्वीकार ऋत्विजामिति। यत्र त्वाधानादौ समन्त्रकं वरणं प्रयोक्तारः कुर्वन्ति तत्संप्रदायानुसारमिति वक्तव्यम्। ननु ब्रह्माणमेव प्रथमं वृणीते, होतारमेव प्रथमं वृणीते, इत्याचार्यसूत्रव्यवस्थापनार्थमाधानादिषु यत्र चतुर्णां वरणं दृष्टं तत्र ब्रह्मपूर्वकं वरणमन्यत्र होतृपूर्वकमिति व्यवस्थापयाम इति चेत्सत्यं—परं सति कुड्ये चित्रमितिन्यायेनाऽऽधानादिषु ऋत्विग्वरणमेव श्रुत्यादिनाऽविहितम्। वरणाभावे कुतः कुत्र वा भवेत्प्राथम्यनिवेशः। न च वषट्कर्तुः प्रथमभक्ष इतिवद्विशिष्टं वरणं विधीयत इति वाच्यम्। ऋत्विजो वृणीत इत्यविशिष्टस्यैव विधेः श्रुतत्वात्। तर्हि आधाने समन्त्रकं वरणमाचार्यानुयायिषु दृश्यते तत्र किं गमकमिति चेच्छिष्टसंप्रदायमूलमिति जिज्ञास्यम्। शिष्टसंप्रदाय इत्येवास्माभिराधानपद्धतौ संगृहीतम्। अयमेव दर्शपूर्णमासप्रयोगः पञ्चप्रयोगीति भण्यते लौकिकैः। तस्यास्य दर्शपूर्णमासप्रयोगस्यात्र निबन्धे तथा विषया आदृताः। यथा याज्ञिका मीमांसायां प्रयोगशास्त्रे चाधिकृतार्था भवेयुः। यतः कर्मानुष्ठाने विद्वानेव विहितः 'नह्यविद्वान्विहितोऽस्ति' इति।

अस्य ग्रन्थस्य प्रणयने यैश्च महाभागैः शास्त्रीयज्ञानद्वारा साहाय्यमाचरितं तेषां यथासंभवमत्र नामनिर्देशोऽवश्यकर्तव्य इति बुद्ध्या निर्दिशामः ।

प्रथमं तावच्छ्रीद्पूज्यपादमहामहोपाध्यायविद्यावाचस्पतित्रिरूपाक्षशास्त्रिणः ।

न्यायमीमांसादिचतुस्तन्त्रपण्डितप्रकाण्डभूततर्कालङ्कारभूताः ( धारवाड ) इत्येतन्नगरस्थपाठशालायाः प्रधानाध्यापका नागेशशास्त्रिणः ।

ब्रह्मश्रीयाज्ञिकप्रवराःप्रयोगशास्त्रप्रवीणास्त्रयीधर्मकोविदाः श्रीज्ञानगल्लग्रामनिवासिनः श्रीशिवदीक्षितात्मजधुंडदीक्षितोपाह्वरामदीक्षिताः ।

वेदशास्त्रोदधिपारंगताः श्रीपण्डितवरेण्याः पाठकोपाह्वश्रीधरशास्त्रिणः ।

श्रीवेदशास्त्रसंपद्भूपितविग्रहाः श्रीमदुमाविष्णुपदाब्जभृङ्गा आनन्दाश्रममुद्रणालयप्रधानशास्त्रिण आगाशे, इत्युपाह्वकाशीनाथशास्त्रिणः ।

द्रव्यादिसहायप्रदाः—वैदर्भदेशनिवासिनो भिषक्शास्त्रनिपुणा लोकहितैकचिन्तका वैदिकधर्मोज्जीवनबद्धपरिकरा मीमांसाशास्त्राध्ययनाध्यापनपरम्परास्थितीप्सवः पराञ्जपे, इत्युपाह्वशिवरामात्मजनरहरिशर्माणः । एतैः स्वीयकालकीर्त्यादिनाऽऽत्मानं व्ययीकृत्य बह्वेव साहाय्यमन्वष्ठायि । यच्च जीवातुभूतमेतस्य ग्रन्थस्य ।

भिषग्वरफाटकोपाह्वदामोदरात्मजविश्वनाथशर्माणः ।

यैश्च बहुधा साहाय्यमाचरितम्, श्रेष्ठिवर ' मोतिलाल माणिकचंद (प्रतापशेट) इत्याख्या अमळनेरग्रामनिवासिनो यै रूप्यकाणामष्टादशशतं प्रयोगशास्त्रसंपत्तये प्रादायि ।

पण्डितपाटणकरोपाह्वकृष्णतनूजरघुनाथशर्माण इत्येतै राजापुरसंस्कृतपाठशालासंस्कृतपुस्तकालयाद्दर्शपूर्णमासमन्त्रार्थचन्द्रिकां प्रदाय बहूपकृतम् ।

याज्ञिकपरम्पराप्रियमहाभागाः रोडेइत्युपाह्वबाळंभट्टशर्माण आखवेइत्युपाह्वरामशास्त्रिण इत्येतैराचार्यचौण्डपाविरचितं दर्शपूर्णमासभाष्यं तत्र तत्रोपयोगार्थं मादायीति तेभ्यो वैद्यभूषणनानलकुळावंतराहिताग्निपुत्रपुरुषोत्तमशास्त्रिभिर्यत्रकुत्राप्यनुपलभ्यं श्रीभगवद्देवत्रातभाष्यं मादायीति तेभ्यश्चानेकशो धन्यवादा वितीर्यन्ते ।

ऐतिह्यप्रमाणविवेचकैर्दत्तात्रेयविष्णुआपटे, इत्येतैः प्रतिपदं साहाय्यमनुष्ठितमिति नाहमाजीवितमुपकारभरांस्तेषां विस्मरामि ।

तदिदं नामप्रदर्शनं नाम दिशो दर्शनम् । अन्यैरपि बहुभिर्वैदिकधर्मप्रियैर्बहुप्रकारैः प्रतिपदं साहाय्यमन्वष्ठायीति तेषामुपकारभरान्स्मारं स्मारं विस्तरभयात्तदुल्लेखाद्विरम्यते ।

विज्ञायत एव सर्वैर्यदधुना ग्रन्थप्रकाशनं नाम मुद्रणालयायत्तम् । परं शास्त्रीयसंस्कृतग्रन्थमुद्रणे न बहवो मुद्रणालयाः प्रयतन्ते किंतु द्वित्रा एव । तत्राप्यानन्दाश्रममुद्रणालयः केवलमेतदेवानुष्ठापयाति । यतस्तत्यत्रसर्वकार्याध्यक्षाः सुगृहीतनामधेया विनायकगणेशआपटे, इति महोदया शास्त्रीयसंस्कृतग्रन्थप्रकाशनैकदीक्षाः सन्ति । तैः सादरं श्रौतधर्मानुष्ठानवृद्धिबुद्ध्यैतद्ग्रन्थमुद्रणमुररीकृतम् । तदर्थं तेभ्यो धन्यवादान्वितीर्य विरमामि । इति शम् ।

विदुषामनुचरः

किंजवडेकरोपाह्वरामचन्द्रात्मजवामनशास्त्री.

# यज्ञायुधप्रमाणवचोजातम्।

प्रावप्रदर्शितानां दर्शपूर्णमासपात्रप्रतिकृतीनामाकृत्यादिविषये यावच्छक्यमापस्तम्बसूत्रानुसारं प्रमाणं प्रदर्शयामः।

(१) स्फ्यः— खादिरः, बाहुमात्रप्रमाणकः, अस्याकृतिः।

(२) कपालानि—कपालं नाम पुरोडाशश्रपणसाधनम्। तानि च भिन्नस्य घटादेः कर्तव्यानि लौकिकार्थपरिग्रहणात्। "भाण्ड-लेशसदृशानि" इति विद्यारण्याः। तानि मृदा कपालानि कर्तव्यानीत्येके। अभिन्नान्यपि रौहिणकपालवदित्येके। रौहिणो नाम पुरोडाशः, तच्छ्रपणार्थं प्रवर्ग्ये क्रियमाणं कपालम्। तत्त्वेवं विधीयते "रौहिणकपाले च परिमण्डले घोटप्रकारे" (आप० श्रौ० सू० १५।३।१६)। अभियुक्तैस्तावदेवं कपालाकृतिः प्रयुज्यत एतानि सर्वाणि कपालानि निरन्तराणि संश्लिष्टानि समानि चोपधेयानि यथाऽन्तरा भूमिर्न दृश्यते, अत्र मध्यमपङ्क्तिः षडङ्गुलदीर्घा द्व्यङ्गुलविस्तारा दक्षिणोत्तरपङ्क्ती तु ततः किंचिन्न्यूने। पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेर्यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थाद्वृत्ताकारताया गम्यमानत्वात्। अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणं षडङ्गुलं वृत्तं कृत्वा ततः प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य तिर्यगपच्छेदेन चतुर्धा विभागः कार्यः। खण्डचन्द्राकारयोर्दक्षिणोत्तरभागयोस्तु प्रत्येकं द्वेधा विभागः कार्यः। एवं विभक्तिं कृत्वाऽऽग्नेयस्याष्टौ कपालान्युपदध्यात्। एकं कपालं चेत्पाणिसंमितम्। द्विकपाले वृत्तस्य तिर्यगपच्छेदेन द्वेधा विभागः। त्रिकपाले वृत्तस्य तिर्यक्समं त्रेधा विभागः। चतुष्कपाले वृत्तं समं प्राग्प्रपच्छिद्योत्तरभागस्य त्रेधा विभागो दक्षिणत एकम्। पञ्चकपालेऽपि वृत्तं प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य तिर्यगपच्छेदेन त्रेधा विभागः कार्यो दक्षिणत एकमुत्तरत एकम्। षट्कपाले मध्यमभागश्चतुर्धा दक्षिणत एकमुत्तरत एकम्। सप्तकपाले मध्यमभागश्चतुर्धा दक्षिणो द्वेधोत्तरत एकम्। कपालानि तु घर्षणाद्युपायेन तथा

करणीयानि यथा कपालचितिक्षेत्रं वृत्तं संपूर्यत इति । नवकपाले मध्यमभागस्य चतुर्धा विभागो दक्षिणो द्वेधोत्तरस्त्रेधा । दशकपाले मध्यमभागस्य चतुर्धा विभागो दक्षिणो द्वेधोत्तरतश्चतुर्धा । एकादशकपाले मध्यमभागस्य चतुर्धा विभागो दक्षिणस्त्रेधोत्तरश्चतुर्धा । एवं विभज्य यावन्ति कपालानि यथायोगमुपदध्यात् । प्रतिकृतिस्तु प्राकृती दिङ्मात्रमिह प्रदर्शितेति ज्ञेयम् ।

( ३ ) अग्निहोत्रहवणी—अरत्निमात्री वायसपुच्छी हंसमुखी, अर्धप्रादेशमात्रबिला विकङ्कतवृक्षनिर्मिता । ' वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा ' इति ।

( ४ ) शूर्पम्—लोकसिद्धं वैणवं नलमयं वेति भारद्वाजः । इषीकमयं शूर्पं " वर्षवृद्धा इषीकाः " इति वाक्यशेषात् । तदभावेऽन्येन कृत्वा सर्वप्रायश्चित्तम् । इति प्रयोगवृत्तिकारः । शूर्पमैषीकम् । 'वर्षवृद्धा इषीकाः' इति लिङ्गादिति । वर्षवृद्धमसीति शूर्पोपोहने विनियोगाद्वर्षवृद्धा इषीका इति वाक्यशेषादैषीकं शूर्पम् । चातुर्मास्येष्वैषीके शूर्पे इति दर्शनादन्यत्र लोकसिद्धमिति सूत्रकारमतिः ।

( ५ ) कृष्णाजिनम्—कृष्णमृगचर्म नचाखण्डं सलोमकं ग्रीवया च सहितम् ।

( ६ ) शम्या—खदिरवृक्षनिर्मिता । याऽनडुद्ग्रीवासु युगबिले क्षिप्यते । गदाकृतिरिति भाष्यकाराः । षट्त्रिंशदङ्गुला ।

( ७ ) उलूखलम्—वारणवृक्षनिर्मितम् । औदुम्बरं वा । वारणान्यहोमार्थानीति प्राकृतं श्रवणम् । औदुम्बरमिति चयनश्रवणम् । प्रादेशमात्रम् । प्रादेशस्तु द्वादशाङ्गुलः । तथा शुल्बे दृष्टत्वात् ।

( ८ ) मुसलम्—वारणं खादिरं वा षट्त्रिंशदङ्गुलं त्रिप्रादेशं वा । उलूखलमुसले अर्थलक्षणे ग्राह्ये । तयोर्मानं सूत्रकारानुक्तमिति । एवं च यत्र नास्ति सूत्रकारोक्तिः प्रत्यक्षं तत्र माने नाऽऽदर इति ज्ञायते ।

( ९ ) दृषदुपले—लौकिकाकारे संपादनीये ।

(१०) स्रुवः—खादिरः ।
(११) जुहूः—पर्णमयी ।
(१२) उपभृत्—आश्वत्थी।
(१३) ध्रुवा—वैकङ्कती ।

अङ्गुष्ठपर्वमात्रं स्रुवस्य बिलम् । खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा, एतेषां वा वृक्षाणामेकस्य स्रुचः । अर्धप्रादेमात्रबिलाः कारयेत् । बाहुमात्र्योऽरत्निमात्र्यो वाऽग्राग्रास्त्वक्तोबिला हंसमुख्यः ॥

(१४) वेदः—दर्भमयो वत्सजानुतुल्यः स च याज्ञिकसमाचारादवगन्तव्यः । "वत्सज्ञुं पशुकामस्य" इत्यनेन विहितः ।

(१५) निर्वापपात्री—मृन्मयी । निष्टपनविधानात् । "यदि पात्र्या निर्वपेत्" अर्थलक्षणा ।

(१६) आज्यस्थाली—मृन्मयी । अर्थलक्षणा ।

(१७) प्राशित्रहरणम्—खादिरम् । प्रादेशमात्रम् । गोकर्णाकृति । चमसाकृति, इति भारद्वाजः ।

(१८) इडापात्रम्—अरत्निमात्रं चतुरङ्गुलदण्डं मध्यसंगृहीतम् । चतुरङ्गुलपरीणाहम् । षडङ्गुलपरीणाहं वा वारणवृक्षजम् ।

(१९) चमसः–(प्रणीतापात्रम्)-वारणवृक्षजः, त्र्यङ्गुलदण्डः, चतुरङ्गुलोच्छ्रायः, षडङ्गुलविस्तारः, प्रादेशमात्रः, प्रादेशमात्रश्चतुरङ्गुलबिल इति बौधायनः ।

(२०) योक्त्रम्—मुञ्जमयम् । बलीवर्दनियोजनार्थशम्याप्रतिमुक्तरज्जुविशेषसदृशम् ।

(२१) मदन्तीपात्रम्—अर्थलक्षणं लोकसिद्धम् । मदन्तीनां पात्रं मदन्तीपात्रम् । तप्ता आपो मदन्त्य इत्युच्यन्ते ।

(२२) मेक्षणम्—वारणवृक्षप्रकृतिकम् । अरत्निमात्रम् । तदिदं मेक्षणं पिष्टसंयवनार्थं गृहीतं सत्पिष्टभर्जनेन याज्ञिककल्पसंप्रदायमपि परिपालयति ।

(२३) वेदाग्राणि—वेदसंज्ञकदर्भमुष्टिपुरोवर्त्यग्रसमुदायः ।

(२४) अन्वाहार्यस्थाली—अन्वाहार्य ओदनो यस्यां स्थाल्यां श्रप्यते

साऽन्वाहार्यस्थाली लोकसिद्धप्रमाणपरिमिता ।

(२५) उपवेषः—पलाशशाखामूले छिन्नः प्रादेशपरिमितः । धृष्ट्याकारः।

(२६) पिष्टलेपफलीकरणपात्रम्—वारणवृक्षप्रकृतिकमर्थलक्षणम् । पिष्टलेपश्च फलीकरणं च पिष्टलेपफलीकरणे तयोः पात्रम् । तच्च प्रादेशमात्रम् ।

(२७) कुम्भी—मृन्मयी,
(२८) शिक्यस्था कुम्भी-मृन्मयी, } अर्थलक्षणे, नवे सांनाय्यकुम्भ्यौ गोमयेनानुलिप्ते भवतः ।

(२९) दोहनपात्रम्—वारणवृक्षजमर्थलक्षणम् ।

(३०) अभिधानी—गोबन्धिनी रज्जुः । अर्थलक्षणा ।

(३१) निदाने—दोहनकाले गोः पादबन्धिनी रज्जुः । वत्सबन्धनरज्जुश्च ।

(३२) पिधानपात्रम्—वारणवृक्षजम् । सायंकुम्भीमुखपिधानार्थम् ।

(३३) यजमानभागपयःपात्रम्—यज्ञियवृक्षजं यथार्थम् ।

(३४) यजमानभागदधिपात्रम्—यज्ञियवृक्षजं यथार्थम् ।

(३ ) अग्नीद्भागपात्रम्—यज्ञियवृक्षजमर्थलक्षणम् ।

(३६) परिश्रयणम्—अर्धचन्द्राकारं द्वादशाङ्गुलं यज्ञियवृक्षजम् । "आहवनीयतः परिश्रिते" ।

(३७) संदंशः—यज्ञियवृक्षजः, अर्थलक्षणः । अङ्गारानिरूहणार्थः ।

(३८) शिक्यम्—षडुद्यामं मुञ्जमयम् । कुम्भीस्थापनार्थम् ।

(३९) अरणी—
(४०) मन्थोपमन्थौ— } अग्निहोत्रचन्द्रिकायां व्याख्याते मन्थनयन्त्रकप्रकरणे ।

(४१) शकटः—लौकिकाकारः । यज्ञियवृक्षजः ।

(४२) पिण्डपितृयज्ञपात्री—मृन्मयी, अर्थलक्षणा । "मृन्मये निर्वपति" ।

यत्र खलु नोक्तं प्रमाणं तत्र यथार्थं यज्ञायुधं प्रयोक्तव्यम् । तदर्थमेव तत्र तत्रास्माभिरर्थलक्षणमित्युक्तम् । प्रमादादनवधानाद्वा यदत्र भवेत्स्खलितं तदवधानपूर्वकं यथाप्रमाणं यज्ञायुधमनुष्ठेयमिति सर्वं समञ्जसम् ।

॥ इति यज्ञायुधाकृतिप्रमाणम् ॥

---

दर्शपूर्णमासयोः कानिचिद्विधिवाक्यानि प्रदर्शयामः ।

---

आघारमाघारयति । तै० सं० द्वि० ५।११

समिधो यजति ।

तनूनपातं यजति ।

इडो यजति । तै० सं० २।६।१

बर्हिर्यजति ।

स्वाहाकारं यजति ।

आज्यभागौ यजति । तै० सं० २।६।२

अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् । तै० सं० २।५।२

आग्नेयोऽष्टाकपालोऽमावास्यायां

पौर्णमास्यां चाच्युतो भवति । तै० सं० २।६।३

उपांशुयाजमन्तरा यजति । तै० सं० २।६।६

(उन्नीतोयं विधिः) ऐन्द्राग्नमेकादशकपालं निर्वपेत् । तै० सं० २।५।३

ऐन्द्रं दधि । तै० सं० २।५।३

ऐन्द्रं पयः (शृतम् ।) तै० सं० २।५।३

अग्नये स्विष्टकृतेऽवद्यति । तै० सं० २।६।६

अनुयाजान् यजति । तै० सं० २।६।९

सोमं यजति ।

त्वष्टारं यजति तै० सं० २।६।१०

देवानां पत्नीर्यजति ।

अग्निं गृहपतिं यजति ।

वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति । तै० सं० २।५।१

तदिदं केषांचिद्विधिवाक्यानां दिशो दर्शनमभ्यधायि । अनयैव दिशा सर्वाणि विधिवाक्यान्यूह्यानि । तत्रायं विशेषो न विस्मर्तव्यः ।

" सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासंभवाद्विधौ ।

आत्मनि प्रेरणाभावान्निमित्तस्याभिधानतः ॥

विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम् ।

प्रत्यययोगे तु तद्भावात्कचित्स्यादविहन्तृता ॥ इति ।

तद्बाधात्–तस्य यच्छब्दादिचतुष्टयस्य स्वार्थत्यागादित्यर्थः। इति। यच्छब्दादीनां विधिशक्तिप्रतिबन्धकत्वं च मानान्तरप्राप्तार्थत्व एव, अप्राप्तार्थत्वे तु न तेषां विधिशक्तिप्रतिबन्धकता। अन्यथा यदाग्नेयादिवाक्येषु का गतिः। एवमादि सर्वमनुसंधाय विधिवाक्यमध्यवसातव्यं विपश्चिद्भिरिति सर्वमनवद्यम्॥

# दर्शपूर्णमासप्रकाशविषयानुक्रमः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# दर्शपूर्णमासप्रकाशः ।

## अथाऽऽपस्तम्बीयपरिभाषासूत्रम् ।

यज्ञं व्याख्यास्यामः स त्रयाणां वर्णानां ब्राह्मणराजन्ययो-र्वैश्यस्य च स त्रिभिर्वेदैर्विधीयत ऋग्वेदयजुर्वेदसामवेदैर्ऋग्वेद-यजुर्वेदाभ्यां दर्शपूर्णमासौ यजुर्वेदेनाग्निहोत्रं सर्वैरग्निष्टोम उच्चै-र्ऋग्वेदसामवेदाभ्यां क्रियत उपांशु यजुर्वेदेनान्यत्राऽऽश्रुतप्रत्या-श्रुतप्रवरसंवादसंप्रैषैश्चान्तरा सामिधेनीष्वनूच्यं मन्द्रेण आगाज्य-भागाभ्यां प्रातःसवने च मध्यमेन प्राक्स्विष्टकृतो माध्यंदिने च क्रुष्टेन शेषे तृतीयसवने च वाक्संद्रवश्च तदृग्वेदेन होता करोति यजुर्वेदेनाध्वर्युः सामवेदेनोद्गाता सर्वैर्ब्रह्मा वचनाद्विप्रतिषेधा-द्वाऽन्यः कुर्याद्ब्राह्मणानामार्त्विज्यं सर्वक्रतूनामग्नयः सकृदाहिता जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयादध्वर्युं कर्तारं जुहूं पात्रं व्यापृतायां स्रुवेणाऽऽहवनीये प्रदानमाधानप्रभृति यावज्जीवं पात्राणि धार्यन्ते तेषां प्रतितन्त्रं संस्कारो मन्त्रब्राह्मणे यज्ञस्य प्रमाणं मन्त्रब्राह्मणयोर्वेदनामधेयं कर्मचोदना ब्राह्मणानि ब्राह्म-णशेषोऽर्थवादो निन्दा प्रशंसा परकृतिः पुराकल्पश्चातोऽन्ये मन्त्रा अनाम्नातास्त्वमन्त्रा यथा प्रवरोहनामधेयग्रहणानीति रथदुन्दुभि-शब्दश्च स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वादेक-मन्त्राणि कर्माण्यपि संख्यायुक्तचेष्टापृथक्त्वनिर्वर्तीनि कण्डूयनस्व-प्नदीतरणावर्षणामेध्यप्रतिमन्त्रणेषु च तद्वत्कालाव्यवेतेषु प्रयाणे स्वार्थनिवृत्तेरसंनिपातिकर्मसु च तद्वद्धविष्कृदध्रिगुपुरोनुवाक्या-मनोतस्याऽऽवृत्तिर्भिन्नकालेषु वचनोदकं कर्म बहुमन्त्रम् ॥ १ ॥

मन्त्रान्तैः कर्मादीन्त्संनिपातयेदाघारे धारायां चाऽऽदिसं-योग आदिप्रदिष्टा मन्त्रा उत्तरस्याऽऽदिना पूर्वस्यावसानं विन्द्या-द्धौत्रायाजमानेषु समुच्चयो विकल्पो याज्यानुवाक्यासु संख्यासु च तद्वत्क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चयो रौद्रराक्षसनैर्ऋतपैतृक-च्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेदुत्त-रत उपचारो विहारो नाग्नेरपपर्यावर्तेत न विहारादन्तराणि यज्ञाङ्गानि बाह्याः कर्तारो न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरि-

हरेत्प्रागपवर्गाण्युदगपवर्गाणि वा यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति प्राचीनावीती प्रसव्यं दक्षिणापवर्गाणि पित्र्याणि यानि शुल्बानि समासं गच्छन्ति प्रसव्यं तान्यावेष्ट्य प्रदक्षिणं समस्येदथ यानि न समस्यन्ते प्रदक्षिणं तान्यमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्या यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेच्छ्वः पूरितेति वा खार्विकां तृतीयां वाजसनेयिनः समामनन्ति यदहर्न दृश्यते तदहरमावास्यायां श्वो न द्रष्टार इति वैकप्रकरणे चोद्यमानानि प्रधानानि समानविधानानि प्रकरणेन विधयो बध्यन्तेऽनिर्देशात्साधारणानि निर्देशाद्व्यवतिष्ठन्त आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयाजश्च पौर्णमास्यां प्रधानानि तदङ्गमितरे होमा आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो द्वादशकपालो वाऽमावास्यायामसोमयाजिनः सांनाय्यं द्वितीयं सोमयाजिनो नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते नैन्द्राग्नः संनयतो वर्णविशेषेण पितृयज्ञः स्वकालविधानादनङ्गं स्यात्तुल्यवच्च प्रसंख्यानात्प्रतिपित्सेच दर्शनात्सहाङ्गं प्रधानम् ॥ २ ॥

देशे काले कर्तरीति निर्दिश्यते स्वशब्दं यदपूर्वो दर्वीहोमो जुहोतिचोदनः स्वाहाकारप्रदानः सकृद्गृहीत्वाऽऽहुतिगणे प्रत्याहुति गृहीत्वा न वा समवद्येत्समिदभावश्चाग्निहोत्रवर्जमपरेणाग्निं दक्षिणं जान्वाच्यान्वाच्य वाऽऽसीनो दर्वीहोमाञ्जुहोति वचनादन्यथाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योदगावृत्तः सर्वा आहुतीर्जुहोति वचनादन्यथाऽऽश्रुतप्रत्याश्रुते याज्यानुवाक्ये अवदानेषु चोपस्तरणाभिधारणे चतुर्गृहीतं वषट्कारश्चादर्वीहोमानां वषट्कृते वषट्कारेण वाऽऽहुतिषु संनिपातयेदुपयामेन ग्रहेषु तयादेवतेनेष्टकासु पुरोडाशगणे यथाभागं व्यावर्तध्वमित्येकैकमपच्छिन्द्यादुत्तमौ यथाभागं व्यावर्तेथामिति तयोरेव देवतोपदेशनं करोति चरुपुरोडाशगणे चरुपुरोडाशीयान्प्रागधिवपनाद्विभजाति यथादेवतमुपलक्षयतीदंशब्दस्तन्त्रं स्याद्व्यतिषक्तेष्वपि कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति ध्रुवोऽसीति मन्त्रं संनमयति पिष्टानामुत्पवनकाले तण्डुलानुत्पुनात्यधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानावपत्यनुद्धृत्य चरुमासादयति पञ्चदश सामिधेन्यो

दर्शपूर्णमासयोः सप्तदशेष्टिपशुबन्धानां यत्र श्रूयन्त उपांशु काम्या इष्टयः क्रियन्त इति तत्र यावत्प्रधानमुपांशु दर्शपूर्णमासाविष्टीनां प्रकृतिरग्नीषोमीयस्य च पशोः स सवनीयस्य सवनीय ऐकादशिनानामैकादशिनाः पशुगणानां वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणां वैश्वदेविक एककपाल एककपालानां वैश्वदेव्यामिक्षाऽऽमिक्षाणां तत्र सामान्याद्विकारो गम्यैतैकदेवता आग्नेयविकारा द्विदेवता अग्नीषोमीयविकारा बहुदेवताश्चैन्द्राग्नविकारा वाऽन्यत्र प्रकृतिदेवताभ्यो यथैन्द्रः पुरोडाशः सौम्यश्चरुरिति हविर्देवतासामान्ये हविर्बलीयो द्रव्यसंस्कारविरोधे द्रव्यं बलीयोऽर्थद्रव्यविरोधेऽर्थो बलीयान्न प्रकृतावूहो विद्यते विकृतौ यथार्थमूहोऽर्थवादवर्जं परवाक्यश्रवणादर्थवादः शिष्टाभावे सामान्यात्प्रतिनिधिस्तद्धर्मा च स्यान्मात्रापचारे तच्छेषेण समाप्नुयात् ॥ ३ ॥

स्वामिनोऽग्नेर्देवतायाः शब्दात्कर्मणः प्रतिषेधाच्च प्रतिनिधिर्निवृत्तास्त्रिभिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात्प्रतिषेधादर्थलोपाच्चाग्निष्टोम एकाहानां प्रकृतिर्द्वादशाहोऽहर्गणानां गवामयनं सांवत्सरिकाणां निकायिनां तु प्रथमोऽग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निरन्यत्र साद्यस्क्रेभ्यो वाजपेयात्षोडशिनः सारस्वताच्च सत्रात्क्रत्वादौ क्रतुकामं कामयेत यज्ञाङ्गादौ यज्ञाङ्गकाममल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराण्यल्पीयांसि कर्माणि भूयांसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्यादवशिष्टा विकल्पार्था यथा यूपद्रव्याणीत्यन्ताल्लोपो विवृद्धिर्वा प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात्कुम्भीशूलवपाश्रपणि प्रभुत्वात्तन्त्रं स्याज्जातिभेदे तु भिद्येत पङ्क्तिवैषम्यात्स्विष्टकृद्विकारे वनस्पतौ याज्यायां देवतानिगमाः स्युः प्रकृत्युपबन्धादन्वारम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता हि तदर्थेन स्याद्वा कालस्याशेषभूतत्वादारम्भविभागाच्चार्थायार्थायाग्निं प्रणयत्यप्रवृत्ते कर्मणि लौकिकः संपद्यते यथा समारूढे ॥ ४ ॥

इत्यापस्तम्बीयपरिभाषासूत्रम् ।

---

## अथाऽऽपस्तम्बीयदर्शपूर्णमाससूत्रम् ॥

—:x:x:—

अथातो दर्शपूर्णमासौ व्याख्यास्यामः प्रातरग्निहोत्रꣳ हुत्वाऽन्यमाहवनीयं प्रणीयाग्नीनन्वादधाति न गतश्रियोऽन्यमग्निं प्रणयति देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति जपित्वा ममाग्ने वर्चो विहवेष्वस्त्वित्याहवनीयमुपसमिन्ध उत्तरया गार्हपत्यमुत्तरयाऽन्वाहार्यपचनं तिसृभिस्तिसृभिर्वोत्तमां तु जपेदाहवनीये वाऽऽदध्याद्व्याहृतिभिरन्वाधानमेके समामनन्ति संनयतः पलाशशाखां शमीशाखां वाऽऽहरति बहुपर्णां बहुशाखामप्रतिशुष्काग्रामसुषिरां यं कामयेतापशुः स्यादित्यपर्णां तस्मै शुष्काग्रामाहरेदपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत्पशुमन्तमेवैनं करोतीति विज्ञायते सा या प्राच्युदीची प्रागुदीची वा भवतीषे त्वोर्जे त्वेति तामाच्छिनत्त्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा ॥ १ ॥

इमां प्राचीमुदीचीमिषमूर्जमभिसꣳस्कृतां बहुपर्णामशुष्काग्रां हरामि पशुपामहमित्याहरति वायवः स्थोपायवः स्थेति तया षडवराध्यान्वत्सानपाकरोति दर्भैर्दर्भपुञ्जीलैर्वा देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति प्रस्थितानामेकां शाखयोपस्पृशति दर्भैर्दर्भपुञ्जीलैर्वाऽऽप्यायध्वमघ्निया इन्द्राय देवभागमित्येके समामनन्ति महेन्द्रायेत्येक इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिनः शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः । रुद्रस्य हेतिः परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते यजमानस्य पशून्पाहीत्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपगूहति पश्चात्प्राचीं वा यो वा अध्वर्योर्गृहान्वेद गृहवान्भवत्या चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीत्येते वा अध्वर्योर्गृहा य एवं वेद गृहवान्भवतीति विज्ञायते ॥ २ ॥

उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहिता देवस्य त्वा सवितुः प्रसव इत्यसिदमश्वपर्शुं वाऽऽदत्ते तूष्णीमनडुत्पर्शुं यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति न पर्शुं प्रेयमगादित्युक्त्वोर्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति देवानां परिषूतमसीति दर्भान्परिषौति विष्णोः स्तूपोऽसीत्यभिप्रेतानामेकं स्तम्बमुत्सृजत्येकं वा स्तम्बं परिषूय तं सर्वं दात्यतिसृष्टो गवां भाग इति वैकां द्वे तिस्रो वा नाडीरुत्सृजतीदं देवानामिति परिषूतानभिमृशतीदं पशूनामित्यतिसृष्टान्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभ इति विशाखेषु दर्भानारभते देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यगिति संयच्छति पर्व ते राध्यासमित्यसिदमधिनिदधात्याच्छेत्ता ते मा रिषमित्याच्छिनत्ति संनखं मुष्टिं लुनोति स प्रस्तरः कुल्मिमात्रोऽरत्निः प्रादेश ऊर्वस्थि जान्वस्थि स्रुग्दण्ड इति वा तिर्यक्प्रमाणानि ॥ ३ ॥

पृथिव्याः संपृचः पाहीत्यनधो निदधात्ययुजो मुँष्टीलुँनोति तथा निधनानि तेषां प्रस्तरोऽयुगर्थ इत्येके प्रस्तरे याथाकामी यदन्यत्परिषवणादुत्सर्जनाच्च तत्सर्वत्राऽऽवर्तते प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरादिति वाजसनेयकं सर्वं लुत्वा देवबर्हिः शतवल्शं विरोहेत्यालवानभिमृशति सहस्रवल्शा वि वयं रुहेमेत्यात्मानमदित्यै रास्नासीति त्रिधातु पञ्चधातु वा शुल्बं करोत्ययुपिता योनिरिति प्रतिदधात्यदित्यै रास्नासीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्याऽऽलुभिता योनिरित्युत्तमे निधने प्रस्तरमत्याधायेन्द्राण्यै संनहनमिति संनह्यति पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति स ते मा स्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वाऽऽपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभ इति बर्हिरारभत इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधिनिधत्ते ॥ ४ ॥

प्रेयमगादुर्वन्तरिक्षमन्विहीति यौ गमनौ तौ प्रत्यायनावादित्यास्त्वोपस्थे सादयामीत्यन्तर्वेदि परिधिदेशेऽनधः सादयति

बर्हिरसि देवंगममित्यासन्नमभिमन्त्रयते देवंगममसीत्यनधो निदधाति यथाप्रागुपसादयेद्या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासं परिस्तरमाहरन् । अपां मेध्यं यज्ञियं सदेवं शिवमस्तु मे । आच्छेत्ता वो मा रिषं जीवानि शरदः शतम् । अपरिमितानां परिमिताः संनह्ये सुकृताय कम् । एनो मा निगां कतमच्च नाहं पुनरुत्थाय बहुला भवन्ति परिस्तरणानामाधिनिधान्याच्छेदनी संनहनीति यथालिङ्गं खादिरं पालाशं वैकाविंशतिदारुमिध्मं करोति त्रयः परिधयः पलाशकार्श्मर्यखदिरोदुम्बरबिल्वरोहीतकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वक्काः स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यो द्वे आधारसमिधावनूयाजसमिदेकाविंशीति समूलानामृतेऽमूलानां वा दर्भाणां पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य ॥ ५ ॥

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविंशतिधा संभरामि सुसंभृता । त्रीन्परिधींस्तिस्रः समिधो यज्ञायुरनुसंचरान् । उपवेषं मेक्षणं धृष्टिं संभरामि सुसंभृतेति शुल्व इध्मं संभरति कृष्णोऽस्याखरेष्ठो देव पुरश्चरं सध्यासं त्वेति संनह्यति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वाऽनधो निदधातीध्मप्रव्रश्चनानि निदधाति त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वांस्त्वया होता संतनोत्यर्धमासानिति दर्भाणां वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य शुल्बात्प्रादेशे परिवास्य वेदपरिवासनानि निदधात्यन्तर्वेदि शाखायाः पलाशान्यसर्वाणि प्रशात्य मूलतः शाखां परिवास्योपवेषं करोत्युपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः शिवः शग्मो भवासि न इति तृतीयस्यै दिवो गायत्रिया सोम आभृतः । सोमपीथाय संनयितुं वकलमन्तरमादद इति परिवासनशकलमादाय प्रज्ञातं निदधाति त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायां शिथिलमवसजति मूले मूलान्यग्रेऽग्राणि न ग्रन्थिं करोति त्रिवृत्पलाशे दर्भे इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे । इमौ प्राणा-

पानौ यज्ञस्याङ्गानि सर्वश आप्याययन्तौ संचरतां पवित्रे हव्यशोधन इति क्रियमाणे यजमानोऽनुमन्त्रयते समूहन्त्यग्न्यगारमुपलिम्पन्त्यायतनान्यलंकुर्वाते यजमानः पत्नी च नवे सांनाय्यकुम्भ्यौ यावच्छर्करं गोमयेनाऽऽलिप्ते भवतः ॥ ६ ॥

अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुतेऽपराह्णेऽधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन चरन्त्यपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति सकृदाच्छिन्नानि वा तृणान्युपमूलं दिनानि दक्षिणाप्रागग्रैर्दर्भैर्दक्षिणमग्निं परिस्तीर्य दाक्षिणतः पश्चाद्वा दर्भान्संस्तीर्य दक्षिणाप्राञ्चमे(ञ्चये)कैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति स्फ्यं मेक्षणं कृष्णाजिनमुलूखलं मुसलं शूर्पमाज्यस्थालीं चरुस्थालीं येन चान्येनार्थो भवति दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थितं भवत्यध्वर्युरुपवीती स्थालीमेकपवित्रेणान्तर्धाय तया दक्षिणतः शकटादधि निर्वपत्युत्तरतो वा तां पूरयित्वा निमार्ष्टि मृन्मये निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति तूष्णीं वाऽपरेणान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिन उलूखले प्रतिष्ठिते दक्षिणाप्राची तिष्ठन्ती पत्न्यवहन्ति परापावमविवेकं सकृत्फली करोति दक्षिणाग्नौ जीवतण्डुलं श्रपयत्यपहता असुरा रक्षांसि पिशाचा वेदिषद इत्यन्तरा गार्हपत्यान्वाहार्यपचनौ दक्षिणपूर्वेण वाऽन्वाहार्यपचनं दक्षिणाप्राचीमेकस्फ्यां पराचीं वेदिमुद्धत्य शुन्धन्तां पितर इत्यद्भिरवोक्ष्याऽऽयन्तु पितरो मनोजवस इत्यभिमन्त्र्य सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति सकृदाच्छिन्नेन बर्हिषा वेदिं स्तृणाति ॥ ७ ॥

उत्पूतेन नवनीतेनानुत्पूतेन वा सर्पिषा स्थालीपाकमभिघार्यैकस्फ्यायां मेक्षणमासाद्य स्थालीपाकमासादयति दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसादयत्यध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षणमुपस्तीर्य तेनावदायाभिघार्य सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ जुहोति यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयामग्नये कव्य-

वाहनाय स्वधा नम इति तृतीयां ये मेक्षणे तण्डुलास्तान्हुत्वा तूष्णीं मेक्षणमादधाति न यमाय जुहोतीत्येकेऽपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याऽऽचरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्। ये देवाः पितरो ये च मानुषा ये गर्भे मम्रुरुत ये परास्ताः। य उद्धृता उत ये निखातास्ते सम्यञ्च इह मादयन्ताम्। ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्। ये ज्ञातीनां प्रतिरूपाः पितॄन्माययाऽसुराः प्रविष्टाः। परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति दक्षिणपूर्वमवान्तरदेशं सकृत्स्फ्येनोल्लिख्योदीरतामवर इत्यद्भिरवोक्ष्योल्लिखितान्ते निदधाति यजमानोऽत ऊर्ध्वं प्राचीनावीती कर्माणि करोति मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा इत्येकस्फ्यायां त्रीनुदकाञ्जलीन्निनयति प्रसव्यं वा त्रिः परिपिञ्चति त्रीनुदपात्रान्वाजसनेयिनः समामनन्ति ॥ ८ ॥

सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं तूष्णीं चतुर्थं स कृताकृतः प्रपितामहप्रभृतीन्वा नानामगृहीतं गच्छति यदि बन्धू न विद्यात्स्वधा पितृभ्यः पृथिविषद्भ्य इति प्रथमं पिण्डं दद्यात्स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयं स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयं यदि द्विपिता स्यादेकैकमस्मिन्पिण्डे द्वौ द्वावुपलक्षयेद्यदि जीवपिता न दद्यादा होमात्कृत्वा विरमेद्यन्मे माता प्रममाद यच्चचारानुव्रतम्। तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यतां पितृभ्यः स्वधा विभ्यः स्वधा नमः पितामहेभ्यः स्वधा विभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा विभ्यः स्वधा नम इत्युपस्थायात्र पितरो यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तत ओष्मणो व्यावृत उपास्तेऽमीमदन्त पितरः सोम्या इति व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वा यः स्थाल्यां शेषस्तमवजिघ्रति ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां वीरं धत्त पितर इत्यामयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽल्पम-

आघ्राय सन्नाघ्रात्तेन वा प्राश्यः पूर्ववदेकस्फ्यायां त्रीनुद्काञ्जलीनुपनिनीयाञ्जनाभ्यञ्जने वासश्च त्रिरनुपिण्डं ददात्याङ्क्ष्व ततासावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्याञ्जनमेवमभ्यञ्जनमभ्यङ्क्ष्वेति मन्त्रꣳ संनमति यदि नामानि न विद्यादाञ्जतां मम पितर आञ्जतां मम पितामहा आञ्जतां मम प्रपितामहा इत्याञ्जनम् । एवमभ्यञ्जनमभ्यञ्जतामिति मन्त्रꣳ संनमति ॥ ९ ॥

एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा योष्टेति वाससो दशां छित्त्वा निदधात्यूर्णास्तुकां वा पूर्वे वयस्युत्तर आयुषि स्वं लोम वीतोष्मसु पिण्डेषु नमो वः पितरो रसायेति नमस्काराञ्जपति गृहान्नः पितरो दत्त सदो वः पितरो देष्मेति पितृनुपतिष्ठत ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितृनित्युदकं निनयति मनो न्वाहुवामह इति मनस्वतीभिरुपतिष्ठत उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनुवेतापुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतास्विति पितृनुत्थापयति परेत पितरः सोम्या इति प्रवाहण्या पितृन्प्रवाहयति प्रजापते न त्वदेतानीति यज्ञोपवीती गार्हपत्यदेशं गच्छति यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठतेऽपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छत्याधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति । पुमाꣳसꣳ ह जानुका भवतीति विज्ञायते ये सजाताः समनसो जीवाजीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समा इत्यवशिष्टानामेकं यजमानः प्राश्नाति न वा स्थाल्यां पिण्डान्समवधाय ये समाना इति सकृदाच्छिन्नमग्नौ प्रहरत्यभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येहि देवानित्येकोल्मुकं प्रत्यपिसृज्य प्रोक्ष्य पात्राणि द्वंद्वमभ्युदाहरति संतिष्ठते पिण्डपितृयज्ञोऽपः पिण्डानभ्यवहरेद्ब्राह्मणं वा प्राशयेत्सोऽयमेवंविहित एवानाहिताग्नेरौपासने श्रपणधर्मा होमश्चातिप्रणीते वा जुहुयाद्यस्मिञ्जुहुयात्तमुपतिष्ठेत तत्र गार्हपत्यशब्दो लुप्येत संस्कारप्रतिषेधात् ॥ १० ॥

अमावास्यायां रात्र्याᳪ स्वयं यजमानो यत्राग्वाऽग्निहोत्रं जुहोत्यग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति नास्यैताᳪ रात्रिं कुमाराश्चन पयसो लभन्ते हुते सायमग्निहोत्रे सायंदोहं दोहय-त्यग्नीन्परिस्तीर्याग्निमग्नी वा सांनाय्यपात्राणि प्रक्षाल्योत्तरेण गार्हपत्यं दर्भान्सᳪस्तीर्य द्वंद्वं न्यञ्चि प्रयुनक्ति कुम्भीᳪ शाखापवि-त्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वा पिधा-नार्थमाग्निहोत्रहवणीमुपवेषं पर्णवल्कं तृणं च समावप्रच्छिन्नाग्रौ द-र्भौ प्रादेशमात्रौ पवित्रे कुरुते पवित्रे स्थो वैष्णव्यौ वायुर्वो मनसा पुनात्विति तृणं काष्ठं वाऽन्तर्धाय च्छिनत्ति न नखेन विष्णोर्म-नसा पूते स्थ इत्यद्भिरनुमृज्य पवित्रान्तर्हितायामग्निहोत्रहवण्या-मप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्विति प्रथममच्छिद्रेण पवित्रेणेति द्वितीयं वसोः सूर्यस्य रश्मिभिरिति तृतीयमापो देवीरग्रेपुव इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधात्यापो देवीः शुद्धाः स्थेमा पात्राणि शुन्धत उपातङ्क्याय देवानां पर्णवᳪकमुत शुन्धत । देवेन सवित्रो-त्पूता वसोः सूर्यस्य रश्मिभिः । गां दोहपवित्रे रज्जुᳪ सर्वा पात्राणि शुन्धतेति प्रोक्ष्यमाणान्यभिमन्त्र्यैता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते यजमानः ॥ ११ ॥

निष्टप्तᳪ रक्षो निष्टप्तोऽघशᳪस इति गार्हपत्ये सांनाय्यपात्राणि प्र-तितप्य धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय निरूढं जन्यं भयं निरू-ढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य मातरिश्व-नो घर्मोऽसीति तेषु कुम्भीमधिश्रयत्यमस्त्ᳪसाय यज्ञस्योखे उपदधा-म्यहम् । पशुभिः संनीतं बिभृतामिन्द्राय शृतं दधीति वा भृगूणामङ्गिरसां तपसा तप्यस्वेति प्रदक्षिणमङ्गारैः पर्यूह्य वसूनां पवित्रमसीति तस्यां प्रागग्रᳪ शाखापवित्रमत्यादधात्युदङ्प्रानः कुम्भीमन्वारभ्य वाचं यच्छति पवित्रं वा धारयन्नास्तेऽदित्यै रास्नासीत्यभिधानीमादत्ते त्रयस्त्रिᳪशोऽसि तन्तूनां पवित्रेण सहाऽऽ-गहि । शिवेयᳪ रज्जुरभिधान्यघ्न्यामुपसेवतामित्यादीयमानामभि-

मन्त्रयते यजमानः पूषाऽसीति वत्सममिदधात्युपसृष्टां मे प्रब्रूतादिति संप्रेष्यत्युपसृजामीत्यामन्त्रयते। अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीरिति वत्समुपसृजति गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टेति संप्रेष्यति यद्युपसृष्टां व्यवेयात्सांनाय्यं मा विलोपीति ब्रूयादुपसीदामीत्यामन्त्रयते। अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः। ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयमिति दोग्धोपसीदति न शूद्रो दुह्याद्दुह्याद्वा दारुपात्रे दोग्ध्युपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते। अयक्ष्मा वः प्रजया सꣳसृजामीत्युपसृष्टाम्। द्यौश्चेमं यज्ञं पृथिवी च संदुहातान्धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधात्विति दुह्यमानाम् ॥ १२ ॥

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳसुवर्विदम्। तदिन्द्राग्नी जिन्वतꣳ सूनृतावद्यजमानममृतत्वे दधात्विति धाराघोषं दुग्ध्वा हरति तं पृच्छति कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियमित्यमूमिति निर्दिशति। यस्यां देवानां मनुष्याणां पयो हितमिति प्रत्याह सा विश्वायुरित्यनुमन्त्रयते देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवेति कुम्भ्यां तिरः पवित्रमासिञ्चति हुतः स्तोको हुतो द्रप्स इति विप्रुषोऽनुमन्त्रयत एवं द्वितीयां तृतीयां च दोहयति सा विश्वव्यचा इति द्वितीयामनुमन्त्रयते सा विश्वकर्मेति तृतीयां तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहनेऽप आनीय संपृच्यध्वमृतावरीरिति कुम्भ्याꣳ संक्षालनमानीयाविष्यन्दयन्सुशृतं करोति दृꣳह गा दृꣳह गोपतिं मा वो यज्ञपती रिषदिति वर्त्म कुर्वन्प्रागुद्वासयत्युदक्प्रागुदग्वैकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थं दोहयित्वा संततमभिदुहन्त्योपवसथात्तेन शीतबुध्नमातनक्ति सोमेन त्वाऽऽतनच्मीन्द्राय दधीति दध्ना यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यग्निहोत्रोच्छेपणमन्वत्रधायायं पयः सोमं कृत्वा

स्वां योनिमपिगच्छतु । पर्णवल्कः पवित्रꣳ सौम्यः सोमाद्धि निर्मित इति परिवासनशकलमन्ववदधाति ॥ १३ ॥

ओषधयः पूतीकाः कलास्तण्डुलाः पर्णवल्का इत्यातञ्चनविकल्पा उच्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभाव अपर्णाभिरापो हविःषु जागृत यथा देवेषु जाग्रथ । एवमस्मिन्यज्ञे यजमानाय जागृतेत्ययस्पात्रे वाऽप आनीयादस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम् । अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इति तेनापिदधाति । अमृन्मयं देवपात्रं यज्ञस्याऽऽयुषि प्रयुज्यताम् । तिरः पवित्रमतिनीता आपो धारय माऽतिगुरिति यजमानो जपति यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वाऽपिधानेऽनुप्रविध्येद्विष्णो हव्यꣳ रक्षस्वेत्यनधो निदधातीमौ पर्ण च दर्भं च देवानाꣳ हव्यशोधनौ । प्रातर्वेपाय गोपाय विष्णो हव्यꣳ हि रक्षसीति प्रज्ञातꣳ शाखापवित्रं निदधाति तयैव शाखया दर्भैर्वा सायंदोहवत्प्रातर्दोहाय वत्सानपाकरोत्युपधाय कपालानि सायंदोहवत्प्रातर्दोहं दोहयत्यातञ्चनापिधाने निधानं च निवर्तते नासोमयाजी संनयेत्संनयेद्वा नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रिय इत्युक्तमौर्वो गौतमो भारद्वाजस्तेऽनन्तरं संमेज्याया महेन्द्रं यजेरन्यो वा कश्चित्ततः संप्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु । अपाꣳ रस ओषधीनाꣳ सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिँल्लोक इति परिस्तरणीमेतामेके समामनन्त्युदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्परिस्तृणात्युदगग्राः पश्चात्पुरस्ताच्चैतत्कृत्वोपवसत्यग्न्यन्वाधानं वत्सापाकरणमिध्माबर्हिर्वेदो वेदिः प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूत आघ्यलेपं निनीयोत्तरं परिगृह्णीयात्परिस्तरणं च पूर्वेद्युरमावास्यायां पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायाꣳ सर्वं क्रियते ॥ १४ ॥

उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाश्चत्वार ऋत्विजः पूर्ववदग्नीन्परिस्तृणाति यथापरिस्तीर्णा भवन्ति कर्मणे वां देवेभ्यः शकेयमिति हस्तावनिज्य यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति

गार्हपत्यात्प्रक्रम्य संततामुलपराजीꣳ स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तरां च दक्षिणेनाऽऽहवनीयं ब्रह्मयजमानयोरासने प्रकल्पयति पूर्वं ब्रह्मणोऽपरं यजमानस्योत्तरेण गार्हपत्याहवनीयौ दर्भान्सꣳस्तीर्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति प्रणीताप्रणयनं पात्रसꣳसादनात्पूर्वमेके समामनन्ति खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवैतेषां वा वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्योऽरत्निमात्र्यो वाऽग्राग्रास्त्वक्तोबिला हंसमुख्यः स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्ति ॥ १५ ॥

अत्र पूर्ववत्पवित्रे करोति यदि न संनयति । संनयतस्तु ते विभवतो वानस्पत्योऽसि देवेभ्यः शुन्धस्वेति प्रणीताप्रणयनं चमसमद्भिः प्रक्षालयति तूष्णीं कꣳसं मृन्मयं च कꣳसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठाकामस्य गोदोहनेन पशुकामस्यापरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन्को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व इत्यप आनयत्यपो गृह्णन्ग्रहीष्यंश्च पृथिवीं मनसा ध्यायत्युपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति सर्वत्र प्रसव उक्ते करोति प्रणीयमानासु वाचं यच्छतोऽध्वर्युर्यजमानश्चाहविष्कृतः को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञꣳ सꣳसादयन्तु नः । इदं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चतीरिति समं प्राणैर्धारयमाणः स्फ्येनोपसंगृह्याविषिञ्चन्हरति पृथिवीं च मनसा ध्यायति को वो युनक्ति स वो युनक्त्वित्युत्तरेणाऽऽहवनीयमसꣳस्पृष्टा दर्भेषु सादयति नेङ्गयन्ति नेलयन्त्याꣳसꣳस्थातोर्दर्भैरभिच्छाद्य संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति सपवित्रेण पाणिना पात्राणि संमृश्य ॥ १६ ॥

वानस्पत्याऽसि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते वेषाय त्वेति शूर्पं प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते प्रवसत्यग्ने हविर्निर्वप्स्यामीत्युर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजत्यपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा धूरसीति दक्षिणां युगधुरमभिमृशत्युत्तरां वा त्वं देवानामसि सस्नितममित्युत्तरामीषामालभ्य जपति विष्णुस्त्वाऽक्रꣳस्तेति सव्ये चक्रे दक्षिणं पादमत्याधायाह्रुतमसि हविर्धानमत्याराहत्युरु वातायेति परीणाहमपच्छाद्य मित्रस्य त्वा चक्षुषा प्रेक्ष इति पुरोडाशीयान्प्रेक्षते निरस्तꣳ रक्षो निरस्तोऽघशꣳस इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्योर्जाय वः पयो मयि धेहीत्यभिमन्त्र्य दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्निहोत्रहवण्या हवीꣳषि निर्वपति । तया वा पवित्रवत्या व्रीहीन्यवान्वा यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ १७ ॥

एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राग्निभ्यामित्यमावास्यायां चतुरो मुष्टीन्निरुप्य निरुप्तेष्वन्वोप्येदं देवानामिति निरुप्तानभिमृशतीदमु नः सहेत्यवशिष्टान्स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्येदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्यामिति प्राङ्प्रेक्षते सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयं स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानभिमन्त्र्य दृꣳहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरोह्योर्वन्तरिक्षमन्विहीति हरत्यदित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथादेवतमुपसादयत्याहवनीयं वा यद्याहवनीये श्रपयति यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्याꣳ सर्वाञ्छकटमन्त्राञ्जपेत् ॥ १८ ॥

सशूकायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये वो जुष्टं प्रोक्षामीति यथादेवतं हवींषि त्रिः प्रोक्षन्नाग्निमभिप्रोक्षेद्यं द्विष्यात्तस्याभिप्रोक्षेदुत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय

कर्मण इति त्रिः प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय देवस्य त्वा सवितुः प्रसव इति कृष्णाजिनमादायावधूतꣳ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्विशसनमदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति पुरस्तात्प्रतीचीं भसदमुपसमस्यत्यनुत्सृजन्कृष्णाजिनमधिषवणमसीति तस्मिन्नुलूखलमधिवर्तयत्यनुत्सृजन्नुलूखलमग्नेस्तनूरसीति तस्मिन्हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थमद्रिरसि वानस्पत्य इति मुसलमादाय हविष्कृदेहीति त्रिरवहन्ति अनवघ्नन्वा हविष्कृतं ह्वयति । हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य प्रथमं वा सर्वेषामव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति ॥ १९ ॥

उच्चैः समाहन्तवा इति संप्रेष्यति कुटरुरसि मधुजिह्व इत्याग्नीध्रोऽश्मानमादायेपमावदोर्जमावदेति दृषदुपले समाहन्ति द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयति सावित्रेण वा शम्यामादाय तया समाहन्ति वर्षवृद्धमसीति पुरस्ताच्छूर्पमुपोहत्युत्तरतो वा वर्षवृद्धा स्थेत्यभिमन्त्र्य प्रति त्वा वर्षवृद्धं वेत्विति त्युद्वपति परापूतꣳ रक्षः परापूता अरातय इत्युत्करे परापुनाति प्रविद्धꣳ रक्षः पराध्माता अमित्रा इति तुषान्प्रस्कन्दनोऽनुमन्त्रयते मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशं हस्तेनोपवपतीति बह्वृचब्राह्मणमद्भिः कपालꣳ संस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य वायुर्वो विविनक्त्विति विविच्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान्प्रस्कन्दयित्वाऽदब्धेन वश्चक्षुषाऽवपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाऽऽशिषमाशास इत्यवेक्ष्य त्रिष्फलीकर्तवा इति संप्रेष्यति या यजमानस्य पत्नी साऽभिद्रुत्यावहन्ति यो वा कश्चिदविद्यमानायाम् ॥ २० ॥

देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वं देवेभ्यः शुम्भध्वमिति सुफलीकृतान्करोति तूष्णीं वा प्रक्षाल्य तण्डुलांस्त्रिष्फलीक्रियमाणानां यो न्यङ्गोऽवशिष्यते । रक्षसां भागधेयमापस्तत्प्रवहता-

दित इत्युत्करे त्रिर्निनयत्यत्र कृष्णाजिनस्याऽऽदानादि प्रागधिवर्तनात्कृत्वा दिवस्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बाꣳ शम्यां निधाय धिषणाऽसि पर्वत्येति शम्यायां दृषदमत्याधाय धिषणाऽसि पार्वतेयीति दृषद्युपलामत्यादधाति पूर्ववदनुत्सर्गोऽऽशवः स्थ मधुमन्त इति तण्डुलानभिमन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थं प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति संततं पिनष्टि दीर्घामनुप्रसितिमायुषे धामिति प्राचीमन्ततोऽनुप्रोह्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वाऽदब्धेन वश्चक्षुषाऽवेक्ष इत्यवेक्ष्यासंवपन्ती पिंष्पाणूनि कुरुतादिति संप्रेष्यति दासी पिनष्टि पत्नी वाऽपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ॥ २१ ॥

आहवनीये गार्हपत्ये वा हवींꣳषि श्रपयति धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय रक्षसः पाणिं दहाहिरसि बुध्निय इत्यभिमन्त्र्यापाग्नेऽग्निमामादं जहीति गार्हपत्यात्प्रत्यञ्चावङ्गारौ निर्वर्त्य निष्क्रव्यादꣳ सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्याऽऽदेवयजं वहेति दक्षिणमवस्थाप्य ध्रुवमसीति तस्मिन्मध्यमं पुरोडाशकपालमुपदधाति निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति पूर्वं द्वितीयꣳ संस्पृष्टं धरुणमसीति पूर्वं तृतीयं चिदसि विश्वासु दिक्षु सीदेति मध्यमाद्दक्षिणं परिचिदसि विश्वासु दिक्षु सीदेति मध्यमादुत्तरं यथायोगमितराणि ॥ २२ ॥

मरुताꣳ शर्धोऽसीति पष्ठं धर्मासीति सप्तमं चितः स्थेत्यष्टममेवमुत्तरं कपालयोगमुपदधात्यपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्याऽभिनिधाय निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति तस्मादपरं धरुणमसीति तस्मात्पूर्वं यथायोगमितराणि तस्य तस्याङ्गुल्याभिनिधानमङ्गाराधिवर्तनं च वाजसनेयिनः समामनन्ति चितः स्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति ॥ २३ ॥

प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टꣳ संवपामीति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थꣳ संवपन्वाचं यच्छति तामभिवासयन्विसृजते प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिः संयौत्यन्या वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत्स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीयाद्भिः परि प्रजाता इति तप्ताभिरनुपरिप्लाव्य जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरोऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादेवतमभिमृशतीदमग्नेरित्याग्नेयमिदमग्नीषोमयोरित्यग्नीषोमीयमिदमहꣳसेनाया अभीत्वर्यै मुखमपोहामीति वेदेन कपालेभ्योऽङ्गारानपोह्य घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयत्येवमुत्तरमुत्तरेष्वेवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ २४ ॥

समानजातीयेन कर्मणैकैकमपवर्जयति यानि विभवन्ति सकृत्तानि क्रियन्त उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयत्यतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति यावन्तं वा मन्यते तं न सत्रा पृथुं करोतीत्येके त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीं करोत्यनतिक्षारयन्नन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्वाणि हवीꣳषि त्रिः पर्यग्नि कृत्वा देवस्त्वा सविता श्रपयत्वित्युल्मुकैः परितपत्यग्निस्ते तनुवं माऽतिधागिति दर्भैरभिज्वलयति ज्वालैर्वाऽविदहन्तः श्रपयतेति वाचं विसृजत आग्नीध्रो हवीꣳषि सुशृतानि करोति सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहत्यत्र वा वाचं विसृजेदङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लेखा लिखति प्राचीरुदीचीर्वा तास्वसꣳस्यदयꣳस्त्रिर्निनयति त्रितायैकताय स्वाहेत्येतैः प्रतिमन्त्रं निनीय वाऽभितपेदभितपेत् ॥ २५ ॥

इति प्रथमः प्रश्नः ।

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादायेन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्र्य हरस्ते मा प्रतिगामिति दर्भेण सꣳमृज्यापरे-

णाऽऽहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति यथाऽऽसन्नानि हवींᳪषि संभवेदेवं तिरश्चीं वेदेन वेदिं त्रिविन्दुः पृथिवीᳪ सा पप्रथे पृथिवी पार्थिवानि। गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिः संमार्ष्टयुपरिष्टाद्वा पूर्वार्धाद्वेदेर्वितृतीयदेशात्स्तम्बयजुर्हरति पृथिव्यै वर्मासीति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिᳪस्फ्येन प्रहृत्यापहतोऽररुः पृथिव्या इति स्फ्येन सतृणान्पाᳪसूनपादाय व्रजं गच्छ गोस्थानमिति हरति वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते यजमानं वा बधान देव सवितरित्युत्तरतः पुरस्ताद्वितृतीयदेश उदग्द्विपदेऽपरिमिते वा वेदेर्निवपति स उत्करोऽररुस्ते दिवं मा स्कानिति न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णात्येवं द्वितीयं तृतीयं च हरति तूष्णीं चतुर्थᳪ हरन्सर्वं दर्भशेषᳪ हरति ॥ १ ॥

अपाररुमदेवयजनं पृथिव्या इति द्वितीये प्रहरणोऽररुर्द्यां मा पप्तदिति तृतीयेऽपहतोऽररुः पृथिव्यै देवयजन्या इति द्वितीयेऽपादानोऽपहतोऽररुः पृथिव्या अदेवयजन इति तृतीयेऽवबाढᳪरक्ष इति द्वितीये निवपन आग्नीध्रोऽभिगृह्णात्यवबाढोऽघशᳪस इति तृतीयेऽवबाढा यातुधाना इति चतुर्थे द्रप्सस्ते द्यां मा स्कानिति खानिं प्रत्यवेक्ष्य स्फ्येन वेदिं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रा इति पश्चादादित्या इत्युत्तरतोऽपाररुमदेवयजनं पृथिव्या अदेवयजनो जहीति स्फ्येनोत्तमां त्वचमुद्धन्ति समुद्धतस्याऽऽग्नीध्र उत्करे त्रिर्निवपतीमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे। इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्त्विति संप्रेष्यति देवस्य सवितुः सव इति खनति द्व्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां यावत्पाण्योः शुक्लं तावतीं पृथुमात्रीᳪरथवर्त्ममात्रीᳪसीतामात्रीᳪ प्रादेशमात्रीं वा पुरीषवतीं नैता मात्रा अतिखनाति दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा ॥ २ ॥

प्राश्चौ वेद्यᳪसावुन्नयति प्रतीची श्रोणी पुरस्तादᳪहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवति यन्मूलमतिशेते स्फ्येन तच्छि-

नत्ति न नखेन मृत्पुरीषमतिशेत उत्करे तन्निवपत्याहार्यपुरीषां पशुकामस्य कुर्याद्यत्प्राक्खननात्तत्कृत्वा यदाहरेत्तन्मन्त्रेण ख-नेद्ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णात्यमृतमसीति दक्षिणत ऋतसदनमसीति पश्चादृत-श्रीरसीत्युत्तरतो विपरीतौ परिग्राहावेके समामनन्ति धा असि स्वधा असीति प्रतीचीं वेदिꣳ स्फ्येन योयुप्यत उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चꣳ स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीꣳ संनह्याऽऽज्येनोदेहीत्यपि वा न संप्रैषं ब्रूयात्प्रोक्षणीरभिपूर्योदञ्चꣳ स्फ्यमपोह्य दक्षिणेन स्फ्यमसꣳस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन्सादयत्यृतसधस्थेति द्वेष्यं मनसा ध्यायञ्छतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्च-मुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन्नवनिज्य हस्तौ पात्राणि पराहन्ति हस्ताववनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृ-शन्नुत्तरेणाऽऽहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति दक्षिणमिध्ममु-त्तरं बर्हिः ॥ ३ ॥

पत्नीसंनहनमेके पूर्वꣳ समामनन्ति स्रुक्संमार्जनमेके घृताचीरे-ताग्निर्वो ह्वयति देवयज्याया इति स्रुच आदाय प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्याग्निशिताः स्थ सपत्नक्षयणीरित्यभिमन्त्र्य वेदाग्राणि प्रतिविभज्याप्रतिवि-भज्य वा तैः स्रुचः संमार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाण उपभृतमेवोदीचीमित्येके गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तर-तोऽभ्याकारꣳ सर्वतो बिलमभिसमाहारꣳ मूलैर्दण्डं वाचं प्राणमिति जुहूमग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीं मूलैर्दण्डं चक्षुः श्रोत्रमित्युपभृतमुदीचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बा-ह्यतः प्रतीचीं मूलैर्दण्डं प्रजां योनिमिति यथा स्रुवमेवं ध्रुवां रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहꣳ संमार्ज्मीति प्राशि-त्रहरणं तूष्णीं वा न संमृष्टान्यसंमृष्टैः सꣳस्पर्शयत्यग्रैर्वेस्तेजिष्ठेन तेजसा निष्टपामीति पुनः प्रतितप्य प्रोक्ष्याग्रेणोत्करं दर्भेषु साद-यति जघनेन वा स्रुक्संमार्जनान्यद्भिः सꣳस्पर्श्य ॥ ४ ॥

दिवः शिल्पमवततं पृथिव्याः ककुभि श्रितम् । तेन वयं

सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यग्नौ प्रहरति यस्मिन्प्रातितपत्युत्करे वा न्यस्यत्याशासाना सौमनसमित्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां पत्नीꣳ संनह्यति तिष्ठन्तीं वा वाचयतीत्येके मौञ्जेन दाम्नाऽन्यतरतःपाशेन योक्त्रेण वाऽभ्यन्तरं वाससो न वासोऽभिसंनह्यत्यभिसंनह्यतीत्येक उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थायाग्ने गृहपत उप मा ह्वयस्वेति गार्हपत्यमुपतिष्ठते देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसीरिति देवपत्नीरुपतिष्ठते तस्माद्देशादपक्रम्य सुप्रजसस्त्वा वयमिति दक्षिणत उदीच्युपविशतीन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति जपति युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति बद्धाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते ॥ ५ ॥

पूषा ते बिलं विष्यत्विति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्नावाज्यं विलाप्यादितिरस्यच्छिद्रपत्रेत्याज्यस्थालीमादाय महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्येदं विष्णुर्विचक्रम इति दक्षिणाग्नावधिश्रित्येषे त्वेति दक्षिणार्धे गार्हपत्यस्याधिश्रित्योर्जे त्वेत्यपादाय वेदेनोपयम्य पत्न्या उपहराति तत्सा निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते महीनां पयोऽसीति तेजोऽसीत्युत्तरार्धे गार्हपत्यस्याधिश्रयति पत्न्यभावे तेजआदि लुप्यते गार्हपत्येऽधिश्रयणं तेजसे त्वेत्यपादाय तेजोऽसि तेजोऽनुप्रेहीति हरत्यग्निस्ते तेजो मा विनैदित्याहवनीयेऽधिश्रित्याग्नेर्जिह्वाऽसीति स्फ्यस्य वर्त्मन्सादयत्याज्यमासि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति ॥ ६ ॥

शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयं पूर्ववदाज्यलिप्ताभ्यां प्रोक्षणीरुत्पूयानिष्कासिना स्रुवेण वेदमुपभृतं कृत्वाऽन्तर्वेद्याज्यानि गृह्णाति समं बिलं धारयमाणो जुह्वां मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायां चतुर्जुह्वामष्टावुपभृति

चतुर्ध्रुवायां पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयो-र्दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायां शुक्रं त्वा शुक्रायामिति त्रिभिः पञ्चानां त्वा वातानामिति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रं पञ्चानां त्वा दिशां पञ्चानां त्वा पञ्चजनानां पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामीति चरोस्त्वा पञ्चबिलस्येति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा प्रतिमन्त्रं शेषेण ध्रुवायां चतुः पञ्चकृत्वो वा प्रतिमन्त्रं नोत्कर आज्यानि सादयति नान्तर्वेदि गृहीतस्य प्रतीचीनꣳ हरन्ति ॥ ७ ॥

पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्रस्येध्मं कृष्णोऽस्याखरेष्ठ इति त्रिः प्रोक्षति वेदिरसीति त्रिर्वेदिं बर्हिरसीति त्रिर्बर्हिरन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलꣳ स्रुच्यग्राण्युपपाद्य मूलान्युपपाययति पोषाय त्वेति सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थि प्रत्युक्ष्य प्रोक्षणीशेषꣳ स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संततं निनीय पूषा ते ग्रन्थि विष्यात्विति ग्रन्थि विस्रꣳसयति प्राञ्चमुदूढं प्रत्यञ्चमायच्छति विष्णो स्तूपोऽसीति कर्षन्निवाऽऽहवनीयं प्रतिप्रस्तरमपादत्ते नोद्यौति न प्रयौति न प्रतियौति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्ट्ययं प्राणश्चापानश्च यजमानमपि गच्छताम् । यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामीति तस्मिन्पवित्रे अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति यजमानाय प्रयच्छति यजमानो ब्रह्मणे ब्रह्मा प्रस्तरं धारयति यजमानो वा ॥ ८ ॥

दर्भैर्वेदिमन्तर्धाय दक्षिणतः संनह्नꣳ स्तृणात्यक्ष्णया वोर्णाम्रदसं त्वा स्तृणामीति बर्हिषा वेदिꣳ स्तृणाति बहुलमनतिदृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वाऽग्रैर्मूलान्यभिच्छादयति धातौ धातौ मन्त्रमावर्तयति प्रस्तरपाणिः सꣳस्पृष्टान्परिधीन्परिदधाति गन्धर्वोऽसि विश्वावसुरित्येतैः प्रतिमन्त्रमुदगग्रं

मध्यमं प्रागग्रावितरावाहवनीयमभ्यग्रं दक्षिणमवाग्रमुत्तरꣳ सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीयमभिमन्त्र्योपर्याहवनीये प्रस्तरं धारयन्नग्निं कल्पयत्यनूयाजार्थे प्राची उल्मुके उदूहतीति वाजसनेयकम् । मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावादधाति वीतिहोत्रं त्वा कव इति दक्षिणाꣳ समिदस्यायुषे त्वेत्युत्तरां तूष्णीं वा समावनन्तर्गर्भौ दर्भौ विधृती कुरुते विशो यन्त्रे स्थ इत्यन्तर्वेद्युदगग्रे निधाय वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेति तयोः प्रस्तरमत्यादधात्यभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यो जुहूरसि घृताचीत्येतैः प्रतिमन्त्रमनूचीरसꣳस्पृष्टाः स्रुचः प्रस्तरे सादयति ॥ ९ ॥

अपि वा जुहूमेव प्रस्तरे समं मूलैर्जुह्वा दण्डं करोत्युत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योरुत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योरृषभोऽसि शाक्वरो घृताचीनाꣳ सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति दक्षिणेन जुहूꣳ स्रुवं सादयत्युत्तरेणोत्तरेण वा ध्रुवामेता असदन्निति स्रुचोऽभिमन्त्र्य विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानीत्याज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्र्याऽऽप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽग्नये जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरं यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति प्रातर्दोहम् । स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त इति पात्र्यामुपस्तीर्याऽऽर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामित्यपर्यावर्तयन्पुरोडाशमुद्वास्य ॥ १० ॥

वेदेन भस्म प्रमृज्य तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति पात्र्यां प्रतिष्ठापयति तूष्णीं यवमयमिरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति स्रुवेण कपालानि प्रत्यज्य देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण पुरोडाशमनक्ति स्वक्तमकूर्मपृपन्त-

मपरिवर्गमणिकाषमुपरिष्टादभ्यज्याधस्तादुपानक्ति चतुर्होत्रा पौर्णमास्यां हवींष्यासादयेत्पञ्चहोत्राऽमावास्यायां प्रियेण नाम्ना प्रियꣳ सद आसीदेति यदन्यद्धविर्दर्शपूर्णमासिकेभ्यस्तदेतेनाऽऽसादयेदिति विज्ञायतेऽपरेण स्रुचः पुरोडाशावासादयत्युत्तरौ दोहावपि वा मध्ये वेद्याः सांनाय्यकुम्भ्यौ संदधाति पूर्वं शृतमपरं दध्यथैने व्युदूहति दक्षिणस्याꣳ श्रोण्याꣳ शृतमासादयत्युत्तरस्यां दध्ययं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोत्वित्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय वेद्यन्तान्परिस्तीर्य होतृषदनं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्यते ॥ ११ ॥

अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति समिध्यमानायानुब्रूहीति वा पञ्चदश सामिधेनीरन्वाह त्रींꣳस्तृचानित्युक्तं प्रणवे प्रणवे समिधमादधाति सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते प्रतिह्रसमानासु प्रकृतिवत्समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति परिधानीयायां वा वेदेनाग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरं परिधिसंधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि सꣳस्पर्शयत्याघारयोर्वेदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा स्रुवेणाऽऽज्यस्थाल्या आज्यमादायाऽऽप्यायतां ध्रुवा घृतेनेत्यवदायावदाय ध्रुवामाप्याययतीति सार्वत्रिकमग्नीत्परिधीꣳश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति ॥ १२ ॥

इध्मसंनहनैः सꣳस्पर्शैर्ऋतेस्पर्शैर्वाऽऽग्नीध्रोऽनुपरिक्रामं परिधीन्यथापरिधितमन्वग्रं त्रिस्त्रिः संमृज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निं प्राञ्चं भुवनमसीत्यग्रेण ध्रुवां जुहूं वाऽञ्जलिं कृत्वा जुह्वेहीति जुहूमादत्त उपभृदेहीत्युपभृतं सुयमे मे अद्य घृताची भूयास्तꣳ स्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति मुखतोऽभिहृत्य मुखत उपावहरति सर्वत्रैवमत्याधानोपावहरणे भवतो न च सꣳशिञ्जयति नाभिदेशे च स्रुचौ धारय-

त्यग्नाविष्णू मा वामवक्रमिषमित्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरं दक्षिणेन पदा दक्षिणाऽतिक्रामत्युदक्सव्येनैतद्वा विपरीतं विष्णोः स्थानमसीत्यवतिष्ठतेऽन्तर्वेदि दक्षिणः पादो भवत्यवघ्रः सव्योऽथोर्ध्वस्तिष्ठन्दक्षिणं परिधिसंधिमन्ववहृत्य ॥ १३ ॥

समारभ्योर्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि संꣳस्पर्शयति यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्येत्युक्तमूर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्य व्यृषण्वा न्यञ्चं वृष्टिकामस्य द्वेष्यस्येत्येक ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहुयादपि वा नाऽऽघारयेत्पूर्वार्धे मध्ये पश्चार्धे वा जुहुयाद्धुत्वाऽभिप्राणिति बृहद्भा इति स्रुचमुद्गृह्य पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्यसꣳस्पर्शयन्स्रुचौ प्रत्याक्रामत्येते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतो मखस्य शिरोऽसीति जुह्वा ध्रुवां द्विस्त्रिर्वा समनक्त्युन्नीतꣳ राय इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहेति जुहूमभिघार्य जुह्वोपादाय यज्ञेन यज्ञः संतत इति ध्रुवां प्रत्यभिघार्योऽऽयतने स्रुचौ सादयित्वा ॥ १४ ॥

क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णो स्थाने तिष्ठामीतीध्मसंनहनानि स्फ्य उपसंगृह्यत्रेधाश्च तृणमभ्यन्तमादायोत्तरतः प्रवरायावतिष्ठते पूर्वोऽध्वर्युरपर आग्नीध्र इध्मसंनहनान्याग्नीध्रोऽन्वारभ्य क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीति मन्त्रꣳ संनमति ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामीति ब्रह्माणमामन्त्र्याऽऽश्रावयो श्रावय श्रावयोमाश्रवयेति वाऽऽश्रावयत्यस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन्स्फ्यꣳ संमार्गांश्च धारयन्प्रत्याश्रावयत्याग्नीध्रे सोमे सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः ॥ १५ ॥

अनपव्याहरन्तः प्रचरन्त्याश्रावयिष्यन्नान्यदाश्रावणाद्ब्रूयादाश्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात्प्रत्याश्राविते नान्यदध्वर्युर्यजेति वचनाद्यजेत्युक्ते होता नान्यद्वषट्काराद्यद्यन्यद्ब्रूयात्पुनरेवाऽऽश्रावयेद्व्याहृतीर्वा जपेदूर्ध्वज्ञुमासीनꣳ होतारं वृणीतेऽग्नि-

दैवो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानस्त्रीन्यथर्षि मन्त्रकृतो वृणीते पि ह्येकं द्वौ त्री-न्पञ्च न चतुरो वृणीते न पञ्चातिवृणीत इत ऊर्ध्वानध्वर्युर्वृ-णीतेऽमुतोऽर्वाचो होता पुरोहितस्य प्रवरेण राजा प्रवृणीते ब्रह्म-ण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति प्रवरशेषमा-हापि वा नाऽऽर्षेयं वृणीते मनुवदित्येव ब्रूयात्सीदति होता होतुरु-पांशु नाम गृह्णाति मानुष इत्युच्चैर्वेद्यां तृणमपिसृजति ॥ १६ ॥

घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽप-रेणाऽऽघारसंभेदं पञ्च प्रयाजान्प्राचो यजति प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये सर्वान्वैकध्यमाश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं संप्रेष्यति यज यजेतीतरान्यं कामयेताभितरं वसीयान्स्यादित्य-भिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं न वसीयान्न पापीयानिति समानत्र तिष्ठंस्त्रीनिष्ट्वाऽर्धमौपभृतस्य जुह्वामानी-योत्तराविष्ट्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्य-भिघारयत्युपभृतमन्ततो न हवींष्यभिघारयेद्द्वेष्यस्याऽऽयतने स्रुचौ सादयति ॥ १७ ॥

आग्नेयः सौम्यश्चाऽऽज्यहविषाऽऽज्यभागौ चतुर्गृहीताभ्यां जमदग्नीनां तु पञ्चावत्तमप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चा-वत्तं कुर्वीत सर्वत्रावद्यन्नमुष्मा अनुब्रूहीति पुरोनुवाक्यां संप्रेष्य-त्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्याऽऽश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकमुत्तरार्धपूर्वार्धेऽग्नये जुहोति दक्षिणार्धपूर्वार्धे सोमाय समं पूर्वेणोभे ज्योतिष्मति पूर्वमाज्यभागं प्रति स्रुचावाक्ते न निदधात्या स्विष्टकृत आज्यभागावन्तरेणेतरा आहुतीर्जुहोति प्रत्याक्रम्य जुह्वामुपस्तीर्य मा भेर्मा संविक्था मा त्वा हिंसिषं मा ते तेजोऽप-क्रमीत् । भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिंसीरित्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमा-त्रमवदानं तिरीचीनमवद्यति पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः पश्चार्धात्तृतीयं पञ्चावत्तिनोऽसंभिन्दन्मांससंहिताभ्यामङ्गुलीभ्या-मङ्गुष्ठेन च पुरोडाशस्यावद्यति ॥ १८ ॥

स्रुवेणाऽऽज्यसांनाय्ययोरनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यान्मध्यादपरमवदाय पश्चार्धे स्रुचः पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यादपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽनुजावरो यो वा बुभूषेदथ यदि पुरोहितः पुरोधाकामो वा यजेत पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निधाय पूर्वार्धेऽग्नेर्जुहुयादवदानान्यभिघार्य यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघार्याग्नयेऽनुब्रूह्यग्निं यजेति संप्रैषावाज्यं श्रश्रोत्याप्रिदग्नादिवामक्षिण्वन्हुत्वाऽऽज्येनान्ववश्रोतयत्याघारसंभेदेनाऽऽहुतीः प्रतिपादयति स्रुच्यमाघारवभिजुहोति पूर्वां पूर्वां संहितां यं द्विष्यात्तं व्यृध्नन्मनसाऽऽहुतीर्जुहुयाद्यदा वीतार्चिर्लेलायतीवाग्निरथाऽऽहुतीर्जुहोत्याज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा प्रधानमेवोपांशु विष्णुं बुभूषन्यजेत ॥ १९ ॥

अग्नीषोमौ भ्रातृव्यवानाग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति समवदाय दोहाभ्यां दध्नाऽवदाय शृतस्यावद्यत्येतद्वा विपरीतं सर्वाणि द्रवाणि स्रुङ्मुखेन(ण) जुहोति स्रुवेण पार्वणौ होमौ । ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहताꣳ सुवीर्यं रायस्पोषꣳ सहस्रिणम् । प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याममावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहताꣳ सुवीर्यꣳ रायस्पोषꣳ सहस्रिणम् । अपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्याया नारिष्ठान्होमाञ्जुहोति दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् । यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमꣳहहौ । अहं देवानाꣳ सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयम् । अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः । मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या ॥ २० ॥

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति

कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । सं ते मनसा मनः सं प्राणे प्राणं दधामि ते संव्याने समपानं दधामि ते परिगृह्य यजमानोऽमृतोऽभूच्छ न एधि द्विपदे शं चतुष्पदे स्वाहेत्येतैः प्रतिमन्त्रमेष उपहोमानःकालोऽनन्तरं वा प्रधानात्प्राग्वा समिष्टयजुषो जुह्वामुपस्तीर्य सवपाःहावपामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति द्विः पञ्चावत्तिनो दैवतसौविष्टकृतैडचातुर्धाकारणिकानामुत्तरमुत्तरं ज्यायो द्विरभिघार्य न हविः प्रत्यभिघारयत्यग्नये स्विष्टकृतेऽनुब्रूह्यग्निःस्विष्टकृतं यजेति संभेपामुत्तरार्धपूर्वा जुहोत्यसंसक्तामितराभिराहुतीभिः प्रत्याक्रम्य जुह्वामप आनीय वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । स नः पितरं पितामहं प्रपितामहःस्वर्गे लोके पिन्वमानो बिभर्तु स्वाहेत्यन्तःपरिधि निनयति निनयति ॥ २१ ॥

इति द्वितीयः प्रश्नः ।

इडामेके पूर्वं समामनन्ति प्राशित्रमेक आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा ज्यायो यवमात्रादा व्याधात्कृत्यतामिदम् । मा रूरुपाम यज्ञस्य शुद्धःस्विष्टमिदःहविरित्येवमुत्तरस्यावद्यत्युपस्तीर्य नाभिघारयत्येतद्वा विपरीतमपि वोपस्तृणात्यभि च घारयत्यत्रैवास्य परिहरणप्राशनमेके समामनन्तीडापात्र उपस्तीर्य सर्वेभ्यो हविर्भ्य इडाःसमवद्यति चतुरवत्तां पञ्चावत्तां वा मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखामित्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति संभेदाद्द्वितीयं पूर्वार्धाच्च यजमानभागमणुभित्र दीर्घं तमाज्येन संतर्प्य ध्रुवाया उपोहत्यपि वा दक्षिणार्धादादाय यजमानभागमथ संभेदादेवमुत्तरस्यावद्यति ॥ १ ॥

अभिघार्येडाः होत्रे प्रदाय दक्षिणेन होतारमतिक्रामत्यनुत्सृजन्होतेडयाऽध्वर्युं परिगृह्णात्यपि वा प्राचीमिडामपोह्य दक्षिणत आसीनः स्रुवेण होतुरङ्गुलिपर्वणी अनक्त्यपरमङ्क्त्वा पूर्वमेतद्वा विपरीतमुपस्पृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यत्यध्वर्युः प्रथममवदानमवद्यति स्वयःहोतोत्तरमेतद्वा

विपरीतं लेपादुपस्तरणाभिघारणे भवतो द्विरभिघारयेत्पश्चात्र्त्विन उपहूयमानामन्वारभेते अध्वर्युर्यजमानश्च दैव्या अध्वर्यव उपहूता इत्यभिज्ञायोपहूतः पशुमानसानीत्यध्वर्युर्जपत्युपहूतोऽयं यजमान इत्यभिज्ञायैतमेव मन्त्रं यजमान उपहूतायामग्रेणाऽऽहवनीयं ब्रह्मणे प्राशित्रं परिहरति तस्मिन्प्राशिते होताऽवान्तरेडां प्राश्नाति वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा हुतं प्राश्नामीति प्राशितायामिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः। तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणा इति यजमानपञ्चमा इडां प्राश्य ॥ २ ॥

वाग्यता आसत आ मार्जनान्मनो ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वाऽऽग्नेयं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति बर्हिषदं वा कृत्वा चतुर्धा करोति तं यजमानो व्यादिशतीदं ब्रह्मण इदꣳ होतुरिदमध्वर्योरिदमग्नीध इत्यग्नीत्प्रथमान्होतृप्रथमान्वेदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य स्थविष्ठमग्नीधे षडवत्तꣳ संपादयति सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयत्यपि वा द्विरुपस्तृणाति द्विरादधाति द्विरभिघारयत्यग्नेराग्नीध्रमस्यग्नेः शर्मासि नमस्ते अस्तु मा मा हिꣳसीरित्याग्नीध्रो भक्षयति वेदेन ब्रह्मयजमानभागौ परिहरति पृथक्पात्राभ्यामितरयोः पृथिव्यै भागोऽसीति होता भक्षयत्यन्तरिक्षस्य भागोऽसीत्यध्वर्युर्दिवो भागोऽसीति ब्रह्मा दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति क्षीरे भवतीत्येके तमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य ॥ ३ ॥

दक्षिणसदृश्य उपहर्तवा इति संप्रेष्यति ये ब्राह्मणा उत्तरतस्तान्यजमान आह दक्षिणत एतेति तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति हविःशेषानुद्वास्यापिसृज्योल्मुके ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधीꣳश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यत्यनुज्ञातो ब्रह्मणाऽऽग्नीध्रः समिधमादधात्येषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहेति पूर्ववत्परिधीन्सकृत्सकृत्सं-

मृज्याग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजं जिगिवाꣳसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति सकृदग्निं प्राञ्चमिध्मसंनहनान्यद्भिः सꣳस्पर्श्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहेत्यग्नौ प्रहरत्युत्करे वा न्यस्यति शालायां बलजायां परोगोष्ठे परोगव्यूतौ वा ॥ ४ ॥

औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाघारसंभेदं प्रतीचस्तीननूयाजान्यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान्यजेति प्रथमꣳ संप्रेष्यति यज यजेतीतरौ पूर्वार्धे प्रथमꣳ समिधि जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमꣳ सꣳस्थापयन्नसिंतरावनुसंभिद्य प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूमुद्यच्छत्यथा सपत्नानिति सव्येनोपभृतं नियच्छत्युद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूं प्रोहत्यथा सपत्नानिति सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरस्तित्वा प्रोक्ष्यैनामभ्युदाहृत्य जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमꣳ रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरं न प्रस्तरे जुहूꣳ सादयति संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवतामिति विधृतीभ्यां प्रस्तरमपादाय बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति ॥ ५ ॥

अक्तꣳ रिहाणा इति जुह्वामग्रं प्रजां योनिमित्युपभृति मध्यमाप्यायन्तामाप ओषधय इति ध्रुवायां मूलमेवं त्रिरपि वा दिव्यङ्क्ष्वेति जुह्वामग्रमन्तरिक्षेऽङ्क्ष्वेत्युपभृति मध्यं पृथिव्यामङ्क्ष्वेति ध्रुवायां मूलमेवं पुनरथापरं पृथिव्यै त्वेति ध्रुवायां मूलमन्तरिक्षाय त्वेत्युपभृति मध्यं दिवे त्वेति जुह्वामग्रमायुषे त्वेत्यक्तस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीन आश्राव्य प्रत्याश्राविते संप्रेष्यतीषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्यनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति न स्वाहा करोति न विधूनोति नावधूनोति न विक्षिपति न प्रमार्ष्टि न

प्रतिमार्ष्टि नानुमार्ष्टि नोदञ्चं प्रहरेत्तिर्यञ्चं हस्तं धारयन्कर्षन्निवाऽऽहवनीये प्रहरति न प्रतिशृणातीत्युक्तं प्रथयित्वा प्रहरेद्यं कामयेत क्षयस्य जायेतेत्याशीः प्रतिप्रस्तरमन्वसृजाति ॥ ६ ॥

न्यञ्चं हस्तं पर्यावर्तयन्नग्नीद्गमयेति संप्रेष्यति त्रिरञ्जलिनाऽऽग्नीध्रोऽविष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रमथैनमाहाऽऽग्नीध्रोऽनुप्रहरेति यत्प्रस्तरात्तृणमपात्तं तदनुप्रहराति स्वगा तनुभ्य इत्येतद्देतदिति त्रिरङ्गुल्या निर्दिश्याग्निमभिमन्त्रयत आयुष्पा अग्नेऽस्यायुर्मे पाहीति ध्रुवाऽसीत्यन्तर्वेदि पृथिवीमभिमृशत्यथैनमाहाऽऽग्नीध्रः संवदस्वेत्यगानग्नीदित्यध्वर्युराहागन्नित्याग्नीध्रः श्रावयेत्यध्वर्युः श्रौषडित्याग्नीध्रो मध्यमं परिधिमन्वारभ्य संप्रेष्यति स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यनूच्यमाने शंयुवाक आहवनीये परिधीन्प्रहरति यं परिधिं पर्यधत्था इति मध्यमं यज्ञस्य पाथ उपसमितमितीतरावुत्तरार्ध्यस्याग्रमङ्गारेषूपोहति यजमानं प्रथतेति परिधीनभिमन्त्र्य जुहूमुपभृतोऽग्रमवधाय संस्रावभागा इति संस्रावेणाभिजुहोत्यत्रैवर्त्विजो हविःशेषान्भक्षयन्ति ॥ ७ ॥

आज्यलेपान्प्रक्षाल्य सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदꣳ होता स्फ्यमाज्यस्थालीमुदकमण्डलुं चाऽऽग्नीध्र आग्नीध्रप्रथमाः पत्नीः संयाजयिष्यन्तः प्रत्यञ्चो यन्त्यग्रेण गार्हपत्यं दक्षिणेनाध्वर्युः प्रतिपद्यत उत्तरेणेतरावर्त्वेषप्रगृह्णन्त सदसि सादयामीति कस्तम्भ्याꣳ स्रुवौ सादयित्वा धुरि धुर्यौ पातमिति युगधुरोः प्रोहति यदि पात्र्या निर्वपेदेताभ्यामेव यजुर्भ्याꣳ स्फ्ये स्रुचौ सादयेत्स्रुग्भ्याꣳ स्रुवाभ्यां वा पत्नीः संयाजयन्ति वेदमुपभृतं कृत्वा जुह्वा स्रुक्स्रुवेण चेत्येक अपरेण गार्हपत्यमूर्ध्वज्ञव आसीना ध्वानेनोपांशु वा पत्नीः संयाजयन्ति दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्यहोताऽऽज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्त्याज्यस्य वा यथागृहीतेन [illegible] सोमं यजेति संप्रैषावुत्तरार्धे जुहोत्येवमितरः [illegible] ॥ ८ ॥

देवानां पत्नीरग्निं गृहपतिमिति दक्षिणतस्त्वष्टारमुत्तरतो वा मध्येऽग्निं गृहपतिमाहवनीयतः परिश्रिते देवपत्नीरपरिश्रिते वा राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामो नित्य-

वदेके समामनन्ति पुरस्ताद्देवपत्नीभ्य एता एके समामनन्त्युप-रिष्टाद्वा पूर्ववद्धोतुरङ्गुलिपर्वणी अङ्क्त्वोऽस्पृष्टोदकाय होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्यति पडशीध उपहूयमानामन्वारभन्तेऽ-ध्वर्युराग्नीध्रः पत्नी चोपहूतां प्राश्नीतो होताऽऽग्नीध्रश्चात्र स्रुवेण संपत्नीयं जुहोति पत्न्यामन्वारब्धायां सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामराती-र्दिवि ज्योतिरजरमारभेतां स्वाहेति पुरस्ताद्देवपत्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वोपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्यां दक्षि-णाग्नाविध्ममप्रश्नानान्यभ्याधाय पिष्टलेपफलीकरणहोमौ जु-होति ॥ ९ ॥

फलीकरणहोमं पूर्वमेतद्वा विपरीतं चतुर्गृहीत आज्ये फलीकर-णानोप्याग्नेऽदब्धायोऽशीततनो इति जुहोत्येवं पिष्टलेपानुलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्तां यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति या सर-स्वती विशोभगीना तस्यै स्वाहा या सरस्वती वेशभगीना तस्यै स्वाहेन्द्रोपानस्यकेहमनसो वेशान्कुरु सुमनसः सजातान्स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति वेदोऽसीति वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति निर्द्विषन्तं निरराति नुदेतीतरा प्रास्तं प्रास्तं निर-स्यति तन्तुं तन्वन्निति वेदं होता गार्हपत्यात्प्रक्रम्य संततमाहवनी-यात्स्तृणात्या वा वेदेरिमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयति समायुषा सं प्रजये-त्यानीयमाने जपति निनीय मुखं विमृज्योत्तिष्ठति पुष्टिमती पशु-मती प्रजावती गृहमेधिनी भूयासमिति ॥ १० ॥

यथेतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति । ब्रह्म प्रतिष्ठा मनस इत्येषा श्रावितमत्याश्रावितं वषट्-कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन । ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र उत

विश्वभेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः । उद्वयं तमसस्पर्युदु त्यं चित्रमिमं मे वरुण तत्त्वायामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः । अयासन्हव्यमूहिषेऽया नो धेहि भेषजम् । प्रजापत इत्येषा । इष्टेभ्यः स्वाहा । वषडनिष्टेभ्यः स्वाहा । भेषजं दुरिष्ट्यै स्वाहा । निष्कृत्यै स्वाहा । दौराध्यै स्वाहा । दैवीभ्यस्तनूभ्यः स्वाहा । ऋद्ध्यै स्वाहा । समृद्ध्यै स्वाहा । अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजम् । यदस्मिन्यज्ञेऽन्तरगाममन्त्रतः कर्मतो वा । अनयाऽऽहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन ॥ ११ ॥

आज्ञातमनाज्ञातमभतं च मतं च यत् । जातवेदः संधेहि त्वꣳ हि वेत्थ यथातथम् । यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु । यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि । स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः । आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम । अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथम् । पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथम् । यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति । यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताम् ॥ १२ ॥

अयाऽग्निर्जातवेदा अन्तरः पूर्वो अस्मन्निषद्य । सन्वन्सनिं सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् । ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता पुरुत्रा । तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या । यो भूतानामुद्बुध्यस्वाग्न उदुत्तममिति व्याहृतिभिर्विहृताभिः समस्ता-

भिश्च हुत्वा पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तर्वेद्यूर्ध्व-स्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति मध्यमे स्वाहाकारे बर्हिरनुप्रहरति यदि यजमानः प्रवसेत्प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यज-मानभागमवधाय समिष्टयजुषा सह जुहुयादभिस्तृणीहि परिधेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्न इति होतृषदनैर्वेदिमभिस्तीर्य को वोऽयोक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि प्रणीता आसाद्य विमु-ञ्चति यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्ता-नस्मभ्यमिहा कुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुत्कर उपवेषꣳ स्थविमत उपगूहति ॥ १३ ॥

यद्यभिचरेद्योपवेषे शुक्साऽमुमृच्छतु यं द्विष्म इत्यथास्मै नाम-गृह्य प्रहरति निरमुं नुद ओकसः सपत्नो यः पृतन्यति । निर्बा-ध्येन हविषेन्द्र एणं पराशरीत, इहि तिस्रः परावत इहि पञ्च-जनाँ अति । इहि तिस्रोऽति रोचना यावत्सूर्यो असद्दिवि । परमां त्वा परावतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायसि शाश्वतीभ्यः समाभ्य इति हतोऽसाववधिष्मामुमित्येताभिः पञ्च-भिर्निरस्येन्निखनेद्वाऽवसृष्टः परापत शरो ब्रह्मसꣳशितः । गच्छा-मित्रान्प्रविश मैषां कंचनोच्छिष इति वा यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य सख्यायोद्वासयति संतिष्ठेते दर्शपूर्णमासौ शंय्वन्तं वाऽऽहवनीये सꣳस्थापयेदाज्येडान्तं गार्ह-पत्य इडान्तं वाऽऽहवनीये शंय्वन्तं गार्हपत्ये यदि शंय्वन्तं पश्चा-त्स्याद्वेदात्तृणमपादाय जुह्वामग्रमञ्ज्यात्स्रुवे मध्यमुपभृति वाऽऽ-ज्यस्थाल्यां मूलं तस्य प्रस्तरवत्कल्पः सूक्तवाकाद्या शंयुवाका-त्स्वर्गकामो दर्शपूर्णमासावेककामः सर्वकामो वा युगपत्कामयेताऽऽ-हारपृथक्त्वे वा ताभ्यां यावज्जीवं यजेत त्रिꣳशतं वा वर्षाणि जीर्णो वा विरमेद्वे पौर्णमास्यौ द्वे अमावस्ये यजेत यः कामयेत-र्ध्नुयामित्युक्त्वा हैकामेव यजेतेति ॥ १४ ॥

सꣳस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपाल-मनुनिर्वपति समानतन्त्रमेके समामनन्ति तस्य याथाकामी प्रक्रमे

प्रक्रमात्तु नियम्यते सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः शर्ध-वत्यौ संयाज्ये अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु। संजास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि। वातोपधूत इषिरो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे। आ ते यतन्ते रथ्यो यथा पृथक्शर्धाꣳस्यग्ने अजराणि धक्ष्यस इत्यग्नी-षोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपत्यादित्यं घृते चरुं सारस्वतं चरुममावास्यायां पौष्णं चैन्द्रमेकादशकपालममावा-स्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वेन्द्राय त्रात्रे चरुं द्वितीयं वैमृधस्य कुर्याद्यो मृत्योर्ज्यान्या वा विभीयान्मुष्करो दक्षिणेन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत्प्रजा-कामः पशुकामः सजातकाम एतं याऽनुनिर्वाप्यं कुर्वीतेतरौ वा यमभीव सꣳशयीत ॥ १५ ॥

स इन्द्राय वैमृधायानुनिर्वपेद्यो नेव घोषेन्नेव शृणुयात्स इन्द्रा-याꣳहोमुचे यो भ्रातृव्यवान्स्यात्स इन्द्राय वृत्रतुरेऽथ यं न कुत-श्चनाऽऽतपेत्स इन्द्रायैव यो भ्रातृव्यवान्स्यात्स पौर्णमासꣳ सꣳस्था-प्यैतामिष्टिमनुनिर्वपेदाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यायां पितृय-ज्ञमेवामावास्यायां कुरुते संक्रामे संक्रामे वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते त्र्यवराध्यममावास्याꣳ सक्रामत्यग्नीषोमीयानि प्रधानानि स्युरमावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा साकं-प्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते द्वौ सायꣳ दोहावेवं प्रातः सायꣳसायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याꣳ सर्वैर्वा प्रातः पात्रसꣳसादनकाले चत्वार्यौदुम्बराणि पात्राणि प्रयु-नक्ति तेषां जुहूवत्कल्प आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरो-डाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेन्द्रायानु-ब्रूह्याश्रावयेन्द्रं यजेति संप्रैषौ ॥ १६ ॥

यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपो-त्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरध्वर्युं जुह्वतमनु जुह्वति स्विष्टकृद्भक्षाश्च न विद्यन्ते समानमत ऊर्ध्वꣳ संतिष्ठते साकंप्रस्था-यीयो दाक्षायणयज्ञेन सुवर्गकामो द्वे पौर्णमास्यौ द्वे अमावास्ये यजेताऽऽग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां

पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्यामाग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्यां व्यावृत्काम इत्युक्तमृत्वे वा जायामुपेयात्सोऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत तेन पञ्चदश वर्षाणीष्ट्वा विरमेद्यजेत वा संतिष्ठते दाक्षायणयज्ञ एतेनैडादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः ॥ १७ ॥

ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म-भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माऽहंमनुष्याणां बृहस्पते यज्ञं गोपायेत्युक्त्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य निरस्तः परावसुः सह पाप्मनेति ब्रह्मसदनात्तृणं निरस्येदमहमर्वाग्वसोः सदने सीदामि प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या इत्युपविशत्याहवनीयमभ्यावृत्याऽऽस्ते कर्मणि कर्मणि वाचं यच्छति मन्त्रवत्सु वा कर्मसु याथाकामी तूष्णीकेषु यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेद्ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने ॥ १८ ॥

प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणाꣳसुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों प्रणयेति प्रसौति सर्वेष्वामन्त्रणेष्वेवं प्रसवस्तेन कर्मणा यस्मिन्नामन्त्रयते प्रोक्ष यज्ञमिति हविष इध्मावार्हिषश्च प्रोक्षे । बृहस्पते परिगृहाण वेदिꣳ स्वगा वो देवाः सदनानि सन्तु । तस्यां बर्हिः प्रथताꣳ साध्वन्तरहिताꣳ नः पृथिवी देव्यस्त्वित्युत्तरस्मिन्परिग्रहे । प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् । वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येष्विति प्रवरे देवता वर्धय त्वमिति

सर्वत्रानुषजति मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीयमानं प्रेक्षत ऋतस्य पथा पर्येहीति परिह्रियमाणꣳ सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणꣳ सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयामीडायाः पद इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डꣳ सादयित्वाऽदब्धेन त्वा चक्षुषाऽवेक्ष इत्यवेक्ष्य सावित्रेणाङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदायाग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीत्यसंम्लेत्यापिगिरति ॥ १९ ॥

या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहेत्यद्भिरभ्यवनीयाऽऽचम्य घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति वाङ्म आसन्निति यथालिमङ्गान्यरिष्टा विश्वानीत्यवशिष्टानि प्रक्षाल्य पात्रं पूरयित्वा दिशो जिन्वेति पराचीनं निनयति मां जिन्वेत्यभ्यात्मं यत्रास्मै ब्रह्मभागमाहरति तं प्रतिगृह्य नासꣳस्थिते भक्षयति ब्रह्मन्ब्रह्माऽसि ब्रह्मणे त्वा हुताद्य मा मा हिꣳसीरहुतो मह्यꣳ शिवो भवेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्म स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति यत्किंच यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ब्रह्मभागं प्राश्यायाडग्निर्जातवेदाः प्र णो यक्ष्याभिवस्यो अस्मान्सं नः सृज सुमत्या वाजवत्येत्याहवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामत्येवं विहिनमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम् ॥ २० ॥

इति तृतीयः प्रश्नः ।

याजमानं व्याख्यास्यामो यजमानस्य ब्रह्मचर्यं दक्षिणादानं द्रव्यप्रकल्पनं कामानां कामनं प्रत्यगाशिषो मन्त्राञ्जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयते पर्वणि च केशश्मश्रु वापयतेऽप्यल्पशो लोमानि वापयत इति वाजसनेयकं विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति यक्ष्यमाणोऽप उपस्पृशति तदिदꣳ सर्वयज्ञेषूपस्पर्शनं भवत्यग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहन्ति सूर्यमह्ने ।

आदित्यं ज्योतिषां ज्योतिरुत्तमᳶश्वो यज्ञाय रमतां देवताभ्यः । वसून्रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह तानावहतु पौर्णमासᳶ हविरिदमेषां मय्यामावास्यᳶ हविरिदमेषां मयीति यथालिङ्गमाहवनीयेऽन्वाधीयमाने जपत्यन्तराऽग्नी पशवो देवसᳶसदमागमन् । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराऽग्नी तिष्ठञ्जपतीह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेति गार्हपत्यम् ॥ १ ॥

अयं पितृणामग्निरवाड्ढव्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदिति दक्षिणाग्निमजस्रं त्वाᳶ सभापाला विजयभागᳶ समिन्धतामग्ने दीदाय मे सभ्य विजित्यै शरदः शतमिति सभ्यमन्नमावसथीयमभिहराणि शरदः शतमावसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छत्वित्यावसथ्यमिदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्यन्वाहितेषु जपति पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः । पुरा वत्सानामपाकर्तोरमावास्यायां पौर्णमासायोपवत्स्यन्तौ नातिसुहितौ भवतोऽमाषममाᳶसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा बर्हिषा पूर्णमासे व्रतमुपैति वत्सेष्वपाकृतेष्वमावास्यायां प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविःषु व्रतमुपैतीत्युभयत्र साधारणमशनमग्न्यन्वाधानं व्रतोपायनमित्येके व्रतोपायनमशनमग्न्यन्वाधानमित्येकेऽग्न्यन्वाधानं व्रतोपायनमशनमित्येके पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रामत्येष एवात ऊर्ध्वं यजमानस्य संचरो भवति ॥ २ ॥

दक्षिणेनाऽऽहवनीयमवस्थाय व्रतमुपैष्यन्समुद्रं मनसा ध्यायत्यथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणो वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामीति राजन्यवैश्यौ सर्वान्वा ब्राह्मणोऽथाऽऽदित्यमुपतिष्ठते सम्राडसि व्रतपा असि

व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमिति यद्यस्तामिते व्रतमुपेयादाहवनीयमुपतिष्ठन्नेनद्य जुजेपेदुभावग्नी उपस्तृणते देवता उपवसन्तु मे। अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनिति सायं परिस्तीर्यमाणेषु जपत्यारण्यꣳ सायमाशेऽश्नात्यमापममाꣳसमपि वा काममा मार्गादा मधुन आ प्राशातिकादपो वा न वा किंचिन्न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यादारण्यायोपवत्स्यन्नपोऽश्नाति न वा जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इत्यमावास्याꣳ रात्रिं जागर्यापि वा सुप्यादुपरि त्वेव न शयीतापि वोपरि शयीत ब्रह्मचारी त्वेव स्यादुभयत्र जागरणमेके समामनन्त्याहवनीयागारे गार्हपत्यागारे वा शेते ॥ ३ ॥

देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह माऽवत इदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मने। इदं करिष्ये भेषजमिदं मे विश्वभेषजा अश्विना प्रावतं युवमिति जपित्वा श्वोभूते ब्रह्माणं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इत्युक्त्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योपविशति पूर्वो ब्रह्माऽपरो यजमानो भूश्च कश्च वाक् चर्क् च गौश्च वट् च खं च धूश्च नूश्च पूश्चैकाक्षराः पूर्वंगमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्मपूताः स्थ। को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै। याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ इति प्रणीताः प्रणीयमाना अनुमन्त्रयते यजमान हविर्निर्वप्स्यामीत्युच्यमान ॐ निर्वपेत्युच्चैरनुजानात्यग्निꣳ होतारमिह तꣳ हुव इति हविर्निरुप्यमाणमभिमन्त्रयते हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते तदुदित्वा वाचं यच्छत्यथ यज्ञं युनक्ति कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते ॥ ४ ॥

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामानिति वेदिꣳ संमृज्यमानां यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मीति स्तम्बयजुर्ह्रियमाणमिदं तस्मै हर्म्यं करोमि यो

वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्वित्युत्करमभिगृह्यमाणं यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं परिगृह्यमाणां यदुद्घ्नन्तो जिहिंसिम पृथिवीमोषधीरपः । अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् । यदुद्घ्नन्तो जिहिंसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः । मा तेन हेड उपगाम भूम्याः शिवो नो विश्वैर्भुवनेभिरस्त्वित्युद्धन्यमानाम् । भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयाꣳसि । यज्ञिया यज्ञं विचयन्ति शं चौषधीराप इह शक्करीश्चेति क्रियमाणाम् । इडेऽन्यकृतूरहमपो देवीरुपब्रुवे । दिवा नक्तं च सस्रुषीरपस्वरीरिति प्रोक्षणीरासाद्यमानाः । ऊर्णामृदु प्रथमानꣳ स्योनं देवेभ्यो जुष्टꣳ सदनाय बर्हिः । सुवर्गे लोके यजमानꣳ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्निति बर्हिरासाद्यमानमङ्गिराज्यमाज्येनापः सम्यकुपुनीत सवितुः पवित्रैः । ता देवीः शक्करीः शाक्करेणेमं यज्ञमवत संविदाना इत्याज्यं प्रोक्षणीश्चोत्पूयमाना उभावाज्यग्रहाञ्जपतः ॥ ५ ॥

अशिश्रेम बर्हिरन्तः पृथिव्याꣳ सꣳरोहयन्त ओषधीर्विवृक्णाः । यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु । सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा अदब्धा इत्यन्तर्वेदि बर्हिरासन्नं चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि इषमूर्जं मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वाऽऽयुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्वेति स्तीर्यमाणां ध्रुवोऽसीत्येतैः प्रतिमन्त्रं परिधीन्परिधीयमानान् । अस्मिन्यज्ञ उपभूय इन्नु मेऽविक्षोभाय परिधीन्दधामि । धर्ता धरुणो धरीयानग्निर्द्वेषाꣳसि निरितो नु दाता इति च युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहवनीयं तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने । ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभन्यज्ञहनः पिशाचा इति च विच्छिनद्मि विधृतीभ्याꣳ सपत्नाञ्जाता-

न्भ्रातृव्यान्ये च जनिष्यमाणाः। विशो यन्त्राभ्यां विधमाम्यना-नह१५ स्वानामुत्तमोऽसानि देवाः। विशो यन्त्रे नुदमाने ऽरा-तिं विश्वं पाप्मानममतिं दुर्मरायुम्। सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणान्मयि धारयतं प्रजां मयि धारयतं पशून्मयि धारयतमिति विधृती आसाद्यमाने ॥ ६ ॥

अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम्। स दाधार समिधो विश्वरूपास्तस्मिन्स्रुचो अध्यासादयामीति प्रस्तरमासाद्यमानमारोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः। हिरण्यपक्षाजिरा संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः। जुहूरसि घृताची गायत्रीयाग्नी कविभिर्जुषाणा। अव्य-थमाना यज्ञमनुयच्छस्व सुनीति यज्ञं नयास्युप देवानाग्नेयेन शर्मणा दैव्येनेति जुहूम्। अवाहं बाध उपभृता सपत्नाञ्जाता-न्भ्रातृव्यान्ये च जनिष्यमाणाः। दोहै यज्ञ१५ सुदुघामिव धेनुमह-मुत्तरो भूयासमधरे मत्सपत्नाः। सुभृदस्युपभृद्घृताची त्रैष्टुभेन च्छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनुयच्छस्व सुनीति यज्ञं नयास्युप देवानैन्द्रेण शर्मणा दैव्येनेत्युपभृतम्। यो मा वाचा मनसा दुर्मरायुर्हृदाऽरातीयादभिदासदग्ने। इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः। ध्रुवाऽसि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञ-मनुयच्छस्व सुनीति यज्ञं नयास्युप देवान्वैश्वदेवेन शर्मणा दैव्ये-नेति ध्रुवाम्। स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके। दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः। अय१५ स्रुवो अभिजिहर्ति होमाञ्छत-क्षरश्छन्दसाऽऽनुष्टुभेन। सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्येनेति स्रुवम्। इय१५ स्थाली घृतस्य पूर्णाऽच्छिन्नपया शतधार उत्सः। मारुतेन शर्मणा दैव्येनेत्याज्यस्थालीम् ॥ ७ ॥

तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण तृप्तिरसि जागतं छन्दस्त-र्पय मा प्रजया पशुभिरिति पुरोडाशानव्यमानान्यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयता१५ शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः प्रजापतिरसि सर्वतः

श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताᳪ शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीरित्याग्नेयं पुरोडाशमासन्नमभिमृशति सर्वाणि वा हवींᳪषीदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवोऽचिकित्सन् । तेन देवा अवतोप माभिहेषमूर्जं यशः सह ओजः सनेयᳪ शृतं मयि श्रयतामिति प्रातर्दोहं यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोत्विति दध्ययं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान्त्सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्यामिति सर्वाणि हवींᳪषि यो नः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेयेत्यैन्द्राग्नं ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन सर्वाणि हवीᳪष्यासन्नान्यभिमृशेदष्टाभिर्वा चतुर्होत्रा पौर्णमास्याᳪ हवीᳪष्यासन्नान्यभिमृशेत्प्रजाकामः पञ्चहोत्राऽमावास्यायाᳪ स्वर्गकामो नित्यवदेके समामनन्ति ॥ ८ ॥

दशहोतारं वदेत्पुरस्तात्सामिधेनीनामङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकैरवन्त्विति सामिधेनीनां प्रतिपदि जपत्यनूच्यमानासु दशहोतारं व्याख्यायोच्छुष्मो अग्न इति समिध्यमानं समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नम इति समिद्धं मनोऽसि प्राजापत्यमिति स्रौवमाघार्यमाणᳪ स्रुच्यमन्वारभ्य वागस्यैन्द्रीत्यनुमन्त्रयते देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टᳪ स्वं दत्तᳪ स्वं पूर्तᳪ स्वᳪ श्रान्तᳪ स्वᳪ हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुर्य एवास्मि स सन्यज इति होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाणे चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान्हुतᳪ हुतमेको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मो द्वौ मम द्वे तस्य त्रयो मम तिस्रस्तस्य चत्वारो मम चतस्रस्तस्य पञ्च मम न तस्य किंचन योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येतैश्च प्रतिमन्त्रमग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्याज्य-

भागौ विहृतानुमन्त्रणौ वाऽग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान्भूयासꣳ सोमेन यज्ञश्चक्षुष्माꣳ सोमस्याहं देवयज्यया चक्षुष्मान्भूयासमिति विहृतौ पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्याग्नेरहं देवयज्ययाऽन्नादो भूयासमित्याग्नेयꣳ हुतमनुमन्त्रयतेद-ब्धिरसीत्युपाꣳशुयाजमग्नीषोमयोरित्यग्नीषोमीयमिन्द्राग्नियोरित्यैन्द्राग्नमिन्द्रस्येत्यैन्द्रꣳ सांनाय्यं महेन्द्रस्येति माहेन्द्रमग्नेः स्विष्टकृत इति सौविष्टकृतं पुरस्तात्स्विष्टकृतोऽन्यदेवतान्येके समामनन्ति ॥ ९ ॥

इन्द्रस्य वैमृधस्याहं देवयज्यया सपत्नो वीर्यवान्भूयासमिन्द्रस्य त्रातुरहं देवयज्यया त्रातो भूयासं द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम् । भूमानं प्रतिष्ठां गमेयमित्येके । पूष्णोऽहं देवयज्यया प्रजनिषीय प्रजया पशुभिः सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयमर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमेयमदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीयेन्द्रस्येन्द्रियावतोऽहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति यथालिङ्गं वैकृतीरग्निर्मा दुरिष्टात्पात्विति प्राशित्रमवदीयमानꣳ सुरूपवर्षवर्ण एहीतीडां भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहीतीडाया उपाꣳशूपहवे सप्त देवगवीर्जपति चिदसि मनाऽसि धीरसि रन्ती रमतिः सूनुः सूनरीत्युच्चैरुपहवे सप्त मनुष्यगवीः । देवीर्देवैरभि मा निवर्तध्वꣳ स्योनाः स्योनेन घृतेन मा समुक्षत नम इदमुदं भिषगृषिर्ब्रह्मा यद्वदे समुद्रादुदचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्निति चोपहूयमानायां वायविडा ते मातेति होतारमीक्षमाणां वायुं मनसा ध्यायेत्सा मे सत्याशीरित्याशिःष्वाशीर्म ऊर्जमिति चेडाया अहं देवयज्यया पशुमान्भूयासमित्युपहूतामिडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाभ्यस्माँ आगादिति भक्षायाऽऽह्रियमाणामुक्त इडाभक्षो मार्जनी च ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तामृतवो मे

कल्पन्तां संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां म इति बर्हिषि पुरोडाशमासन्नमभिमृशति ॥ १० ॥

अथैनं प्रतिदिशं व्यूह्त्याशानां त्वाऽऽशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रह्मपा हि भजतां भागो भागं मा भागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिदꣳ हविः सोम्यानाꣳ सोमपीथिनाम् । निर्भक्तोऽब्राह्मणो नेहाब्राह्मणस्यास्तीत्युपहूतो द्यौः पितोप मां द्यौः पिता ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायोपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायेत्याग्नीध्रभागस्थ वैशेषिकं ब्रध्न पिन्वस्वेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशतीयꣳ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदनेनातितराणि मृत्युमिति चोक्तः संप्रैषोऽन्वाहार्यस्य च दानमेषा ते अग्ने समिदित्यानूयाजिकीꣳ समिधमाधीयमानां यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन् । प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम् । सर्वाꣳस्तानग्ने संदह याꣳश्चाहं द्वेष्मि ये च मामित्याहितायामग्नौ वेदिर्बर्हिः शृतꣳ हविरिध्मः परिधयः स्रुचः । आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः । सं मे संनतयो नमन्तामिध्मसंनहने हुत इति संप्रागान्हुतान्सप्तहोतारं वदेत्पुरस्तादनूयाजानामुपरिष्टाद्वा ॥ ११ ॥

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासमित्येतैः प्रतिमन्त्रमनूयाजान्हुतꣳ हुतभुजौ वाजवत्यौ जपतो वसून्देवान्यज्ञेनापिप्रे रुद्रान्देवान्यज्ञेनापिप्रेमादित्यान्देवान्यज्ञेनापिप्रेमिति प्रतिमन्त्रं परिधीनज्यमानान्त्सप्रक्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरक्तां दिव्यं नभो गच्छतु यत्स्वाहेति प्रस्तरमज्यमानमग्नेरहमुज्जितिमनूज्जेषमिति यथालिङ्गꣳ सूक्तवाकदेवता यदा चास्य होता नाम गृह्णीयादथ ब्रूयादेषा

अग्मन्नाशिषो दोहकामा इति सा मे सत्याशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा पण्यात्पण्यतराऽरेडता मनसा देवान्गम्याद्यज्ञो देवान्गच्छत्वदो म आगच्छत्विति सूक्तवाकस्याऽऽशिःषु यत्कामयते तस्य नाम गृह्णाति रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रमग्नौधा प्रस्तरं प्रह्रियमाणं दिवः खीलोऽवततः पृथिव्या अध्युत्थितः। तेना सहस्रकाण्डेन द्विषन्तꣳ शोचयामासि। द्विषन्मे बहु शोचत्वोषधे मो अहꣳ शुचमिति प्रस्तरतृणे प्रह्रियमाणे वि ते मुञ्चामीति परिधिषु विमुच्यमानेषु विष्णोः शंयोरिति शंयुवाके यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व संभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नम इति च। इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वान्। अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहाऽऽगमेरिति सꣳस्रावꣳ हुतम्॥ १२॥

सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति यथालिङ्गं पत्नीसंयाजान्हुतꣳ हुतꣳ राकाया अहं देवयज्यया प्रजावान्भूयासꣳ सिनीवाल्या अहं देवयज्यया पशुमान्भूयासं कुह्वा अहं देवयज्यया पुष्टिमान्पशुमान्भूयासमिति काम्या राकाया अहं देवयज्यया प्रजावती भूयासꣳ सिनीवाल्या अहं देवयज्यया पशुमती भूयासं कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासमिति पत्न्यनुमन्त्रयत इडाऽस्मानन्तु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः। वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवीत्याज्येडामन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसीति पुरा विदेयेति यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्त इति विज्ञायते या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्मेति फलीकरणहोमे हुते ध्रुवं विमृष्ट वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छत्वदो म आगच्छत्विति समिष्टयजुर्हुतमनुमन्त्रयते यत्कामयते तस्य नाम गृह्णाति सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति॥ १३॥

दधिक्राव्णो अकारिषमिति सायंदोहमिदꣳ हविरिति प्रातर्दोहं नाब्राह्मणः सांनाय्यं प्राश्नीयादन्तर्वेदि प्रणीतास्वध्वर्युः संततामुदकधाराꣳ स्रावयति सदसि सन्मे भूया इत्यानीयमानायां जपति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सिच्य समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पय इत्यन्तर्वेदि शेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति । या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्ट उभौ कपालविमोचनं जपतो विष्णोः क्रमोऽसीति दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान्प्राचः क्रामत्युत्तरमुत्तरं ज्यायाꣳसमनतिहरन्सव्यं नाऽऽहवनीयमतिक्रामत्यवस्थाय चतुर्थं जपति विष्णुक्रमान्विष्णवतिक्रमानतिमोक्षानिति व्यतिषक्तानेके समामनन्ति विनिरूढानेकेऽग्निना देवेन पृतना जयामीति विष्णवतिक्रमा ये देवा यज्ञहन इत्यतीमोक्षा अगन्म सुवः सुवरगन्मेत्यादित्यमुपतिष्ठते ॥ १४ ॥

उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि निम्रोचन्नधरान्कृधि । उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम् ॥ यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापꣳ समूहतामिति चैन्द्रीमावृतमन्वावर्त इति प्रदक्षिणमावर्तते यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयात्पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरित्युक्त्वा समहं प्रजया सं मया प्रजेति पुनरुपावर्तते समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याहवनीयमुपसमिन्धे । वसुमान्यज्ञो वसीयान्भूयासमित्युपतिष्ठते ॥ १५ ॥

यो नः सपत्नो योऽरणो मर्तोऽभिसाति देवाः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचनेति चाग्न आयूꣳषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते । अग्ने गृहपत इति च पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्यामुष्मा इति जातस्य ज्योतिषे तन्तवे त्वाऽसावनु मा तन्वच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णात्यग्ने वह्ने स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योन इति दक्षिणाग्निं ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति पूर्ववन्नामग्रहणं ज्योतिरसि तन्तव इत्युपविश्य जपति वेदमुपस्थ आधायान्तर्वेद्यासीनोऽतीमोक्षाञ्जपत्यत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चत्यग्ने व्रतपते व्रतमचारिषमिति व्रतं विसृजते यज्ञो बभूवेति यज्ञस्य पुनरालम्भं जपति गोमानिति प्राङ्त्य गोमतीं जपत्यत्र वा यजमानभागं प्राश्नीयाद्यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति दर्शपूर्णमासाभ्याꣳ सोमेन पशुना वेष्ट्वा जपति वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामितीष्ट्वाऽप उपस्पृशति तदिदꣳ सर्वयज्ञेषूपस्पर्शनं भवति ब्राह्मणाꣳस्तर्पयितवा इति संप्रेष्यति प्रवसन्काले विहारमभिमुखो याजमानं जपति प्राचो विष्णुक्रमान्क्रामति प्राङ्ङेत्य गोमतीं जपति जपति ॥ १६ ॥

इति चतुर्थः प्रश्नः ॥

---

# दार्शपौर्णमासिकाश्वलायनीयहौत्रसूत्रम् ।

अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामोऽग्न्याधेयप्रभृतीन्याह वैतानिकानि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राऽऽम्नातत्वाद्दर्शपूर्णमासयोर्हविःष्वासन्नेषु होताऽऽमन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीता इध्ममपरेणाप्रणीते चात्वालं चात्वालवत्स्वेतत्तीर्थमित्याचक्षते तस्य नित्याः प्राञ्चश्चेष्टा अङ्गधारणा च यज्ञोपवीतशौचे च विहारादव्यावृत्तिश्च तत्र चेत्कर्मैकाङ्गवचने दक्षिणं प्रतीयादनादेशे कर्मचोदनायां होतारं ददातीति यजमानं जुहोति जपतीति प्रायश्चित्ते ब्रह्माणमृचं पादग्रहणे सूक्तं सूक्तादौ हीने पादेऽधिके तृचं सर्वत्र जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु मन्त्राश्च कर्मकरणाः प्रसङ्गादपवादो बलीयान्प्रपद्याभिहततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णीं समां निधाय प्रपदेन बर्हिराक्रम्य संहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसंमितावङ्कसंमितौ वा द्यावापृथिव्योः संधिमीक्षमाण एतद्धोतुः स्थानमासनं वा सर्वत्रैवंभूतो वचनादन्यत्प्रेषितो जपति ॥ १ ॥

नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च वाक्समस्थितयज्ञः साधुच्छन्दांसि प्रपद्येऽहमेव मामसुमिति स्वं नामाऽऽदिशेत भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्ति वहेत्यङ्गुल्यग्राण्यवकृष्य जातवेदो रमया पशून्मयीति प्रतिसंदध्याद्वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मसीयेति समाप्य सामिधेनीरन्वाह हिम् ३ इति हिंकृत्य भूर्भुवः स्वरो ३मिति जपत्येषोऽभिहिंकारो भूर्भुवः स्वरित्येव जपित्वा कौत्सो हिं करोति न च पूर्वं जपं जपत्यथ सामिधेन्यः प्र वो वाजा अभिद्यवोऽग्न आयाहि वीतये गृणान ईळेऽन्यो नमस्यस्तिरोऽग्निं दूतं

वृणीमहे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे ता एकश्रुतिसंततमनुब्रूयादुदात्तानुदात्तस्वरितानां परः संनिकर्ष ऐकश्रुत्यं स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत्तत्संततमेतदवसानमुत्तरादानमविप्रमोहे समाप्तौ प्रणवेनावसानं चतुर्मात्रोऽवसाने तस्यान्तापत्तिः स्पर्शेषु स्ववर्ग्यमुत्तममन्तस्थासु तां तामनुनासिकां रेफोष्मस्वनुस्वारं त्रिः प्रथमोत्तमे अन्वाहाध्यर्धकारमध्यर्धामुक्त्वाऽवस्येदथ द्वे द्वे प्रथममुत्तमस्यामथाध्यर्धां ताः पञ्चदशाभ्यस्ताभिरेतेन शस्त्रयाज्यानिगदानुवचनाभिष्टवनसंस्तवनानि न त्वन्यत्राध्यर्धकारं न जपः प्रागभिहिंकारान्नाभिहिंकाराभ्यासावबहुषु प्रकृत्या नावच्छेदादौ शस्त्रेष्वेव होत्रकाणामभिहिंकारः सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाँ असि ब्राह्मण भारतेति निगदेऽवसाय ॥ २ ॥

यजमानस्याऽऽर्षेयान्प्रवृणीते यावन्तः स्युः परं परं प्रथमं पौरोहित्यान्राजविशां राजर्षीन्वा राज्ञां सर्वेषां मानवेति संशये देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाळित्यवसायाऽऽस्पात्रं जुहूर्देवानां चमसो देवपानो राँ इवाग्ने नेमिर्देवाँस्त्वं परिभूरस्यावह देवान्यजमानायेति प्रतिपद्य देवता द्वितीयया विभक्त्याऽऽदेशमादेशमावहेत्यावाहयत्याऽर्दि प्लावयन्नग्न आवहेति तु प्रथमदेवतामग्निं सोममिन्याज्यभागावग्निमग्नीषोमाविति पौर्णमास्यामग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायामसंनयत इन्द्रं महेन्द्रं वा संनयतोऽन्तरेण हविषी विष्णुमुपांश्वंतरेषिणोऽग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेके नैके कंचनान्येषामप्युपांशूनामावह स्वाहाऽग्यादृप्रिया धामानीदं हविर्महो ज्याय इत्युच्चैर्येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा प्रत्यक्षमुपांशु प्रतिचोदनमावाहनं सर्वा आदिश्य सकृदेकप्रदानास्तथोत्तरेषु निगमेष्वेकामिव संस्तुयात्समानां देवतां समानार्थामव्यवहितां सकृन्निगमेष्वोहळास्वावापिकासु देवाँ आज्यपाँ आवहाग्निं होत्रायाऽऽवह स्वं महिमानमावहाऽऽवह जातवेदः सुयजा यजेत्यावाह्य यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्युह्य तृणानि भूमौ

प्रादेशं कुर्याददितिर्माताऽस्यान्तरिक्षान्मा च्छेत्सी रिदमहममिना देवेन देवतया त्रिवृता स्तोमेन रथंतरेण साम्ना गायत्रेण च्छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं हन्मीत्याश्रावयिष्यन्तमनुमन्त्रयेताऽऽश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्म-वर्चसायेति प्रवृणानं देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुष इति मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्ज-न्यस्य धामभिरुदस्थाममृतॉं अन्वित्युत्तिष्ठेत्षष्टिश्चाध्वर्यो नव-तिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः । सिनन्ति पाकम-तिधीर एतीत्युत्थाय ऋतस्य पन्थामन्वेमि होतेत्यभिक्रम्यां-सेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिनाऽऽग्नीध्रमङ्कदेशेन सव्येन वेन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम् । येनाऽऽयन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढीति सकृन्मन्त्रेण द्विस्तूष्णीं सर्वत्रैवं कर्मावृत्तौ स्पृष्टोदकं होतृषदनमभिमन्त्रयेताहेदैधिषव्योदत-स्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इत्यङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेन्निरस्तः परावसुरितीदमहमर्वा-वसोः सदने सीदामीत्युपविशेद्दक्षिणोत्तरिणोपस्थेनैते निरसनो-पवेशने सर्वासनेषु सर्वेषामहरहः प्रथमोपवेशनेऽपि समाने द्विरिति गौतमः ॥ ३ ॥

ब्रह्मौदने प्राशिष्यमाणेऽग्न्याधेये ब्रह्मा बहिष्पवमानात्प्रत्येत्य सोमे प्रसृप्य होता स्रुगादापने पशौ न पत्नीसांयाजिके नान्यत्र होतुरिति कौत्स उपविश्य देव बर्हिः स्वासस्थं त्वाऽध्यासदेयमि-त्यभिहिष होतः प्रतरां बर्हिषद्भवेति जानुशिरसा बर्हिरुपस्पृश्यात ऊर्ध्वं जपेद्भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यो विश्वे देवाः शास्त न मा यथेहाराधि होता निषदा यजीयांस्तदद्य वाचः प्रथमं मसीयेति समाप्य प्रदीप्त इध्मे

स्रुचावादापयेन्निगदेनाग्निर्होता वेत्वग्नेर्होत्रं वेतु प्रावित्रं साधु ते यजमान देवता यो अग्निमित्यवसाय होतारमद्वथा इति जपेदथ समापयेद्घृतवतीमध्वर्योः स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान्यजाम यज्ञियानिति समाप्तेऽस्मिन्निगदेऽध्वर्युराश्रावयति प्रत्याश्रावयेदाग्नीध्र उत्करदेशे तिष्ठन्स्फ्यमिध्मसंनहनानीत्यादाय दक्षिणामुख इति शाख्यायनक्रमस्तु श्रौ ३षळित्यौकारं प्लावयन् ॥ ४ ॥

प्रयाजैश्चरन्ति पञ्चैते भवन्त्येकैकं प्रेषितो यजत्यागूर्याज्यादिरनुयाजवर्जे ये ३ यजामह इत्यागूवषट्कारोऽन्त्यः सर्वत्रोच्चैस्तरां बलीयान्याज्यायास्तयोरादी प्लावयेद्याज्यान्तं न विविच्य संध्यक्षराणामकारं न चेद्द्विवचनो व्यञ्जनान्तो वा विसर्जनीयोऽनत्यक्षरोपधो रिष्यत इतरश्च रेफी लुप्यते रेफी प्रथमः स्वं तृतीयं नित्यं मकारे ये ३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु ३ वौ ३ षळिति वषट्कार इति प्रथमो वागोजः सह ओजो मयि प्राणापानाविति वषट्कारमुक्त्वोक्त्वाऽनुमन्त्रयते द्विवा कीर्त्यो वषट्कारस्तथाऽनुमन्त्रणमेतद्याज्यानिदर्शनं तनूनपादग्न आज्यस्य वेत्विति द्वितीयोऽन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यो नराशंसो अग्न आज्यस्य वेत्विति तेषामिळो अग्न आज्यस्य व्यन्त्विति तृतीयो बर्हिरग्न आज्यस्य वेत्विति चतुर्थ आगूर्य पञ्चमे स्वाहाऽमुं स्वाहाऽमुमिति यथावाहितमनुद्रुत्य देवता यथाचोदितमनावाहिताः स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्वित्याऽतो मन्द्रेणोर्ध्वं च शंयुवाकान्मध्यमेन हवींष्यास्विष्टकृत उत्तमेन शेषोऽग्निर्वृत्राणि जङ्घनदिति पूर्वस्याऽऽज्यभागस्यानुवाक्या त्वं सोमासि सत्पतिरित्युत्तरस्य जुषाणो अग्निराज्यस्य वेत्विति पूर्वस्य याज्या जुषाणः सोम आज्यस्य हविषो वेत्वित्युत्तरस्य तावागूर्याऽऽदेशं यजति सर्वाश्चानुवाक्यावत्यो प्रैषा अन्या अन्वायात्याभ्यः सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं पत्नीसंयाजांश्चैतौ वार्त्रघ्नौ पौर्णमास्यामनुवाक्यालिङ्गविशेषान्नामधेयान्यत्वं ततो विचारो नित्ये याज्ये वृधन्वन्तावमावास्यायामग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमित्याऽतो वाग्यमनम-

न्तरा च याज्यानुवाक्ये निगदानुवचनाभिष्टवनशस्त्रजपानां चाऽऽरभ्याऽऽ समाप्तेरन्यद्यज्ञस्य साधनादापद्यातो देवा अवन्तु न इति जपेदपि वाऽन्यां वैष्णवीम् ॥ ५ ॥

उक्ता देवतास्तासां याज्यानुवाक्या अग्निर्मूर्धा भुवो यज्ञस्यायमग्निः सहस्रिण इति वेदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामग्नीषोमासवेदसा युवमेतानि दिवि रोचनानीन्द्राग्नी अवसाऽऽगतं गीर्भिर्विप्रः प्रमतिमिच्छमान एन्द्रसानासिं रयिं प्रससाहिषे पुरुहूत शत्रून्महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति यद्यग्नीषोमीय उपांशुयाजोऽग्नीषोमा यो अद्य वामाऽन्यं दिवो मातरिश्वा जभारेत्यथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या ये ३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरित्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रिया धामान्ययाळित्युपसंतनुयादेवमुत्तरा अयाळयाळिति त्वेव तासां पुरस्तादाज्यपान्तमनुक्रम्य देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति प्रकृत्या वा ॥ ६ ॥

प्रदेशिन्याः पर्वणी उत्तमे अङ्क्त्वौष्ठयोरभ्यात्मं निमार्ष्टि वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामीत्युत्तरमुत्तरे मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामीत्यधरमधरे स्पृष्ट्वोदकमञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादस्या उदगङ्गुलिं पाणिमुपधायावान्तरेळामवदापयीतान्तरेणाङ्गुष्ठमङ्गुलीश्च स्वयं द्वितीयमाददीत प्रत्यालब्धामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्याङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्याऽऽस्यसंमितामुपह्वयते प्राणसंमितां वा । इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहताऽऽदित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहूता सह पृथिव्या रथंतरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथंतरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सहर्षभोप मां धेनुः

सहऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयतामित्युपांश्वथोच्चैः । इळोपहूतोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इत्युपहूयावान्तरेळां प्राश्नीयादिळे भागं जुषस्व नः पिन्व गा जिन्वार्वतो रायस्पोषस्येशिषे । तस्य नो रास्व तस्य नोदास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः सर्वपुरुषा इति वा ॥ ७ ॥

मार्जयित्वाऽनुयाजैश्चरन्ति परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनं देवादयोऽनुयाजा वीतवत्पदान्तास्त्रय एकैकं प्रेषितो यजति देवं बर्हिर्वसुवने वसुधेयस्य वेतु । देवो नराशंसो वसुवने वसुधेयस्य वेतु । देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्नेऽयान्देवानयाड्याँ अपि प्रैर्येते होत्रे अमत्सत तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहीत्यनवानं वा ॥ ८ ॥

सूक्तवाकाय संप्रेषित इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदीत्यवसाय प्रथमया विभक्त्याऽऽदिश्य देवतामिदं हविरजुषतावीवृधत महो ज्यायोऽक्रतेत्युपसंतनुयादेवमुत्तरा अक्रातामक्रतेति यथार्थमुक्तमुपांशोरातापिकान्तमनुद्रुत्य देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो

ज्यायोऽकृताग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानोऽसावसावित्यस्याऽऽदिश्य नामनी उपांशु संनिधौ गुरोरायुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसस्पातामेह गतिर्वामस्येदं नमो देवेभ्य इति ॥ ९ ॥

शंयुवाकाय संप्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यावद्प्रणवां वेदमस्मै प्रयच्छत्यध्वर्युस्तं गृह्णीयाद्वेदोऽसि वेदो विदेयेत्युदायुषेत्येतेनोपोत्थाय पश्चाद्गार्हपत्यस्योपविश्य सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमित्याज्येन यजन्त्याप्यायस्व समेतु ते सं ते पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तुरीपमधपोषयित्नु देवानां पत्नीरुशतीरवन्तु न इति द्वे अग्निर्होता गृहपतिः स राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजा अथ प्रजाकामो राकां सिनीवालीं कुहूमिति प्राग्गृहपतेर्यजेत राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये । कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितृणां तस्यै ते देवि हविषा विधेम । कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधात्वित्याज्यं पाणितलेऽवदापयीतेळामुपहूय सर्वां प्राश्नीयाच्छंयुवाको भवेन्न वा ॥ १० ॥

वेदं पत्न्यै प्रदाय वाचयेद्धोताऽध्वर्युर्वा वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनम् । यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वेति वेदशिरसा नाभिदेशमालभेत प्रजाकामा चेदथास्या योक्त्रं विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशादिति तत्प्रत्यग्गार्हपत्याद्द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि

वेदतृणानि करोति पुरस्तात्पूर्णपात्रं संश्लिष्टं वेदतृणैरभिमृश्य वाचयेत्पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठा इत्यथैनां पूर्णपात्रात्प्रतिदिशमुदकमुत्क्षन्नुत्क्षन्तीं वाचयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वाऽथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायाऽऽत्मनश्च सव्यं पूर्णपात्रं निनयन्वाचयेन्माऽहं प्रजां परासिचं या नः सयावरीः स्थ न। समुद्रे वो निनयानि स्वं पाथो अपीथेति वेदतृणान्यग्रे गृहीत्वाऽविधून्वन्संततं स्तृणन्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्रजसो भानुमन्विहीति शेषं निधाय प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणाऽऽदाय सर्वप्रायश्चित्तानि जुहुयात्स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठितो यत्किंचाप्रेषितो यजेदन्यत्राप्येवंभूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च। अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयासा वयसा कृतोऽयासन्हव्यमूहिषे या नो धेहि भेषजं स्वाहा। अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रम्यानियमः। ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च। यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नम इति संस्थाजप इति होतुः॥ ११॥

इति दार्शपौर्णमासिकाश्वलायनीयहौत्रसूत्रम्।

## अथ दार्शपौर्णमासिकाश्वलायनीयब्रह्मसूत्रम्।

अथ ब्रह्मणो हौत्राऽऽचमनयज्ञोपवीतशौचानि नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां व्रजतां वा बहिर्वेदि यां दिशं व्रजेयुः सैव तत्र प्राची चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पस्तिष्ठद्धोमाश्च येऽवषट्कारा आसीतान्यत्र समस्तपाण्यङ्गुष्ठोऽग्रेणाऽऽहवनीयं परीत्य दक्षिणतः कुशेषूपविशेद्बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृह-

स्पते यज्ञं गोपायेत्युपविश्य जपेदेष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यत्रोपवेशनमुपविष्टमतिसर्जयते ब्रह्मन्नपः प्रणेष्यामीति श्रुत्वा भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वों३ प्रणयेत्यतिसृजेत्सर्वत्र यथाकर्म त्वादेशाः प्रणवाद्युच्चैरूर्ध्वं वा प्रणवादत ऊर्ध्वं वाग्यत आस्त आ हविष्कृत उद्वादनादा मार्जनात्पशौ सोमे घर्मादि चातिप्रैषादि चाऽऽसुब्रह्मण्यायाः प्रातरनुवाकाद्याऽन्तर्यामाद्धरिवतोऽनुसवनमेळायाः स्तोत्रेष्वतिसर्जनाद्या वषट्काराद्दोहचः पवमानेषु यच्च किंच मन्त्रवद्धोत्रा शेष आपत्तिश्च यत्र त्वग्निः प्रणीयतेऽपि ससोमे तदादि तत्र वाग्यमनं दक्षिणतश्च व्रजञ्जपत्यायुः शिशान इति सूक्तं समाप्योपवेशनाद्युक्तं न तु सौमिके प्रणयने ब्रह्मजपोऽन्यत्र विसृष्टवागबहुभाषी यज्ञमना विपर्यासेऽन्तरिते मन्त्रे कर्मणि वाऽऽख्याते वोपलक्ष्य वा जान्वाच्याऽऽहुतिं जुहुयाद्दक्षश्चेद्भूरिति गार्हपत्ये यजुष्टो भुव इति दक्षिण आग्नीध्रीये सोमेषु सामतः स्वरित्याहवनीये सर्वतोऽविज्ञाते वा भूर्भुवः स्वरित्याहवनीय एव प्राक्प्रयाजेभ्योऽङ्गारं बहिष्परिधि निर्वृत्तं स्रुवदण्डेनाभिनिदध्यान्मा तपो मा यज्ञस्तपन्मा यज्ञपतिस्तपन्नमस्ते अस्त्वाय ते नमो रुद्र पराय ते । नमो यत्र निषीदसीत्यमुं मा हिंसीरमुं मा हिंसीरिति च प्रतिदिशमध्वर्युयजमानौ पुरस्ताच्चेद्ब्रह्मयजमानौ दक्षिणतो होतृपत्नीयजमानान्पश्चादाग्नीध्रयजमाना उत्तरतोऽथैनमनुप्रहरेदाऽहं यज्ञं ददे निर्ऋतेरुपस्थात्तं देवेषु परिददामि विद्वान् । सुप्रजास्त्वं शतहिमा मदन्त इह नो देवा मयि शर्म यच्छतेति तमभिजुहुयात्सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्त्सुप्रतीकः । मा नो हिंसीद्धिंसितो नेत्त्वा जहामि गोपोषं च नो वीरपोषं च यच्छ स्वाहेति ॥१२॥

प्राशित्रमाह्रियमाणमीक्षते मित्रस्य त्वा चक्षुषा प्रतीक्ष इति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकनिष्ठिकाभ्यामसंखादन्प्राश्नीयादग्नेष्ट्वाऽऽस्येन प्राश्नामि बृहस्पतेर्मुखेनेत्याचम्यान्वाघ्रामेत्सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं

शमयन्तु चक्षुः श्रोत्रं प्राणान्मे मा हिंसीरितीन्द्रस्य त्वा जठरे दधामीति नाभिमालभेत प्रक्षाल्य प्राशित्रहरणं त्रिरनेनाभ्यात्ममपो निनयते मार्जयित्वाऽस्मिन्ब्रह्मभागं निदध्यात्पश्चात्कुशेषु यजमानभागमन्वाहार्यमवेक्षेत प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च प्राणापानौ मे पाहि कामाय त्वेत्यस्पृशन्नवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां शिष्टं गृहीत्वा ब्रह्मभागे निदध्याद्ब्रह्मन्प्रस्थास्याम इति श्रुत्वा बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वों३ प्रतिष्ठेति समिधमनुजानीयात्संस्थिते जघन्य ऋत्विजां सर्वप्रायश्चित्तानि जुहुयात्तमितरेऽन्वालभेरन्होतारं वैतयोर्नित्यहोमः सर्वे संस्थाजपेनोपतिष्ठन्त उपतिष्ठन्ते ॥ १३ ॥

इति दार्शपौर्णमासिकाश्वलायनीयब्रह्मसूत्रम् ।



हरिः ॐ

सव्याख्यम्

# आपस्तम्बमहर्षिप्रणीतं परिभाषासूत्रम् ।

तत्र प्रथमः खण्डः ।

## यज्ञं व्याख्यास्यामः ॥ १ ॥

कपर्दिस्वामिभाष्यम्—व्याख्यानं नाम शब्दप्रतिपादितस्यार्थस्य न्यायलब्धार्थस्वरूपकथनमस्मादयमर्थो लभ्यत इति । यज्ञशब्देन साङ्गोपाङ्गोऽभिधीयते । स तु यज्ञो देवतोद्देशेन द्रव्यत्यागात्मको याग इति क्रियाविशेषः । स हि निःश्रेयसाय चोदितः । अन्ये जपादयो निःश्रेयसाय विहिताः । तेऽपि यज्ञव्याख्यानेनैव व्याख्याताः । स तु यज्ञोऽनेकशाखापठितोऽनेकशाखापेक्षोऽनेकशाखान्तरविध्युपसंहारापेक्षः प्रकृतिविकृत्यात्मकोऽव्याख्यातोऽनुष्ठातुमशक्यत्वाच्छ्रेयस्करत्वाच्च विस्तरेण स्पष्टो व्याख्यायते । तदिदं व्याख्यानं सर्वकर्मशेषत्वादादावेव प्राप्तं सदन्ते कृतं कथं नु नामाधिकारनिरूपणादि यथासंभवमाचारगृह्यकर्मस्वपि प्राप्तं स्यादित्येवमर्थम् ॥ १ ॥

हरदत्ताचार्यवृत्तिः—अत्रायमारम्भहेतुर्नित्ययज्ञक्रिया पुरुषस्य श्रेयोऽभिव्यनक्ति । तस्यैवाक्रिया प्रत्यवायं संपादयति । ऋणश्रुतेः, अक्रियायाश्च प्रायश्चित्तविधानात् । ये चान्य आश्रमा ऊर्ध्वरेतसां ते च नित्यश्रुतिविरोधादनधिकृतान्धपङ्ग्वादिविषयतया व्याख्येयाः । एवमनुष्ठेयो यज्ञः श्रुत्यर्थस्यासर्वज्ञागम्यत्वेन शाखान्तरविध्युपसंहाराशक्तेश्च व्याख्यानतोऽनुष्ठातुं शक्यत इति करुणाविष्टहृदयतया धर्मकथनागतश्रेयोऽर्थितया यज्ञं व्याचिकीर्षन्नाचार्यः प्रतिजानीते—यज्ञं व्याख्यास्याम इति । यज्ञम् । वि । आ । ख्यास्यामः । देवतां प्रति स्वद्रव्यस्योत्सर्जनं यज्ञः । यज्ञ इत्येकविंशतिसंस्थो यज्ञो जात्यभिधानेन व्यपदिश्यते । सप्त

सोमसंस्थाः सप्त हविर्यज्ञसंस्थाः सप्त पाकयज्ञसंस्था इति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः । अग्निहोत्रं दर्शपूर्णमासावाग्रयणं पिण्डपितृयज्ञश्चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः । वि, आ, इत्येतावुपसर्गौ क्रियाशब्दमर्थान्तरे वर्तमानमभिद्योतयतः । यथा प्रतिष्ठित इति तामेव क्रियां विशेषयति । अत्र विशब्दो विस्तरार्थः । अधिकृतायां शाखायां संक्षेपतोऽभिधाने शाखान्तरस्थान्विधीनुपसंहृत्येत्यर्थः । आङ्बलवदर्थे । श्रुत्यर्थसंशये सिद्धान्तं बलवद्धेतुभिरुपपाद्येत्यर्थः । व्याख्यास्याम इति चक्षिङो व्यक्तवचनार्थस्य ख्याञादेशस्य लृट्प्रत्यय उत्तमपुरुषरूपम् । व्यक्तं वक्ष्याम इत्यर्थः । एवमेकविंशतिसंस्थं शाखान्तरस्थान्विधीन्विस्तरेणोपसंहृत्य सिद्धान्तं बलवदुपपाद्य व्यक्तं वक्ष्याम इत्यर्थः ॥ १ ॥

स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च ॥ २ ॥

क०-स तु याग आदितस्त्रयाणां वर्णानां ब्राह्मणराजन्यवैश्यानामदुष्टकर्मणामनुष्ठानसमर्थानां सपत्नीकानां कामिनां प्रत्येकमुपदिश्यते । वैश्यस्य चेति पृथङ्निर्देशात्क्वचिदृत्विग्यजमाने कर्मणि वैश्यस्य ब्राह्मण [ राजन्याभ्यां ] सह प्रयोगः । ब्राह्मणराजन्ययोरिति द्वंद्वसमासात् " एतेन द्वौ वा त्रीन्वा याजयेत् " इत्यादौ तयोरन्योन्यसहितयोर्यजमानत्वं लभ्यते । त्रयाणां वर्णानां यागोपदेशात् " धर्मे चार्थे च कामे च नातिचरितव्या " इति " सहोभौ धर्मम् " इति च लिङ्गात् " क्षौमे वसानौ जायापती अग्निमादधीयाताम् " इति श्रुतेश्च ब्राह्मणस्य ब्राह्मण्या जायया सहाधिकारः क्ष [ त्रियवैश्याभ्यां जायाभ्या ]मिति च लभ्यते । क्षत्रियस्य क्षत्रियया सह वैश्ययाऽपि लभ्यते । वैश्यस्य वैश्ययैव । न तु शूद्रया सह सर्वेषाम् । " तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः " इति वचनात् । वैश्यस्य चेति चकारात्क्वचिदत्रैवर्णिकस्याप्यदुष्टस्येदं भवति स्थपतेः, " निषादस्थपतिं याजयेत् " इति वचनात् । क्वचिदपत्नीकस्य पशुरवकी-

र्णिनः, “ यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत ” इति वचनात् । तयोराधानाभावाल्लौकिकेष्वग्निषु यज्ञप्रयोगः । स्थपतेरुपनयनाभावाद्यावद्भिर्याजमानमन्त्रैरिष्टिसिद्धिस्तावतोऽनुपनीत एवाधीते । यावन्तो मन्त्रा आधानादिषु पत्नीभिरुच्चार्यास्ते सर्वे ताभिरध्येतव्याः । तासामप्युपनयनाभावात् । स त्रयाणां वर्णानामिति ग्रहणाद्वर्णत्रयापेतानां यज्ञो न स्यात् । “ वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यम् । शरदि वैश्यम् । ” “ वसन्तो ब्राह्मणस्याऽऽधाने । ग्रीष्मो राजन्यस्य हेमन्तो वा । शरद्वैश्यस्य ” इत्येव सर्वत्र वर्णत्रयस्योपनयनाधानाभिधानात् । तस्मात् त्रयाणां वर्णानामधिकारः ॥ २ ॥

इ०—स खलु यज्ञः श्रेयःसाधनत्वाद्यो निःश्रेयसार्थी तस्य प्राप्तः श्रेयोर्थित्वेऽपि शूद्रस्य मा भूदितीदमारभ्यते । ननु ब्राह्मणराजन्यवैश्यानामित्येतदेव सूत्रमस्तु । स त्रयाणां वर्णानामित्यनर्थकम् । वैश्यस्येत्यसमासेन ग्रहणं चानर्थकम् । उच्यते । पूर्वसूत्रे यज्ञमिति द्वितीयान्तेन कर्मतया निर्दिष्टत्वादस्मिन्सूत्रे कर्मतयाऽनुवृत्तिर्मा भूदिति स इति निर्दिष्टः । त्रयाणामिति वचनं ब्राह्मणस्य भार्यात्वेन शास्त्रान्तरविहिताभ्यां क्षत्रियवैश्याभ्यां वसन्ताधाने ज्योतिष्टोमादिषु च ब्राह्मणस्य सहाधिकारार्थं त्रयाणां परस्परसहितानामधिकार इति । यद्वा ब्राह्मणभार्यायाः शूद्रायाः पतिप्रयुक्तसहाधिकारमाशङ्क्य तस्याः प्रतिषेधार्थं त्रयाणामेवाधिकारो न शूद्राया इति । “ रमणायैव साऽथ न धर्माय ” इति वासिष्ठवचनात् । वर्णग्रहणमिन्द्रवरुणादीनां देवानां तिरश्चां च पश्वादीनामृषीणां च वसिष्ठादीनामधिकारनिवृत्त्यर्थम् । वैश्यस्येत्यसमासनिर्देशः “ एतेन द्वौ त्रीन्वा याजयेत् ” इत्यनेकयजमानेष्वहीनेषु वैश्येन सहानयोरधिकारनिवृत्त्यर्थम् । चकारो निषादस्थपतेस्त्रैवर्णिकस्याप्यधिकारसमुच्चयार्थः ॥ २ ॥

**स त्रिभिर्वेदैर्विधीयत ऋग्वेदयजुर्वेदसामवेदैः ॥ ३ ॥**

क०—स तु यज्ञस्त्रिभिर्वेदैः साध्यो यागो विधीयते । नैकेन वेदेन नैकशाखया वा तस्य साङ्गस्य यागस्य विधिः । यतः सर्वेषु सर्वासु शाखासु श्रूयमाणोऽग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिरेक

एवाभिन्नो द्वितीयादिदर्शनदेवदत्तवत्प्रतीयते । अत एकस्यैव सतस्तत्र तत्र वेदशाखायां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैरङ्गान्युपदिश्यन्ते । अतस्त्रिभिरेवैतैः साङ्गस्य विधिः । विधीयत इति विधिः । विविच्य पुनरभिहितमुच्चैर्ऋग्वेदसामवेदाभ्यामिति स्वरविधानार्थम् । ऋग्वेदेन होता करोतीत्यादिभिर्ऋत्विङ्नियमार्थं च ॥ ३ ॥

ह०—स यज्ञो व्याख्येयतया प्रतिज्ञातो न विज्ञायते केन ग्रन्थेन विधीयत इति तत्प्रतिज्ञानायाऽऽरभ्यते—स त्रिभिरिति । त्रिभिर्वेदैः । वेदयतीति वेदः । ऋग्वेदश्च यजुर्वेदश्च सामवेदश्च ऋग्वेदयजुर्वेदसामवेदाः । तैर्यज्ञो विधीयते । ननु ऋग्वेदयजुर्वेदसामवेदैरित्येतत्सूत्रमस्तु स त्रिभिर्वेदैरित्यनर्थकम् । उच्यते । स इति वचनं स एव ऋग्वेदविहितः स एव यजुर्वेदविहितः स एव सामवेदविहित इति वेदत्रयविहितानां ज्योतिष्टोमादीनां प्रतिपत्त्यर्थम् । त्रिभिरिति वचनं त्रिभिरेव तस्याङ्गस्य विधिः समाप्यते नैकेनेति ज्ञापनार्थम् । अतो वेदत्रयविहिताङ्गकलापस्योपसंहारः । यथा वसन्ते ज्योतिष्टोमेनेति सामवेदाम्नातस्य वसन्तकालस्य । वेदैरिति वचनं सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययमेकं कर्मेति प्रतिपत्त्यर्थम् । अतः शाखान्तरस्थाङ्गस्योपसंहारः । वैकल्पिकश्चायमुपसंहारः । शाखाभेदस्यार्थवत्त्वात् । अत एव स्वाध्यायमधीयीत स्वाध्यायोऽध्येतव्य इति चैकत्वविवक्षायामेकैकस्यामेव शाखायां दृष्टार्थं भवति ॥ ३ ॥

## ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ ॥ ४ ॥

क०—ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ साङ्गौ विधीयेते । "यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्" इत्यादिभिर्वाक्यैर्यजुर्वेदविहितत्वादुपांशुत्वे प्राप्ते तयोर्यान्यङ्गानि ऋग्वेदविहितानि तत्रोच्चैस्त्वं होता च कर्ता स्यात्, यानि यजुर्वेदविहितानि तत्राध्वर्युः कर्तेति ॥ ४ ॥

ह०—सर्वयज्ञानां त्रिभिरेव विधानं प्रसक्तं तन्मा भूदित्युपरितनसूत्राणामारम्भः । ऋग्वेदश्च यजुर्वेदश्च ऋग्वेदयजुर्वेदौ । दर्श इति

सूर्याचन्द्रमसोः परः संनिकर्षोऽभिधीयते । पश्यन्ति हि सूर्याचन्द्रमसौ सहभूतावस्मिन्काले कालज्ञाः । एतत्कालसंयोगादहोरात्रौ । तत्कालवर्तित्वादाग्नेयादिप्रधानसमुदायः । मास इति चन्द्रमस आख्या । एवं ह्याहुर्नैरुक्ताः—मासो मासात्कालश्चन्द्रमाश्चेति । पूर्णो मासो यस्मिन्काले स पूर्णमासः । दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ । तावृग्वेदयजुर्वेदाभ्यां विधीयेते, न सामवेदेनेत्यर्थः । यश्च यजुर्वेदे हौत्राम्नायः स ऋग्वेदशेष एव । यच्च सूत्रकारेण हौत्रमाम्नातं तद्वेदान्तरात्कृत्स्नविधिमुपादायाऽऽम्नातं मन्तव्यम् ॥ ४ ॥

## यजुर्वेदेनाग्निहोत्रम् ॥ ५ ॥

क०—साङ्गं यजुर्वेदविहितमिति अध्वर्युकर्तृकत्वमुपांशुत्वं च ॥ ५ ॥

ह०—अग्निहोत्रमिति कर्मनामधेयम् । तस्य ब्राह्मणनिर्वचनम् "सोऽग्निरबिभेत्" इत्यारभ्य "एतद्भागधेयमभ्यजायत । यदग्निहोत्रम् । तस्मादग्निहोत्रमुच्यते" इति । अग्नेरत्र सायमाहुतिरिति प्रवृत्तिकारणम् । अग्निहोत्रं यजुर्वेदेन विधीयते । न ऋग्वेदसामवेदाभ्यामित्यर्थः । यश्चाग्निहोत्रविधिराम्नात ऋग्वेदे स यजुर्वेदशेष एव । यच्चाऽऽश्वलायनेनाग्निहोत्रमाम्नातं तद्यजुर्वेदादेव विधिमुपादायाऽऽम्नातमिति मन्तव्यम् ॥ ५ ॥

## सर्वैरग्निष्टोमः ॥ ६ ॥

क०—कस्तर्हि त्रिभिर्वेदैर्विधीयत इत्यत्राऽऽह—सर्वैरग्निष्टोमः । अग्निष्टोमशब्देनाग्निष्टोमसंस्थश्चासौ प्रकृतिभूतो ज्योतिष्टोम उच्यते । स तु साङ्गः प्रस्तुतैः सर्वैर्वेदैर्विधीयते । स्तोत्राणि सामवेदेन । शस्त्राणि ऋग्वेदेन । ग्रहग्रहणादि यजुर्वेदेन । तत्र स्तोत्राण्युद्गात्रा कर्तव्यानि । शस्त्राणि होत्रा । ग्रहग्रहणादीन्यध्वर्युणा ॥ ६ ॥

ह०—प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणसंकीर्तने स्तोमशब्दः । यज्ञायज्ञीयं सामाऽऽग्नेयम् । तत्साध्यं स्तोत्रमग्निष्टोमः । इह तत्स्तोत्रसंस्थत्वा-त्क्रतोरग्निष्टोमाभिधानम् । ऋग्वेदादिभिस्त्रिभिरेव तस्य साङ्गो विधिः पूर्यत इत्यर्थः । ननु 'स त्रिभिः' इति वचनस्य निर्मु-

क्तापवादस्य पारिशेष्यादग्निष्टोमविषयत्वेनावसितत्वात्तदर्थं आरम्भेणेति चेत्। उच्यते। अथर्वणवेदप्राप्त्यर्थोऽयमारम्भः सर्वैरथर्ववेदसहितैरग्निष्टोमो विधीयत इति। तत्र हि कृत्स्नं ब्रह्मत्वमाम्नातम्। एवं स त्रिभिरिति विरुद्धमापद्येत। अत्र ब्रूमः। त्रिष्वपि वेदेषु यद्ब्रह्मत्वमाम्नातं तेनैव सकलं पूर्यत इति नैकेनाप्यथर्वापेक्षेति प्रतिपादयितुं स त्रिभिरित्यारब्धम्। तथा च श्रुतिः—"यदृचैव हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति अथ केन ब्रह्मत्वं क्रियते त्रय्या विद्ययेति ब्रूयात्" इति। तस्मात्सूत्रद्वयेनैवं व्यवस्थितं त्रिभिर्वेदैर्ब्रह्मत्वं क्रियतेऽथर्वणवेदेन वेति। अथवा दर्वीहोमानामपि त्रिभिरेव विधाने प्राप्ते तन्निवृत्त्यर्थमिदमारभ्यते यत्र यत्र वेदे दर्वीहोमविधानं तत्र साकल्येनैवेति॥ ६॥

## उच्चैर्ऋग्वेदसामवेदाभ्यां क्रियते॥ ७॥

क०—दूरस्थस्य श्रवणकरणशब्दप्रयोग उच्चैः प्रयोगः। ऋग्वेदसामवेदविहितानां मन्त्राणां साम्नां चोच्चैः प्रयोगः कर्तव्यः। वेदग्रहणादेवैतद्वेदविहितानां यजुषामप्युच्चैः प्रयोगः कर्तव्यः॥७॥

इ०—उच्चैरित्येतदव्ययम्। अनेन शब्दोच्चारणे विशेषो विधीयते येन शब्दो व्यक्तं श्रूयते। क्रियायामुच्चैस्त्वासंभवात्। ये मन्त्रा ऋग्वेदसामवेदाभ्यां विहितास्त उच्चैरुच्चारणीया इति सूत्रार्थोऽवधार्यते। वेदग्रहणादृग्वेदसामवेदाभ्यां यानि विधीयन्ते यजूंषि तान्युच्चैरेव प्रयोक्तव्यानि॥ ७॥

## उपांशु यजुर्वेदेन॥ ८॥

क०—क्रियत इत्यनुषङ्गः। करणवदशब्दममनःप्रयोग उपांशु। यजुर्वेदविहितानां मन्त्राणामृचां साम्नां चोपांशुप्रयोग एव। यजुषामप्यूहप्रवराणाम्। ऋग्वेदविहितं हौत्रं तत्रोच्चैस्त्वम्। यद्य ('द) पि यजुर्वेदविहितं हौत्रमिष्टिहौत्रादि तदप्युच्चैरेव कर्तव्यम्। जामदग्न्ये चतूरात्रे यजुर्वेदेनाऽऽग्नेयादयः पुरोडाशा विहिताः। उपसत्सु तेषां हौत्रमन्त्राः सामवेदविहिता अग्निर्होता वेत्त्वग्नेर्होत्रमित्यादयः। तेषां यजुर्वेदविहितहोमशेषविहितत्वादुपांश्वेव प्रयोगः॥ ८॥

ह०—करणवदशब्दममनःप्रयोग उपांशु ताल्वादिव्यापारे प्रत्यक्षेऽपि यत्र शब्दो न श्रूयते । न च मनोव्यापारमात्रं तदुपांश्वित्युच्यते । यजुर्वेदविहिता मन्त्रा उपांशु प्रयोक्तव्या इत्यर्थः । अत्रापि वेदग्रहणाद्यजुर्वेदविहितानां साम्नामृचामूहादीनां चोपांशु प्रयोगः सिद्धो भवति । यत्र याजुर्वेदिकानामङ्गानां भूयस्त्वं तत्कर्म सकलं यजुर्वेदविहितमेवेति मन्तव्यम् । यथा—आधाने सामगानसहितः सकलप्रयोगो यजुर्वेदविहित एवेति आधानाङ्गभूतस्य साम्नोऽपि प्रयोग उपांश्वेव भवति । अतो यच्चाऽऽश्वलायनेनाग्निहोत्रमाम्नातं तदप्युपांश्वेव प्रयोक्तव्यम् । तथा च याजुर्वेदिकमपि हौत्रमृग्वेदशेषत्वात्सर्वमुच्चैरेव प्रयोक्तव्यम् । तथा जमदग्नेश्चतूरात्रे उपसदि पुरोडाशहोमार्थं मन्त्रा अग्नेर्होत्रमित्येवमादयः सामवेद आम्नाता याजुर्वेदिकप्रयोगविधिशेषत्वादुपांश्वेव प्रयोक्तव्याः ॥ ८ ॥

अन्यत्राऽऽश्रुतप्रत्याश्रुतप्रवरसंवादसंप्रेषैश्च ॥ ९ ॥

क०—आश्रुतमाश्रावयेति । प्रत्याश्रुतमस्तु श्रौषडिति । प्रवरः, अग्निर्देवो होतेत्यादिः । संवादो ब्रह्मन् प्रोक्षिष्यामि ओं प्रोक्षेति । संप्रेषः प्रोक्षणीरासादयेत्यादिः । पञ्चम्यर्थे तृतीया । तेभ्योऽन्यत्र यजुर्वेदविहितमुपांशु भवति । तेषामुच्चारणस्य परार्थत्वादुच्चैस्त्वमेव । नानियतस्वराः । चकारात्, अग्ने हविर्निर्वप्स्यामीत्यादेरुच्चैस्त्वम् । अग्नेः संवादानुपपत्तेर्यजमानसंबोधनापत्तेः ॥ ९ ॥

ह०—आश्रुतमाश्रावयेति । प्रत्याश्रुतमस्तु श्रौषडिति । अग्निर्देव इत्यादि प्रावितार इत्यन्तं प्रवरः । शृतं हविः शमितरित्यादिप्रश्नप्रतिवचनात्मकः संवादः । परस्मा आख्यानमपि संवाद एव । यथा—एतदेतदिति त्रिरङ्गुल्या निर्दिश्येति एतदिति प्रत्याहृतमाग्नीध्रायाऽऽचष्टेऽध्वर्युः । संप्रेषः प्रोक्षणीरासादयेत्यादिः । 'बहु दुग्धि' 'अविदहन्तः' 'व्रतं कृणुत' इत्येवमादयोऽपि संप्रेषा एव । न वाग्विसर्गार्थाः । अर्थस्तु वाग्विसर्गसंयोगः । संप्रेषैरिति पञ्चम्यर्थे तृतीया संप्रेषेभ्य इत्यर्थः । आश्रुतं च प्रत्याश्रुतं च प्रवरश्च संवादश्च संप्रेषाश्च, आश्रुतप्रत्याश्रुतप्रवरसंवादसंप्रेषाः । तेभ्योऽन्यत्र याजुर्वेदिकमुपांशुत्वम् ।

आश्रुतादीनामुच्चैस्त्वमेवेत्यर्थः। न चायमुच्चैस्त्वविधिर्वाचनिकः। आश्रुतादीनां परप्रत्ययार्थत्वादुपांशुत्वे परप्रत्ययाभावादुच्चैस्त्वं न्यायप्राप्तमेव सूत्रकारेणोपदिश्यते। अतश्चान्येषां परप्रत्ययनार्थानां मन्त्राणामनुज्ञादीनां चोच्चैः प्रयोगः सिद्धो भवति। यथा—यजमान हविर्निर्वप्स्यामि ओं निर्वपेत्यादिः। चशब्द एषामेव समुच्चयार्थो निर्दिष्टः। आश्रुतप्रत्याश्रुतयोः संप्रेषसंवादान्तर्भूतयोर्भेदेनोपादानम् "यो वै सप्तदशम्" इत्यनुवाक आश्रुतप्रत्याश्रुतयोर्यज्ञप्रायणप्रतिष्ठोदयनसंस्तवात् प्रेषा[न]-न्तर्भावमाशङ्क्य तन्निराकरणार्थम् ॥ ९ ॥

अन्तरा सामिधेनीष्वनूच्यम् ॥ १० ॥

क०—अग्नेः समिन्धनार्था ऋचः सामिधेन्यः। दूरस्थस्य श्रवणप्राप्तः स्वरः क्रुष्टस्वरः संनिकृष्टस्य श्रवणप्राप्तः स मन्द्रः। तयोरन्तरा मध्यमेन स्वरेण सामिधेन्योऽध्वर्युप्रेषमनु अध्वर्युप्रेषान्ते वक्तव्याः। सामिधेन्यङ्गत्वादध्वर्युप्रेषोऽपि ब्रह्मामन्त्रणं प्रसवश्च मध्यमेनैव स्वरेण वक्तव्यः ॥ १० ॥

द०—आश्रुतादीनामुच्चैस्त्वं त्रिविधं मन्द्रो मध्यमः क्रुष्ट इति। तत्र सामिधेनीषूच्चैःस्वरविशेषविधानायाऽऽरभ्यते। "यत्क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवमन्तराऽनूच्यं सदेवत्वाय" इति। क्रौञ्चमन्द्रावुच्चैःस्वरस्याऽऽद्यन्तौ प्रतिषिध्यान्तरेति स्वरविशेषविधानादन्तराशब्देन मध्यमस्वरोऽभिधीयते। समिन्धनार्था ऋचः सामिधेन्यः। प्रेषस्य पश्चात्कर्मवचनमनुवचनम्। सामिधेनीष्वृक्षु मध्यमस्वरेण वक्तव्यम्। सामिधेन्यर्थोऽयमाध्वर्यवः संप्रेषः। होतुर्याच्ञा ब्रह्मन् सामिधेनीरनुवक्ष्यामीति। ब्रह्मणश्चायं प्रसवः। प्रजापतयेऽनुब्रूहि यज्ञमिति। एषामप्येष एव स्वरः स्यात्प्रधानानुवर्तित्वादङ्गानाम् ॥ १० ॥

मन्द्रेण प्रागाज्यभागाभ्याम् ॥ ११ ॥

प्रातःसवने च ॥ १२ ॥

क०—आज्यभागाभ्यामिति पञ्चमी। दर्शपूर्णमासयोरित ऊर्ध्वमि-

त्वग्रहणादन्वाधानप्रभृति प्रागाज्यभागाभ्यां ज्योतिष्टोमे प्रातःसवने च यदुच्चैर्वक्तव्यं तन्मन्द्रस्वरेण वाच्यम् ॥ ११ ॥ १२ ॥

ह०—आश्रुतादीनामुच्चैस्त्वमुक्तम् । तच्चोच्चैस्त्वं त्रिविधं, मन्द्रो मध्यमः क्रुष्ट इति । तत्राऽऽश्रुतादीनामेवोच्चैःस्वरविधानार्थ उपरितनसूत्राणामारम्भः । उरसि मन्द्रः शालागतो वा स मन्द्र इति मन्द्रलक्षणम् । आरम्भप्रभृति आज्यभागाभ्यां प्राग्यान्याश्रुतादीनि तानि मन्द्रस्वरेण प्रयोक्तव्यानि सामिधेनीर्वर्जयित्वा ॥ ११ ॥

महारात्रे बुद्ध्वेत्यारभ्य निःसर्पणान्तः क्रियाकलापः सोमाभिषवसंबद्धः प्रातःसवनमित्युच्यते । तस्मिन् प्रातःसवने यान्याश्रुतादीनि तानि मन्द्रस्वरेण प्रयोक्तव्यानीत्यर्थः । चशब्दः प्रातःसवनमध्यवर्तिनामैष्टिकानां पाशुकानां चाऽऽश्रुतादीनां मन्द्रस्वरप्राप्त्यर्थः । आनुमानिकाच्चोदकात् प्रत्यक्षः सामान्यविधिर्बलीयानिति ॥ १२ ॥

मध्यमेन प्राक्स्विष्टकृतः ॥ १३ ॥

माध्यंदिने च ॥ १४ ॥

क०—स्विष्टकृत इति पञ्चमी । दर्शपूर्णमासयोराज्यभागप्रभृति प्राक्स्विष्टकृतो ज्योतिष्टोमे माध्यंदिने सवने च यदुच्चैः प्रयोक्तव्यं तन्मध्यमेन स्वरेण प्रयोक्तव्यम् । मध्यमः क्रुष्टस्तावदुक्तस्वरूपः ॥ १३ ॥ १४ ॥

ह०—कण्ठे मध्यममिति मध्यमस्वरलक्षणम् । आज्यभागप्रभृति स्विष्टकृतः प्राग्यान्याश्रुतादीनि तानि मध्यमस्वरेण प्रयोक्तव्यानि ॥ १३ ॥

सोमोपहरणादिर्निःसर्पणान्तो माध्यंदिनकालेऽनुष्ठेयः क्रियाकलापो माध्यंदिनसवनमित्युच्यते । चकारो माध्यंदिनसवनवर्तिनामैष्टिकानां पाशुकानां चाऽऽश्रुतादीनां मध्यमस्वरप्राप्त्यर्थः ॥ १४ ॥

क्रुष्टेन शेषे ॥ १५ ॥

तृतीयसवने च ॥ १६ ॥

क०—दर्शपूर्णमासयोः स्विष्टकृत्प्रभृति शेषे तृतीयसवने च यदुच्चैः

प्रयोक्तव्यं तत्क्रुष्टस्वरेण वाच्यम्। प्रातःसवने माध्यंदिने तृतीयसवने च दर्शपूर्णमासविकाराणां प्रकृतिस्वरबाधेन प्रत्यक्षोपदेशात्सवनस्वरेण प्रयोगः कर्तव्यः॥ १५॥ १६॥

इ०—क्रुष्टः क्रौञ्चस्तार इत्यनर्थान्तरम्। शिरसि तार इति तारलक्षणम्। शेषं स्विष्टकृत्प्रभृति ब्राह्मणतर्पणप्रैषान्तम्॥ १५॥

आदित्यग्रहणप्रभृतिनिःसर्पणान्तः सोमाभिषवसंबद्धः क्रियाकलापस्तृतीयसवनमित्युच्यते। एतानि क्रुष्टस्वरेण प्रयोक्तव्यानि। चशब्दः पूर्ववदैष्टिकानां पाशुकानां चाऽऽश्रुतादीनां क्रुष्टस्वरप्राप्त्यर्थः। पत्नीसंयाजादीनां न सवनस्वरो भवति। पशुवत्पत्नीसंयाजा इति वचनात्॥ १६॥

## वाक्संद्रवश्च तद्वत्॥ १७॥

क०—उच्यत इति वाक् शब्दो मन्त्रात्मकः। संद्रवो गतिः। वाक्संद्रवो वाचो निर्गमः। सा वागुच्चारणविलम्बे विलम्बिता दृश्यते। उच्चारणे मध्यमे मध्यमा। उच्चारणशैघ्र्ये च द्रुता। प्रागाज्यभागाभ्यां प्रातःसवने च यथा विलम्बिता, आज्यभागप्रभृति प्राक्स्विष्टकृतो माध्यंदिने च यथा मध्यमा स्विष्टकृत्प्रभृति शेषे तृतीयसवने च यथा द्रुता तथा मन्त्राः प्रयोक्तव्याः। चशब्दो नियमार्थः। यत्र मन्द्रादिविधानं तत्रैव विलम्बितादिविधिः। नोपांशुत्वादौ सामिधेन्यनुवचनात्॥ १७॥

इ०—वाचो गतिर्वाक्संद्रवः। विलम्बितो मध्यमो द्रुत इति मन्द्रादिवत्सवनादिक्रमेण प्रागाज्यभागाद्यनुक्रमेण विलम्बितादयो भवन्तीत्यर्थः। चशब्द एतेषु स्थानेषु स्वरान्तरोपदेशात् प्राकृतस्वरो यदा निवर्तते तदाऽपि विलम्बितादयो न निवर्तन्त इति वाक्संद्रवनिवृत्त्यर्थः। यथा सामिधेनीप्रभृत्युपांशु यजतीति पौनराधेयिकयाम्॥ १७॥

## ऋग्वेदेन होता करोति॥ १८॥

क०—यानि ऋग्वेदविहितान्यङ्गानि तानि होता कुर्यात्। वचनात्कारणान्तराद्वाऽन्यः कुर्यात्। होता वेदान्तरविहितं वचनात्करोति॥ १८॥

ह०—अग्निर्मे होतेति वरणसंस्कारनिमित्तो महर्त्विग्वचनो होतृशब्दः । स ऋग्वेदविहितान्पदार्थान्होतैव कुर्यात् ॥ १८ ॥

यजुर्वेदेनाध्वर्युः ॥ १९ ॥

क०—यजुर्वेदविहितेष्वङ्गेष्वध्वर्युः कर्ता । वचनात्कारणान्तराद्वाऽन्यस्य कर्तृत्वम् ॥ १९ ॥

ह०—अध्वर्युशब्दोऽपि वरणनिमित्तो महर्त्विग्वचन एव । स यजुर्वेदविहितान्पदार्थानध्वर्युरेव कुर्यात् ॥ १९ ॥

सामवेदेनोद्गाता ॥ २० ॥

क०—सामवेदविहितेष्वङ्गेषूद्गाता कर्तृत्वेन नियम्यते । वचनात्कारणान्तराद्वाऽन्यः कुर्यात् । अन्यवेदविहितं चोद्गाता ॥ २० ॥

ह०—उद्गातृशब्दोऽपि वरणनिमित्तो महर्त्विग्वचन एव । सामवेदविहितान्पदार्थानुद्गातैव कुर्यात् ॥ २० ॥

सर्वैर्ब्रह्मा ॥ २१ ॥

क०—प्रस्तुतैरेव सर्वैर्ऋग्वेदयजुर्वेदसामवेदैर्विहितान्यङ्गानि ब्रह्मा करोति । न तद्ब्रह्मत्वसिद्धयेऽथर्ववेदमपेक्षते । यत एतैरेव वेदैः कृत्स्नं ब्रह्मत्वं विहितम् । अत एव " स त्रिभिर्विधीयते " इत्युक्तम् । त्रिभिरपि वेदैर्ब्रह्मत्वस्य विहितत्वादिडाभक्षणतानूनपत्रादा ऋग्वेदयजुर्वेदविहितानां मन्त्राणां ब्रह्मणो विकल्पः स्यात् । अध्वर्य्वादीनां यथावेदं व्यवस्थैव ॥ २१ ॥

ह०—परिवृढः श्रुततरः सर्वेभ्यो बहुश्रुत इति ब्रह्मा । अथ " केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात् " इति बह्वृचश्रुतिः । यत्रापि मन्त्रैर्वरणं न भवति तत्राप्यवश्यं वरणेन भवितव्यमित्यर्थः । यथा दर्शपूर्णमासयोराधाने च संस्कृतेन वाक्येन । वेदत्रयेण ब्रह्मत्वं सकलं भवति नैकैकेन । एकेनाप्यथर्वणवेदेनेति शेषः । इदमर्थमेव हि स त्रिभिरिति वचनं न चतुर्थवेदप्रतिषेधार्थमित्युक्तम् । एवं तर्हि नाऽऽरब्धव्यमिदम् । एककार्याणां तानूनप्त्रसोमभक्षणमन्त्रादीनां वेदत्रयसमाम्नातानां ब्रह्मणो विकल्पार्थ आरम्भः ॥ २१ ॥

वचनाद्विप्रतिषेधाद्वाऽन्यः कुर्यात् ॥ २२ ॥

क०—ऋग्वेदयजुर्वेदसामवेदविहितानां पदार्थानां होत्रध्वर्यूद्गातॄणां कर्तृत्वे प्राप्त इदमुच्यते—वचनाद्विप्रतिषेधाद्वाऽन्यः कुर्यादिति । चार्थे वाशब्दः । वचनं वाक्यम् । विप्रतिषेधोऽसंभवोऽशक्तिश्च । वचनम् 'उन्नेता जुहोति' 'सप्त होत्राः प्राचीर्वषट्कुर्वन्ति' इति । विप्रतिषेधः प्रमुञ्चमाना इति प्रणीयमाने न हि प्रणीयमानान्वारम्भणं होमं च युगपदध्वर्युः शक्नोति कर्तुम् । तथाऽश्वमेधे पशूनामुपाकरणादिष्वेकस्याध्वर्योरसंभवः । एवमादिष्वन्ये कुर्वन्ति । अन्ये चर्त्विजामेवार्धिनः पादिनस्तृतीयिनो वा । एतेषामप्यसंभवेऽन्यः कुर्यात् । हिरण्यमालिन ऋत्विजः सुत्येऽहनि प्रचरन्तीति सामवेदविहितमृत्विजामुपादिष्टत्वात्तेषामेव न सर्वेषां स्यात् ॥ २२ ॥

ह०—वचनम् " उन्नेता जुहोति " इति हारियोजने । संप्रेषोऽपि वचनमेव । यथा—अग्नीदग्नीन् विहरेति । आग्नीध्र एव विहरणस्तरणालंकरणानि करोति । यथा वा प्रतिप्रस्थातः पशौ संवदस्वेति तृतीयसवने संप्रेषात्, स्रुवेण पृषदाज्यस्येत्यादि हृदयाभिघारणान्तं सवनीयस्य पशोः प्रतिप्रस्थातैव कुर्यात् । विप्रतिषेधो विरोधः । यथा ये बध्यमानमिति जुह्वदध्वर्युः पशुप्रमोकं कर्तुमसमर्थ इति पशुप्रमोकमन्यः कुर्यात् । अन्योऽपि स्वयूथ्य एव प्रतिप्रस्थात्रादिः । होतुरसंभवे मैत्रावरुणादिः । अध्वर्योरसंभवे प्रतिप्रस्थात्रादयः । उद्गातुरसंभवे प्रस्तोत्रादय इति । तेषामपि पूर्वपूर्वासंभव उत्तरोत्तरः कुर्यात् । एवमेव हि सोमादौ चतुर्णामनुक्रमेण वरणं संज्ञाकरणं च । सर्वत्र ऋत्विगुपदेशोऽङ्गविषय इति प्रधानं स्वामिकर्तृकमित्येके मन्यन्ते । द्रव्यस्योत्सर्गो यजमान इत्यपरे मन्यन्ते । यस्मिन्नङ्गिनि होत्रादीनां गुणभावस्तत्रैव वेदसमाख्यया होत्रादयो नियम्यन्ते । यत्पुनरङ्गमृत्विजां तत्र तत्र तत्संस्कारार्थं [ यत्र पुनः प्राधान्यमृत्विजां संस्कारार्थं तत्र तत्र ] सर्व एव ऋत्विजः कुर्युः । यथा हिरण्यमालिन ऋत्विजो लोहितोष्णीषा ऋत्विज इति ॥ २२ ॥

ब्राह्मणानामार्त्विज्यम् ॥ २३ ॥

क०—विद्वत्तया सर्वेषामेव प्राप्तमार्त्विज्यं ब्राह्मणानामेव नियम्यते । 'आर्षेयानृत्विजो वृणीते' इति वचनात् । "ब्राह्मणानामिद्ँ हविः" 'ब्राह्मणा अयं व ओदनः' इति मन्त्रलिङ्गाच्च । ब्राह्मणानामेवाध्यापनयाजनविधानात्तेषामेवाऽऽर्त्विज्यं नेतरयोः । अत एव वाजपेययाजिनोऽपि ब्राह्मणस्यैवाऽऽर्त्विज्यं न तु क्षत्रियवैश्ययोः ॥ २३ ॥

ह०—धर्मशास्त्रवचनेनैव सिद्धे "तस्माद्वाजपेययाज्यार्त्विजीनः" इत्यनेन वाक्यविशेषेण क्षत्रियस्यापि वाजपेययाजिन आर्त्विज्यमाशङ्क्य तन्निषेधार्थमिदमारब्धम् । ब्राह्मणानार्षेयानिति सोमे वचनमनृत्विजामपि चमसाध्वर्यूणां ब्राह्मणत्वनियमार्थम् । अथवा धर्मशास्त्रे ब्राह्मणानां द्रव्यार्जनार्थमार्त्विज्यनियमः पुरुषार्थः । तदतिक्रमे च पुरुषस्य प्रत्यवायो न क्रतोः । अयं तु क्रत्वर्थ आर्त्विज्यनियमः । अतिक्रमे च क्रतुवैगुण्यं प्रयोजनमिति ॥ २३ ॥

सर्वक्रतूनामग्नयः सकृदाहिताः ॥ २४ ॥

क०—क्रतवः क्रियन्त इत्याहवनीयादिसाध्यान्यग्निकर्माण्युच्यन्ते । अग्नय आधानसंस्कारसंस्कृता गार्हपत्यादयः । तेषां यदाहवनीये जुहोतीत्यादिभिर्वचनैः क्रत्वङ्गत्वेन विनियुक्तत्वात्क्रतुशेषाः क्रतूनामुपकारकाः । तेषां 'वसन्ते ब्राह्मणोऽग्निमादधीत' 'नक्तं गार्हपत्यमादधाति' 'अर्धोदिते सूर्य आहवनीयमादधाति' इत्येवमादिभिर्वचनैराधानमुपकारकम् । तेन वसन्तादिकालविहितेनाऽऽधानेनोत्पन्नाहवनीयादयो ध्रियमाणा वसन्तादिकालविहितोपयनसंस्कृताधीतमन्त्रा इव सर्वक्रतूनामुपकुर्वन्ति । एवं सर्वक्रतूनामग्नयः सकृदाहिता अङ्गभूताः ॥ २४ ॥

ह०—सर्वत्र क्रतुपदेनाग्निसाध्यं कर्माभिधीयते । यत्पुनराधानं सोमपूर्वं तत्राप्यग्नयः सकृदाहिता एव । अविशेषवचनात्, ऋद्धिसंस्तवाच्च । 'सैवास्यर्धिः' इति सोमाधानवाक्यशेषे ॥ २४ ॥

जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयात् ॥ २५ ॥

क०-देवतोद्देशेन द्रव्यत्यागो यागो होमः । 'यदसर्पत्तत्सर्पिरभवत्'

इति क्रियानिमित्तः सर्पिःशब्दः। नवनीतविकारद्रव्यजातीयवचन आज्यशब्दः। तत्रानिर्दिष्टद्रव्यके 'नारिष्ठान्होमाञ्जुहोति' इत्येवमादिभिर्होमे चोद्यमाने विधीयमाने सर्पिराज्यं प्रतीयाज्जानीयात् ॥ २५ ॥

ह०—जुहोतीति प्रत्यक्षचोदनायामप्रत्यक्षचोदनायां च गव्यमाज्यं प्रतीयात्। प्रत्यक्षचोदना 'आहुतीर्जुहोति' इति। अप्रत्यक्षचोदना 'आघारमाघारयति' इति। सर्पिराज्यमितिपदद्वयोपादानसामर्थ्याद्घृतजातिवचनोऽपि सर्पिःशब्द उत्सर्पणक्रियाप्रधानः परिगृह्यते। किं तदुत्सर्पणसमर्थं विलीनमित्यर्थः। तच्च गव्यमेव। "तस्माद्गवि सतोभयेन भुञ्जते" इति वाक्यशेषात् ॥ २५ ॥

## अध्वर्युं कर्तारम् ॥ २६ ॥

क०—प्रतीयादित्यनुषङ्गः। अनिर्दिष्टकर्तृके होमेऽध्वर्युं कर्तारं होतारं प्रतीयात्। यजुर्वेदेनाध्वर्युरित्युक्तेऽपि यागस्य त्यागात्मकत्वाद्यजमाने प्राप्तेऽध्वर्युर्नियम्यते ॥ २६ ॥

ह०—प्रतीयादित्यनुवर्तते। होमेऽध्वर्युरेव कर्तेत्यर्थः। यजुर्वेदनाध्वर्युरित्येव सिद्धे वचनं होमाहोमयोर्विप्रतिषेधे होम एवाध्वर्योः स्यादित्येवमर्थम्। 'ये वध्यमानम्' इति होमोऽध्वर्योः। पशुप्रमोकः प्रतिप्रस्थातुरेव। 'प्रमुञ्चमानाः' इति होमोऽपि प्रतिप्रस्थातुरेव, अध्वर्योर्नीयमानपश्वालम्भनियमात् ॥ २६ ॥

## जुहूं पात्रम् ॥ २७ ॥

## व्यापृतायां स्रुवेण ॥ २८ ॥

क०—अनिर्दिष्टपात्रके होमे। यदाऽन्यत्र व्यापृता जुहूः कार्यान्तरप्रविष्टा तदा स्रुवो नियम्यते ॥ २७ ॥ २८ ॥

ह०—प्रतीयादित्यनुवर्तते। हूयतेऽनयेति जुहूरिति होमक्रियानिमित्त आकृतिविशेषे जुहूशब्दो रूढः। जुहूशब्दः पात्रं हूयमानद्रव्याधारमाहेत्यर्थः ॥ २७ ॥

व्यापृता जुहूराज्यान्तरधारणेनान्येन वा कारणेन। स्रुवस्य होमविशेषे दृष्टत्वाज्जुह्वा असंभवे स्रुवेण होमो युक्त इति न्याय-

पूर्वोऽयमुद्देशः । अतो यत्रान्यज्जुहूस्थानीयं जुह्वाकृति पात्रं तत्र तेनैव होमो न स्रुवेण । पशौ वसाहोमहवन्या । सोमे प्रचरण्येति । उक्तं च भारद्वाजेन ' प्रचरण्या होमः ' इति ॥ २८ ॥

आहवनीये प्रदानम् ॥ २९ ॥

क०—अनिर्दिष्टाधारके होमे देवतामुद्दिश्य द्रव्यप्रदानं प्रक्षेप आहवनीये नियम्यते ॥ २९ ॥

इ०—प्रतीयादित्येव । प्रदानं द्रव्यस्य प्रक्षेपः ॥ २९ ॥

आधानप्रभृति यावज्जीवं
पात्राणि धार्यन्ते ॥ ३० ॥

क०—आधानप्रभृति यावन्तं कालं जीवति यजमानस्तावन्तं कालं जुह्वादीनि पात्राणि धार्याणि । यजमानजीवनकालस्यानियतकालत्वादतीते पौर्णमासीकालेऽनागते दर्शकाले यद्यन्तरा यजमानो म्रियेत पात्राणि च विनष्टानि तत्र ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति यजमानस्य दहनात्मकः संस्कारः पात्रैर्विना न सगुणः स्यात् । अतस्तानि दहनार्थं धार्याणि, । अथान्यान्युत्पाद्य पूर्वेषां त्याग इति चेन्न । यजमानसादने जुहूं सादयति सव्य उपभृतमुरसि ध्रुवामित्यादितो द्वितीयानिर्देशेनैषामनेककर्मोपयुक्तौ प्रतिपत्त्यात्मकः संस्कारः प्रतीयते । अत एव वरुणप्रघासपात्राण्यपि यावद्दहनं धार्याणि ॥ ३० ॥

इ०—आधानं प्रभृतिरूपक्रमो यस्य तदाधानप्रभृति । जीवनं जीवः । यावति काले जीवो यजमानस्य तस्य कालस्य यावज्जीवमिति । पात्राणि यज्ञपात्राण्युच्यन्ते । तेषामन्त्यकर्मणि विनियोगः ' उरसि ध्रुवाम् ' इत्यादि । अरण्योरपि यावज्जीवं धारणम् । ' ज्योग्जीवन्त उत्तरामुत्तरां समाम् ' इति मन्त्रवर्णाद्भारद्वाजवचनाच्च ॥ ३० ॥

तेषां प्रतितन्त्रं संस्कारः ॥ ३१ ॥

क०—तेषां यज्ञपात्राणां प्रतितन्त्रं प्रतिकर्म प्रतिप्रयोगं दर्शपूर्णमासा-

दीनां पुनः पुनः प्रयोगे संमार्गादिसंस्कारः कर्तव्यः । पात्राणां धारणं तत्संस्कारोक्त्यनन्तरम् ॥ ३१ ॥

द०—प्रतितन्त्रं संस्कारः प्रक्षालनमुष्णेन वारिणा । स्रुक्स्रुवाणां शुद्धिरुष्णेन वारिणेति मनुवचनाद्भारद्वाजवचनाच्च । प्रक्षालनं प्रकृतौ विहितमेव । यद्वा संमार्जनादयः संस्काराः पात्राणामभेदेऽपि प्रतितन्त्रमावर्तन्त इत्यर्थः ॥ ३१ ॥

मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ॥ ३२ ॥

क०—केयं वेदप्रामाण्यप्रतिज्ञा मन्त्रब्राह्मणे यज्ञस्य प्रमाणमिति । हेतुश्च नोक्तः । स्थितेन वेदप्रामाण्येन धर्मसूत्रकाराणां व्यापारः । तत्राऽऽचार्येण यज्ञव्याख्यानं प्रतिज्ञातं च । यज्ञोऽभिव्यक्तः फलाय भवति । यानि चान्यानि साधनानि तैश्चाभिव्यज्यते । कुत एतद्वृह्यत इति प्राप्त इदमुच्यते—मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् । मन्त्रश्च ब्राह्मणं चेति जात्यभिधानवचनम् । मन्त्रो मननात् । ब्राह्मणमभिधानात् । मन्त्रब्राह्मणे तु यज्ञस्य प्रमाणम् । प्रमाऽभिधीयते प्रमीयते येन प्रमेयार्थस्तत्प्रमाणम् । दृष्टमदृष्टं वा फलं यज्ञः साधयति । इमानि चास्य साधनानीति एतस्मिन्प्रतिपत्तव्ये मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् । इदं च प्रमाणं शास्त्राख्यं प्रत्यक्षम् । कथमप्रत्यक्षस्य यः पुनः पुरुषप्रणीतो ग्रन्थो विस्तरणाय तदनुमानपक्षस्येति । अत्राऽऽहुः—देवतोद्देशेन द्रव्यत्यागात्मकेषु होमेषु भूतेषु "सक्तुभिर्जुहोति । उन्नेता जुहोति । अञ्जलिना जुहोति । पदे जुहोति" इति येषु यागेषु एतानि विशेषाकारेण विहितानि तेषु तानि स्युः । येष्वेव तानि न विहितानि तेषु विहितेषु 'चोद्यमाने' इत्यादिभिः सूत्रैराज्यादीनि साधनानि विधाय प्रसङ्गात्पात्राणां धारणे तेषां प्रतितन्त्रं संस्कार उपदिष्ट इयमाशङ्का । द्रव्यकारकदेवताकारकसाध्येषु यागेषु द्रव्यकारकाणि सामान्यविशेषसाधनानि यागान्साधयन्ति । केनोपलभ्यन्ते देवताः । तत्र कस्य यागस्य केन केन रूपेण यागे देवतोपकरोतीति न ज्ञायत इत्यत आह—मन्त्रब्राह्मणे यज्ञस्य प्रमाणमिति । साङ्गो यज्ञः प्रमीयते ज्ञायते येन परिच्छिद्यते तस्य

तत्प्रमाणम् । मन्त्रब्राह्मणाभ्यां हि साङ्गोपाङ्गो यज्ञः प्रमीयते । ब्राह्मणवाक्यैस्तावत् 'आग्नेयमष्टाकपालम्' इत्येवमादिभिः 'धात्रे पुरोडाशं द्वादशकपालम्' इत्येवमादिभिश्च द्रव्यदेवताविशिष्टो द्रव्यदेवतासाध्योऽभिधीयते । देवता तद्धितेन चतुर्थ्या च । मान्त्रवर्णिकदेवताविधिरपि । "येन कर्मणेर्त्सेत्तत्र होतव्याः" इति अभ्यातानमन्त्रविशिष्टा अभ्यातानमन्त्रसाधका होमा विधीयन्ते । अग्निर्भूतानामित्यनुवाकस्थानां मन्त्राणामभ्यातान इति संज्ञा । तेऽभ्याताना मन्त्रास्तान्होमान् साधयेयुः । यदि तत्प्रकाशिता अग्नीन्द्रादयस्तेषां होमानां देवताः स्युः । अनुष्ठानकाले होमानामपेक्षिताङ्गभूतदेवताप्रकाशनात् । न ह्यन्यथाऽभ्यातानानां मन्त्राणां होमसाधनत्वम् । देवता अधि (पि) देवतोद्देशेन द्रव्यत्यागात्मकेषूद्देश्यरूपेण तेषामुपकुर्वन्ति । अतो देवता अपि यागनिर्वर्तकत्वेन तत्कारकत्वेनाङ्गानि । अतः साङ्गो यज्ञो मन्त्रब्राह्मणाभ्यां प्रतीयते ॥ ३२ ॥

ह०—मन्त्रश्च ब्राह्मणं च मन्त्रब्राह्मणे । यज्ञ इति यज्ञसाध्यमपूर्वमभिधीयते । मन्त्रब्राह्मणशब्देन सकलस्य वेदस्य ग्रहणम् । सकलो वेदः करणेतिकर्तव्यतानुबन्धस्यानुष्ठेयात्मकस्यापूर्वस्यैव प्रमाणं न भूतार्थस्य रुद्ररोदनादेः । तस्य प्रमाणानपेक्षत्वात् । मन्त्रप्रतिपाद्यार्थानां ब्राह्मणविहितानामपि उपसंहारार्थं मन्त्रग्रहणम् । यथा 'इयान् प्रादेशसंमितः' इति त्रिवृतः पवित्रस्य प्रादेशमात्रत्वम् । 'दशतँ शक्करीर्मम' इति मन्त्रवर्णादुभाभ्यां प्रतिग्रहणम् । उत्सादतोऽङ्गादङ्गादवत्तानाम् । इत्युत्सादतोऽवदानम् । 'होतृषदना हरिताः' इति मन्त्रवर्णाद्धरितानामेव दर्भाणामुपादानम् । 'नरो यत्ते दुदुहुर्दक्षिणेन' इति दक्षिणेनैव हस्तेन पीडनम् । 'दशावनिभ्यः' इत्युभाभ्यामभिषवः । तथा 'विमान एष दिवो मध्य आस्ते' इति द्वाभ्यामश्मनिधाने पृश्निरश्मा निधीयते 'मध्ये दिवो निहितः पृश्निरश्मा' इति । एवंप्रकारैर्मन्त्रैरर्थवादैश्चानुष्ठेयोऽर्थः प्रतिपादितः । एवंविधा उपादीयन्ते । किंच यत्र मन्त्रेण प्रयोगरूपाभिधानं दृश्यते न च विनियोगो दृश्यते तत्र मन्त्र एव प्रमाणम् । अतस्तस्यार्थस्यानुष्ठेयतेति ॥ ३२ ॥

मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥ ३२ ॥

क०—ननु मन्त्राननुच्चार्य विहितकर्मप्रयोगं कुर्वन्ति । [ न ] ततोऽर्थमवगच्छन्ति । अतोऽनर्थका मन्त्राः । अनर्थकत्वान्न मान्त्रवर्णिकी देवता सिध्यतीत्यत आह—मन्त्रब्राह्मणयोर्वेदनामधेयम् । वेद इति नामधेयं वेदनामधेयम् । नामैव नामधेयम् । निःश्रेयसकराणि कर्माण्यावेदयन्ति वेदाः । मन्त्रब्राह्मणयोर्वेद इति नामधेयं वेद इति समाख्या । ताभ्यां हि मन्त्रब्राह्मणाभ्यां निःश्रेयसकराण्यग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनि साङ्गानि कर्माण्यवबुध्यन्ते प्रतीयन्ते । व्युत्पन्नपदार्थानां यथैव ब्राह्मणवाक्यगतपदाभिहितवाक्यार्थेभ्यो नानाविधवाक्यार्थबोधः, एवं मन्त्रवाक्येषु तेषां मन्त्राभिहितपदार्थेभ्यो बहुप्रकारवाक्यार्थज्ञानम् । विहितकर्मानुष्ठानकालेऽवश्यमध्वर्य्वादयः संस्कारकर्मप्रतिपत्त्याऽनुतिष्ठेरन् । तत्प्रतिपत्तौ स्ववाक्यानि ब्राह्मणवाक्यानि मन्त्रा इत्यनेकोपायप्रसक्तौ मन्त्रा नियम्यन्ते । पेषणमिव पिष्टकरणे । यथा पेषणापादितपिष्टकृतपुरोडाशयागादभ्युदयः, एवं मन्त्रप्रकाशितकृतकर्मभ्यः । अतोऽर्थवन्तो मन्त्राः । अतोऽभ्यातानमन्त्रप्रकाशिताग्नीन्द्रादयो होमानां देवताः । ये तु मन्त्राननुच्चार्य प्रयोगं कुर्वन्ति नियुक्तं तत्कर्मप्रकाशकप्रकाशितत्वात् पूर्वं मन्त्रानुच्चार्यानन्तरमनुष्ठानम् । अत एव चैवं वक्ष्यति—'मन्त्रान्तैः कर्मादीन्त्संनिपातयेत्' इति । एकेनैव प्रकाशितत्वान्न द्वितीयमन्त्रापेक्षेति वक्ष्यति 'एकमन्त्राणि कर्माणि' इति । मन्त्राणां संस्कारकर्मप्रकाशकत्वादेवोहं वक्ष्यति 'विकृतौ तु यथार्थमूहः' इति । तथाहि दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इति अग्निदेवताप्रकाशनसमर्थो मन्त्र आम्नातश्चोदितः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति सौर्ययागप्रविष्टस्तत्राग्निदेवताभावात्तद्वाच्यग्निपदे निवृत्ते तत्र विद्यमानसूर्यदेवतावाच्यनाम्नातमपि सूर्यपदं प्रक्षिप्यते । स एवोहः । अतो मान्त्रवर्णिकी देवता सिध्यति । यत्तु मन्त्रार्थं नाधिगच्छन्तीत्युक्तं तदुक्तोत्तरं पुरुषदोषो न मन्त्रदोष इति । उक्तं चाऽऽचार्यैः "नैष स्थाणोरपराधो यदेनमन्धो न पश्यति" इति ॥ ३२ ॥

ह०—कैश्चिन्मन्त्राणामेव वेदत्वमाख्यातम् । कैश्चित्कल्पसूत्राणामपि। उभयनिरासार्थोऽयमारम्भः । सकलस्य वेदराशेः पारायणादिषु उपसंग्रहणं प्रयोजनम् ॥ ३३ ॥

कर्मचोदना ब्राह्मणानि ॥ ३४ ॥

क०—तत्र मन्त्रब्राह्मणयोर्विवेकायाऽऽह—कर्मचोदना ब्राह्मणानि । साङ्गानि कर्माणि चोदयन्ति विदधति यानि यानि वाक्यानि तानि चोदनाः । तानि ब्राह्मणानि 'स्वर्गकामो यजेत' 'वायव्यँ श्वेतमालभेत भूतिकामः' 'व्रीहीनवहन्ति' इत्येवमादीनि ॥ ३४ ॥

ह०—कर्म चोद्यते विधीयते याभिस्ताः कर्मचोदनाः । 'वायव्यँ श्वेतमालभेत' इत्यादयः । ता ब्राह्मणानीत्युच्यन्ते ॥ ३४ ॥

ब्राह्मणशेषोऽर्थवादः ॥ ३५ ॥

निन्दा प्रशंसा परकृतिः पुराकल्पश्च ॥ ३६ ॥

क०—यदि कर्मोपदेशानि ब्राह्मणानि, कर्माणि न चोद्यन्ते[यैः] यथा 'वायुर्वै क्षेपिष्ठा' इति । 'यथाऽतिथये प्रद्रुताय' 'यजमानमेव सुवर्गं लोकं गमयति' 'अग्निर्वा अकामयत' 'वसवो वा अकामयन्त' 'आपो वा इदमग्रे सलिलमासीत्' इत्यादिभिस्तेषामब्राह्मणत्वं प्राप्नोति । अत इदमुच्यते—ब्राह्मणशेषोऽर्थवादः । ब्राह्मणस्य विधायकस्य शेषोऽङ्गमुपकारकमर्थवादः । 'वायुर्वै क्षेपिष्ठा' इत्यर्थवादः। 'यथाऽतिथये' इति निन्दा । 'यजमानमेव सुवर्गं लोकं गमयति' इति प्रशंसा । 'अग्निर्वै' इति 'वसवो वै' इति परकृतिः । बहुपुरुषकर्तृकं पुराकल्प इति केचित् । 'आपो वा इदमग्रे सलिलमासीत्' इत्येषोऽनिर्दिष्टकर्तृकः पुराकल्प इत्यपरे । चकारो 'नान्तरिक्षे न दिवि' इत्येवमादीनां समुच्चयार्थः ।'वायव्यँ श्वेतमालभेत। औषसं जुहोति । एककपालमाहवनीये जुहोति । य एतेन हविषा यजते । यद्वराहविहतँ संभारो भवति' इत्येते विध्युद्देशप्रकाराः कर्माण्युभयानि (कर्माण्यन्यानि) वाऽर्थवादादिपदैः स्तूयमानानि तैः सह विदधति न तैर्विना । ततो विध्युद्देशानां

स्तुतिपदानां चैकवाक्यभावः । अतो विधायकवाक्यब्राह्मणवाक्यानामर्थवादादयः शेषा अङ्गान्यवयवाः ॥ ३५ ॥ ३६ ॥

ह०—वेदस्यैव कश्चिद्भागोऽर्थवादो नाम विधीयमानस्य स्तुत्या प्रतिपिध्यमानस्य निन्दया च विधायकस्य ब्राह्मणस्य शेषभूतत्वाद्ब्राह्मण एवान्तर्भूत इत्यर्थः ॥ ३५ ॥

'तद्रजतँ हिरण्यमभवत्तस्माद्रजतँ हिरण्यमदक्षिणमश्रुजँ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति' इति निन्दा। प्रशंसा—'आग्नेयी वा एषा यदजा'। परकृतिः—'इन्द्रो वृत्रमहन्' इति। पुराकल्पः—'इदं वा अग्रे नैव किंचनाऽऽसीत्' इति पुरावृत्तमात्रकथनम्। 'बबरः प्रावाहणिरकामयत' इति वा परकृतेरुदाहरणम्। एवंविधा अर्थवादा ब्राह्मणशेपत्वेनोक्ता इत्यर्थः ॥ ३६ ॥

## अतोऽन्ये मन्त्राः ॥ ३७ ॥

क०—अतः सार्थवादेभ्यो विधायकेभ्योऽन्ये वाक्यशेपा अनुष्ठेयार्थप्रकाशकार्श्चये 'उभा वामिन्द्राग्नी' 'उरु प्रथस्व' इति ऋग्यजुरात्मका आम्नातास्त एव मन्त्राः ॥ ३७ ॥

ह०—उक्तलक्षणादन्ये मन्त्रा विज्ञेया इषे त्वेत्येवमादयः ॥ ३७ ॥

## अनाम्नातास्त्वमन्त्रा यथा प्रवरोहनामधेयग्रहणानीति ॥ ३८ ॥

क०—प्रवरादीनां वाक्यैकदेशत्वेनानुष्ठेयार्थप्रकाशकत्वेन च मन्त्रत्वं प्राप्तं पर्युदस्यति। अहे बुध्निय मन्त्रं मे गोपायेति ऋग्यजुःसामसु मन्त्रशब्दप्रयोगात्, स्वाध्यायपाठसमाम्नातानामृग्यजुःसामप्रसिद्धेः, अतस्तत्राऽऽम्नाता एव मन्त्राः। अनाम्नातास्त्वमन्त्राः। अनाम्नातास्ते के—यथेति। तेषां विविच्य प्रतिपादनायाऽऽह—प्रवरोहेत्यादि। प्रवरः—भार्गवच्यावनाप्नवानौर्वजामदग्न्येति। ऊहः—सूर्याय जुष्टं निर्वपामीत्यादि। नामधेयग्रहणम्—गृह्यत इति ग्रहणम्। द्विविधं नामधेयं ग्राह्यं गार्ह्यं नक्षत्रनामधेयं च। पुत्रस्य नाम दधातीत्यादिना कृतं ग्राह्यं गार्ह्यं

तत्र भवति । नक्षत्रनाम च–आशास्तेऽयं यजमानो रौहिणः । इतिकरणादेतावतामेवामन्त्रत्वम् । न त्वेते समानविकरणादयः। यजमान इत्यादीनां तु इति ऋक्त्वं योन्यामुत्पन्नं सामोत्तरयोर्गीयमानं मन्त्र एव । यत्तु यजुर्वेदाश्रयमेषामुपांशुत्वादि न तस्यानुत्पत्तिः ॥ ३८ ॥

ह०–अनाम्नाता वेदेऽपठिताः । ते मन्त्रा न भवन्ति । यथेत्युदाहरणनिर्देशः । प्रवरः–आर्षेयवरणमाङ्गिरसायास्येत्येवमादि । ऊहः–सूर्याय जुष्टं निर्वपामीत्यादि । नामधेयग्रहणम्–आशास्तेऽयं यजमानो देवदत्त इति । अमन्त्रत्वाच्चैषामन्यथाकरणे मन्त्रश्रेषप्रायश्चित्ते न स्तः । यस्तु वेदाश्रय उपांशुत्वादिस्तस्यानिवृत्तिः ॥ ३८ ॥

## रथशब्दो दुन्दुभिशब्दश्च ॥ ३९ ॥

क०—चशब्देनामन्त्रत्वमनुकृष्यते । ‘ रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति ’ इति रथदुन्दुभिशब्दयोरमन्त्रत्वम् । भिन्नसूत्रकरणं पूर्वेषां मन्त्रैकदेशत्वान्मन्द्रस्वरः, रथादिशब्दस्यामन्त्रत्वाद्यथाप्रास्वरः ॥ ३९ ॥

ह०—‘ रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति ’ । दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्रमिति । तौ च मन्त्रौ न भवत इत्यर्थः । मन्त्रत्वप्रसङ्गाभावेऽपि मन्त्रस्य स्थानापत्त्या मन्त्रधर्मप्राप्त्याशङ्कानिरासायायमारम्भः । अनयोः प्रवरादिवदुपांशुत्वादिधर्मो न भवतीति ख्यापनार्थं पृथगुपदेशः ॥ ३९ ॥

## स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात् ॥ ४० ॥

क०—स्वाध्यायो ग्रहणार्थमध्ययनं प्रसिद्धम् । न कर्मणि कर्मप्रयोगे । अर्थान्तरत्वात् । तत्र शिष्यस्य ग्रहणधारणं प्रयोजनम् । इह त्वभिधेयार्थप्रकाश [ क ] त्वम् । अतः कर्मणि नानध्ययनप्रसङ्गः । अर्थान्तरत्वादेवान्येऽप्यध्ययनधर्माः प्रणवादयो न स्युः ॥ ४० ॥

ह०—वेदस्य ग्रहणार्थं गृहीतस्य च धारणार्थं च यदुच्चारणं तत्स्वाध्याय इत्युच्यते । अनध्यायोऽध्ययननिषेधः स्वाध्याय एव भवति न कर्मणि । अर्थः प्रयोजनम् । अर्थादन्यदर्थान्तरम् । तस्य भावोऽर्थान्तरत्वम् । ( " विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् " इति श्रोत्रियसंस्काराध्ययनाध्याप [ न ]-विधेः । कर्मसु प्रतिषेधोऽर्थान्तरम् । ) तस्मात् प्रयोजनान्तरत्वादित्यर्थः । स्वाध्यायस्य वेदग्रहणं तद्धारणं वा प्रयोजनम्, कर्मे मन्त्राणां क्रत्वर्थनिर्वृत्तिः । हेतुवचनं कर्मण्यपि प्रयोजनानन्यत्वेऽध्ययनप्रतिषेधार्थम् । यत्तु धर्मशास्त्रे वचनं तदमावास्यायामध्ययनविप्रतिषेधार्थम् । यद्वा—अमावास्यादिषु मन्त्राणाम [न]-ध्ययनप्रतिषेधः श्रुतिबलीयस्त्वेनैव सिद्धः स्मार्तत्वादनध्ययनविधेः । अत इदं कूश्माण्डहोमादीनामविहितकालानां मन्त्रेष्वनध्ययनप्रतिषेधार्थम् । यद्वा—" पद्यु ह वा एतच्छ्मशानम् । यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येतव्यं कदाचन " इति शास्त्रानध्ययनस्य श्रौतेषु कर्मसु निषेधार्थमिदमारब्धम् ॥ ४० ॥

## एकमन्त्राणि कर्माणि ॥ ४१ ॥

क०—संस्कारस्यैकस्य कर्मणः प्रकाशनार्थमेक एव मन्त्रो भवेत् ॥ ४१ ॥

ह०—एकस्य कर्मण एको मन्त्र इत्यौत्सर्गिको विधिः । " या जाता ओषधयः " इति चतुर्दशभिरोषधीर्वपतीत्युदाहरणम् । तत्रैकेन मन्त्रेणैकस्या ओषधेर्वापः । तथा " देवाञ्जनमगन्यज्ञः " इति सप्त मन्त्राः षण्णामाहुतीनां प्रगीताः । तत्रान्त्यो विकल्पार्थः ॥ ४१ ॥

## अपि संख्यायुक्तचेष्टापृथक्त्वनिर्वर्तीनि ॥ ४२ ॥

क०—अपिशब्देनैकमन्त्रत्वमनुकृष्यते । संख्यायुक्तानि त्रिः प्रोक्षतीत्यादीनि । चेष्टायाः पृथक्त्वं चेष्टापृथक्त्वम् । चेष्टा—आवृत्तिः । निर्वर्त्यन्त इति निर्वर्तीनि । क्रियावृत्त्या परिस[ मा ]प्यानि । यथाऽवहननं मुसलोद्यमननिपतनैर्निर्वर्त्यते । एवं चेदनपेक्षमाणानि एषामेक एव मन्त्रः ॥ ४२ ॥

द०—एकमन्त्राणीत्यनुवर्तते । संख्यायुक्तानि । चेष्टाया भेदश्चेष्टापृथक्त्वम् । तेन निर्वर्तन्त इति चेष्टापृथक्त्वनिर्वर्तीनि । संख्यायुक्तानि च चेष्टापृथक्त्वनिर्वर्तीनि च । संख्यायुक्तानाम् "त्रिः प्रोक्षणम्" उदाहरणम् । तथा "द्विरवघ्नाति" इति । चेष्टापृथक्त्वनिर्वर्तिनामवघातः । मुसलस्योद्यमनानिपतनैर्बहुभिः कर्माङ्गभूतो निर्वर्त्यत इति । एतान्येकमन्त्राणि सकृदुच्चरितमन्त्राणीत्यर्थः ॥ ४२ ॥

कण्डूयनस्वप्ननदीतरणाववर्षणामेध्यप्रति-
मन्त्रणेषु च तद्वत्कालाव्यवेतेषु ॥ ४३ ॥

क०—कण्डूयनादीनां संख्यायुक्तवदेकमन्त्रत्वम् । एकस्मिन् काले प्रत्यङ्गकण्डूयने 'विषाणे विष्यैतं ग्रन्थिम्' इति न प्रत्यङ्गं मन्त्रावृत्तिः । कालव्यवाये कालव्यवधाने त्वावृत्तिरेव । 'अग्ने त्वꣳ सुजागृहि । विश्वे देवा अभि मामावृत्रन्' इति स्वप्नावबोधमन्त्रौ चैकस्यां रात्र्यामनेकस्वप्नावबोधे नैवाऽऽवर्तेते । अहर्व्यवाये त्वावृत्तिरेव । एकस्यां नद्यामनेकस्मिन्नपि स्रोतसि, 'देवीरापः' इति नाऽऽवर्तते । नद्यन्तरे त्वावृत्तिः । एकस्मिन् काले प्रतिबिन्दु न 'उन्दतीः' इति मन्त्रावृत्तिः । कालान्तरे त्वावर्तते । एकस्मिन् देशेऽनेकामेध्यदर्शने 'अबद्धं मनः' इति नाऽऽवर्तते । देशान्तरे त्वावर्तते । अमेध्यं दृष्ट्वा जपतीति चोदना चातुःस्वर्यार्था । कालः प्रदर्शनार्थः ॥ ४३ ॥

द०—"विषाणे विष्यैतम्" इति कृष्णविषाणयाऽङ्गानां कण्डूयनम् । तत्र कण्डूषु बह्वीषु युगपदुपस्थितासु न प्रत्यङ्गं मन्त्रावृत्तिः । स्वप्नः । "अग्ने त्वꣳ सुजागृहीति स्वप्स्यन्" इति । तत्रानेन मन्त्रेणाऽऽहवनीयमभिमन्त्र्य प्रसुप्तस्य स्वापमध्ये प्रबुद्धस्य पुनः स्वापे न मन्त्रावृत्तिः । नद्यास्तरणं नदीतरणम् "देवीराप इत्यवगाहते" इति "तीर्त्वोत्तरां जपेत्" इति च नदीतरणोदाहरणम् । तत्र बहुस्रोतस्कायामपि नद्यां सकृदेव मन्त्रः । न प्रतिस्रोतो मन्त्रावृत्तिः । अववर्षणमभिवर्षणम् "उन्दतीर्बलं धत्त" इत्यववृष्ट इति । बहुष्वपि वर्षबिन्दुषु युगपत्पतितेषु सकृ-

देव मन्त्रः । न प्रतिबिन्दु मन्त्रभेदः । अमेध्यमशुचि, श्वपुरीषादि । तस्य प्रतिमन्त्रणम् "अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति" इति विहितमनेनैव वाक्येन जपतिचोदना, चातुःस्वर्यार्थो व्याख्येया बहुष्वमध्येषु युगपद्दृष्टेषु सकृदेवाभिमन्त्रणम् । व्यवायो विच्छेदः । न व्यवेतानि कालेनाविच्छिन्नानि कालाव्यवेतानि । कालेनाविच्छिन्नेषु युगपत्कालीनेष्वित्यर्थः । कालभेदेन तेषु मन्त्रा आवर्तन्ते ॥ ४३ ॥

## प्रयाणे त्वाऽर्थनिवृत्तेः ॥ ४४ ॥

क०—प्रयाणे प्रयोजनोद्देशेन गमने यावद्भिर्दिनैः प्रयोजनस्य निवृत्तिः परिसमाप्तिः । प्रक्रमप्रभृत्या प्रयोजननिवृत्तेरेकं प्रयाणम् । एकस्मिन्नेको मन्त्रो 'भद्रादभिश्रेयः' इति । प्रयोजनभेदे त्वावर्तते । तुशब्दाद्भोजनशयना [दि] भेदेऽपि न प्रयाणभेदः ॥४४॥

इ०—अर्थनिवृत्ति [त्ते] रिति वा पाठः । अर्थनिवृत्तिः प्रयोजननिवृत्तिः । 'भद्रादभिश्रेयः' इत्येतदुदाहरणम् । तत्राऽऽ देवयजनप्राप्तेः सकृदेव प्रयाणमन्त्रः ॥ ४४ ॥

## असंनिपातिकर्मसु च तद्वत् ॥ ४५ ॥

क०—येषां कर्मणामिदंतया फलं दृश्यते तानि संनिपातीनि, स्तरणाच्छादनादीनि । यानि न तादृशानि तान्यसंनिपातीनि, अभिमन्त्रणोपस्थानावेक्षणादीनि । तेष्वसंनिपातिकर्मसु च तद्वत् । यथा कण्डूयनादिष्वेकमन्त्रत्वं तथा 'अपां क्षयाः' इति ग्राव्णामभिमन्त्रणमेकेन सर्वेषां, न प्रत्येकं मन्त्रावृत्तिः । अग्नीन्यजमान उपतिष्ठते 'कल्पेतां द्यावापृथिवी' 'येऽग्नयः समनसः' इति । तत्र सकृन्मन्त्रप्रयोगः, न प्रत्यग्न्यावर्तते ॥ ४५ ॥

इ०—यानि कर्माणि द्रव्याश्रयाणि द्रव्ये प्रत्यक्षं विकारमुत्पादयन्ति तानि संनिपातीनि, अवघातः पेषणं श्रपणमिति । यैस्तु द्र[व्ये] प्रत्यक्षो विकारो नोत्पद्यते तान्यसंनिपातीनि; अभिमन्त्रणानुमन्त्रणजपोपस्थानावेक्षणानि । तेष्वपि संख्यावत्सु सकृन्मन्त्र इत्यर्थः । "अपां क्षयाः" इति ग्राव्णामनुमन्त्र-

णमुदाहरणम् । तत्र सकृन्मन्त्रमुक्त्वा सर्वेषां प्राणानामनुमन्त्रणम् । असांनिपातिनामपि मन्त्रलिङ्गविरोधे मन्त्रा आवर्तन्ते । यथा "सूर्यज्योतिर्विभाहि" इति पुरोडाशाभिमन्त्रणम् ॥ ४५ ॥

हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिर्भिन्नकालेषु ॥ ४६ ॥

क०—एकस्मिन्नपि प्रयोगे भिन्नकालेष्ववहननादिषु हविष्कृदादयो मन्त्रा आवर्तन्ते सवनीयेषु लाजार्थं पुनर्हविष्कृदाह्वानमन्त्रा आवर्तन्ते । तथाऽऽग्रयण एकोलूखलपक्षे कालभेदात् । अध्रिगुः 'दैव्याः शमितारः' इति वाजपेये सारस्वतान्तानां कृतोऽपि सारस्वतप्रभृतीनामावर्तते । 'अग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्' 'सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्' इति अग्नये भ्राजस्वते हविर्द्वयं विहितम् । तस्य याज्यानुवाक्यायुगलं सूर्ययागव्यवहितत्वादावर्तते । पुरोनुवाक्याग्रहणं प्रदर्शनार्थम् । स कृत्स्नो याग आवर्तते । मनोताऽप्यध्रिगुवद्वाजपेय आवर्तते । इतरेषां कालभेदेऽपि तन्त्रत्वमेव । वैश्वदेवे हविष्कृत्तन्त्रत्वम् । सांनाय्ये च स्विष्टकृति याज्याऽनुवाक्या च तन्त्रेण प्रयुज्यते । अध्रिगुर्मनोता चैकादशिन्याम् ॥ ४६ ॥

इ०—हविष्कृदिति "हविष्कृदेहि" इत्यवहननमन्त्रोऽभिधीयते, अनेन हविः क्रियत इति । अध्रिगुरिति 'दैव्याः शमितारः' इति । पूर्वं याज्यायाः संप्रैषादनन्तरं योच्यते सा पुरोनुवाक्या । मनोता, "त्वꣳह्यग्ने" इत्यनुवाकः । हविष्कृच्चाध्रिगुश्च पुरोनुवाक्या च मनोता च हविष्कृदध्रिगुपुरोनुवाक्यामनोतमिति द्वंद्वैकवद्भावः । हविष्कृतः पशुतन्त्रवर्तिनः सवनीया उदाहरणम् । तेषु कालभेदाद्धविष्कृदावर्तते । तथा नानाबीजेषूलूखलमुसलयोस्तन्त्रपक्षे कालभेदादावर्तते । हविरावपनादि तण्डुलप्रस्कन्दनान्तमेकैकस्य हविषस्तदादि क्रियत इति । अध्रिगुर्वाजपेये सारस्वतान्तानामेव सवनीयकालालम्भपक्षे सारस्वतप्रभृतीनां ब्रह्मसामोपाकरणानन्तरालम्भपक्षे । कालभेदादावर्तते । पुरोनुवाक्याग्रहणेनावदनादिप्रक्षेपान्तो यागप्रचारो लक्ष्यते । तस्य "अग्नये

आजस्वते पुरोडाशमष्टाकपालम्" इत्युदाहरणम् । तत्र सौर्यस्यव्यवधानादाग्नेययोः संप्रतिपन्नयोरप्यवदानादिपुरोनुवाक्यासहितो यागप्रचार आवर्तेत इत्यर्थः । मनोताद्याश्च वाजपेये सारस्वतान्तानां सारस्वतप्रभृतीनां च कालभेदेन हविष्प्रचारपक्ष आवर्तते । इत्यर्थोऽयं सप्तमीनिर्देशो द्रष्टव्यः ॥ ४६ ॥

## वचनादेकं कर्म बहुमन्त्रम् ॥ ४७ ॥

क०—एकमन्त्राणीत्यस्यापवादः । वचनादेकं कर्मानेकमन्त्रं भवति । उरुक्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति । चतुर्भिरभ्रिमादत्त इति । यत्र वचनं नास्ति लिङ्गक्रमप्राप्ताश्चानेके मन्त्रास्तत्रमन्त्रविकल्पः ॥ ४७ ॥

ह०—वचनम् "चतुर्भिरभ्रिमादत्ते" इति । तत्र बहुभिर्मन्त्रैरेकमादानं क्रियत इति ॥ ४७ ॥

इति प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयः खण्डः ।

## मन्त्रान्तैः कर्मादीन्संनिपातयेत् ॥ १ ॥

क०—मन्त्रप्रकाशितानुष्ठितस्य कर्मणो निःश्रेयसकरत्वान्मन्त्रोच्चारणेन भवितव्यम् । अनन्तरं कर्मणामन्तो न । मन्त्रान्तकर्माद्योः संनिपातः संगमो नैरन्तर्यं स्यात् ॥ १ ॥

ह०—मन्त्राणामन्ता मन्त्रान्ताः । कर्मणामादयः कर्मादयः । संनिपातः संगमः । यत्र स्वाहाकारो वषट्कारो वा मन्त्रस्यान्ते प्रयुज्यते तत्र ताभ्यामेव कर्मादिसंनिपातः ॥ १ ॥

## आघारे धारायां चाऽऽदिसंयोगः ॥ २ ॥

क०—आघारमन्त्राद्योः संयोगः सहभावः । धारामन्त्राद्योश्च । आघार इति होमनाम । तस्मादाज्यं द्रव्यम् । "समारभ्य" इतिमन्त्रप्रकाशित इन्द्रो देवता । तत्रेन्द्रमुद्दिश्याऽऽहुतिमात्रमाज्यं प्रदेयम् । तत्राऽऽदिसंयोग उक्तो नान्तसंयोगः । एवं होमसिद्धि-

भवति । मन्त्रोच्चारणसमकाले [ योऽ ] न्यक्ष [ णः ] [ स त ] स्य होमस्येतिकर्तव्यता । वसोर्धाराशब्दश्चानेकेषां मन्त्राणां होमानां नामधेयम् । तेषां च घृतं द्रव्यम् । " वाजश्च मे प्रसवश्च मे " इत्यादिमन्त्रप्रकाशिता वाजप्रसवाद्या देवताः । तत्र नैरन्तर्येण मन्त्रा उच्चार्याः । अविच्छेदेन च धारा प्रस्रावयितव्या । तत्र प्रकाशितदेवतायै द्रव्यं यावदुत्तरोत्तरमन्त्रपरिसमाप्ति तत्तन्मन्त्रान्ते तत्तन्मन्त्रप्रकाशितदेवताया आहुतिमात्रं घृतं देयम् । आघारवदादिमन्त्रोच्चारणकाले यद्घृतधाराकरणं तद्धाराकरणान्तस्येतिकर्तव्यता ॥ २ ॥

ह०—आघारः स्रुच्यादिः । धारा वसोर्धारादिः । आघारे धारायां च संततश्रुतिर्दृश्यते । तत्र कर्मादेर्मन्त्रादेश्च संयोगो भवति। संततश्रुतिमूलत्वादादिसंयोगस्य ॥ २ ॥

आदिप्रदिष्टा मन्त्राः ॥ ३ ॥

क०—इह शास्त्रे मन्त्रादिनोपदिष्टेन कृत्स्नोऽयं मन्त्र उपदिष्टो वेदितव्यः ॥ ३ ॥

ह०—आदिः प्रदिष्टो येषां त आदिप्रदिष्टाः । इह सूत्रे 'प्रेयमगात्' इत्यादयो मन्त्रा आदिमात्रनिर्देशा न कृत्स्नपठिताः । यद्वा वेदविषयेयं परिभाषा वेदवदेव सूत्रेष्वपि द्रष्टव्या । पारक्षुद्रगतानां मन्त्राणां कृत्स्नपाठो वाक्यावसाननिवृत्त्यर्थः। तथाऽप्यादिप्रदेशो वाक्यावसानमेव, ' लोकोऽसि स्वर्गोऽसि ' इत्यनुवाकेन प्रतिमन्त्रमिति । ' यदस्य पारे रजसः ' इति पाशुकप्रायश्चित्ते वाक्यावसानेनैव कर्तव्यम् । न चाग्निकाण्डगतस्यायं विनियोगः; प्रकारान्तरगतत्वात् ॥ ३ ॥

उत्तरस्याऽऽदिना पूर्वस्यावसानं विद्यात् ॥ ४ ॥

क०—उत्तरस्य मन्त्रस्याऽऽदिना निर्दिश्यमानेन पूर्वस्य मन्त्रस्यावसानमन्तं जानीयात् । "प्रेयमगात्" इति मन्त्रो यावत् "देवानां परिपूतमसि " इति, अयं मन्त्रो यावत् " देवबर्हिः " इति ॥ ४ ॥

ह०—आदिमात्रपठिता इह मन्त्रा इत्युक्तम् । कस्तेषामन्त इत्याह— ' उत्तरस्याऽऽदिना पूर्वस्यावसानं विद्यात् ' । प्रकरणान्तरविनि-

योगात्पूर्वस्यान्त इति ज्ञानम् । यथा ‘ मही‌नां पयोऽसि ’ इति ‘ दुग्धम् ’ इत्यन्तेन पृषदाज्यस्य ग्रहणम् ; ‘ यावती द्यावा-पृथिवी ’ इति दधिधर्मे विनियोगात् । ‘ अग्नेर्भस्मास्यग्नेः पुरीष-मासि’ इत्यन्तेन संभारनिवपनम् , ‘ अग्नेर्ह्येतत्पुरीषम् । यत्संभाराः’ इत्यर्थवाददर्शनात् । ‘ दिवो वा विष्णो ’ इति ‘ उत सव्यात् ’ इत्यन्तो मन्त्रः, [ ‘ आशीर्पदयर्चा ’ ] इति श्रुतेः ॥ ४ ॥

## होत्रायाजमानेषु समुच्चयः ॥ ५ ॥

क०—अकर्मकरणाः क्रियमाणानुवादिनो मन्त्रा होत्रा उच्यन्ते । ‘ उच्छ्रयस्व वनस्पते ’ इत्यादय उच्छ्रीयमाणयूपानुवादिनः समु-च्चीयन्ते । याजमानेषु समुच्चयः । ‘ वसन्तमृतूनां प्रीणामि ’ ‘ एको ममैका तस्य ’ इति ॥ ५ ॥

ह०—होत्रा होतृकर्तृकाः क्रियमाणानुवादिनो मन्त्रा अभिधीयन्ते । याजमानास्त्वनेकवेद आम्नाताः । होत्राश्च याजमानाश्च होत्रा-याजमानास्तेषां समुच्चयो वेदितव्यः । ‘ उच्छ्रयस्व वनस्पते ’ इति यूपोच्छ्रयणार्था होत्रा ऋचः । सुब्रह्मण्यानुमन्त्रणं च स्तोत्र-शस्त्रानुमन्त्रणं चाऽऽध्वर्यव औद्गात्रे च वेदविहितं यजमानस्य समुच्चीयते ॥ ५ ॥

## विकल्पो याज्यानुवाक्यासु ॥ ६ ॥

क०—ऐन्द्राबार्हस्पत्ये यागे ‘ इदं वामास्ये हविः ’ इति याज्यानु-वाक्यायुगलान्याम्नातानि विकल्प्यन्ते ॥ ६ ॥

ह०—याज्याश्चानुवाक्याश्च याज्यानुवाक्याः, याज्यानुवाक्ययोरपि हौत्रत्वात्प्राप्तस्य समुच्चयापवादः । अतः ‘इदं वामास्ये’ इत्यनु-वाक्यायुगलं याज्यायुगलं चैन्द्राबार्हस्पत्ये चरौ विकल्पितम् ॥६॥

## संख्यासु च तद्वत् ॥ ७ ॥

क०—याज्यानुवाक्यास्विव विकल्पः । यथा ज्योतिष्टोमे ‘ एकविं-शतिं ददाति षष्टिं ददाति ’ इत्यत्र संख्यानां विकल्पः । न समु-च्चयः, संख्यान्तरापत्तेः ॥ ७ ॥

ह०—दक्षिणासु वक्ष्यमाणस्य समुच्चयस्यायमपवादः । संख्यासु निर्दिष्टासु दक्षिणाभूतानां द्रव्याणां विकल्प इत्यर्थः । यथा

'सप्त एकविंशतिः षष्टिः शतम्' 'एका देया षड् देया' इति च ॥ ७ ॥

क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चयः ॥ ८ ॥

क०—क्रये सोमक्रये, 'हिरण्येन क्रीणाति' इत्यादिना द्रव्याणां समुच्चयः । परिक्रये नाम ऋत्विग्भ्यो दक्षिणादाने, 'मिथुनौ गावौ ददाति' 'वासो ददाति' इत्यादीनां समुच्चयो भवति । संस्कारो यजमानदीक्षादिः । तत्र 'वाससा दीक्षयति' 'मेखलया दीक्षयति' इत्यादीनां समुच्चयः ॥ ८ ॥

द०—क्रमः सोमक्रयस्तत्राजाहिरण्यादीनां समुच्चयः । परिक्रयो दक्षिणादानम् । तत्र बहूनां द्रव्याणां विनियुक्तानां समुच्चयः । यथा त्रैधातवीयायाम् 'हिरण्यं ददाति' इति । संस्कारो दीक्षितसंस्कारः । तत्र दण्डमेखलादीनां समुच्चयः ॥ ८ ॥

रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत् ॥ ९ ॥

क०—रुद्रप्रधानं कर्म रौद्रम् । रक्षःप्रधानं कर्म राक्षसम् । निर्ऋतिप्रधानं कर्म नैर्ऋतम् । पितृप्रधानं कर्म पैतृकम् । एतानि कर्माणि च्छेदनादीनि च कृत्वाऽपामालम्भः कर्तव्यः । चकारात् स्मार्तमपि केशाद्यालम्भेऽपामुपस्पर्शनम् ॥ ९ ॥

द०—रुद्रो देवता यस्य तद्रौद्रम् । एवं राक्षसादयः । छेदनं द्वैधीकरणम् । भेदनं विदारणम् । [ आत्माभिमर्शनम्, आत्मोपकारकं कर्म । ] रुद्रोपकारकं कृत्वोदकस्पर्शनं कार्यम् । यथा 'यो भूतानामधिपतिः' । 'रौद्रेणानीकेन' इत्यत्र नोपस्पर्शनम्, अनीकविशेषणत्वात् । 'रक्षसां भागधेयम्' इत्यत्रोपस्पर्शनं कर्तव्यम् । 'तुषैः फलीकरणैर्देवहविर्यज्ञेभ्यो रक्षांसि निरभजंस्तस्मान्महायज्ञः' इति बह्वृचश्रवणात् । 'वैश्वानरे हविरिदं जुहोमि' इत्यत्रोपस्पर्शनम्; पितृतृप्तिकरत्वान्मन्त्रस्य । 'शुन्धतां लोकः पितृषदनः' इति पैतृकम् । तथा 'पितॄणां सदनमसि' इति । छेदनभेदनयोर्धात्वन्तरोपात्तयोरपि । [ तच्च ]

न रौद्रार्थम्, उपयोक्ष्यमाणत्वात्तत्संस्कारस्य, संस्कारस्वभावत्वाच्च। 'तुषैरेव रक्षाꣳसि निरवदयते। अप उपस्पृशति मेध्यत्वाय' इति। तथा नैर्ऋतेष्टकोपधाने 'मार्जयित्वोपतिष्ठते मेध्यत्वाय' इति। न चात्राङ्गिभावो बोध्यते। 'केशानङ्गं वासश्चाऽऽलभ्याप उपस्पृशेत्' इति। तथा 'नीवीं च परिधायाप उपस्पृशेत्' इति। तस्मादुपरितनप्रयोगाङ्गमेतदुदकोपस्पर्शनमवधारितम्। अतः सर्वरौद्रे सर्वराक्षसे सर्वपित्र्ये च निवर्तते। यत्र रौद्रादीनां नैरन्तर्येण वा करणं रौद्रपित्र्याणां वा करणं तत्रापि न प्रतिरौद्रं न प्रतिपित्र्यं वोदकस्पर्शनम्; अन्त एव सकृदुपस्पर्शनम्। पित्र्यबलिहरणोपस्पर्शनमकृत्वैव रौद्रं बलिहरणमुपस्पृशेत्। तथोपनयने प्रतिदिशं केशवपनं वपनान्त एवोपस्पर्शनम्। निरसने धात्वन्तरोपात्तेऽपि भवति। यथा 'वेदिकरणानि तूष्णीं परास्याप उपस्पृश्य मन्त्रेणोपस्थानम्'। धर्मशास्त्रविहितस्य केशाङ्गवाससामालम्भ उदकोपस्पर्शनस्योपसंग्रहार्थश्चकारः। यद्वा भरद्वाजोपदिष्टखननपरिलेखनयोरुदकस्पर्शनस्य ॥ ९ ॥

## उत्तरतउपचारो विहारः ॥ १० ॥

क०—अग्नयः पात्राणि च यस्मिन्विह्रियन्ते स विहारः। उत्तरत उदक्पार्श्वे उपचारोऽध्वर्य्वादीनां संचारो यस्य स उत्तरतउपचारः कर्तव्यः ॥ १० ॥

ह०—उपचारः क्रिया। उत्तरत उपचारो यस्य सोऽयमुत्तरतउपचारः। अनिर्दिष्टदेशाः क्रिया उत्तरतो विहारस्य कार्या इत्यर्थः। पित्र्यास्तु दक्षिणतो विहारस्य; 'दक्षिणावृद्धि पितृणाम्' इति वाक्यशेषात् ॥ १० ॥

## नाग्नेरपपर्यावर्तेत ॥ ११ ॥

क०—अध्वर्य्वादिरग्निमासाद्य नापपर्यावर्तेत नानभिमुखं पर्यावर्तेत; न तु पृष्ठतः कृत्वा संचरेत् ॥ ११ ॥

ह०—अग्निं पृष्ठतः कृत्वा यत्पर्यावर्तनं तदपपर्यावर्तनमाहुः, अग्नेरभिमुखमेव क्रियासु पर्यावर्तेतेत्यर्थः ॥ ११ ॥

न विहारात् ॥ १२ ॥

क०—अपपर्यावर्तेतेत्यनुवर्तते। महावेद्यामप्रणीतेऽग्नौ तत्स्थानानभिमुखो न संचरेत् ॥ १२ ॥

ह०—विहारादपि नापपर्यावर्तेत। महावेद्यामग्नावप्रणीते विहारं पृष्ठतः कृत्वा पर्यावर्तनप्रतिषेधाद (या) यमारम्भः ॥ १२ ॥

अन्तराणि यज्ञाङ्गानि बाह्याः कर्तारः ॥ १३ ॥

क०—यज्ञाङ्गानि ग्रहचमसादीनि अभ्यन्तराणि, बाह्याः कर्तारो यथा स्युस्तथा संचरेत्। पत्नी यजमानश्च ऋत्विग्भ्योऽन्तरे स्याताम् ॥ १३ ॥

ह०—यज्ञाङ्गानि कर्तृव्यतिरिक्तानि सर्वाणि यज्ञाङ्गद्रव्याण्यभिधीयन्ते। पारिशेष्यादेव कर्तॄणां बाह्यत्वे सिद्धे, 'बाह्याः कर्तारः' इति पुनर्वचनं यजमानपत्न्योरपि बाह्या ऋत्विज इति ज्ञापनार्थम्। अत ऋत्विजामपि मुख्याज्जघन्यो बाह्य इति। उक्तं चाऽऽश्वलायनेन 'उत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेत्' इति ॥ १३ ॥

न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेत् ॥ १४ ॥

क०—मन्त्रवता मन्त्रेण प्रोक्षितेनाभिमृष्टेन गृहीतेन वा स्रुवादिना नाऽऽत्मानमभिपरिहरेत्। अथवा मन्त्रवता मन्त्रिणा यज्ञाङ्गेनाऽऽत्मानमृत्विजं नाभिपरिहरेत्। स्रुवादीनाम् 'अन्तराणि' इत्यबहिर्भावेऽपि सिद्धे, पत्नीयजमानौ मन्त्रोच्चारणान्मन्त्रवन्तौ समवाये तौ न बहिः कुर्यात्, अभ्यन्तरौ स्याताम् ॥ १४ ॥

ह०—मन्त्रेण संस्कृतं मन्त्रवत्। मन्त्रवता तेनाऽऽत्मानं न वेष्टयेदित्यर्थः। 'अन्तराणि यज्ञाङ्गानि' इत्येव सिद्धे वचनं मन्त्रेणासंस्कृताङ्गस्य हस्तस्याऽऽत्मवेष्टनेऽपि न दोष इति ख्यापनार्थम् ॥ १४ ॥

प्रागपवर्गाण्युदगपवर्गाणि वा यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति ॥ १५ ॥

क०—प्राक्, पुरस्तात्, उदक्, उत्तरतः, अपवर्गः परिसमाप्तिर्येषां

कर्मणां तानि प्रागपवर्गाण्युदगपवर्गाणि करोति । देवानामिमानि दैवानि कर्माणि । दक्षिणस्य बाहोरधस्तात्सव्यबाहोरुपरि न्यस्तं कार्पासं सूत्रं यस्य स यज्ञोपवीती, अध्वर्य्वादिर्यज्ञोपवीती भूत्वा प्रदक्षिणं दैवानि कर्माणि प्रागपवर्गाण्युदगपवर्गाणि करोति, यथा परिस्तरणपरिषेचने । येषां प्रागपवर्गोदगपवर्गप्रदक्षिणत्वानि नियता-स्तानि यज्ञोपवीती कुर्यात् ॥ १५ ॥

ह०—अपवर्गः परिसमाप्तिः । प्राक्, अपवर्गो येषां तानि प्रागपव-र्गाणि । उदक्, अपवर्गो येषां तान्युदगपवर्गाणि । यज्ञार्थ-मुपवीतम् ‘ अजिनं वासो वा ’ इति ब्राह्मणे व्याख्यातम् । देवा देवता येषां तानि दैवानि । यत्कर्म दैवं पित्र्यकर्मणोऽङ्गं तत्रापि दैवधर्म इति ख्यापनार्थं, कर्माणीत्यधिकवचनम् । यथा साकमेधे पित्र्येषु प्रयाजादीनां मासिश्राद्ध आचारादेः ॥ १५ ॥

प्राचीनावीती प्रसव्यं दक्षिणापवर्गाणि पित्र्याणि ॥ १६ ॥

क०—सव्यस्य बाहोरधस्ताद्दक्षिणस्य बाहोरुपरिष्टाद् यस्योप-वीतं स प्राचीनावीती । दक्षिणोऽपवर्गः परिसमाप्तिर्येषां तानि कर्माणि दक्षिणापवर्गाणि पितॄणामिमानि पित्र्याणि अङ्गानि प्रधानानि च । तानि यजमानादिः प्राचीनावीती भूत्वा, पित्र्याणि प्रसव्यं दक्षिणतोपवर्गाणि कुर्यात् ॥

केचिद्दर्शपूर्णमासाङ्गपित्र्येषु यज्ञोपवीतित्वमिच्छन्ति । ‘ उपव्ययते देवलक्ष्ममेव तत्कुरुते ’ इति साङ्गयोरविशेष-विधानात् ॥

अपरे तु नेच्छन्ति; विशेषेण ‘ पित्र्याणि ’ इत्युद्दिश्य सूत्र-कारेण प्राचीनावीतित्वविधानात् ॥ १६ ॥

ह०—प्राचीनमावीतं प्राचीनावीतम् । तदपि ‘ एतदेव विपरीतं प्राची-नावीतम् ’ इति ब्राह्मणे व्याख्यातम् । तथा दक्षिणोऽपवर्गो येषां तानि दक्षिणापवर्गाणि । यत्कर्म पित्र्यं दैवस्याङ्गभूतं तत्र पित्र्यधर्मो विज्ञेयः । स्मृतिसिद्धयज्ञोपवीतप्राचीनावीतयोर्भ्रेषमध्ये स्मार्तभ्रेषे समस्ताभिर्व्याहृतिभिरेको होमः । ‘ यद्यविज्ञाता सर्व-

व्यापद्वा ' इति बह्वृचश्रुतेः । अविज्ञाता—ऋग्युजुःसामाविहितत्वे-नाविज्ञाताऽप्रत्यक्षश्रुतिमूलेत्यर्थः ॥ १६ ॥

**यानि शुल्बानि समासं गच्छन्ति प्रसव्यं तान्यावेष्ट्य प्रदक्षिणं समस्येत्॥ १७ ॥**

क०—शुल्बानि रज्जवः । येषां विवृत्तये गुणान्तरे गुणाः समस्यन्ते यथा ' द्विगुणा पशुरशना त्रिगुणा यूपरशना ' इति । तानि प्रसव्यमप्रदक्षिणं गुणानावेष्ट्य कृत्वा प्रदक्षिणं समस्येत् परिवर्तयेत् ॥ १७ ॥

ह०—शुल्बानि रज्जवः । समासं गच्छन्ति ' द्विगुणा त्रिवृत्त्रिगुणा ' इति ' पवित्रम् ' इति च; तानि पूर्वमप्रदक्षिणमावेष्ट्य प्रदक्षिणं संयोजयेत् ॥ १७ ॥

**अथ यानि न समस्यन्ते प्रदक्षिणं तानि ॥ १८ ॥**

क०—यान्येकगुणशुल्बानि तानि प्रदक्षिणमेवाऽऽवेष्टयेदावर्तयेत् ॥ १८ ॥

ह०—बर्हिःसंनहनमिध्मसंनहनं चोदाहरणम् ॥ १८ ॥

**अमावास्यायाममावास्यया यजेत ॥ १९ ॥**

क०—अमावास्यायामिति सप्तमीनिर्देशः कालवचनः स्वस्मिन्काले वर्तते । अमाशब्दः सहार्थे । यस्मिन्काले सूर्याचन्द्रमसोः सह वासः स कालोऽमावास्या । अमावास्ययेति तृतीयानिर्देशः कर्मवचनः; यथा ' आग्नेयोऽष्टाकपालः ' ' ऐन्द्राग्न एकादशकपालः ' इत्येवमादीनि दर्शितानीत्येतैः कर्मभिरमावास्यायां काले यजेत । अमावास्ययेति तृतीयानिर्देशात्करणभूतयागः साङ्गोऽमावास्यायां काले विधीयते ॥ १९ ॥

ह०—सूर्याचन्द्रमसोः सह वासो यस्मिन्काले भवति स कालोऽमावास्या । तस्याममावास्ययाऽऽग्नेयादिप्रधानसमुदायेन यजेत । क्षणमात्रत्वादस्य कालस्य तावति काले साङ्गस्य प्रधानस्य प्रयोक्तुमशक्यत्वाद्यथाऽयं क्षणः प्रयोगमध्ये भवति तथाऽमावास्यया यजेतेत्यस्योपदेशस्यार्थो वर्णनीयः । यथा चन्द्रयोगो मध्यवर्तिकालो भवति, प्रधानं च तत्संनिकृष्टं तथोपरिष्टाद्वदिष्यति॥ १९॥

## पौर्णमास्यां पौर्णमास्या ॥ २० ॥

क०—पौर्णमास्यामिति सप्तम्या कालनिर्देशः। यस्मिन्काले चन्द्रादित्ययोः परो विप्रकर्षस्तस्मिंश्चन्द्रमाः पूर्यते स कालः पौर्णमासी। पौर्णमास्येति तृतीयानिर्देशः। 'आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः' इत्येवमादिभिर्निर्दिष्टानि पौर्णमासीनामकानि। अत्रापि तृतीयानिर्देशात्तया पौर्णमास्या करणभूतया साङ्गया पौर्णमास्यां काले यजेत ॥ २० ॥

ह०—॥ २० ॥

## यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् ॥ २१ ॥

क०—कलाभिः पूर्यमाणो यस्मिन्क्षणे चन्द्रमाः स पूर्णमासः। पूर्णः क्षयाभिमुखः। तस्मिंश्चन्द्रादित्ययोः परो विप्रकर्षो भवति। स क्षणः पर्वसंधिः। पञ्चदश्याः प्रतिपदश्च पूर्णमासयोगात् [ पौर्णमासी ] तत्क्षणयोगात्पञ्चदशी प्रतिपच्च पौर्णमासी। तदाऽहर्द्वयात्मकपौर्णमास्यां 'पौर्णमास्या यजेत' इति साङ्गा पौर्णमास्यनुष्ठेया विधीयते। तत्राहर्द्वये यस्मिन्नहनि चन्द्रमाः पूर्ण उत्सर्पेदुदेति तां पौर्णमासीं यागानुष्ठानात्पुरस्तात्पूर्वमुपवसेत्। पूर्तेरनियतकालत्वाद्यस्मिन्नहन्यपराह्णे रात्रौ संध्यायां वा पूर्णश्चन्द्रमाः, चन्द्रादित्ययोः परो विप्रकर्षः स पर्वकालः। तां पौर्णमासीमुपवसेत्। राका चेयम् ॥ २१ ॥

ह०—अहरिति सप्तम्या लुक्, यस्मिन्नहनीत्यर्थः। पुरस्तादित्येतत्पदमस्मिन्सूत्र इदानीमन्वयं न लभते। प्रयोजनाभावात्। उत्सर्पेदिति पदमन्वितमप्यविवक्षितमेव। यस्मिन्नहनि चन्द्रमाः पूर्ण इत्यर्थः। तामुपवसेत्तस्मिन्नुपवासं कुर्यात्। पौर्णमासीमिति सप्तम्यर्थे द्वितीया। तस्योपवासविधेरयं विषयः—यदा मध्यंदिनात्परस्तात् प्रतिपत्पञ्चदश्योः संधिस्तदोपवासः। उत्तरेद्युरिज्या। यदाऽपराह्णे चेत् ( यद्यस्यामिज्या पूर्वाह्णे चेत् ) पर्वसंधिः कर्ममध्ये न स्यात्। पु(प)रस्तान्मध्यंदिनाच्चेत् 'प्रातर्यजध्वमाश्विना हिनोत। न सायमस्ति देवया अजुष्टम्' इति मन्त्रवर्णेन 'पूर्वाह्णे

वै देवानाम्' इति वाजसनेयश्रुत्या च विरुध्यते। तस्मादुत्तरभाविन्यामुपवास एवेत्यवधारितम् ॥

एवदेव सूत्रं पुरस्तात्पदेनान्वित [ मर्था ] न्तरेणापि वहनीयम् । प्राथम्यवचनोऽयं पुरस्ताच्छब्दः । यदहः पुरस्ताच्चन्द्रमाः पूर्णो यस्मिन्नहनि सूर्याचन्द्रमसोः परो विप्रकर्षस्तस्यां पौर्णमास्यामाधानानन्तरं प्रथममुपवसेदित्यर्थः । आधानानन्तरं चोत्तरभाविन्यामेव पौर्णमास्यामारम्भः । उपरितनसूत्रे वक्ष्यमाणायां पौर्णमास्यामारम्भो न लभ्यत इत्यर्थः । एवं ' यदीष्ट्या यदि पशुना ' इति यथोपदिष्टकालाऽन्वारम्भणीया भवति ॥ २१ ॥

श्वः पूरितेति वा ॥ २२ ॥

क०—श्वःशब्दोऽव्ययम्, आगामिदिनवाची, अधिकरणवृत्तिश्च । अन्वाधानानन्तरदिने चन्द्रमाः पूरिता चन्द्रमसः पूरणं भविता । श्वः काले पूर्वाह्णे चन्द्रमाः पूरिता चन्द्रादित्ययोः परो विप्रकर्षः स पर्वसंधिरिति । यागानुष्ठानात्पुरस्तात्पूर्वेद्युः पौर्णमासीमुपवसेत् । इयमनुमतिः । अपरेद्युः पर्वसंधिर्यथा प्रयोगमध्ये भवति तथा यजेत ॥ २२ ॥

ह०—श्वः प्रतिपत्पर्वसंधिरिति वा पूर्वेद्युरुपवसेत् । उत्तरेद्युरिज्या भवेत् । अस्योपवासविधेरयं विषयः—यस्यां पौर्णमास्यां पूर्वाह्णे सूर्याचन्द्रमसोः परो विप्रकर्षस्तस्यां पूर्वेद्युरुपवसेत् ॥ २२ ॥

खर्विकां तृतीयां वाजसनेयिनः समामनन्ति ॥ २३ ॥

क०—अस्य सूत्रस्याऽऽचार्यग्रन्थः ( स्य चायमर्थः ) तृतीयां पौर्णमासीं खर्विकां वाजसनेयिनः पठन्ति । द्वादशधा रात्रिं कृत्वा, द्वादशभागावशिष्टे यदा विप्रकर्षस्तां खर्विकेत्याहुः । अल्पकालावशिष्टायां रात्र्यां यदा पर्वकालः सा खर्विकेत्युच्यते । खर्वशब्दोऽल्पवाची । अथवा षोडशेऽह्नि पुरस्तान्मध्यंदिनाद्यदि स्यात् पर्वकालः सा खर्विका । षोडशेऽह्न्युपवासः । या त्वेषा खर्विका, यस्याश्च पूर्वाह्णे पर्वकालस्तयोः सद्यस्कालेति संज्ञा ॥ २३ ॥

ह०—खर्वशब्दोऽल्पवचनः । द्वादशधा रात्रिं कृत्वा द्वादशभागावशिष्टे यदा सूर्याचन्द्रमसोः परो विप्रकर्षस्तां खर्विकामाहुः ।

यद्वा षोडशेऽहनि यदा पुरस्तान्मध्यंदिनाद्विप्रकर्षः सा खर्विका। तस्यामुपोष्य श्वोभूते यागः। वाजसनेयिग्रहणं मुख्यकल्पानुकल्पाविवेकार्थम् ॥ २३ ॥

**यदहर्न दृश्यते तदहरमावास्याम् ॥ २४ ॥**

क०—चन्द्रमाः, उपवसेत्, इत्यनुवर्तते। यस्मिन्क्षणे चन्द्रादित्ययोः परः संनिकर्षः सह वासः। अमेति सहत्ववाची (चि)। स क्षणोऽमावास्या पर्वसंधिः प्रतिपदः पञ्चदश्याश्च। तस्मिंश्चन्द्रमा न दृश्यते। तत्क्षणयोगात् पञ्चदशी प्रतिपच्चामावास्या। तत्राहर्द्वये 'अमावास्यायाममावास्यया यजेत' इति साङ्गाऽमावास्याऽनुष्ठेया विधीयते। तत्राहर्द्वये यस्मिन्नहनि चन्द्रमा न दृश्यते चन्द्रादित्ययोः परः संनिकर्षः, स चानियतकालत्वाद्पराह्णे रात्रौ संध्यायां वा स्यात्तामभावास्यामुपवसेत्। कुहूश्चेयम् ॥ २४ ॥

ह०—यस्मिन्नहनि सूर्याचन्द्रमसोः परः संनिकर्षस्तस्मिन्नहन्यमावास्यामुपवसेदित्यर्थः ॥ २४ ॥

**श्वो न द्रष्टार इति वा ॥ २५ ॥**

क०—श्वश्चन्द्रमसं न द्रष्टारो नेक्षितारः। चन्द्रादर्शनकालः प्रतिपत्पञ्चदश्योः संधिः। स कालः श्वः पूर्वाह्णे भवितेति वा पुरस्ताद्यागानुष्ठानात्पूर्वममावास्यामुपवसेत्। सिनीवाली चैषा ॥ २५ ॥

ह०—श्वः संनिकर्ष इति वा पूर्वेद्युरुपवसेत्। पौर्णमास्यामुपवासत्वेवानयोर्विषयो द्रष्टव्यः ॥ २५ ॥

**एकप्रकरणे चोद्यमानानि प्रधानानि समानविधानानि ॥ २६ ॥**

क०—विधीयन्त इति विधानान्यङ्गानि। एकस्याधिकारिणः स्वर्गकामादेः पुरुषस्य स्वर्गार्थं यजमानस्य यो व्यापारः स प्रकर्षेण पुरुषार्थकारित्वात्प्रकरणम्। तदेकफलत्वादेकम्। तत्रैकस्मिन्प्रकरणे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चोद्यमानानि

विधीयमानानि समानाङ्गानि भवेयुः। अतो दर्शपूर्णमासयोग-क्षेयादीनां सर्वेषामुपदेशानां न परस्परं प्रकृतिविकारभावः ॥२६॥

ह०—प्रकरणं फलवदपूर्वं [ प्रधानं समानविधानम् ]। विधीयन्त इति विधानान्यङ्गानि। एकस्मिन्प्रकरणे चोद्यमानानि [ आग्नेयादीनि ] प्रधानानि समानाङ्गानि। तेषामन्योन्यं प्रकृतिविकृतिभावो नास्तीत्यर्थः। यद्वा—प्रधानान्येव समानविधानानि, न वैमृधः। वैमृधो विकृतिरेवेति व्याख्यायते ॥ २६ ॥

प्रकरणेन विधयो बध्यन्ते ॥ २७ ॥

क०—विधीयन्त इति विधयोऽङ्गानि। तानि प्रकृतेन प्रधानेन बध्यन्तेऽवरुध्यन्ते। पुरुषार्थनिर्वर्तकत्वेन प्रमाणान्तरास्पृष्टापूर्वसाधनं करणम्। करणं विधीयमानं करणमित्युपकारकमपेक्षते। अङ्गान्यपि निरधिकारवाक्यविहितत्वेन प्रयोजनापेक्षाणि सन्ति, श्रुत्यादिभिः फलवत्प्रधानतादर्थ्यं प्रतिपाद्यमानानि, तदपेक्षितोपकारजनकत्वेन प्रधानेन प्रकृतेनावरुध्यन्ते ॥ २७ ॥

ह०—प्रकरणं फलवदपूर्वमेव। तेन संनिहिता धर्मा बध्यन्ते। यस्य फलवत्कर्मणः सकाशे ये धर्मा आम्नातास्ते तदर्था एव सर्व इत्यर्थः। अतो दर्शपूर्णमासयोर्विहिता धर्मास्तदर्था एव; नाग्निहोत्रसौर्याद्यर्थाः ॥ २७ ॥

अनिर्देशात्साधारणानि ॥ २८ ॥

क०—श्रुत्यादिभिर्येषामविशेषनिर्देशो विशेषसंबन्धो नास्ति यथा प्रयाजादयस्तानि साधारणानि ॥ २८ ॥

ह०—अनिर्देशो विशेषाश्रुतिः। अन्यस्य कारणस्याभावे सर्वेषां प्रधानानां संनिहितान्यङ्गानि साधारणानि भवन्ति। पर्यग्निकरणादयः प्रयाजादयश्चोदाहरणम्। यद्वा—अङ्गानां प्रधानानां साधारणान्यङ्गानि। आज्यधर्मा वेदिधर्माश्चोदाहरणम्। अतस्तेऽङ्गानां प्रधानहविषां च साधारणा भवेयुः। तस्मादनूयाजकाल आज्ये दुष्टे पुनराज्यसंस्काराः क्रियन्ते ॥ २८ ॥

निर्देशाद्व्यवतिष्ठन्ते ॥ २९ ॥

क०—येषां श्रुत्यादिभिर्विशेषनिर्देशस्तानि यथोपदेशं व्यवतिष्ठन्ते व्यवस्थितानि भवन्ति। यथा 'अरुणया' इति क्रये, लिङ्गेन 'स्योनं ते' इति सदनकरणे, वाक्येन 'अवीवृधेताम्' इत्यग्नीषोमीये, प्रकरणेन प्राजापत्ये, स्थानेन 'दब्धिरसि' इत्युपांशुयाजे, समाख्ययाऽध्वर्युः ॥ २९ ॥

ह०—निर्देशो विशेषवचनम्। विशेषवचनात् प्रधानविशेष एव धर्मा व्यवतिष्ठन्ते। 'पयसा मैत्रावरुणं श्रीणाति। स्रुवेण पुरोडाशमनक्ति' इति चोदाहरणम् ॥ २९ ॥

आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयाजश्च पौर्णमास्यां प्रधानानि ॥ ३० ॥

क०—यद्यप्याग्नेयोऽष्टाकपाल इति द्रव्यपरो निर्देशस्तथाऽप्याग्नेय इति देवतातद्धितत्वादष्टाकपाल आग्नेयः कर्तव्यः। तस्याऽऽग्नेयत्वं यागमन्तरेण न सिध्यतीति 'आग्नेयोऽष्टाकपालः' इति याग एवोपदिष्टः। उपांशुयाज इतियागनाम्ना याग एवोपदिष्टः 'अग्नीषोमीय एकादशकपालः' इत्यादिरपि याग एवोपदिष्टः। एतानि त्रीणि यजनानि पौर्णमास्यां काले प्रयोगे प्रधानानि ॥ ३० ॥

ह०—अग्निर्यस्य देवता सोऽयमाग्नेयः। अष्टसु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः। अग्नीषोमीयोऽपि तद्वत्। आग्नेयाग्नीषोमीयशब्दाभ्यां तत्साध्यो याग उपलक्ष्यते। एते त्रयो यागाः पौर्णमास्यां प्रधानानीत्यर्थः। उपांशुयाजस्य व्युत्क्रमेण पाठोऽग्नीषोमीयाभावेऽप्यसोमयाजिन उपांशुयाजो न निवर्तेत इति ख्यापनार्थः ॥ ३० ॥

तदङ्गमितरे होमाः ॥ ३१ ॥

क०—तेषां प्रधानानामङ्गान्युपकारकाणि शेषभूतानीतरे होमा आरादुपकारकाः। न विश्वजिद्वत्फलं कल्प्यम्। नापि रात्रिवदर्थवादस्थं फलम्। 'अग्निं गृहपतिं यजति प्रतिष्ठित्यै' इत्येवमादीनां प्रधानोपकारार्थत्वेन परार्थत्वात्फलश्रुतेरर्थवादत्वम्। अतः प्रधा-

नानाप्रङ्गान्यारादुपकारकाणि । संनिपत्योपकारकाणां तु दृष्टप्रयोजनत्वान्नानङ्गता शङ्क्या ॥ ३१ ॥

ह०—पारिशेष्यादेव सिद्धे पुनर्वचनम् ‘ यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय ’ इति फलसाधनतया स्तुतानां प्रयाजादीनामङ्गत्वज्ञापनार्थम् । यद्वा वैमृधः पौर्णमासस्याङ्गमिति ख्यापयितुमारम्भः ॥ ३१ ॥

आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो द्वादशकपालो वाऽमावास्यायामसोमयाजिनः ॥ ३२ ॥

क०—आग्नेयैन्द्राग्नावसोमयाजिनोऽमावास्यायां कालेऽमावास्याशब्दवाच्यौ प्रधानभूतौ । तदङ्गमितर इत्यनुवर्तते ॥ ३२ ॥

ह०—इन्द्राग्नी देवता यस्य सोऽयमैन्द्राग्नः । अमावास्यायामसोमयाजिन एतौ यागौ प्रधाने इत्यर्थः ॥ ३२ ॥

सांनाय्यं द्वितीयं सोमयाजिनः ॥ ३३ ॥

क०—सांनाय्यशब्देन यागसाधनभूते दधिपयसी उच्येते । ताभ्यां साध्यावैन्द्रयागौ माहेन्द्रयागौ वा सोमयाजिनो द्वितीयस्थानापन्नैन्द्राग्नस्थानापन्नौ भवतः ॥ ३३ ॥

ह०—सांनाय्यमिति हविषो दधिपयसोरभिधानम् । ‘ इन्द्रस्य वृत्रं जघ्नुषः ’ इत्यारभ्य ‘ तत्सांनाय्यस्य सांनाय्यत्वम् ’ इत्यन्तः सांनाय्यशब्दप्रवृत्तेरर्थवादः । तत्साध्यौ यागौ सांनाय्यशब्देन लक्ष्येते । तौ द्वौ सहप्रदानत्वाद्द्वितीयमित्येकवचनान्तेन शब्देनाभिधीयेते । सांनाय्यं सोमयाजिनो द्वितीयं प्रधानमित्यर्थः । दर्शपूर्णमासप्रकरण एव ‘ सोमयाज्येव संनयेत् ’ इति सोमयाजिन एव सांनाय्ये सिद्धे, सोमयाजिन इति वचनं पत्नीमरणे पुनर्दारक्रियायामाधाने कृते, पुनः सोमयागादर्वाक्सांनाय्यप्रतिषेधार्थम् । अयं चार्थो दर्शितो मनुभाष्यकारेण ‘ अधिकारान्तरं पुनर्दारक्रियायां न पुनः पूर्वाधिकारप्रसङ्गः ’ इति । अस्मिन्नेव विषये सांनाय्यस्य प्रतिषेधः स्पष्टमुक्तो बौधायनेन । अनेनैव न्यायेन अजस्रान्वारम्भणीयादि सर्वं पुनर्दारक्रियायां

प्रथमाधानवदेव क्रियते । अग्नीषोमीयोऽपि न क्रियते प्राक्पुनः सोमयागादिति ॥ ३३ ॥

नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते ॥ ३४ ॥

क०—असोमयाजी ब्राह्मणः पुरोडाशद्रव्यकमग्नीषोमदेवत्यं यागं न कुर्यात् ॥ ३४ ॥

ह०—ब्राह्मणस्येति च्छेदः ' आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति ' इति श्रुत्यन्तरे दर्शनात् ॥ ३४ ॥

नैन्द्राग्नः संनयतो वर्णाविशेषेण ॥ ३५ ॥

क०—ब्राह्मणस्येत्यनुवर्तत इत्याशङ्क्याऽऽह—वर्णाविशेषेणेति । ' नासोमयाजी संनयेत्संनयेद्वा ' इति यदा त्रयो वर्णा असोमयाजिनः सांनाय्यं यागं कुर्वन्ति, तदैन्द्राग्नयागाभावः । अमावास्यायामसोमयाजिन ऐन्द्राग्नसांनाय्ययोर्विकल्पः । पौर्णमास्यां त्वसोमयाजिनो ब्राह्मणस्याग्नीषोमीययागाभाव एव । तद्रहिताऽपि पौर्णमासी पुरुषार्थं साधयति । द्वयोरेव हि यागयोः पौर्णमासीशब्दवाच्यत्वमस्ति; प्रत्येकं नामयोगात् । तस्मादग्नीषोमीयरहितावेवेतरौ पुरुषार्थं साधयतः ॥ ३५ ॥

ह०—ऐन्द्राग्नः संनयतो वर्णाविशेषेण न भवति । सोमयाजिमात्रस्य न भवति; किंतु असोमयाजिन एवेत्यर्थः ॥ ३५ ॥

पितृयज्ञः स्वकालविधानादनङ्गं स्यात् ॥ ३६ ॥

क०—स्वस्य कालः स्वकालः स्वकालस्य विधौ, पितृयज्ञो नामामावास्यायामनारभ्याधीतस्तस्य स्वकालो विधीयते । अग्निष्टोमे प्रवृणक्तीतिवन्न कर्मसंबन्धः । अतः ' तस्मात्पितृभ्यः पूर्वेद्युः क्रियते ' इति कालमात्रविधानादनङ्गं स्यात् ॥ ३६ ॥

ह०—पितॄणां यज्ञः पितृयज्ञः । अत्र पिण्डपितृयज्ञः पितृयज्ञ इत्याभिधीयते । ' तस्मात्पितृभ्यः पूर्वेद्युः क्रियते ' इति दर्शपूर्णमासप्रकरणे दर्शनात् । कर्ममध्यवर्तित्वादङ्गत्वे प्राप्त इदमुच्यते—अनङ्गं पिण्डपितृयज्ञः स्यात् । कुतः स्वकालविधानात्, ' अमावा-

स्यायामपराह्णे पिण्डपितृयज्ञ इति । न ह्यङ्गत्वे पृथक्कालो विधी-यते, यथा प्रयाजादेः ॥ ३६ ॥

तुल्यवच्च प्रसंख्यानात् ॥ ३७ ॥

क०—दर्शपूर्णमासाभ्यां सह तुल्यवत्प्रसंख्यानाद्गणनात्तद्वदेवानङ्गम्। एवं श्रुतिः 'चत्वारो महायज्ञाः। अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञः' इति। एवं तुल्यवत्प्रसंख्यानान्नाङ्गम्॥३७॥

ह०—तुल्य इव तुल्यवत्। प्रसंख्यानं परिगणनं परिगणनादित्यर्थः। एवं हि श्रूयते 'चत्वारो वै महायज्ञाः। अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञः' इति। यद्वा प्रसंख्यानं विधानम् 'अप्यनाहिताग्नेः' इत्याहिताग्नेरनाहिताग्नेश्च तुल्यवद्विधानादित्यर्थः। अत्र ह्यनाहिताग्नेर्व्यक्तमनङ्गं पिण्डपितृयज्ञ इति। तद्वदेवाऽऽहिताग्नेरपीति ॥ ३७ ॥

प्रतिषिद्धे च दर्शनात् ॥ ३८ ॥

क०—प्रतिषिद्धेऽमावास्यायागे पिण्डपितृयज्ञो दृश्यते 'पौर्णमासीमेव यजेत नामावास्यां पिण्डपितृयज्ञमेवामावास्यां प्रीणाति' इत्यमावास्यायां पिण्डपितृयज्ञमनुवदंस्तदनङ्गं दर्शयति ॥ ३८ ॥

ह०—एवं हि शाखान्तरे श्रूयते 'पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां पिण्डपितृयज्ञमेवामावास्यायां कुरुते' इति दर्शे प्रतिषिद्धेऽपि पितृयज्ञमनुवदन्ननङ्गभावं दर्शयति। अनङ्गत्वाच्च कुण्डपायिनामयने न क्रियते, नक्षत्राधानान्तरे च दर्शेऽपि क्रियते, अदृष्टचन्द्रायां प्रतिपद्यपराह्णे क्रियत इति प्रयोजनानि। तत्राऽऽहवनीयस्य न प्रणयनमर्थाभावात्। नित्यश्चायं पिण्डपितृयज्ञः 'मासि पितृभ्यः क्रियते' इति श्रुतेः। मासि मासि पितृभ्यः क्रियत इत्यस्याः श्रुतेरर्थोऽवधार्यते, 'तस्मादहरहर्मनुष्याः' इति वीप्साधिकारे श्रूयमाणत्वात्। वीप्सायां च नित्याधिकारोऽवगम्यते। यथा—'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति। नित्येष्वपि स्वर्गफलं केचन मन्यन्ते ॥ ३८ ॥

सहाङ्गं प्रधानम् ॥ ३९ ॥

क०—अधिकारिपदसंयुक्तवाक्यनिर्दिष्टं कर्म प्रधानम्। तद्यत्र विहितं

तत्राङ्गैः सह विधीयते, यथा—'उद्भिदा यजेत पशुकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति ॥ २९ ॥

ह०—अङ्गैः सह वर्तत इति सहाङ्गम् । अङ्गोपदेशशून्यं प्रधानं दर्शपूर्णमासादिभ्योऽतिदिष्टैरङ्गैरङ्गसहितं भविष्यतीत्यर्थः। सौर्य-त्रिकद्रुकादय उदाहरणम् ॥ २९ ॥

## इति द्वितीयः खण्डः ॥ २ ॥

## अथ तृतीयः खण्डः ।

देशे काले कर्तरीति निर्दिश्यते ॥ १ ॥

स्वशब्दं यत्र ॥ २ ॥

क०—सहाङ्गं प्रधानमित्यनुवर्तते। यत्प्रधानं यत्र देशादिषु स्वशब्देन वाचकेन निर्दिश्यत उपदिश्यते तत्र तत्सहाङ्गं विहितं प्रत्येतव्यम्। अङ्गान्यपि तत्र विहितानि जानीयात्। यथा—'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति साङ्गं तत्र वैश्वदेवम्। 'शरदि वाजपेयेन यजेत' इति वाजपेयः सहाङ्गः। साङ्गस्य कर्तृविधानम्—'यजमानः स्वयमग्निहोत्रं जुहुयात्' 'पर्वणि वा' 'ब्रह्मचारी वा जुहुयात्' इति। करणनिमित्तेऽपि साङ्गस्य विधानम्। स्वर्गाय विहितमग्निहोत्रं यावज्जीवमिति जीवननैमित्तिकं साङ्गं विधीयते। अथवा साङ्गं प्रधानम् 'देशे काले कर्तरि' इति। यत्र देशे काले कर्तरि निमित्ते च प्रधानं विधीयते, तत्र तानि च विहितानि भवेयुः। यथा—'प्राचीनप्रवणे वैश्वदेवेन यजेत' 'शरदि वाजपेयेन यजेत' 'यजमानः स्वयमग्निहोत्रं जुहुयात्' 'यावज्जीवमग्निहोत्रम्' इति निर्दिष्टम्। न स्वोऽस्वः। क्रियाकारकमधिकारिणः स्वम्। अधिकारी न कस्यचित्स्वम्। अस्व इत्यधिकार्युच्यते। अस्ववाची शब्दो यस्य प्रधानस्य तदस्वशब्दं प्रधानम्। यत्र प्रधानमस्वशब्दमाधिकारिपदसंयुक्तं निर्दिश्यतेऽपूर्वं विधीयते; यथा—'उद्भिदा यजेत पशुकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति ॥ १ ॥ २ ॥

इ०—सहाङ्गं प्रधानमित्यधिक्रियते । तथोपरितनसूत्रगतं यत्पदमपि प्रतिकृष्यते। देशविशेषे कालविशेषे कर्तृविशेषे च यत्प्रधानं निर्दिश्यते,तत्स्वकीयैरङ्गैः सह निर्दिष्टं प्रतीयादित्यर्थः।'विषम आलभेत' इति देशस्योदाहरणम् । तत्र षड्ढोत्रपश्विष्टियूपाहुत्यादयोऽपि विषम एव क्रियेरन् । तथा प्राचीनप्रवण एव पञ्चहोत्रादयः । 'शरदि वाजपेयेन यजेत' इति कालस्योदाहरणम् । तत्र सौत्रामण्या मैत्रावरुण्याश्च शरदेव कालः । 'परिस्रजी होता भवति' इति कर्तुरुदाहरणम्। तत्र बृहस्पतिसवे साग्निचित्ये परिस्रजित्वं विधीयमानं सौत्रामण्या मैत्रावरुण्याश्चोपादीयते । यदा वाजपेयाङ्गं बृहस्पतिसवो भवति, तदाऽपि शरत्काले क्रियते। तस्यातिदेशतो वसन्तकालः प्राप्तः। वाजपेयाङ्गस्य शरत्कालत्वादभिन्नयोगत्वाद्बृहस्पतिसवस्येति ॥ १ ॥

'देशे काले कर्तरीति निर्दिश्यते' इति वर्तते। स्व [ एव ] शब्दो यस्यासौ स्वशब्द इति विग्रहः । सामर्थ्यापेक्षत्वात्स्वशब्दस्य। किंचित्प्रधानं स्वशब्देन गृह्यते यथा 'सौर्यः' 'निरूढः' इति । किंचित्प्रधानं परशब्देन गृह्यते [ यदन्याङ्गभूतम्, यथा सौत्रामणीमैत्रावरुण्यामिक्षेति ] प्रधानशब्दचोदितत्वादङ्गप्रधानविधेः । अयमस्य सूत्रस्यार्थः—यत्र 'देशे काले कर्तरि' इति निर्दिश्यते तत्र स्वशब्दमेव निर्दिष्टं विजानीयान्न परशब्दमित्यर्थः। 'मध्येऽग्नेराज्याहुतीः' इति देशस्योदाहरणम् । तत्र प्रधानभूता एवाऽऽहुतयोऽग्नेर्मध्यदेशे विधीयन्ते । 'यदीष्ट्या यदि पशुना यदि सोमेन' इति कालस्योदाहरणम्। तत्रेष्टिपशुसोमानां निरूढसौर्यादयः स्वशब्दा एव निर्दिश्यन्ते न परशब्दाः सौत्रामणीमैत्रावरुण्यादय अङ्गभूता इष्टयः पशवो वा सहाङ्गा न निर्दिश्यन्त इत्यर्थः। अङ्गभूतत्वात्तयोर्न भवति सद्यस्कालता । तथा 'पशुबन्धेन यक्ष्यमाणः षड्ढोतारम्' इति कर्तुरुदाहरणम्। तत्र स्वशब्दा एव निरूढादयः पशुबन्धेन गृह्यन्ते न परशब्दा अग्नीषोमीयादयः। अतस्तेषु न भवति षड्ढोता ॥ २ ॥ परिग्रहण

## अपूर्वो दर्वीहोमः ॥ ३ ॥

क०—अपूर्वा दर्वीहोमा न कुतश्चिद्धर्मान् गृह्णीयुः, यावदुक्तेतिकर्तव्यताका इत्यर्थः । यथा 'दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं जुहोति' इति । एवमादीनां न कुतश्चिद्धर्मप्राप्तिः ॥ ३ ॥

ह०—अपूर्व इति प्रकृतिरभिधीयते न विद्यते पूर्वो यस्य सोऽपूर्वः । दर्वीति होमानां विशेषनामधेयम्; ब्रह्मौदनहोमे पाकयज्ञहोमेषु च दर्व्या होम इति अपूर्वो दर्वीहोमो न कुतश्चिद्धर्मान् गृह्णाति यावदुपदिष्टाङ्ग इत्यर्थः ॥ ३ ॥

## जुहोतिचोदनः स्वाहाकारप्रदानः ॥ ४ ॥

क०—के पुनर्दर्वीहोमाः किंलक्षणाः, जुहोतिशब्दश्चोदनो विधायको येषां ते होमा दर्वीहोमसंज्ञकाः । दर्वीहोमशब्दो जुहोतीति विहितहोमनामधेयम् ॥

मन्त्रेण वा, देवतापदेन वा देवता उद्दिश्याऽऽज्यादीनां द्रव्याणां प्रदीयमानानामाहवनीयादिषु प्रक्षेपो होमः । तस्येदानीं सामान्येनेतिकर्तव्यतोच्यते । प्रदीयते येन प्रदानम् । स्वाहाकारः प्रदानं यस्य स स्वाहाकारप्रदानः । यत्र मन्त्रे स्वाहाकारो न पठितस्तत्र मन्त्रस्यान्ते शुद्धदेवतापदे च स्वाहाकारो विधीयते । यथा—नारिष्ठहोमे 'दश ते तनुवो यज्ञ यज्ञियाः' इति, अग्नये स्वाहेति च ॥ ४ ॥

ह०—जुहोतिशब्देन चोदना यस्य स जुहोतिचोदनः । क्वचित्प्रत्यक्षेण जुहोतिशब्देन चोदना; यथा—'नारिष्ठाञ्जुहोति' इति । क्वचित्परोक्षेण यथा 'आघारावाघारयति' इति । स्वाहाकारेण प्रदानमस्मिन्निति स्वाहाकारप्रदानः । सर्वस्यैव मन्त्रस्यान्ते स्वाहाकारः । यस्य मन्त्रस्याऽऽदावन्ते वा पठित एव स्वाहाकारस्तत्र तेनैव प्रदानम् । यत्र पुनर्मन्त्रमध्य एव स्वाहाकारः पठितस्तत्रान्ते स्वाहाकारेण प्रदानम् । यथा 'देवा गातुविदः' इति । 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये' इति द्वयोरेव नियमात् । यत्राऽऽदावन्ते वा स्वाहाकारः पठ्यते, यथा—'स्वाहा त्वा सुभवः सूर्याय' इति । यत्र वषट्कारप्रदाने

मन्त्रो विहितः, यथा 'जातवेदो वपया' इति, तत्र मन्त्रान्ते स्वाहाकारः कर्तव्यः। यत्राप्यमन्त्रको होमस्तत्रापि स्वाहाकारेणैव प्रदानम्। यथा--'अथैने अध्वर्युः संस्रावेणाभिजुहोति' इति। यत्र तूष्णीमिति वचनं तत्र स्वाहाकारोऽपि नास्ति, यथा 'सकृदेव सर्वं तूष्णीं जुहुयात्' इति॥ ४॥

सकृद्गृहीत्वा॥ ५॥

क०—प्रदानमित्यनुवर्तते। आज्यस्थाल्या ध्रुवाया वा आनीय स्रुवेण वा जुह्वा वा जुहोति। सकृद्गृहीत्वा सकृदेव होतव्य इत्यर्थः॥ ५॥

ह०—सकृद्गृहीत्वा दर्वीहोमा होतव्या इत्यर्थः। सारस्वतौ होमौ चतुर्होता चोदाहरणम्॥ ५॥

आहुतिगणे प्रत्याहुति गृहीत्वा॥ ६॥

क०—यथा 'उपाकृत्य पञ्च जुहोति' इति। आहुतिमाहुतिं प्रत्याहुति परिगणय्य स्रुवेण तावन्त्यवदानानि गृह्णाति। जुह्वामानीयाऽऽच्छिद्याऽऽच्छिद्य होतव्यः॥ ६॥

ह०—नारिष्ठहोमादिष्वाहुतिगणेषु यावत्य आहुतयस्तावन्त्याज्यानि गृहीत्वा विगृह्य विगृह्य होतव्या इत्यर्थः॥ ६॥

न वा समवद्येत्॥ ७॥

क०—समवदानं सहावदानं पूर्वोक्तं न वा कुर्यात्कुर्यादेव वा॥ ७॥

ह०—समवदानं सर्वग्रहणमधस्तनसूत्रे विहितं न कुर्यात्, हुत्वा हुत्वा पृथगेव गृह्णीयादित्यर्थः। पूर्वसूत्रेणास्य विकल्पः॥ ७॥

समिदभावश्च॥ ८॥

अग्निहोत्रवर्जम्॥ ९॥

क०—दर्वीहोमेषु समिदभावः स्यात्समिद्वर्जं कुर्यात्। किमविशेषेण? नेत्याह—अग्निहोत्रवर्जम्। अग्निहोत्रं वर्जयित्वाऽन्यत्र। ननु तेषु दर्वीहोमेषु कुतः समित्प्राप्त्याशङ्का? उच्यते। 'यदेकां समिधमाधाय द्वे आहुती जुहोति।'अथ कस्यां समिधि द्वितीयामाहुतिं

जुहोति ' इति अग्निहोत्रे प्रत्याहुति समिदाशङ्क्यते । तेन लिङ्गेनाऽऽहुतावाहुतौ समित्स्यादिति सर्वदर्वीहोमेषु प्रत्याहुति स्वाहाकारवत्सामान्येन समिद्विधिरस्तीत्याशङ्का । कथं तर्हि सैषा निवर्तते ? । ' यद्द्वे समिधावादध्यात् । भ्रातृव्यमस्मै जनयेत् ' इति निन्दितत्वात् । अग्निहोत्र एव समिद्विधानम् । अन्यत्र दर्वीहोमेषु समिदभावः ॥ ८ ॥ ९ ॥

ह०—समिधोऽभावः समिदभावः । अग्निहोत्रप्रकरणे ' यदेकां समिधमाधाय द्वे आहुती जुहोति । अथ कस्यां समिधि द्वितीयामाहुतिं जुहोति ' इति लिङ्गदर्शनेन सर्वेषु दर्वीहोमेषु समिधः प्राप्तिमाशङ्क्य तन्निषेधार्थोऽयमारम्भः ॥ ८ ॥

अग्निहोत्रस्यापि समिधः प्रतिषेधे प्राप्ते प्रतिप्रसूयतेऽग्निहोत्रे समिद्भवत्येवेति ॥ ९ ॥

अपरेणाग्निं दक्षिणं जान्वाच्यानाच्य वाऽऽसीनो दर्वीहोमाञ्जुहोति ॥ १० ॥

ह०—अपरेणाग्निमग्नेरपरत्राऽऽसीनो दक्षिणं जान्वाच्य भूमौ निपात्य न सव्यं नोभयमनाच्यानिपात्य वा सर्वदर्वीहोमाञ्जुहोति । एष औत्सर्गिको विधिः ॥ १० ॥

ह०—अग्निमपरेण वेदेरुत्तरतः ' नान्तराऽग्नी संचरति ' इति प्रतिषेधात्कचित् ' अन्तर्वेद्यामूर्ध्वस्तिष्ठन् ' इत्यन्तर्वेदिविधानाच्च । जान्वाच्येति जानु भूमौ निपात्येत्यर्थः । अनाचनमनिपतनं संकुच्य वा । होमबहुत्वे प्रक्रम आरम्भप्रयोजनम् ॥ १० ॥

वचनादन्यथा ॥ ११ ॥

क०—करम्भपात्राणि प्रत्यङ्मुखस्तिष्ठञ्जुहोति ॥ ११ ॥

ह०—यथा सावित्राणि समिष्टयजुरिंति । सामान्यविशेषयोर्विकल्पः कैश्चिदाश्रित इति तन्निषेधार्थमारम्भः ॥ ११ ॥

अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योदगावृत्तः सर्वा आहुतीर्जुहोति ॥ १२॥

क०—अपरेणाऽऽहवनीयं दक्षिणाभिमुखो वेदिमतिक्रम्य प्रसव्यमुद्-

गावृत्त उदङ्मुखो यतो मन्येतानभिक्रम्य होष्यामीति तत्र तिष्ठन् सर्ववषट्काराहुतीर्जुहोति ॥ १२ ॥

ह०—अत्राऽऽहुतिशब्देन वषट्काराहुतयोऽदर्वीहोमा अप्यभिधीयन्ते ॥ १२ ॥

वचनादन्यथा ॥ १३ ॥

क०—यथावचनमेव जुहोति। यथा सौम्ये चरौ पितृयज्ञे च हवींषि ॥ १३ ॥

ह०—यथा 'सौम्ये चरौ दक्षिणतोऽवदायोदगतिक्रम्य' इत्येवमादयः ॥ १३ ॥

आश्रुतप्रत्याश्रुते याज्यानुवाक्ये अवदानेषु चोपस्तरणाभिघारणे चतुर्गृहीतं वषट्कारश्चादर्वीहोमानाम् ॥ १४ ॥

क०—आश्रुतम् 'आश्रावय' इति। प्रत्याश्रुतम् 'अस्तु श्रौषट्' इति। याज्यानुवाक्ये, याज्याया 'अल्पाच्तरम्' इति पूर्वनिपातत्वम्। औषधपशुसांनाय्यानामवदानेषु, उपस्तरणाभिघारणे चतुरवत्ततासंपादके। आज्यहविःषु चतुर्गृहीतमेव। वषट्कारश्चादर्वीहोमानाम्—प्रधानधर्माः ॥ १४ ॥

ह०—आश्रुतमाश्रावयतीति। आश्रुतं च प्रत्याश्रुतं चाऽऽश्रुतप्रत्याश्रुते इज्यते द्रव्यमनयेति याज्या। अनूच्यत उद्दिश्यते देवतेत्यनुवाक्या। याज्या चानुवाक्या च याज्यानुवाक्ये। आज्यव्यतिरिक्तहविषां पुरोडाशमांससांनाय्यादीनामुपस्तरणाभिघारणे विधीयेते। ते च हविःसंस्कारार्थे। आज्यं चतुर्गृहीतमपि चतुःसंख्यावच्छिन्नमपि प्रधानद्रव्यमेव। अतो दाक्षायणयज्ञ ऐन्द्रस्योपांशुयाजस्थानापन्नत्वादाज्यविकारे दध्न एव चतुर्गृहीतम्। तत उपस्तरणाभिघारणे न क्रियेते। आज्यस्थानापन्नत्वाज्जाघन्या अपि चतुरवदानं नोपस्तरणाभिघारणे इति ॥ १४ ॥

वषट्कृते वषट्कारेण वाऽऽहुतिषु संनिपातयेत् ॥ १५ ॥

क०—आहुतिषु कार्यासु वषट्कृते वषट्कारे कृते 'वौषट्' इति

शब्द उक्ते यागे द्रव्यस्य स्रुगादिभ्यः प्रच्यावनम्, वषट्कारेण वा सह ॥ १५ ॥

ह०—संनिपातः संगमः ॥ १५ ॥

## उपयामेन ग्रहेषु ॥ १६ ॥

क०—संनिपातयेदित्यनुवर्तते । वायव्यचमसादिषु सोमादौ गृह्यमाणे 'उपयामगृहीतोऽसि' इत्यनेन सहास्योच्चारणकाले वायव्यादिषु सोमादिषु ग्रहणम्। पुरस्तादुपयामादिषु मन्त्रेण यावद्देवतोच्यते तावद्धारां स्रावयेत् ॥ १६ ॥

ह०—उपयामशब्देन ग्रहेष्वैन्द्रवायवादिषु क्रियां संनिपातयेत्संयोजयेदित्यर्थः। मन्त्रान्तेनेत्यस्यायमपवादः ॥ १६ ॥

## तथा देवतेनेष्टकासु ॥ १७ ॥

क०—इष्टकोपधानमिष्टकासादनम् । तच्चास्य मन्त्रस्यान्त्यपादेन प्रकाश्यते। अतस्तया देवतेनोपधानमुपक्रम्य मन्त्रान्ते परिसमापयेत्। अन्यथा मन्त्रस्यादृष्टार्थत्वप्रसङ्गः ॥ १७ ॥

ह०—क्रियां संनिपातयेदिति शेषः ॥ १७ ॥

## पुरोडाशगणे यथाभागं व्यावर्तध्वमित्येकैकमपच्छिन्द्यात् ॥ १८ ॥

क०—आधाने 'उभयानि सह निरुप्याणि' इति पवमानहविषामाश्रयेन समानतन्त्रत्वे सति पुरोडाशगणः। प्रकृतौ निर्वापप्रभृत्या पिण्डकरणात्संसृष्टौ भागौ। तयोर्यस्यै देवतायै यो भागो यथाभागमन्त्रसामर्थ्यात्स एव भागस्तस्यै देवतायै भवति। नान्यदीयेऽन्यदीयं संक्रामति विकृतावपि पुरोडाशगणे 'मखस्य शिरोऽसि' इति पिण्डं कृत्वा, एकैकपुरोडाशभागमपच्छिन्द्यात्। यत्र बहुषु भागेषु संसृष्टेषु एकैकस्मिन्नपच्छिद्यमाने विभागमन्त्रबलादेव क्रमाद्व्यावृत्तिरितरेषां स्यात्तेभ्यश्चैतस्येति परस्परं व्यावर्तमानेषु, 'व्यावर्तध्वम्' इति मन्त्रे बहुवचनप्रयोगः कर्तव्यः। स चोहः। एकदेवत्येऽपि पुरोडाशगणेऽवदानक्रमार्थमेवापच्छिन्द्यात्। प्रकृतावपि वैमृधस्य

समानतन्त्रत्वे चोदनाबलात्केचिदूहमिच्छन्ति । अपरे तु नानाबीजेष्विव पात्रीशूर्पभेदेनापि समानतन्त्रत्वाहानिरिति नोहं कुर्वन्ति ॥ १८ ॥

ह०—पुरोडाशानां गणः पुरोडाशगणः । अपच्छेदो विभागः पुरोडाशबहुत्वे 'यथाभागं व्यावर्तध्वम्' इत्येकैकं पुरोडाशं विभजेदित्यर्थः । 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इत्युदाहरणम् । 'येन यज्ञेनेत्सेत्' इति विहितेन पुरोडाशेन चत्वारः पुरोडाशा अस्यामिष्टौ भवन्ति। तत्र 'यथाभागं व्यावर्तध्वम्' इति द्वौ पिण्डौ विभजेत् । 'यथाभागं व्यावर्तेथाम्' इति प्रकृतौ विभज्यमानमपि पिण्डद्वयमितिशङ्कया पुरोडाशगणेऽपि विभज्यमानयोर्द्वित्वादनूहमाशङ्क्य प्रकृतौ हविरभिधानत्वात्पुरोडाशगणे च हविषां बहुत्वादूहोपदेशः । यद्वा—विभज्यमानद्रव्यस्यैकत्वादेकवचनमाशङ्क्यैकस्मिन्नपि हविषि विभज्यमाने सर्वेषां परस्परेण पृथक्करणे सिद्धे बहुवचनान्त ऊह उपदिश्यते ॥ १८ ॥

उत्तमा यथाभागं व्यावर्तेथामिति तयोरेव देवतोपदेशनं करोति ॥ १९ ॥

क०—अपच्छिन्द्यादित्यनुवर्तते । यदोत्तमौ द्वौ भागौ परिशिष्टौ तदा तयोरन्योन्यव्यावृत्तिमात्रापेक्षणाद्द्विवचनेन व्यावर्तेथामिति विभागः कर्तव्यः ॥ १९ ॥

बहुषु पुरोडाशेष्वेकैकस्मिन्नपच्छिद्यमाने द्रव्यदेवताविषयया-गाद्यनुष्ठानसिद्ध्यर्थं यागचोदनाक्रमेण प्रथमायै देवतायै प्रथमो भागो द्वितीयायै देवतायै द्वितीय इत्येवं सर्वत्रावधृतेषूत्तमयोः क्रमाभावेन कस्यै क इत्यनवधारणान्निर्णायकप्रमाणान्तराभावाच्च स्वयमेवेदमस्या इति संकल्पयेत् । प्रकृतावपि पुरोडाशयोरेवमेव संकल्पः । अतः शास्त्रप्रामाण्यात्तस्या एव भवति ॥

ह०—देवताया उपदेशनं देवतोपदेशनम् । इदमग्नेः पावकस्येदमग्नेः शुचेरिति तयोरेवोत्तमयोर्देवतोपदेशनम् । पूर्वेषां क्रमादेव देव-

ताविशेषसंबन्धोऽसंदेहेन ज्ञायते । अतस्तयोरेवेत्युक्तम् । अत एव हविष्येकस्मिन्न भवति ॥ १९ ॥

चरुपुरोडाशगणे चरुपुरोडाशीयान् प्रागधिवपनाद्विभजति ॥ २० ॥

क०—चरवश्च पुरोडाशाश्च चरुपुरोडाशाः । तेषां गणः समवायः । तत्र चरुपुरोडाशीयांश्चर्वर्थान्पुरोडाशार्थांश्च प्रागाधिवपनादधिवपनार्थं कृष्णाजिनादानात्प्राक्पृथक्करोति । बहवश्चेद्यागा बहुवचनान्तेन मन्त्रेण संविभागः । यावन्तश्चरवस्तावतामयमेको भागः । यावन्तः पुरोडाशास्तावतामपरः । यथा ‘ आग्नेयमष्टाकपालं निर्वपेत् ’ ‘ वैश्वानरं द्वादशकपालम् ’ इति। अग्न्युद्वासने यथा— ‘ धात्रे पुरोडाशं द्वादशकपालम् ’ इत्यादि । चरुशब्दस्तण्डुलस्वरूपसाध्यानां प्रदर्शनार्थः । यथा ‘ इन्द्राय हरिवते धानाः ’ इति पुरोडाशशब्दश्च पेष्याणां पिष्टानाम् ‘ पौष्णं . श्रपयति ’ इति ॥ २० ॥

ह०—चरवश्च पुरोडाशाश्च चरुपुरोडाशाः । तेषां गणश्चरुपुरोडाशगणः । चरुपुरोडाशार्हाश्चरुपुरोडाशीयास्तण्डुलाः । तानधिवपनात्प्रागग्रे विभजेत् । कृष्णाजिनादानस्याधिवपनाङ्गत्वात्तदादानादपि प्रागेव विभागः । अयं च विभागकालापकर्षो न्यायप्राप्त एवोपदिश्यते चरोः पेषणाभावात् । ततश्च लाजार्थेषु व्रीहिष्ववहननात्प्रागेव विभागः ॥ २० ॥

यथादेवतमुपलक्षयति ॥ २१ ॥

क०—यथोक्ते विभागे कृते चर्वर्थः कश्चिद्भागः पुरोडाशार्थः कश्चिद्भागः । तत्र चर्वर्थो भागश्चरुदेवतानां यथास्वं पुरोडाशार्थो भागश्च पुरोडाशदेवतानां तथोपलक्षयेत् ॥ २१ ॥

ह०—यावत्यो देवता यस्य पुञ्जस्य तावतीभिर्देवताभिस्तत्पुञ्जमुपलक्षयेदित्यर्थः ॥ २१ ॥

इदंशब्दस्तन्त्रं स्यात् ॥ २२ ॥

क०—प्रकृतौ विभक्तयोर्हविषोः किं कस्या इति संदेहे ‘ इदमग्नेः ’ इति मन्त्रेणेदंशब्देन हविर्भिर्दिश्यते, अग्नेरिति षष्ठ्या देवता च ।

तस्याः स्वत्वेन हविः प्रतिपादितम् । विकृतावपि विभक्तयोश्चर्वर्थपुरोडाशार्थयोर्हविःसंघयोर्हविषां संकीर्णत्वेन भेदाग्रहणाद्देवतार्थद्रव्यप्रतिपादनपरो मन्त्रगत इदंशब्द एकैकं संघं तन्त्रेण निर्दिशति । असंकीर्णत्वाद्देवतानां प्रतिदेवतं देवतापदावृत्तिः । यथा देवताहविःषु 'इदं धातुरिदमनुमत्या राकायाः सिनीवाल्याः कुह्वाः' इति । तथाऽग्न्युद्वासने 'इदमग्नेर्वैश्वानरस्य वरुणस्याग्नेरप्सुमत इदं मित्रस्य' इति ॥ २२ ॥

इ०—बह्वीनां देवतानामपीदंशब्दः सकृदेव प्रयुज्यते । देविकाहवींष्युदाहरणम् । तत्राऽऽग्नेयेन सह पञ्चहवींषि भवन्ति । तत्रैवमुपलक्षयेत् । 'इदमग्नेर्धातुः' इति पुरोडाशार्थं पुञ्जम् । 'इदमनुमत्या राकायाः सिनीवाल्याः कुह्वाः' इति चर्वर्थम् ॥ २२ ॥

व्यतिषक्तेष्वपि ॥ २३ ॥

क०—'चरुपुरोडाश' इत्यादिसूत्रत्रयमनुवर्तते । वैश्वदेवहविर्गणे पुरोडाशा व्यतिषक्ता अन्योन्यं व्यवहिताः । तेषु व्यतिषक्तेष्वपि प्रागधिवपनाद्विभागः, यथादेवतमुपलक्षणम्, इदंशब्दस्य च तन्त्रता । यथा—'इदमग्नेः सवितुः पूष्णो मरुतां द्यावापृथिव्योरिदं सोमस्य सरस्वत्याः' इति । चर्वादिगणे च चर्वर्थानां पूर्वं देवतोपदेशनम् ॥ २३ ॥

इ०—अनन्तरसूत्रमनुवर्तते । व्यतिषक्ता नामान्तरिताः पुरोडाशाश्चरुभिश्चरवः पुरोडाशैरिति । एवं व्यतिषक्तेष्वपीदंशब्दस्तन्त्रं भवेत् । वैश्वदेवमुदाहरणम् । तत्र द्वौ पुञ्जौ कृत्वैवमुपलक्षयेत् । 'इदमग्नेः सवितुः पूष्णो मरुतां द्यावापृथिव्योः' इति पुरोडाशार्थं पुञ्जम् । 'इदं सोमस्य सरस्वत्याः' इति चर्वर्थम् ॥ २३ ॥

कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति ध्रुवोऽसीति मन्त्रं संनमयति ॥ २४ ॥

क०—इदानीं चरुधर्मा उच्यन्ते । कपालानामुपधानकाले 'धृष्टिरसि' इत्यादि प्रतिपाद्य प्रथमेन कपालमन्त्रेण चर्वर्थां स्थालीमुपदधाति । चरुसंबन्धात्तच्छ्रपणार्था स्थाली चरुरित्युच्यते ।

मन्त्रसंनाम ऊहः। पाकसाधनचरुस्थाली यद्यपि चरुशब्दे-नाभिधीयते, तथाऽपि पुंलिङ्गेन मन्त्रसंनामश्चरुपाकसाधनत्वा-च्चरुशब्द एवाऽऽसन्नतर इति तत्सामानाधिकरण्यं युक्तम् ॥२४॥

ह०—स्थालीपरत्वेन 'ध्रुवाऽसि' इत्यूहो मा भूदित्यूहोपदेशः ॥२४॥

पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति ॥ २५ ॥

क०—पिष्टानामुत्पवनकाले चरुमुपधाय तण्डुलानुत्पुनाति ॥ २५ ॥

ह०—यद्यपि प्रकृतौ पिष्टेषु प्रणीतानां सेचनं तथाऽप्यापस्तण्डुलेषु न प्रक्षेप्तव्याः। यजुरुत्पूता अपः स्थाल्यामासिच्य, तासु तण्डुलान् प्रक्षिपेरंस्तथैव प्रसिद्ध ओदनपाको लोक इति। एवं च 'आग्नावै-ष्णवं घृते चरुम्' इति सप्तमीश्रुतिरुपपद्यते। आचार्येणापि दर्शितोऽयं न्यायो मैत्राबार्हस्पत्यायां शतकृष्णलायां च 'पवित्र-वत्याज्ये कणानावपति' इति, 'तानि पवित्रवत्याज्य आव-पति' इति च ॥ २५ ॥

अधिश्रयणकालेऽधिश्रयणमन्त्रे-ण तण्डुलानावपति ॥ २६ ॥

क०—स्रुवेण प्रणीताभ्य आदाय, अन्या वा यजुषोत्पूयाभिमन्त्र्य 'समापः' इति चरुस्थाल्यामानीय लौकिकमुदकं चरुपाकपर्या-प्तमानीय तत्रोदकवत्यां चरुस्थाल्यां चर्वनेकत्वे विभागं कृत्वा 'घर्मोऽसि' इति तण्डुलानावपति। 'जनयत्यै त्वा' इति न संय-वनं पिष्टार्थत्वात्। न प्रथनं नापि श्लक्ष्णीकरणं पुरोडाशार्थत्वात्। नोल्मुकैः प्रतितपनं, नाभिज्वलनं, न सहाङ्गारभस्माध्यूहनम्, च-रोरन्तर्गतोष्मणा पाकात्, पाकार्थत्वाच्चैतेषाम्। 'अविदहन्तः' इति मीमांसकाः कुर्वन्ति। तस्याप्यर्थकृत्यस्याभावात्। न। स ह्यभि-वासनार्थः प्रैषः 'तामभिवासयन् वाचं विसृजते' इत्यध्वर्योरे-ककर्तृकत्वात्। नापि लेपनिनयनं तण्डुलानां लेपाभावात्। नाङ्गा-रापोहनम्। सूर्यज्योतिरित्यभिमन्त्रणमस्ति। यथादेवतमभिघार-णम् ॥ २६ ॥

ह०— अनूहोऽधिश्रयणमन्त्रस्य, हविरभिधानात् ॥ २६ ॥

अनुद्धृत्य चरुमासादयाति ॥ २७ ॥

क०—स्थाल्यामनुद्धृत्य स्थाल्या सह चरुमुद्वास्याऽऽसादयाति । चरोर [पि] पृथुत्वात् 'आर्द्रः प्रथस्नुः' इत्यविकृतो मन्त्रः ॥ २७ ॥

ह०—सहैव स्थाल्याऽऽसादयेदित्यर्थः। अयं चार्थो न्यायप्राप्त एवोपदिश्यते। कथम्। अधिश्रितस्य हविषो यः पूर्वभागः स एवावद्यानकाले पूर्वार्ध इत्यभिधीयते। यदि चरुरुद्ध्रियेत पूर्वार्धविपर्यासः स्यादित्यनुद्धृत्येत्युक्तम्। अधिश्रयणादि च पूर्वार्धदेशलक्षणं मन्यमान आचार्योऽभिहितवान् 'अपर्यावर्तयन्पुरोडाशमुद्वास्य' इति। अतश्च धाना अपि सकपाला उद्वास्या इति सिद्धम्। प्रथनं श्लक्ष्णीकरणमुल्मुकैस्तपनं तण्डुलेष्वङ्गाराध्यूहनमङ्गाराधिवर्तनं च चरुस्थाल्यामर्थलोपान्न क्रियन्ते, दृष्टसंस्कारत्वात्। 'अविदहन्तः श्रपयत' इति च क्रियते, आग्नीध्रप्रैषार्थत्वात्। उद्वासनमन्त्रश्च नोह्यते, पच्यमानस्य चरोः पृथुता जायत इति विहितस्य प्रथनस्याभावात् 'आर्द्रो भुवनस्य' इत्यूहमन्ये वर्णयन्ति ॥ २७ ॥

पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः ॥ २८ ॥

क०—दर्शपूर्णमासयोः सामिधेन्योऽग्निसमिन्धनार्था ऋचः 'त्रिः प्रथमामन्वाहत्रिरुत्तमाम्' इत्यभ्यस्ताभ्यां प्रथमोत्तमाभ्यां सह पञ्चदश। बहुयाजिनोऽपि पञ्चदश विकल्पेन लभ्यन्ते ॥ २८ ॥

ह०—समिन्धनार्था ऋचः सामिधेन्यस्ताः पञ्चदश दर्शपूर्णमासयोर्भवन्ति। अनारभ्य शाखान्तरे सामिधेनीनां साप्तदश्यमाम्नाम्। दर्शपूर्णमासप्रकरणे पाञ्चदश्यवचनं बहुयाजिनामपि पाञ्चदश्यप्राप्त्यर्थमेव ॥ २८ ॥

सप्तदशेष्टिपशुबन्धानां यत्र श्रूयन्ते ॥ २९ ॥

क०—यासां विकृतीनामिष्टीनां पशुबन्धानां च 'सप्तदश सामिधेनीरन्वाह' इति पुनः सप्तदश सामिधेन्यो विधीयन्ते तत्र सप्तदश, अन्यत्र पञ्चदशैव ॥ २९ ॥

ह०—इदानीं प्रकृतौ प्रतिषिद्धस्य साप्तदश्यस्यावकाशोऽभिधीयते। यास्विष्टिषु पशुबन्धेषु वा साप्तदश्यं श्रूयते तास्वेव भवति नेतरास्वित्यर्थः। कासुचिद्विकृतिषु पुनः श्रवणस्य तास्वेवोपसंहारार्थत्वात्, प्रकरणाम्नातस्यापूर्वसंबन्धार्थत्वेनानारभ्याऽऽम्नातस्य द्वारविनियोगार्थत्वेन च व्यापारभेदसंभवात्॥ २९॥

उपांशु काम्या इष्टयः क्रियन्त इति
तत्र यावत्प्रधानमुपांशु ॥ ३० ॥

क०—'आथर्वणा वै काम्यास्ता उपांशु कर्तव्याः' इति या विकृतय उपांशु क्रियन्ते, तत्र यावत्प्रधानं प्रधानदेवतावाचकं पदमुपांशु प्रयोक्तव्यम्, याज्यानुवाक्ये च॥ ३०॥

ह०— यदिदं श्रूयते 'उपांशु काम्या इष्टयः क्रियन्ते' इति तत्र काम्यास्विष्टिषु यावत्प्रधानं तावदेवोपांशु भवति। नाङ्गेषूपांशुत्वमित्यर्थः। इदं च प्रधानोपांशुत्वं न्यायसिद्धमेवोपदिश्यते। विकृतौ प्रधानस्य प्रत्यक्षोपदिष्टत्वात्, अङ्गानां चाऽऽनुमानिकत्वात्, प्राकृतविध्यन्तातिदेशेनैव वैकृतविधेर्निराकाङ्क्षत्वात् वैकृतोपदेशापर्यवसानेनैवाऽऽकाङ्क्षायाः कल्प्यत्वात्, प्रधानसंबन्धमात्रेणैव वैकृतोपदेशस्य कृतार्थत्वाद्विकृतावनुपादिश्यमानमुपदिष्टेनैव प्रधानेन प्रथमतरं संबध्यत इति न्यायप्राप्तोऽयमुपदेशः। अतश्च काम्यग्रहणं विकृतीनामुपलक्षणार्थम्। उपांशुग्रहणं च विकृत्युपदिष्टधर्माणामित्यवधार्यते। अत एव 'उपांशु दीक्षणीयायाम्' इति, 'उच्चैरग्नीषोमीये' इति 'ततस्तूष्णीमग्निहोत्रं जुहोति' इति, 'सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति' इत्येवमादीनामपि यावत्प्रधानमेव संबन्धो भवति। उपांशुत्वस्य शब्दधर्मत्वात्प्रधानसंनिकर्षाच्च देवतापदमेवोपांशु प्रयुज्यते। यस्मिन् प्रधानदेवताशब्दो मन्त्रगतः पठ्यते। यत्र द्रव्यशब्द एव पठ्यते न देवताशब्दस्तत्र तस्मिन्नेवोपांशुत्वं भवति यथा 'घृतस्य यज' इति। अग्नीषोमीये तु क्रौञ्चमिवोच्चैस्त्वम् 'उच्चैरग्नीषोमीये' इति विधीयते, 'तस्मादुपवसथे यावत्या वा वाचा कामयेत तावत्याऽनुब्रूयात्' इति बह्वृचश्रुतेः। ततः क्रौञ्चमिवोच्चैस्त्वं वैकृतप्रधानार्थमुपदिश्यते। आश्रुतादीनां तु प्रधानस्य

प्रकृतितः प्राप्तो मध्यमः स्वरः । ततोऽग्नीषोमीयवपायागेषु स्वरभेदादग्नीषोमाभ्यां मध्यमस्वरं नैयायिका मन्यन्ते ॥ ३० ॥

## दर्शपूर्णमासाविष्टीनां प्रकृतिः ॥ ३१ ॥

क०—येषां प्रधानानां श्रुत्याद्यवगतशेषत्वैः पदार्थैः कल्पित उपकारः कथमंशपूरकस्ताः प्रकृतयः । ततश्च विकृतयः कथमंशपूरकमुपकारं गृह्णीयुः । विकृत्यपेक्षं हि प्रकृतित्वम् । येषां चाविहितेतिकर्तव्यतानामन्यत्र विहितेनोपकारेण कथमंशः पूर्यते ता विकृतयः । विकृतिष्वपि यासां स्वप्रकरणसमाम्नानावगतशेषत्वैः पदार्थैः कल्पितोपकारेण सहातिदेशप्राप्तप्राकृतोपकारस्य साकाङ्क्षत्वं कल्पयित्वैकत्वमापन्न तेनैवोपकारेण कथमंशः पूर्यते ता विकृतयोऽप्यात्मीयसदृशचोदनाविहितकर्मभ्यस्तमात्मीयमुपकारं प्रयच्छन्ति । अन्यापेक्षया ताः प्रकृतयः । एवं च काश्चित्प्रकृतय एवाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमाः । काश्चिद्विकृतयः प्रकृतयश्च । यथा वैश्वदेवाग्नीषोमीयपशुप्रथमानिकाम्यद्वादशाहादयः । काश्चिद्विकृतय एव, यथा कुण्डपायिनामयनेऽग्निहोत्रसौर्यवायव्यपशूद्भिद्पौण्डरीकादयः । तत्रानुक्रमिष्यन्ते—‘ दर्शपूर्णमासाविष्टीनां प्रकृतिः ’ । दर्शपूर्णमासाविष्टीनां स्वेतिकर्तव्यतां प्रयच्छन्तावुपकुरुतः ॥ ३१ ॥

ह०—अनाम्नातेतिकर्तव्यताके प्रधानेऽन्यतो धर्मातिदेश इत्युक्तम् ‘ सहाङ्गं प्रधानम् ’ इत्यत्र । कस्या विकृतेः का प्रकृतिः, इति विशेषोपदेशार्थमुपरितनसूत्रारम्भः । श्रुतद्रव्यदेवताका अप्राणिद्रव्यकाः क्रिया इष्टय इत्यभिधीयन्ते ॥ ३१ ॥

## अग्नीषोमीयस्य च पशोः ॥ ३२ ॥

क०—अग्नीषोमीयस्यापि पशोस्तावेव धर्मान्प्रयच्छतः । अतस्तौ तस्य प्रकृतिः ॥ ३२ ॥

ह०—दर्शपूर्णमासौ प्रकृतिरिति शेषः । अग्नीषोमीयो निरूढस्य । निरूढोऽन्येषां पशूनां वायव्यादीनाम् । इदमर्थमेव श्रुतावग्नीषोमीये विहितानां धर्माणां निरूढे सूत्रकारेण निबन्धनम् । अनूब-

न्ध्याया निरूढवद्वचनम् ' तिस्रोऽनूबन्ध्याः ' इत्यस्मिन्पक्षे निरूढ एव प्रकृतिर्नैकादशिनधर्मा इतिख्यापनार्थम् ॥ ३३ ॥

स सवनीयस्य ॥ ३३ ॥

क०—सोऽग्नीषोमीयः, दार्शपूर्णमासिकान्धर्मानात्मसात्कृत्वा तैः सहाऽऽत्मीयान्सवनीयाय प्रयच्छति। अतस्तस्य प्रकृतिः ॥ ३२ ॥

इ०—सोऽग्नीषोमीयः सवनीयस्य प्रकृतिः। सवनीयस्य पशुपुरोडाशस्यैन्द्राग्नपशुपुरोडाशस्य च वार्त्रघ्नहुतानुमन्त्रणं केचिन्मन्यन्ते। उभयोरग्नीषोमीयपशुपुरोडाशप्रकृतिकत्वं मन्यमाना औपदेशिकाः पुनस्तदनुपपन्नमिति मन्यन्ते। य एव प्रत्यक्षविहिता अग्नीषोमीयधर्मास्त एवाग्नीषोमीयात्सवनीयविधिनाऽतिदिश्यन्ते। ये तु दार्शपूर्णमासिकास्ते दर्शपूर्णमासाभ्यामेव सवनीयादिषु प्रवर्तन्ते नाग्नीषोमीयात्। न हि भिक्षुको भिक्षुकान्याचितुमर्हतीति न्यायात्। अग्नीषोमीयस्य पशुपुरोडाशस्य वार्त्रघ्नहुतानुमन्त्रणं दार्शपूर्णमासिकम्, तयोरपि हुतानुमन्त्रणस्य दार्शपूर्णमासिकत्वमेव न्याय्यम्। इदमर्थमेवाग्नीषोमीयस्य च पशोरित्यत्र चशब्दग्रहणम्। तस्मादाग्नेयस्य पशुपुरोडाशस्याऽऽग्नेयवद्धुतानुमन्त्रणम्। ऐन्द्राग्नस्यैन्द्राग्नवत् ॥ ३३ ॥

सवनीय ऐकादशिनानाम् ॥ ३४ ॥

ऐकादशिनाः पशुगणानाम् ॥ ३५ ॥

क०—एवमग्नीषोमीयलब्धैः सहाऽऽत्मीयान् धर्मान् ' आग्नेयः कृष्णग्रीवः ' इत्यादिविहितानामैकादशिनानां प्रयच्छंस्तेषां सवनीयः प्रकृतिः। तथैकादशिनाः पशुगणानाम् ' आदित्यां मल्हाम् ' ' आश्विनं धूम्रललामम् ' इत्यादिविहितानां प्रयच्छन्तस्तेषां प्रकृतिः ॥ ३४ ॥ ३५ ॥

इ०—एकादशिनीति यागसंज्ञा, यस्यामेकादश यूपाः पशवो वा स्युः। एकादशिन्यां भवा ऐकादशिनाः। प्रयोजनम् ' मध्येऽग्नेराज्याहुतीः ' इत्येवमादीनां प्रयोगः ॥ ३४ ॥

समानतन्त्राणामैकादशिनधर्मा भवेयुः। द्वयोरपि समूहो गण एव, यथा ' मैत्रꣳ श्वेतमालभेत वारुणं कृष्णम् ' इति। ये पुनः

सोमान्तःपातिनः पशुधर्मा ग्रहावकाशशृतंकारादयस्ते पशुगणेषु न भवन्ति । गर्भिणीनां कालभेदेन भिन्नत्वान्नैकादशिनधर्माः ॥ ३५ ॥

वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम् ॥ ३६ ॥

क०—वैश्वदेवम् 'आग्नेयमष्टाकपालम्' इत्यादिविहितम्, दर्शपूर्णमासलब्धैः सहाऽऽत्मीयान्नवप्रयाजादिधर्मान् वरुणप्रघासादीनां प्रयच्छत्तेषां प्रकृतिः ॥ ३६ ॥

ह०—विश्वे देवा देवतात्वेन यस्मिन् यागगणेऽन्तर्भूतास्तस्य वैश्वदेवमिति नामधेयम् । तच्च चातुर्मास्यानामाद्यं पर्व । वरुणप्रघासो द्वितीयं पर्व । साकमेध इति महाहविर्गृह्यते, पञ्चसंचाराणां तत्र विधानात्, तस्मिन्निमित्तत्वाद्वैश्वदेवातिदेशस्य । इन्द्रः शुनासीरो यस्मिन्यागगणे देवतात्वेनान्तर्भूतस्तस्य शुनासीरीयमिति संज्ञा । तच्चातुर्मास्यानां चतुर्थं पर्व । वरुणप्रघासादीनां पर्वणां वैश्वदेवं प्रकृतिः । वरुणप्रघासेषु वैश्वदेववत्कल्पवचनं दक्षिणविहारार्थम् ॥ ३६ ॥

वैश्वदेविक एककपाल एककपालानाम् ॥ ३७ ॥

क०—वैश्वदेवे भवो वैश्वदेविकः । एकस्मिन् कपाले संस्कृतः पुरोडाश एककपालः । वैश्वदेविक एककपालः पुरोडाश आत्मीयान्विशेषधर्मानाज्याभिपूरणसर्वहुतत्वादीनितरेषामेककपालानां प्रयच्छंस्तेषां प्रकृतिः स्वधर्मप्रदातृत्वेन वैश्वदेविकस्यैककपालस्य निर्देशादिहैककपालसाध्ययागधर्मा नवप्रयाजादयोऽन्येषामेककपालसाध्यानां यागानां नातिदिश्यन्ते । तेषामेव मासनामभिर्होमो नैककपालधर्माः । आचारसंभेदवदनैः स्थानविशेषोपलक्षण एककपालः ॥ ३७ ॥

ह०—एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालः । तस्यैककपालस्य वैश्वदेविको द्यावापृथिव्य एककपालः प्रकृतिः । अनेनाभिपूरणादयो वैशेषिका धर्मा एवातिदिश्यन्ते न पुनः साधारणाः प्रसूमयनवप्रयाजादयो वैकृतेष्वेककपालेषु । अत एवाऽऽचार्येण वैशेषिकधर्मा आग्रयणे निबद्धाः । मासनामभिरभि-

होमोऽपि साधारण इत्यवगम्यते । अनुक्रमणादाग्रयणे । एककपालायां कपालनाशेष्टिर्न क्रियते ॥ ३७ ॥

वैश्वदेव्यामिक्षाऽऽमिक्षाणाम् ॥ ३८ ॥

कं०—वैश्वदेवे यागगणे भवा वैश्वदेवी । न देवता, तद्धितेन वैश्वदेविक्या एककपालेन सह निर्देशात् । वैश्वदेव्यामिक्षैककपालवदात्मीयान् 'द्वयोः पात्रयोरुद्धृत्य' इत्येवमादीनन्यासामामिक्षाणां प्रयच्छति । सा तासां प्रकृतिः ॥ ३८ ॥

ह०—तप्तं पयो दधिसंयोगेन घनीभूतमामिक्षेत्युच्यते । सा वैश्वदेविकेतरासामामिक्षाणां प्रकृतिः । अयमपि वैशेषिकाणामेवातिदेशः । वैश्वदेव्या यद्धुतानुमन्त्रणम् "प्राणैः सायुज्यं गमेयम्" इति । तच्च द्यावापृथिव्यैककपालस्य च [ 'उभयोर्लोकयोः' इति ] तच्च मैत्रावरुण्यादीनामामिक्षाणां कायादीनामेककपालानां च मन्यन्ते, वैशेषिकधर्मत्वाद्देवताधर्मत्वाच्च । न चैतद्वैश्वदेव्यामतिदेशप्राप्तम्, वैकृतानां हुतानुमन्त्रणानां विकृत्यर्थत्वात् । न चायं देवताधर्मः, कर्मसम्बन्धत्वान्मन्त्राणाम् ।

अन्ये तु—देवताश्रयत्वाद्वैश्वदेववद्धुतानुमन्त्रणम् । तथैव मैत्रावरुण्यामपीति स्थितम् ॥ ३८ ॥

तत्र सामान्याद्विकारो गम्येत ॥ ३९ ॥

क०—दर्शपूर्णमासादिष्टीनां प्रकृतिरिति बह्वीषु प्रकृतिषु का कस्याः प्रकृतिरित्येतद्विवेकायाऽऽह—'तत्र सामान्याद्विकारः' इति । तत्र प्रकृतिविकृतिभावे सामान्यात्सादृश्याद्विकारो विकृतिर्गम्यते । तत्र प्रकृतिषु हवींषि औषधमाज्यं दधि पयश्च । देवताश्चाग्निरग्नीषोमाविन्द्र इन्द्राग्नी च । तत्र हविःसामान्याद्देवतासामान्याच्च विकारो गम्यते । तत्र द्रव्यसादृश्यात्पुरोडाशविकाराश्चरुहिरण्यसुरादयः । आज्यविकारा मधूदकादयः । सांनाय्यविकारा आमिक्षावाजिनादयः । पशोः पयोविकारत्वे कुम्भ्यादिदर्शनं हेतुः पशावेवोक्तः । देवतासादृश्याद्विकारभावो वक्ष्यते ॥ ३९ ॥

ह०—तत्र दर्शपूर्णमासाविष्टीनां प्रकृतिः, इत्युक्तम् । दर्शपूर्णमासयोश्च यान्याग्नेयादीनि पयोन्तानि षट्प्रधानानि तेषामेकैकं

प्रधानं वैकृतस्य प्रधानस्य प्रकृतिः । तेन शब्दगतमर्थगतमपि सादृश्यमुपादिश्यते । तेन सर्वाणि समप्रधानानीत्यनेन प्रतिपाद्यते । समानस्य भावः सामान्यं सादृश्यमित्यर्थः । यद्वा–विशेषातिदेशकारणानामक्षरसामान्यादीनामुपसंग्रहणार्थमपि ॥ ३९ ॥

## एकदेवता आग्नेयविकाराः ॥ ४० ॥

क०—एका देवता यासां विकृतीनामौषधद्रव्याणां ता आग्नेयधर्मानभिघारणादीन् गृह्णीयुः । यथा 'आदित्यं चरुम्' 'सावित्रं द्वादशकपालम्' इत्यादि ॥ ४० ॥

ह०—एका देवता येषां चरुपुरोडाशादीनां त एकदेवताः । सावित्रः पुरोडाशः सौम्यश्चरुरित्युदाहरणम् ॥ ४० ॥

## द्विदेवता अग्नीषोमीयविकाराः ॥ ४१ ॥

क०—द्वे देवते यासां विकृतीनामौषधद्रव्याणां ता द्विदेवताः । तासां द्विदेवत्वसामान्यादग्नीषोमीयविकारत्वम् । यथा 'आग्नावैष्णवमेकादशकपालम्' इत्येवमादयः ॥ ४१ ॥

ह०—द्वे देवते येषां ते द्विदेवताः । आग्नावैष्णवमुदाहरणम् ॥ ४१ ॥

## बहुदेवताश्च ॥ ४२ ॥

क०—अग्नीषोमीयविकारा इति चशब्देनानुकृष्यते । बह्व्यो देवता यासां विकृतीनां ता बहुदेवताः, ता अनेकदेवतासामान्यादग्नीषोमीयविकाराः । यथा–'वैश्वदेवश्चरुः' इत्येवमादयः ॥ ४२ ॥

ह०—बहवो देवता येषां त इमे बहुदेवताः । वैश्वदेवश्चरुरुदाहरणम् ॥ ४२ ॥

## ऐन्द्राग्नविकारा वा ॥ ४३ ॥

क०—द्विदेवता बहुदेवताश्च द्विदेवतात्वानेकदेवतात्वसामान्यादैन्द्राग्नविकारा वा । यथा—'आश्विनं द्विकपालम्' 'मारुतं सप्तकपालम्' इत्येवमादयः । न तु समाविकल्पः । चत्वार्यक्षराण्यग्नीषोमौ । त्रीणीन्द्राग्नी । तत्र यासां विकृतीनां द्विबहुदेवतापदेषु चत्वार्यक्षराण्यधिकानि वा ता अग्नीषोमीयविकाराः । यासां

त्रीण्यूनानि वा ता ऐन्द्राग्नविकाराः। तथा चोदाहृतमन्यतन्त्रप्रकृति वा ॥ ४३ ॥

ह०—ऐन्द्राग्नविकारा वा द्विदेवता बहुदेवताश्च भवेयुर्न चायं तुल्यविकल्पः। व्यवस्थितविभाषा ह्येषा। चतुरक्षरप्रभृतयोऽग्नीषोमीयविकाराः। यथा–'वैश्वदेवश्चरुः' 'आग्नावैष्णवो द्वादशकपालः' इति। ततोऽर्वाक्त्र्यक्षरप्रभृतय ऐन्द्राग्नविकाराः। यथा 'मारुतः सप्तकपालः' इति। प्रातर्दोहविकाराः पशवः पशुप्रभवत्वसामान्यात् 'आज्येन पशुम्' 'यस्त आत्मा पशुषु प्रविष्टः' इति मन्त्रलिङ्गाच्च। यत्र सगुणा देवतास्तत्र गुणाक्षरैः सह देवताक्षराणि गण्यन्ते, गुणानामप्युद्देश्यत्वेनान्वयात्। अतो मरुतः सांतपना अग्नीषोमीयविकाराः। अत एव 'वेदं कृत्वाऽग्निं परिस्तीर्य' इत्युक्तम्। इतरथैन्द्राग्नविकारत्वे वेदानन्तरं वेदिः स्यात् ॥ ४३ ॥

अन्यत्र प्रकृतिदेवताभ्यो यथैन्द्रः पुरोडाशः सौम्यश्चरुरिति ॥ ४४ ॥

क०—प्रकृतावग्नीषोमीये सोमश्च देवता। ऐन्द्राग्न इन्द्रश्च। ते प्रकृतिदेवते विकृतिष्वैन्द्रपुरोडाशे सौम्ये चरौ दृश्येते। ताभ्यामन्यत्रैकदेवतात्वेन विकारभावः। तयोः सौम्योऽग्नीषोमीयविकारः, देवतैक्यात्। तथैन्द्रश्चैन्द्राग्नविकारः। सौमेन्द्रश्चरुः सोममुख्यत्वादग्नीषोमीयविकारः। इन्द्रासोमीय इन्द्रमुख्यत्वादैन्द्राग्नविकारः ॥ ४४ ॥

ह०—प्रकृतौ देवताः प्रकृतिदेवताः। ता वर्जयित्वैकदेवतानामाग्नेयविकारत्वमित्यर्थः। यथेत्युदाहरणनिर्देशः ॥ ४४ ॥

हविर्देवतासामान्ये हविर्बलीयः ॥ ४५ ॥

क० इह बलीयःशब्दश्रवणादनुक्तोऽपि विरुद्धो विकारो विकारविरोध आश्रीयते। सामान्यशब्दो हविषाऽपि संबध्यते। यत्र प्राजापत्यचर्वादौ प्रजापतिदेवताकत्वादुपांशुयाजधर्मप्राप्तिः, औषधद्रव्यकत्वादाग्नेयधर्मप्राप्तिः। अतः प्राजापत्ये हविर्देवतासामान्ये

विरुध्येते तत्र विरोधे सति हविःसामान्यादाग्नेयधर्मप्राप्तिर्बलीयसी । प्रकृतिविकारभाव आसामप्यस्त्येव ॥ ४५ ॥

इ०—हविश्च देवता च हविर्देवते । तयोः सामान्यं हविर्देवतासामान्यम् । हविःसामान्ये देवतासामान्ये च यदा प्रकृतिनियमं प्रति विरुध्यमाने हविःसामान्येन प्राकृतविध्यन्तनियम इत्यर्थः । प्राजापत्यः पुरोडाश उदाहरणम् । तत्र हविःसामान्येन पुरोडाशधर्मा भवेयुः । देवतासामान्येनोपांशुयागधर्माः । तथा सौम्यचरावाज्यभागयोर्हविःसामान्येनोपांशुयागविकारत्वम् । नाग्नीषोमीयविकारधर्माः । 'अथैकेषां सोमाय पितृमत आज्यम्' इत्यत्राप्युपांशुयाजधर्मत्वम् ॥ ४५ ॥

द्रव्यसंस्कारविरोधे द्रव्यं बलीयः ॥ ४६ ॥

क०—बलाबलप्रसङ्गादिदमाह—यत्रैतदापतति अवहननादिद्रव्यसंस्कारायोग्या व्रीहिमयास्तण्डुला विद्यन्ते सर्वसंस्कारयोग्या व्रीहिसदृशा नीवारा विद्यन्ते, तत्र यदि व्रीहिमयः पुरोडाशोऽवहननादिसंस्कारहानिः, अथ तत्संस्कारादन्यः, व्रीहिमयत्वहानिः । एवं द्रव्यसंस्कारविरोधः । तस्मिन्विरोधे द्रव्यं बलीयः । द्रव्यं ग्राह्यं संस्कारहीनमपि ॥ ४६ ॥

इ०—द्रव्यं च संस्कारश्च द्रव्यसंस्कारौ । तयोर्विरोधो द्रव्यसंस्कारविरोधः । तत्र द्रव्यं बलीयः । यथा गवामभावे गोपयस उपलब्धिः, अजाश्च पयस्विन्यः संभवन्ति । तत्र संस्कारत्यागेन गोपय एव गृह्यते न पुनः संस्कारार्थमजापयो गृह्यते । परे तु—संस्कारान्पयसि कुर्वन्ति । 'संस्काराः पयसि क्रियन्ते । गव्ये पयसि क्रियन्ते पूर्वे च मन्त्रा जप्याः' इति बोधायनश्च ॥ ४६ ॥

अर्थद्रव्यविरोधेऽर्थो बलीयान् ॥ ४७ ॥

क०—अर्थशब्दः प्रयोजनवाची । द्रव्यप्रयोजनयोर्यत्र विरोधस्तत्र प्रयोजनं बलीयो बलवत् । तथा हि खादिरो यूपद्रव्यत्वेन विहितः 'खादिरो यूपः' इति । तस्य च प्रयोजनमात्मनिबद्धस्य पशोर्निवारणम् । स चाणुर्विद्यते तन्निवारणासमर्थः । तत्समर्थश्च

कदरो विद्यते । यदि द्रव्यजिघृक्षा पशुवारणप्रयोजनानवाप्तिः । यदि तज्जिघृक्षा द्रव्यानवाप्तिः । अतोऽर्थद्रव्ययोर्विरोधः । तत्रार्थो बलीयान्, प्रयोजनं बलवत्तरम् ॥ ४७ ॥

ह०—अर्थः प्रयोजनम् । यथा पशुनियोजनार्थं समर्थः खादिरो न लभ्यते समर्थाः कदरादय एवोपादीयेरन् । न त्वन्याश्रयापेक्षाः खदिराः ॥ ४७ ॥

## न प्रकृतावूहो विद्यते ॥ ४८ ॥

क०—अध्ययनविध्यधीतानां मन्त्रवाक्यानां स्वाध्यायपाठानधृतस्वरूपाणामर्थवशाद्रूपान्तरकरणमूहः । स प्रकृतौ न विद्यते न क्रियते प्रकृतौ मन्त्रा यत्राभिधातुं समर्थास्तत्र न । यथा ' अग्नये जुष्टमभिघारयामि ' इत्याग्नेयपुरोडाशाभिघारणे, नाग्नीषोमीये । तत्रामन्त्रकः प्रयोगः, नाग्नीषोमाभ्यामित्यूहः ॥ ४८ ॥

ह०—प्रकृतौ लिङ्गसंख्याविरोधेऽपि नोह्यते । प्रकृतिग्रहणं चात्रोपदेशोपलक्षणार्थम् । उपदिष्टा मन्त्रा नोह्यन्ते, अतिदिष्टा एवोह्यन्त इत्यर्थः । ' चितः स्थ ' इत्युदाहरणम् । तत्र बहुवचनान्तेन मन्त्रेणैकं कपालमुपधीयते । ' उखे, उपदधाम्यहम् ' इत्येकोखोपधीयते । ' अवदानानि ते प्रत्यवदास्यामि ' इति द्वयोरप्यवदानयोर्नोह्यते । विकृतावप्येषामनूह एव, जात्यभिधानात् । उक्तं चाऽऽश्वलायनेन ' सर्वेषु यजुर्निगदेषु । प्रकृतौ समर्थनिगमेषु ' इति । अवदानानीति कस्माज्जमदग्न्यर्थो न भवति । संनिहितानि त्रीण्यवदानानीति । अवदानशब्दो द्वयोरप्यवदानयोस्तावदविरुद्धः । केवलं संख्यागुणो विरुध्यते । न हि गुणानुरोधेन प्रधानशब्दस्य निवृत्तिरुपपद्यते । यत्र तु प्रधानशब्द एव विरुध्यते तत्र निवर्तते मन्त्रः, यथा 'इमौ पर्णं च दर्भं च' इति शमीशाखायाम् । ' व्रीहीणां मेध सुमनस्यमानः ' इति यवमये । यत्र द्वयोः समवेतयोरेवैकवचनं तत्रासौ मन्त्रः प्रतिहविरावर्तते । यथा ' यज्ञोऽसि सर्वतः श्रितः ' इति । यथा ' इषे त्वेति बर्हिषी आदत्ते ' इति । [illegible] ' उदुस्र तिष्ठ ' इत्येवमादीनां स्त्रीपशौ द्विप्रभृतिषु चानूहेनैव प्रवृत्तिः सिद्धा ।

सारस्वते तु द्वादशकपाले सरस्वतो हुतमिति न प्रवर्तते लिङ्ग-विशिष्टस्यैवोपदिष्टत्वात् । यत्र तु प्रकृतावलिङ्गसलिङ्गौ, यथा तैत्तिरीयाणामेकस्मिन्नुपरवे 'वैष्णवान् खनामि' इति बहुवचनान्तो मन्त्रः, मैत्रावरुणीयानां 'एकवदुपरवमन्त्रान्' इत्येकवचनान्तो मन्त्रः, तत्रैकवचनान्त एव विकृतावतिदिश्यते । समर्थवचने संभवत्यसमर्थस्यानतिदेशादित्यौपदेशिकाः ॥ ४८ ॥

विकृतौ यथार्थमूहोऽर्थवादवर्जम् ॥ ४९ ॥

क०—यदीया धर्माः कार्यमुखेण यस्मिन्नतिदिश्यन्ते सा तस्य विकृतिः । प्रकृतौ मन्त्रा यं यमर्थं प्रकाश्य प्रधानमुपकृतवन्तः, यदि विकृतावपि तं तमेव प्रकाश्योपकुर्युर्न तत्र तेषामूहः । यत्र तु प्राकृतप्रकाश्याभावस्तत्स्थाने चवैकृतं प्रकाश्यान्तरमुपदिश्यते, अन्यत् प्राकृताधिकं वोपदिश्यते तद्विकृतौ यथार्थं यथा यथाऽर्थवन्तो मन्त्रास्तथा तथोहो मन्त्रसंनामः कर्तव्यः । यत्राऽऽम्नातप्रत्ययार्थस्थाने प्रत्ययार्थान्तरमुपादिश्यते तत्र प्रत्ययार्थस्योहः, यथा 'येन येनाऽऽदधाति' । क्वचित्प्रकृत्यर्थस्थाने प्रकृत्यर्थान्तरोपदेशः, यथा 'उस्रस्य हविषः' इति । क्वचिद्द्वयोः स्थानेऽन्यद्द्वयमुपदिश्यते, यथा 'विश्वेभ्यो देवेभ्यो जुष्टम्' इति । क्वचिदत्यधिकोपदेशः, यथा 'स्रुवं च स्रुचश्च' इति । क्वचित्प्राकृतार्थाभावः, तत्स्थाने कस्यचिदुपदेशो, यथा 'प्रोक्षणीरासादय । स्रुवं च स्रुचश्च' इति । यथा सौर्यचरौ पिष्टमन्त्रा एव लुप्यन्ते । अर्थवादवर्जम्—अर्थवादान् व्याख्यास्यति ॥ ४९ ॥

ह०—यथा यथा अर्थः, यथार्थम् । यथा—अन्वारम्भणीयादक्षिणायां 'ब्रह्माणौ ब्रह्माणौ स्थो ब्रह्मणे वां मा मा हिंसिष्टमहुतौ मह्यं शिवौ भवतम्' इति । ब्रध्नमन्त्रस्तु नोह्यते, द्रव्यस्यानेकत्वेऽपि विभागस्यैकत्वात् । 'इयं स्थाली' इति तु लुप्यते, स्थाल्यभावात् । "सहस्रधारावुत्सावक्षीयमाणौ तौ दध्नतुः पृथिवीमन्तारिक्षं दिवं च ताभ्यां मिथुनाभ्यामतितराणि मृत्युम्' इति । 'ब्राह्मणा इमौ गावौ' इति । 'रुद्राय गाम्' इत्यनूहेन मन्त्रप्रतिग्रहः, प्रकृत्यर्थत्वान्मन्त्रस्य । पत्नीपदस्य जात्यभिधानादनूहः । द्विपशुप्रयोगे 'पशूं हव्यम्' इत्यूह्यते । 'आज्यं दधि स्थः'

इत्यूह्यते, न पुनः 'आज्यदधिनी स्थः' इति। 'आज्येन दध्नो देहि' इति संप्रैषः, दधिसंस्कारार्थत्वात्। असंस्कारपक्षे प्रकृतिवत्। तथा 'अदिती स्थोऽच्छिद्रपते' इति संस्कारपक्षे। 'तेजसी स्थस्तेजोऽनुप्रेतम्' 'अग्नेर्जिह्वे स्थः सुभुवौ देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भवतम्'। 'आज्यं दधि स्थः सत्यायुषी स्थः सत्येन वामभिघारयामि' 'तयोर्वां भक्षीय' इत्यादि। 'अद्भिराज्यं दध्नाऽऽज्येन दध्नापः .... संविदानः'। 'इमे स्थाल्यौ घृतस्य दध्नः पूर्णे'। 'इयं स्थाली दध्नः पूर्णा' इति वा। 'इमौ स्रुवस्वधीती अभिजीहृतः'। 'दिवं च तेनानडुहाऽतितराणि मृत्युमिति'। 'ब्राह्मणा अयं वोऽनड्वान्'। 'अग्नेर्वोऽपन्नगृहस्य'। सोमेष्टिषु आगुराशीस्थाने 'एयमगन्नाशीर्दोहकामा' इत्यूहः। अस्य यज्ञस्याऽऽगुर आगूः करणस्योदृचं समाप्तिमशीयेत्याशिषामागूरः। अत एव 'सा मे सत्याशीः' इत्येतन्निवर्तते। सोमेऽग्नीषोमीये 'तिस्रः समिधो यज्ञायुरनुसंचरान्' इत्यूहः। 'शतं ते राजन्' इति यजमानं प्रत्यगाशिष्टात्। 'भुवनमासि विप्रथस्वापो यष्टृच इदं नमः'। 'युनज्मि वो ब्रह्मणा दैव्येन'। इन्धानास्त्वेति पदद्वयस्य लोपः, अपामिन्धनाभावात्। 'अद्रयः स्थ मानुषा इदं शमिड्ढवम्'। 'तृप्तयः स्थ गायत्रं छन्दः'। 'पयस्या मां चिनोतु' इति पयस्यायाम्, 'मित्रावरुणाभ्यां पयस्याम्' इत्युत्पत्तौ श्रवणात्। 'शतमिन्द्राय शरदः' इति महेन्द्रयाजिनोऽप्यविकृतः। 'समापो अद्भिरग्मत' इति पयसि निवृत्तः। 'इडाऽस्मानन्वस्तां घृतेन' इत्यत्र मांसस्य विकारो नेष्यते, 'सा यत्र यत्र न्यक्रामत्तद्घृतमपीड्यत' इति देवताख्यापनपरत्वात्। 'घृतेन यस्याः पदे पुनते देवयन्तः' इत्यर्थवादत्वात्। तथा 'इदमिन्द्रियम्' इत्यर्थवादत्वाद्वपायां नोह्यते। 'अन्वेनं माता मन्यताम्' इत्यर्थवादत्वान्नोह्यते। एवमन्यान्यपि मन्त्रपदानि स्तुत्यर्थानि निन्दार्थानि वा। तानि वर्जयित्वा विकृतौ यथार्थमूह इत्यर्थः॥ ४९॥

परवाक्यश्रवणादर्थवादः॥ ५०॥

क०—संबन्धमभिदधति पदानि वाक्यम्, यथा निर्वापमन्त्रः। तत्र

कानिचित्समवेतार्थानि, यथा 'अग्नये जुष्टं निर्वपामि' इति। कानिचिदसमवेतार्थाभिधायीनि, 'देवस्य त्वा सवितुः प्रसवे' इति। यानि समवेतार्थानि तानि निर्वापानुष्ठाने समवेतं विद्यमानमर्थमभिदधति, तत्प्रकाशनार्थं वक्तव्यत्वात्। तेषामेकं वाक्यं मन्त्रात्मकम्। यानि त्वसमवेतानि निर्वापस्थानेऽविद्यमानार्थानि तेषां परवाक्ये श्रूयत इति श्रवणम्, अतस्तानि समवेतार्थवाचकपदैकवाक्यत्वेन लक्षणया लक्षितलक्षणया वा यथाकथंचिदभिहितमर्थमभिदधतीत्यर्थवादः। एवमसमवेतार्थवाचिनामर्थवादत्वे संशयो नास्ति, यथा 'वसूनां रुद्राणामादित्यानां सदने सीद' इति प्रस्तरसादने वसुरुद्रादित्यपदानामर्थवादत्वसंभवात्। समवेतार्थानामपि येषां परार्थमेवोच्चारणं तेषामप्यर्थवादत्वम्, यथा 'अग्नेष्ट्वाऽऽस्येन प्राश्नामि' इत्यग्नेरास्यविशेषणत्वेन प्राशित्रप्राशनप्रशंसा क्रियते। यस्य तु पदार्थस्य क्वचित्प्रयोगे क्वचित्समवेतत्वं क्वचिन्न समवेतत्वम्। तस्य सर्वत्रासमवेतत्वमेव, यथा 'पत्नीं संनह्य' इति॥ ५०॥

ह०—अर्थवादानामनूहे हेतुः—परवाक्यश्रवणात्। परस्य वाक्यं परवाक्यं तच्छ्रवणात्, विध्यर्थवाक्यश्रवणादित्यर्थः। तस्मात्तस्य वाक्यस्य स्वार्थे तात्पर्याभावान्नोह्यते। 'अन्वेनं माता मन्यताम्' इति पश्वर्थवाक्ये श्रवणान्नोह्यते। एवमन्यान्यपि मन्त्रपदानि। "सूर्यं ते चक्षुः" इत्येवमादयो नोह्यन्ते संज्ञप्तपशुवियुक्तस्य चक्षुषस्तेजसोऽभिधानात्। येषां शब्दानामुभयथा प्रवृत्तिः लोके दृश्यते 'शोभनमेषां चक्षुः शोभनान्येषां चक्षूंषि' इति ते संसर्गिण इत्यपरे। यत्र सगुणा देवता चोद्यते तत्र गुणशब्दोऽप्यूहे प्रक्षेप्तव्यः, यथा 'अग्नये शुचये' इति। सगुणद्रव्यचोदनायां तु गुणशब्दस्य प्रक्षेपो नेष्यते। ततः कृष्णग्रीवशब्दो वपासंप्रैषादिषु न प्रयुज्यते। तथा दक्षिणायां गोशब्द एव प्रयुज्यते, न मिथुनप्रथमजादिपराः शब्दाः प्रक्षेप्तव्याः॥ ५०॥

## शिष्टाभावे सामान्यात्प्रतिनिधिः॥ ५१॥

क०—नित्ये नैमित्तिके काम्ये च प्रयोगे प्रक्रान्ते शिष्टाभाव उपदिष्टस्यालाभे सामान्यात्सादृश्यात्तत्सदृशतरं प्रतिनिधिमुपादाय स

प्रयोगः परिसमापनीयः । विहितालाभे तत्सदृशस्तत्कार्यकरश्च प्रतिनिधिरुपादातव्यः । चर्वर्थेऽपि पयस्यलब्धे श्वैत्यान्न शङ्खोपादानमिष्यते । सुसदृशाभावेऽप्रतिषिद्धमीषत्सदृशमपि प्रतिनिधातव्यम् । मौद्गे चरौ प्रक्रान्ते तदलाभे 'अयज्ञिया वै माषाः' इति प्रतिषेधान्न माषाः प्रतिनिधातव्याः ॥ ५१ ॥

द०—शिष्टं विहितं द्रव्यं व्रीह्यादयस्तेषामभावे द्रव्यान्तरं नीवारादि प्रतिनिधाय नित्यं नैमित्तिकं च कर्म प्रयोक्तव्यम् । कस्मात् । सामान्यात् । यस्माद्विहितद्रव्यस्य प्रतिनिधीयमानद्रव्यस्य च सादृश्यं शक्यते संपादयितुं तस्माच्छिष्टाभावे सदृशप्रतिनिध्युपादाने मुख्यद्रव्यावयवभूता एवोपात्ता भवेयुरिति प्रतिनिधिः शास्त्रार्थः । काम्यमपि कर्म प्रक्रान्तं प्रतिनिधिना समापनीयम्, प्रक्रान्तस्य कर्मणः पूर्वाधिकारापगमेऽपि प्रक्रमनिमित्ताधिकारत्वेनावश्यपरिसमाप्यत्वात् । यत्र प्रतिनिध्युपादानार्थं प्रवृत्तस्य मुख्यमेव द्रव्यं लभ्यते तत्र तन्मुख्यमेवोपादेयम् । यत्र प्रतिनिधिं समादाय केषुचित्संस्कारेषु अनुष्ठितेषु मुख्यलाभस्तत्र प्रतिनिधिनैव समाप्यम् । यत्र सदृशद्रव्यस्य प्रतिनिहितस्य नाशस्तत्र मुख्यसदृशमेवोपादद्यान्न प्रतिनिहितसदृशम् । सोमापचारे प्रतिनिधिष्वपि नष्टेषु सोमसंभवे सोम एवोपादेयः, तदसंभवे सदृश एवेति । यत्र सदृशस्य प्रतिनिहितस्य नाशस्तत्र मुख्यसद्भावे मुख्यमेवोपादद्यान्न प्रतिनिहितस्य सदृशम् । यत्र सदृशबुद्धिरुपजायते तस्यैव प्रतिनिधित्वेनोपादानम् ॥ ५१ ॥

तद्धर्मा च स्यात् ॥ ५२ ॥

क०—यदलाभे यत्स्थाने यः सदृशतरः प्रतिनिधीयते, स तद्धर्मा स्यात् । व्रीह्यभावे नीवारः प्रतिनिधीयमानो व्रीहिधर्मा स्यात् । व्रीहिपदस्यापचारो नीवारशब्दोहश्च । यत्र वाचनिकः प्रतिनिधिस्तत्र नोहो यथा पूतीकेषु । यत्र विहितव्रीह्यभावे प्रतिनिधिनीवारमुपादाय प्रयोगप्रक्रान्तौ विहितव्रीहयोऽपि लभ्यन्ते तत्र व्रीहित्यागेनैव प्रयोगः समापनीयः । यत्रोपात्तप्रतिनिधिरपि न दृष्टो नीवारा व्रीहयोऽपि लभ्यन्ते तत्र प्रतिनिधिपरित्यागेन मुख्य एवोपादेयः । सर्वत्र विहितालाभकृतवैगुण्यपरिहारार्थं प्रायश्चित्तमावश्यकम् ॥ ५२ ॥

ह०—यद्धर्ममुख्यद्रव्यं प्रतिनिहितमपि तद्धर्मकमित्यर्थः । अतः प्रोक्षणादयः प्रतिनिहितेषु नीवारेषु क्रियन्ते । 'व्रीहीणां मेध' इति चाविकारेण प्रयुज्यते । सांनाय्यप्रतिनिधित्वेनैन्द्रो माहेन्द्रो वा पुरोडाशो नियम्यते तदाऽपि मुख्यधर्मत्वेन स्रुवेणै-वावदानं पुरोडाशस्य न हस्तेन, प्रतिनिधेर्मुख्यधर्मप्राप्तेः ॥ ५२ ॥

मात्रापचारे तच्छेषेण समाप्नुयात् ॥ ५३ ॥

क०—द्रव्यस्यैकदेशनाशे यावदुक्तपरिमाणाद्यभावेऽपि अवशिष्टेनैव समाप्नुयात् । यथा कूर्मप्रतिकृतिपुरोडाशे 'चतुरो मुष्टीन्' इत्या-दिपरिमाणन्यूनतायामपि मुख्येनैव समापयेत् ॥ ५३ ॥

ह०—मात्रा परिमाणम् । तदपचारः परिमाणाभावः । स्कन्नावशि-ष्टेषु व्रीहिषु अश्वशफमात्रस्य पर्याप्तेषु स्कन्नशेषेणैव समाप्नुया-दित्यर्थः । यदा तु द्विरवदानमात्रस्य पर्याप्तास्तदा लौकिका व्रीहयः स्कन्नशिष्टेषु प्रक्षेप्तव्याः । व्रीह्युपादानकाले यस्याश्वश-फमात्रा व्रीहयो न लभ्यन्ते तस्यापि मात्रापचारेणैव परिसमाप्तिः। यस्य तु नीवारा अश्वशफमात्रपर्याप्ताः सन्ति व्रीहयो द्व्यवदा-नमात्रपर्याप्तास्तत्र व्रीहिभिर्नीवारान् संसृज्य निर्वापः कर्तव्यः, यावत्संभवं मुख्यपरित्यागे कारणाभावान्मुख्यावयवलाभकृत-त्वाच्च प्रतिनिधेः ॥ ५३ ॥

---

इति तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थः खण्डः ।

स्वामिनोऽग्नेर्देवतायाः शब्दात्कर्मणः
प्रतिषेधाच्च प्रतिनिधिर्निवृत्तः ॥ १ ॥

क०—स्वामिनो यजमानस्य पत्न्याश्च, अग्नेराहवनीयादेर्देवतायाः, कर्मणः क्रियायाः, एतेषां प्रतिषेधादेव प्रतिनिधिर्नास्ति । देव-तायां शब्दात्मकत्वमपरो हेतुः ॥ १ ॥

ह०—पूर्वोक्तस्य प्रतिनिधेरपवादः प्रतिपाद्यते । स्वामिनो यजमानस्य पत्न्या वा । तत्राङ्गत्वाभावाद्यजमानस्य पत्नीमरणे पत्न्यन्तरोपादानेन वा, अपत्नीकत्वेन वा कर्मणः परिसमाप्तिर्नाङ्गी क्रियते । का वार्ता द्विपत्नीके प्रयोगेऽन्यतरमरणे तत्र परिसमाप्तिमेव न्यायविदो मन्यन्ते, एकयाऽपि पत्न्या सहाधिकारसिद्धेः, पत्नीकार्यनिर्वृत्तेश्च । अग्नेराहवनीयादेः । तत्राऽऽहवनीयादेरभावे नाग्न्यन्तरं प्रतिनिधातव्यम् । नाप्युदके वा भूमौ वा होमः । अननुष्ठानमेव मन्यन्ते । एवं देवताऽपि न प्रतिनिधेया । शब्दात्, मन्त्रात् । न मन्त्रे च विस्मृते मन्त्रान्तरं प्रतिनिधेयम् । अमन्त्रकमेव कर्मानुष्ठीयते । कर्मणः प्रयाजादेः । न प्रयाजादेरसंभवे प्रोक्षणानुष्ठानं प्रतिनिधिः । प्रतिषेधात् 'अयज्ञिया वै माषा वरकाः कोद्रवाश्च' इति । न माषादीनां यज्ञे विनियुक्तानां प्रतिषेधोऽयं, माषादीनां विनियोगाभावात् । न चाविहितद्रव्यतया यज्ञेषु प्राप्तस्य माषादेर्निषेधः संभवति, सर्वत्र यागहोमयोः सामान्यतो विशेषतो वाऽऽज्यादेर्विनियुक्तत्वात् । संभवति माषादेः सदृशस्य विनियुक्तस्यासंभवे माषादेः प्रतिनिधित्वेन प्राप्तिः । अतः प्रतिनिधिविषय एवायम् 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इति एवावधारितम् । अतो यदाऽपि वरककोद्रवयोरपचरितद्रव्यसादृश्यं तदाऽपि प्रतिषेधात्ताभ्यां प्रतिनिधिर्निवर्तते । अन्यदेव द्रव्यमीषत्सदृशमप्युपादेयमित्यर्थः । एवं वाऽत्र—प्रतिषिध्यत इति प्रतिषेध इति कर्मसाधननिर्देशोऽयं; 'खण्डां कृष्णां लक्षणां च नोपदध्यात्' इति प्रतिषिद्धत्वात्खण्डादेः प्रतिनिधिर्निवर्तते । मुख्येष्टकाभावे खण्डादीनां संभवे ताभिरेव चेतव्यं, नाश्मना प्रतिनिहितेन चेतव्यमित्यर्थः । अशृङ्गस्य पशोश्छिन्नकर्णस्यान्धस्य भग्नदन्तस्य वाऽऽपन्नदन्तस्य वा कूटादियुक्तस्य संभवे मुख्यपशोरसंभवे कृत्वा प्रायश्चित्तं कूटादीनामेवाऽऽलम्भः । न जात्यन्तरस्य प्रतिनिहितस्येति ॥ १ ॥

**त्रिभिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात्प्रतिषेधादर्थलोपाच्च ॥ २ ॥**

क०—त्रिभिर्हेतुभिः प्रकृतिपदार्थो निवर्तते । प्रत्याम्नानं कुश-

स्थाने शरमयं बर्हिः। प्रतिषेधो 'नाऽऽर्षेयं वृणीते' इत्यादौ। अर्थलोपात्–चरौ पेषणादीनि। चकारादन्यदपि त्रयं निवृत्तिकारणम्, नियमः परिसंख्या भूतोपदेश इति। यथा—व्रीहियवयोर्विकल्पेन प्राप्तयोः, 'व्रीहिमयः पशुपुरोडाशो भवति' इति नियमाद्यवत्यागः। गृहमेधीये 'आज्यभागौ यजति' इति परिसंख्यानात् प्राप्तप्रयाजादेर्निवृत्तिः 'खलेवाली यूपः' इति च्छिन्ननिखातखलेवालीविधानाच्छेदनादेर्निवृत्तिः॥ २॥

ह०—प्रत्याम्नानं प्रकृतिप्राप्तस्यार्थस्य स्थानेऽर्थान्तरोपदेशः। प्रतिषेधः 'नाऽऽर्षेयं वृणीते न होतारम्' इति। अर्थः प्रयोजनं तदसंभवात्। 'शरमयं बर्हिः' इतिप्रत्याम्नानस्योदाहरणम्। अर्थलोपाच्चरौ पेषणादिनिवृत्तिः। अपरेऽन्यत्त्रयं निवृत्तिकारणमाहुः। नियमः परिसंख्यानं भूतोपदेश इति। यथा—विकल्पेन व्रीहियवयोः 'व्रीहिमयः पुरोडाशः' इति पुनर्नियमविधानाद्यवनिवृत्तिः। गृहमेधीय आज्यभागादिषु प्राप्तेषु पुनराज्यभागाविधानं परिसंख्यायते प्रयाजादिनिवृत्त्यर्थम्। 'खलेवाली यूपः' इति यूपकार्ये खलेवालीविधानाच्छेदनादिनिवृत्तिः। त्रिभिरिति निवृत्तिकारणनियमादेव तेषामपि तत्रैवान्तर्भावः। पशुपुरोडाशे प्रत्याम्नानादेव निवृत्तिः। गृहमेधीये पुनर्विहितपदार्थकार्येणैव कथंचिदङ्गपूर्तेरर्थलोपादेवेतरनिवृत्तिः। 'छिन्नं तष्टमुच्छ्रितं निखातं च काष्ठं खलेवाली' इति तत्रार्थलोपादेव च्छेदनादीनां निवृत्तिः॥ २॥

## अग्निष्टोम एकाहानां प्रकृतिः॥ ३॥

क०—एकोनाह्ना येषु सुत्यापरिसमाप्तिस्त एकाहाः। तेषामग्निष्टोमसंस्थो ज्योतिष्टोमः प्रकृतिः। प्रकृतेर्धर्मान् कार्यमुखेण विकृतिर्गृह्णाति॥ ३॥

ह०—एकेनाह्ना सुत्यापरिसमाप्तिर्येषां त एकाहाः। तेषामग्निष्टोमसंस्था ज्योतिष्टोमः प्रकृतिः। स एवोक्थ्यादिसंस्थानां विकृतीनां प्रकृतिः। प्रकृतिधर्मान्कार्यमुखेणैव विकृतिर्गृह्णाति॥ ३॥

## द्वादशाहोऽहर्गणानाम् ॥ ४ ॥

क०—इहाहःशब्दो रात्रिशब्दश्च सोमयागवचनः । द्वादशाहानि यागा यस्य स द्वादशाहः । अह्नां यागानां गणोऽहर्गणः । गणः संघः । ते ह्युभयात्मका अहीनात्मकाः सत्रात्मकाश्च । द्विरात्रप्रभृतय एकादशरात्रान्ता अहीनात्मकाः । त्रयोदशरात्रप्रभृत्याशतरात्रात्सत्रात्मकाः । तेषां द्वादशाहः प्रकृतिः ॥ ४ ॥

ह०—अहःशब्दो रात्रिशब्दश्च सोमयागवचनः । द्वादशाहानि यागा यस्य स द्वादशाहः । स उभयात्मकोऽहीनात्मकः सत्रात्मकश्च । अह्नां यागादीनां गणोऽहर्गणः । तेऽप्युभयात्मका अहीनात्मकाः सत्रात्मकाश्च । द्विरात्रप्रभृत्येकादशरात्रान्ता अहीनात्मकाः । त्रयोदशरात्रप्रभृत्याशतरात्राद्गवामयनं च, एतत्प्रभृत्या विश्वसृजामयनाच्च सत्रात्मकाः । तत्राहीनात्मकोऽहीनात्मकानां प्रकृतिः । सत्रात्मकानां सत्रात्मकः प्रकृतिः ॥ ४ ॥

## गवामयनं सांवत्सरिकाणाम् ॥ ५ ॥

क०—'संवत्सराय दीक्षिष्यमाणाः' इति विहितेतिकर्तव्यताकं गवामयनं सर्वेषामयनानां प्रकृतिः ॥ ५ ॥

ह०—'संवत्सराय दीक्षिष्यमाणाः' इति विहितेतिकर्तव्यताकं गवामयनम् । तत् सांवत्सरिकाणां संवत्सर एको बहवो वा परिमाणं येषां तेषां सत्राणां प्रकृतिरिति ॥ ५ ॥

## निकायिनां तु प्रथमः ॥ ६ ॥

क०—निकायः सद्यो येषां ते निकायिनः सद्यस्कालादयः । तेषां प्रथमोऽग्निष्टोमः प्रकृतिः ॥ ६ ॥

ह०—निकायिनस्तुल्यनामधेया अभिन्नफलाः क्रतवः । यथा 'चत्वारः साद्यस्क्राश्चत्वारः साहस्राः' इति । तेषां प्रथम उत्तरेषां प्रकृतिः ॥ ६ ॥

## अग्निष्टोम उत्तरवेदिः ॥ ७ ॥

क०—स तु चतुःसंस्थो ज्योतिष्टोमोऽग्निष्टोमः । उत्तरेषु क्रतुष्वग्निविधानात्तत्र प्रकरणाम्नातोत्तरवेदिः । तत्राऽऽहवनीयः प्रणीयते ।

उत्तरेषु क्रतुषु अग्निष्टोमोत्तरकालकार्येषु साद्यस्क्रादिभ्योऽन्यत्राग्निष्टुज्ज्योतिष्टुदादिविकृतिष्वनारभ्याधीतोऽग्निश्चीयते । चितात्राहवनीयप्रणयनम् । तेषूत्तरवेदिरपि लभ्यते । 'साग्निचित्यो भवति पक्षिभ्यां साग्निचित्याभ्याम्' इति क्वचिन्नियमविधानादन्यत्रानियम इति केचिदाहुः । 'उत्तरवेद्यां ह्यग्निश्चीयते' इत्यनारभ्याधीतोऽग्निरुत्तरवेदिद्वारेण प्रकृतिं गच्छति, यथा स्रुवद्वारेण खदिरः । तत्राग्निचयनेन प्रकृताववरुद्धायां बह्वृचवचनात् 'अग्निर्वै देवानां होता तस्यैष स्वो लोको य उत्तरनाभिः' इति प्रणेयोऽग्निरुत्तरनाभौ प्रतिष्ठाप्यः। एवमुत्तरवेद्यन्तः प्रत्यायितमग्निचयनं विकृत्यर्थं भविष्यति साम्नदश्यवत् । तदाह—'अग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निः' इति । तत्रैवाग्निष्टोमसंस्थे ज्योतिष्टोमे वचनादग्निचयनं भविष्यति । 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण' इति । अतः प्रकृतावेवाग्निचयनोत्तरवेद्योर्विकल्पितयोः प्रकृतिवद्विकृतिष्वपि विकल्पः । अत एव सर्वत्र विकृतिषु विकल्पप्रसक्तौ 'साग्निचित्यो भवति पक्षिभ्यां साग्निचित्याभ्याम्' इति नियमविधिरुपपद्यते व्रीहिमयपशुपुरोडाशवत् । द्विरात्रादिष्वग्निचयनविधानमौपदेशिकत्वेन गुणकामादिसिद्ध्यर्थमिति ॥ ७ ॥

उत्तरेषु क्रतुष्वग्निरन्यत्र साद्यस्क्रेभ्यो वाजपेयात्षोडशिनः सारस्वताच्च सत्रात् ॥ ८ ॥

क०—स चाग्निः षोडशिनि तद्विकारे च वाजपेयेऽसंकीर्तनान्न भवति । साद्यस्क्रेषु सद्यःपरिसमाप्तेरसंभवाच्चयनाभावः । सारस्वते सत्रेऽनवस्थानान्नाग्निश्चीयते । अत एतेभ्योऽन्यत्रोत्तरेषु क्रतुष्वग्निः ॥ ८ ॥

क्रत्वादौ क्रतुकामं कामयेत ॥ ९ ॥

क०—काम्यत इति कामः फलम् । क्रतुफलस्य कामो वर्तमानः क्रतुं प्रयुङ्क्ते, न भूतो न भविष्यन् । न च कामयेतेति विधिः

स्वतः सिद्धत्वात्। यतः क्रत्वादौ वर्तमानः क्रतुं प्रयुङ्क्तेऽतस्त-त्संकल्पः क्रत्वादौ कर्तव्यः॥ ९॥

यज्ञाङ्गादौ यज्ञाङ्गकामम्॥ १०॥

क०—कामयेतेत्यनुवर्तते। क्रतुकामवद्यज्ञाङ्गकामोऽपि भवति। यज्ञाङ्गादौ वर्तमानो यज्ञाङ्गं प्रयुङ्क्ते। अतो यज्ञाङ्गफले संकल्पस्तदादौ कर्तव्यः॥ १०॥

अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि॥ ११॥

क०—यत्राल्पीयांसो मन्त्राः कर्माणि भूयांसि; यथा काम्यानामिष्टीनाम् 'उभा वामिन्द्राग्नी' 'इन्द्राग्नी नवतिं पुरः' इति याज्यानुवाक्यायुगलमाम्नातम्। 'ऐन्द्राग्नमेकादशकपालम्' इति षडाम्नातानि। तद्युगलद्वयं समशः प्रविभज्य कर्माणि च पूर्वेण युगलेन पूर्वाणि त्रीणि कारयेत्, उत्तरैरुत्तराणि। एवम् 'विहव्या उपदधाति' इति विहिता दश मन्त्राः। धिष्ण्येष्टकोपधानकर्माणि बहूनि। तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि॥ ११॥

अल्पीयांसि कर्माणि भूयांसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्यादवशिष्टा विकल्पार्था यथा यूपद्रव्याणीति॥ १२॥

क०—अग्नौ चतुर्दशौषधिवपनकर्माणि। 'या जाता ओषधयः' इति वपनार्था मन्त्रा बहवः। तत्राऽऽदितो मध्यतोऽन्ततो वाऽव्यवहितैश्चतुर्दशभिर्मन्त्रैः प्रतिमन्त्रं प्रथमेन मन्त्रेण प्रथमवपनं द्वितीयेन द्वितीयमिति। एवं चतुर्दश वपनानि कुर्यात्। अवशिष्टा विकल्पार्थाः प्रयोगान्तरेऽर्थवन्तः, यथा यूपद्रव्याणि पलाशाद्याम्नातानि विकल्प्यन्ते पशुबन्धे। इतिकरणं दृष्टान्तान्तरमदर्शनार्थम्—व्रीहियववच्च विकल्प इति॥ १२॥

अन्ताल्लोपो विवृद्धिर्वा ॥ १३ ॥

क०—यत्रातिदेशप्राप्तानां मन्त्राणां बहुत्वं कर्मणामल्पत्वं तत्राऽऽदित आरभ्य प्रवृत्तेरन्तादारभ्य लोपः। आश्विने द्विकपाल आद्याभ्यां मन्त्राभ्यां कपालोपधानम् । उत्तरेषां लोपः । तैः कर्म न क्रियते । ऋतव्यमन्त्रैर्होत्रियधिष्ण्योपधाने कर्तव्ये, इष्टकानां द्वादशपक्षे, तेषां मन्त्राणां संविभागे च पञ्चमदशमयोर्द्विरावृत्तिः, षोडशपक्षे चतुरावृत्तिः कर्तव्या ॥ १३ ॥

प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात् ॥ १४ ॥

क०—प्रकृतेः प्रकृत्यङ्गस्य क्लृप्तक्रमस्य प्रधानप्रयोगवाक्यविहितत्वात् प्राकृतं यथाक्रमं पूर्वं प्रयोक्तव्यम् । अपूर्वमक्लृप्तक्रमं तुल्यजातीयानामन्ते स्यात्, यथा ' सोऽत्र जुहोति ' इति सर्वहोमानामन्ते प्राक्स्विष्टकृतो ध्रुवाज्यलाभाय ॥ १४ ॥

कुम्भीशूलवपाश्रपणीप्रभुत्वात्तन्त्रं स्यात् ॥ १५ ॥

क०—एकजातीयपशुगणे कुम्भीशूलवपाश्रपणीनां तन्त्रतैकता स्यात् । प्रभुत्वात् समर्थत्वात् । कुम्भी श्रोण्यादिपाकार्था बृहती स्थाली । शूलो हृदयपाकार्था यष्टिः । वपाश्रपणी वपाश्रपणार्थे यष्टी द्वे तेषां प्रभुत्वात्तन्त्रता । प्रभुत्वादिति हेतुनिर्देशाद्यावत्संभवं तन्त्रत्वम् । केचिद्याज्याया अर्धर्च इति च प्रतिपशु बर्हींषि वपाश्रपण्य इति वचनादेकदैवतेषु तन्त्रत्वमिच्छन्ति ॥ १५ ॥

जातिभेदे तु भिद्येत पक्तिवैषम्यात् ॥ १६ ॥

क०—जातिभेदे पशुजातिभेदे सौत्रामण्यादौ कुम्भ्यादि भिद्यते, प्रतिपशु कुम्भ्यादिभेदः । पक्तिवैषम्यात्—पक्तिः पाकस्तस्य वैषम्यमसमानत्वम् । पक्तिवैषम्यादिति हेतुनिर्देशादेकस्यामपि जातौ बाल्ययौवनस्थाविरवशेन यत्र पक्तिवैषम्यं तत्र कुम्भ्यादिभेदः ॥ १६ ॥

ह०—' अग्निभ्यः कामाय ' इति पञ्च पशव उदाहरणम् । तत्र जातीनां पक्तिवैषम्यात्कुम्भ्यादयोऽपि भिद्यन्ते ॥ १६ ॥

स्विष्टकृद्विकारे वनस्पतौ याज्यायां देवता-
निगमाः स्युः प्रकृत्युपबन्धात् ॥ १७ ॥

क०—स्विष्टकृद्वनस्पतौ वनस्पतियागे या याज्या तस्यां देवतानिगमा देवतासंकीर्तनानि स्युर्यद्यप्यनाम्नाता देवतानिगमाः। कुतः प्रकृत्युपबन्धात्, प्रकृतौ स्विष्टकृति उपबन्धादाम्नानात्। दर्शपूर्णमासयोः स्विष्टकृद्याग इष्टदेवतासंकीर्तनैः कश्चिदुपकारः कल्पितः। स पशोः स्विष्टकृद्विकारे वनस्पतियागेऽपीष्टदेवतानिगमैः कार्यः। प्रकृत्युपबन्धादिति हेतुनिर्देशादन्योऽपि स्विष्टकृद्धर्मो द्विरभिघारणादिः कर्तव्यः ॥ १७ ॥

अन्वारम्भणीया विकृतौ न स्यात्प्रकृति-
कालमध्यत्वात्कृता हि तदर्थेन ॥ १८ ॥

क०—दर्शपूर्णमासावारभमाणस्य पुरुषस्यान्वारम्भणीया कर्तव्यत्वेन चोदिता। यदि सा दर्शपूर्णमासावारभमाणेन कर्तव्या स्यात् 'दर्शपूर्णमासावालभमानः' इति श्रुतिर्बृत्ता; तस्याः फलान्तरं कल्प्यम्। न चासावन्यनिमित्ते ततः फलान्तरकामिणो वाऽपि विहिता। यदि न दर्शपूर्णमासार्था ततो 'दर्शपूर्णमासावालभमानः' इति पुरुषलक्षणा स्यात्, अश्रुतं फलं च कल्पनीयम्। यथा पाकमारभमाणः काष्ठानि संगृह्णीयात्, इत्युक्ते, काष्ठसंग्रहः पाकार्थ इति गम्यते, यदि न पाकार्थः काष्ठसंग्रहस्तस्य प्रयोजनान्तरं कल्पनीयम्। आरभमाण इति पुरुषलक्षणा स्यात्। अतोऽन्वारम्भणीया दर्शपूर्णमासार्था। सैवं दर्शपूर्णमासार्था तद्विकृतेः सौर्यादेरपि चोदकेन प्राप्ता शेषभूता च प्रधानानुष्ठाने चानुष्ठेया। साऽन्वारम्भणीया विकृतौ न स्यात, विकृत्यनुष्ठाने नानुष्ठेया। कुतः प्रकृतिकालमध्यत्वात्। प्रकृतेः कालः प्रकृतिकालः। तस्य काल्ो विकृतेरपि कालः प्रकृतिकालमध्यत्वाद्विकृतेः। प्रकृतिकालमध्यवर्तनं वा विकृतेः कथम् 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति जीवनावच्छिन्नः कालो दर्शपूर्णमासयोः कालत्वेन विहितः। तत्रैव विकृतीनामुपदेशः। न ह्यजीवन्किंचित्क-

रोति न हि दर्शपूर्णमासौ परिसमाप्य विकृतीनां कालोऽस्तीति; अजीवतः कारणाभावात्, यावज्जीवं दर्शपूर्णमासाभ्यामिति जीवनपरिच्छिन्नकालेन दर्शपूर्णमासौ परिसमाप्येते इति विधेर्नान्तरा परिसमाप्येते । अतः प्रकृतिभूतदर्शपूर्णमासयोः कालमध्यवर्तित्वं विकृतीनाम् । ननु अकृताऽन्वारम्भणीया कार्यप्रदर्शनेन कथं विकृतीनामुपकरोतीत्यत्राऽऽह— कृता हि तदर्थेन । प्रकृतौ तदर्थेन प्रकृत्यर्थेन कृता ह्यन्वारम्भणीया सा तत्कालमध्यवर्तिनीनां विकृतीनामपि प्रसङ्गादुपकरोतीति न विकृत्यर्थं पृथगनुष्ठेया । सवनीयपशोः कृताः प्रयाजादयस्तत्कालवर्तिनां सवनीयानां प्रसङ्गादुपकुर्वन्ति यथा जामदग्न्ये चतूरात्रे, यथा च राजमार्गे रात्रौ कृतः प्रदीपस्तत्काले भुञ्जानानामप्युपकरोति । एवं प्रकृत्यर्थे कृताऽन्वारम्भणीया तत्कालमध्यवर्तिनीनां विकृतीनामुपकरोति । तस्माद् विकृतौ न स्यान्नानुष्ठेया ॥ १८ ॥

स्याद्वा कालस्याशेषभूतत्वात् ॥ १९ ॥

क०—वाशब्दोऽवधारणे । स्यादेवान्वारम्भणीया, विकृतौ कर्तव्यैव । कुतः कालस्याशेषभूतत्वात् । प्रकृतयोर्दर्शपूर्णमासयोरशेषभूतः कालो जीवनपरिच्छिन्नः, तादृशकालस्य विधायकवाक्याभावात् । ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इति स्वर्गकामस्य दर्शपूर्णमासौ विधाय ‘ यावज्जीवं दर्शपूर्णमासाभ्याम् ’ इति जीवनश्रुत्या सिद्धजीवनं निमित्तत्वेनोपादाय तत्त्वतः स्वर्गकामादन्यस्य दर्शपूर्णमासौ विधीयेते इति जीवताऽवश्यं दर्शपूर्णमासौ कर्तव्यौ स्वकालेऽकुर्वतः प्रत्यवाय इति यावज्जीववाक्यार्थः । यदि यावज्जीववाक्येन जीवनपरिच्छिन्नः कालः स्वर्गकामस्य दर्शपूर्णमासयोर्विधीयेत, ततो जीवनशब्देन तत्परिच्छिन्नः कालोऽत्र कथ्यते । जीवनशब्दस्य श्रुत्या जीवनं निमित्तत्वेन ब्रुवतो न काललक्षणा न्याय्या । न वाऽन्यज्जीवनपरिच्छिन्नका-

लविधायकवाक्यमस्ति। कालश्च विहितः 'अमावास्यायाममावास्यया यजेत। पौर्णमास्यां पौर्णमास्या' इति। अमावास्यायागोऽमावास्यायां पञ्चदश्यामुपक्रम्य प्रतिपदि समाप्यः पौर्णमासीयागश्च पौर्णमास्यां पञ्चदश्यामुपक्रम्य प्रतिपदि समाप्यः। अतो न विकृतेः प्रकृतिकालमध्यत्वम्। अतो विकृत्यर्थमन्वारम्भणीया स्यादेव, अनुष्ठेयैव॥ १९॥

आरम्भविभागाच्च॥ २०॥

क०—चकारेण विकृतौ स्यादेवान्वारम्भणीयेत्येतदपकृष्यते। दर्शपूर्णमासावारभमाणस्यान्वारम्भणीया विहिता। आरम्भश्च तयोर्दर्शपूर्णमासाभ्यां यक्ष्य इति निश्चयपुरःसरः संकल्पः। स चान्वाधानक्रमः। स चाऽऽरम्भो 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इतिशास्त्रान्तरविहितयावज्जीवदर्शपूर्णमासप्रयोगाणामाधानानन्तरमादितः सकृदेव भवति, आरब्धदर्शपूर्णमासत्वात्। न चैष विकृतीनामारम्भः। तासां कर्मभेदान्निमित्तभेदाच्च। स्वर्गकामस्य तन्निमित्त आरम्भः प्रकृत्यारम्भाद्विभक्तः। कामनिमित्तभेदादेव विकृतीनां परस्परं चान्वारम्भविभागः। तस्मादारम्भविभागाच्च विकृतावन्वारम्भणीयाऽनुष्ठेया।

अत्र केचिदाहुः—विकृतिष्वन्वारम्भणीया न कर्तव्या। सा हि सर्वदर्शपूर्णमासार्था तत्प्रयोगाद्बहिरेवाऽऽदितः प्रयुज्यते सा ह्यपूर्वात्मना दर्शपूर्णमासयोरुपकरोति। जरामरणादि यावत्तिष्ठति। न प्रयोगमध्ये कृतप्रयाजाद्यपूर्ववत्प्रतिप्रयोगं परिसमाप्यते। तदन्वारम्भणीयापूर्वमनुपसंहृतं प्रकृतेरिव विकृतीनामप्युपकरोति। कथमन्यार्थं कृतमन्यस्योपकरोतीति चेत्, अत एव प्रसङ्गः—यथा सवनीयपशुना सवनीयानां न कश्चित्संबन्धस्तथाऽपि पश्वर्थं कृतं प्रयाजाद्यपूर्वमनुपसंहृतं सवनीयानां पशुपुरोडाशानां प्रसङ्गादुपकरोति। एवं प्रकृत्यर्थं कृताऽन्वारम्भणीया विकृतीनामप्युपकरोतीति।

अपर आह—वैमृधान्वारम्भणीये दर्शपूर्णमासविकारौ तत्स्थं क्लृप्तमुपकारमाकाङ्क्षेते। तौ च दर्शपूर्णमासौ तयोरुपकाराकाङ्क्षायां तत्साध्यरहितमेवोपकारं कल्पयित्वा तयोरन्यासां च विकृतीनां प्रयच्छतः। ततो विकृतिष्वन्वारम्भणीया न कर्तव्येति।

एवं युक्तायुक्तत्वेन सूत्रत्रयेण हेतून्वदतः सूत्रकारस्याभिमतानभिमतत्वेन च विचारणीयम् ॥ २० ॥

अर्थायार्थायाग्निं प्रणयत्यपवृत्ते कर्मणि लौकिकः संपद्यते यथा समारूढे ॥ २१ ॥

क०—अर्थशब्दः प्रयोजनवाची। प्रयोजनं चाग्निसाध्यविहितकर्मानुष्ठानम्। तादर्थ्ये चतुर्थी। वीप्सा च विहितकर्मानुष्ठानव्याप्त्यर्था। तस्य तस्य कर्मणोऽनुष्ठानार्थं गार्हपत्यादिभ्य आहवनीयाग्निं प्रणयेत्। न हि सकृत्प्रणीत एव सर्वकर्माणि साधयति। यत्र यां यदर्थं प्रणीतस्तस्मिन्कर्मण्यपवृत्ते परिसमाप्ते सोऽग्निर्लौकिकः संपद्यते लौकिको भवति न शास्त्रीयाहवनीयादिः, यथा समारूढे। द्विविधो ह्यग्निः, एकः प्रत्यक्षदृश्यः, अपरस्तत्रैव संस्कारात्मको देवताभूतः। तयोः संपृक्तं रूपं विहितकर्मकारकं, नैकैकम्। तत्रारण्योर्देवतात्मके समारूढे, इतरस्तद्रहितो महानसाग्निसदृशो लौकिकव्यपदेशं लभते। समारोहणावरोहणविधानात्, 'तं जानन्नग्न आरोह' 'उपावरोह जातवेदः' इति मन्त्रलिङ्गाच्च देवताभूतोऽग्निः प्रत्यक्षदृश्यमङ्गारमग्निं परित्यज्यारण्योरारोहति मथ्यमानमङ्गारमवरोहतीति गम्यते। तथा प्रत्यक्षात्प्रणीताग्नेर्देवतात्मकोऽग्निरपवृत्ते कर्मणि परिसमाप्ते स्वयोनिं गार्हपत्यादिं गच्छति, न परप्रयुक्ताग्न्युपजीविकर्मापवर्गे। यदर्थं प्रणीत एतस्मिन्नपवृत्त इत्युक्तम्। यथा दर्शपूर्णमासार्थं प्रणीतोऽग्निस्तस्मिन्नग्निहोत्रापवर्गेऽपि नापवृत्तः। यदर्थं प्रणीतस्तदपवर्गो यावत्तावत्तिष्ठति, 'अपवृत्ते कर्मणि लौकिकः' इत्युक्तत्वात्। आहवनीयादिसाध्यकर्मार्थमेवाग्निप्रणयनम्। न लौकिकाग्निसाध्यदहनपचनार्थं प्रणयेत्। तस्माद्विहितकर्मार्थमेवाग्निप्रणयनमिति। यथा लौकिकाग्नेरेव दक्षिणाग्नेः प्रणयनम्। गार्हपत्या-

दाहवनीयस्याऽऽहवनीयादौत्तरवेदिकस्याऽऽग्नीध्रस्य शामित्रस्य च दक्षिणाग्नेर्महापितृयज्ञार्थं त्रैयम्बकहोमार्थं चेति। एवमादि तत्र तत्र द्रष्टव्यम्। यत्र प्रणीतस्याग्नेः पुनः प्रक्षेपविधिस्तत्र कर्मापवर्गे न लौकिकः। यथा पशुपर्यग्निकरणार्थस्याग्नेः प्रत्यपिसृज्योल्मुकमिति। यस्य प्रयोजनं नास्ति, न तस्य प्रणयनम्, यथा दक्षिणाग्नेर्दर्शपूर्णमासार्थे होमे सारस्वते ॥ २१ ॥

इति चतुर्थः खण्डः।

---

इत्यापस्तम्बपरिभाषासूत्रं सभाष्यवृत्ति।

---

# अथाऽऽपस्तम्बीयदर्शपूर्णमाससूत्रभाष्यवृत्तिः ।

---

## तत्र प्रथमः प्रश्नः ॥ १ ॥

भाष्यवृत्तिः—नमस्त्रैलोक्यनिर्माणत्राणसंहृतिकर्मणे ।

चित्सदानन्दरूपाय विष्णवे परमात्मने ॥ १ ॥

आपस्तम्बं नमस्कृत्य धूर्तस्वामिप्रसादतः ।

तद्भाष्यवृत्तिः क्रियते यथाशक्तिनिरूपिता ॥ २ ॥

न व्यवस्थाप्यते वस्तु स्वबुद्धिस्तु नियम्यते ।

को वा समर्थो वेदार्थनिर्णयेऽत्यन्तगह्वरे ॥ ३ ॥

कौशिकेन तु रामेण श्रद्धामात्रविजृम्भितः ।

वेदार्थनिर्णये यत्नः क्रियते शक्तितोऽधुना ॥ ४ ॥

यथाभाष्यं यथाप्रज्ञं कृतां वृत्तिमिमां मया ।

विद्वांसस्त्वनुगृह्णन्तु प्रसन्ना वीतमत्सराः ॥ ५ ॥

वेदमार्गानुसारेण यथाशक्ति प्रकल्पितम् ।

अल्पार्थमपि यद्वाक्यं श्रद्दधानस्य शोभते ॥ ६ ॥

दर्शपूर्णमासादीनां काला उच्यन्ते—

" यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत् " इत्याद्यौपवसथ्यकालानुसारेण द्वितीयेऽहनि यागः । श्वः पूरितेति ।। पूर्वाह्णिकपञ्चदशीसंनिपाते केवलप्रतिपत्प्रथमांशसंभव एव ।

विकृतीनां तु रात्रावपराह्णे वा संधिपक्षे स्वर्विकां तृतीयामुपवसेदित्ययं पक्षः । प्रतिपदि पूर्वाह्णे संधिपक्ष उत्तरेऽहानि संगवान्तं प्रतिपत्संभवे सद्यस्कालता । पूर्वाह्णेऽल्पपञ्चदशीसंनिपाते केवलप्रतिपत्प्रथमांशसंभव एव । विकृतीनां तु रात्रावपराह्णे वा संधिपक्षे तस्मिन्नहन्यनुष्ठानं सद्यः पूर्वेद्युरारभ्यं वा । पूर्वाह्णे संधिपक्षे प्रकृतिं कृत्वा पश्चात्सद्यस्कालैव विकृतिस्तत्र न स्वर्विकोपवासः । यदहर्न दृश्यत इति । मध्यंदिनात्परतः संधिपक्षे श्वो न द्रष्टार इत्युत्तरेद्युः पूर्वाह्णे संधिपक्षे विकृतिकालः पूर्ववत् । पिण्डपितृयज्ञस्तु संधिमदहोरात्रापराह्णादौ ।

## अथातो दर्शपूर्णमासौ व्याख्यास्यामः ॥ १ ॥

अत्र भाष्यम्—अथोपोद्घात इति । अथशब्दस्याऽऽनन्तर्यार्थत्वात्पूर्ववृत्तापेक्षायां यज्ञं व्याख्यास्याम इति परिभाषापूर्ववृत्तोपोद्घातरूपोच्यते । तदानन्तर्यमथशब्दस्यार्थः । यज्ञं व्याख्यास्याम इति परिभाषायां यज्ञजातिवचनशब्देनैकविंशतिसंस्थस्य यज्ञस्य व्याख्या प्रतिज्ञाता । कथमेकविंशतिसंस्थो यज्ञ इति चेदुच्यते—सप्त पाकयज्ञसंस्था औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति । सप्त हविर्यज्ञसंस्था अग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी पिण्डपितृयज्ञादयो दर्विहोमा इति । यज्ञशब्दवाच्यत्वेऽपि पिण्डपितृयज्ञस्य वषट्कारप्रदानत्वाभावाद्दर्विहोमता। आदिशब्देन चतुर्होतृहोमादिग्रहणम् । सप्त सोमसंस्थाः—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति । अग्निष्टोमे यस्मिन्राजन्यस्य षोडशी गृह्यते सोऽत्यग्निष्टोमः । ब्राह्मणस्याप्यत्यग्निष्टोमो लभ्यते चत्वारिंशत्संस्कारनियमात् । तत्साधनकयज्ञव्याख्याप्रतिज्ञानात् । यज्ञसाधनहवींष्युच्यन्ते—पशुप्रभवं द्रव्यं दशविधं पयो दध्याज्यमामिक्षा वाजिनं वपा वसा त्वचो मांसं लोहितमिति । अश्वमेधे त्वच उत्कृत्य वपानाभिति वचनात् ।

अश्वस्य लोहितं स्विष्टकृदर्थमिति च । पशुरसो वसा । औषधं द्वादशविधम्—ओषधयस्तण्डुलाः पिष्टानि फलीकरणाः पुरोडाश ओदनो यवागूः पृथुका लाजा धानाः सक्तवः सुरेति । वचनादन्यानि हवींषि । आकाशो वायुरापो मधु सोमः कृष्णलानि किंशुकानि समिधः शकलानि बर्हिः करीराणि खर्जूराणीति ।

आकाशो मनोग्रहे, वायुर्वातनामहोमे, आपः संसृष्टहविषि मधु मधुना जुहोतीति किंशुकानि सर्पबल्यां करीराणि खर्जूराणि कारीर्याम् । स्वाहाकारवषट्कारप्रदानान्येतानि हवींषि । अग्निः शरीरं प्राणः शरीरी तुषा इत्येतान्यपि यज्ञसाधनानि । यदेतेषामपि यज्ञसाधनत्वे तुषग्रहणेन वसालोहितादीनामनुनिष्पन्नानां होमसाधनानां ग्रहणम् । हवींषि देवतार्थत्वादिति । हविः-

शब्दो देवतायै त्याज्येषु वर्तते पयःप्रभृतिषु खर्जूरान्तेषु । सोमान्तानि च नित्यानि कर्माणि । नैमित्तिकं ह्येतदृणसंस्तुतमिति वसिष्ठवचनादिति । 'त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति । यज्ञशब्दस्य सामान्यवचनतयैकविंशतिसंस्थयज्ञपरत्वाभिप्रायः । सोमावराध्यानि यानि श्रूयन्ते तानि कर्तव्यान्यवश्यमिति । आपस्तम्बेन वानप्रस्थधर्मे विद्यां समाप्य दारान् कृत्वेत्यादिना नित्यकर्तव्ये कर्मकाण्डे सोमावराध्यानि यानि श्रूयन्त इति निर्देशाच्च । अतोऽफलार्थिनाऽपि कर्तव्यान्यृणश्रुतेः । अतोऽफलार्थिनाऽपि कर्तव्यत्वान्नित्यता । निमित्तानपेक्षत्वाच्च ऋणसंस्तुतेः । सर्वेषां नित्यत्वे हेत्वन्तरमाह—अभ्यासविधानात् । घर्मो वा एषोऽशान्तः, अहरहः, प्रवृज्यते । यदग्निहोत्रमिति । किं च तं संततमुत्तरेऽर्धमास आलभते । तं काले काल आगते यजते । अर्धमासेऽर्धमासे प्रवृज्यत इति च । ताभ्यां यावज्जीवं यजेतेति च । यो वै सोमं भक्षयित्वेत्यारभ्य पुनर्भक्ष्योऽस्य सोमपीथो भवतीति सोमस्य वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिनाऽभ्यासविधानाच्च । काम्यत्वे कामनायां सत्यामेव प्रयोगादभ्यासविधानमनर्थकम् । तथा निमित्ते सत्येव नैमित्तिकमिति । अक्रियायां मैन्द्राग्नपशुविधानात् । अक्रियायां केषांचिदैन्द्राग्नपशुवैश्वानरेष्ट्यादिप्रायश्चित्तविधानाच्च । काम्यस्याकरणे प्रायश्चित्तविधानाभावाच्च । तथा दर्शपूर्णमासयोः परमामेव काष्ठां गच्छतीत्यपवर्गार्थत्वात् । स्वर्गकामो दर्शपूर्णमासाभ्यामित्यादिषु च स्वर्गशब्दस्यापारिमितनिःश्रेयसरूपमोक्षपरत्वेनापि संभवात् । पञ्चहोतारं चाऽऽग्नीध्रे स्वर्गकामस्येत्यत्र भाष्यकारेण स्वर्गशब्दस्य तथा व्याख्यानादत्रापि मोक्षपरत्वम् । अतः स्वर्गफलश्रवणेऽपि नित्यत्वमुपपद्यते । वसन्ते वसन्ते ज्योतिष्टोमेनेत्युक्थ्यादिसंस्थानामपि ज्योतिष्टोमत्वान्नित्यत्वम् । पाक्षिकस्त्वभ्यासः । पुनर्भक्ष्योऽस्य सोमपीथो भवतीति लिङ्गादिति वक्ष्यति । अभ्यासपक्ष तु पशुकामादिगुणफलार्थिनाऽपि कर्तव्यानि । सोमस्याऽऽत्मस्मरणार्थत्वाच्च । आत्मनिष्क्रयणार्थत्वादवश्यंभाविता । स एतांश्चतुर्होतॄनात्मस्मरणानपश्यदिति । अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमा-

न्तानां निर्देशात् । अतो व्याख्यातव्यानि । सर्वाधिकारिणां नित्यकर्तव्यत्वाद्व्याख्याने स्वरूपाज्ञानान्नित्यवदनुष्ठानानुपपत्तेः । शाखादौ दर्शपूर्णमासमन्त्राणां पूर्वमाम्नानादाधानेष्टीनामपि दर्शपूर्णमासप्रकृतित्वादाधानादपि पूर्वं दर्शपूर्णमासव्याख्या क्रियते । ननु चाऽऽधानाद्येव वक्तव्यं किमर्थमथातो दर्शपूर्णमासादिप्रथमसूत्रमुच्यते । यदि नाऽऽदितः कश्चित्क्रियेताधिकारो यान्यङ्गान्युत्तरत्र वक्ष्यन्ते तानि कस्य कर्मण इति न ज्ञायेरन्नतो दर्शपूर्णमासाधिकारः क्रियते ।

उपोद्घातः पदच्छेदः पदार्थः पदविग्रहः ।
आक्षेपश्च समाधिश्च व्याख्या षोढा प्रकीर्तिता ॥

इति व्याख्यानप्रकाराः । तत्रोपोद्घातरूपं यज्ञं व्याख्यास्याम इत्याद्युक्तमिदानीं पदच्छेदा उच्यन्ते । उपरितनसूत्राणामपि पदच्छेदादिरूपं व्याख्यानं कर्तव्यमित्येतत्प्रदर्शनार्थं प्रथमसूत्रव्याख्यानं क्रियते । अथ, अतः, दर्शपूर्णमासौ, वि आ ख्यास्याम इति पदच्छेदः ।

अथ पदार्था उच्यन्ते—अथशब्दो मङ्गलार्थः । मङ्गलादीनि शास्त्राणि प्रथन्ते । अध्येतारः श्रोतारश्चाऽऽयुष्मन्तो भवन्तीति श्रुतेः । तस्मादादौ मङ्गलं कार्यम् । अथश्रुतिर्हि मङ्गलम् । तस्य कोऽर्थ इत्यत आह—आनन्तर्यार्थो वा लोकवेदवत् । लोके स्नातः, अथेदानीं भुङ्क्त इति । वेदे हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इति । संक्षेपतो यज्ञो व्याख्यातः परिभाषायाम् । विस्तरेण दर्शपूर्णमासावनन्तरमुच्येते इत्यानन्तर्यप्रकटनम् । अतःशब्दो हेत्वर्थः । यस्माद्दर्शपूर्णमासावव्याख्यातौ न शक्यौ प्रयोक्तुम् । अक्रियायां च दोषः । अत उच्येते इत्यतःशब्दार्थः । दृश्यते यस्मिन्क्षणे सूर्येण संगतश्चन्द्रमाः सिद्धैः स क्षणो दर्शस्तद्योगादहोरात्रमिति । अस्यार्थः—प्रातरन्वादधाति श्वोभूते यजत इत्यादिनाऽहोरात्रद्वयवर्तित्वावगमात् । अमावास्यायाममावास्यया यजेतेति मुख्यपर्वसंधिक्षणेऽनुष्ठानाशक्तेस्तद्युक्तितिथिद्वययुक्ताहोरात्रद्वयलक्षणाऽवगम्यते । प्रतिपदोऽप्यमावास्यास्वातत्कालवर्तित्वात्प्रधानसमुदाय इति कालक्षणोपपत्तिः ।

कानि पुनस्तानि प्रधानानि आग्नेयैन्द्राग्नयोराग्नेयसांनाय्ययोर्वा होम इत्युपदेश इति होमक्रियामात्रं प्रधानमित्युपदेशपक्षः। उपदेश इति सर्वत्र सूत्रब्राह्मणे उच्येते । यथोपदेशं प्रधानाहुतिः 'तस्य ज्ञानमुपदेशः' [ पू० मी० १ । १ । ४ ] इति दर्शनात्। होमसाध्यधर्माः फलकरणमिति न्याय इति । दर्शपूर्णमासाभ्यामिति करणविभक्तिनिर्देशस्य फलसाधकत्वनिबन्धकत्वात्। होमसाध्यापूर्वाधीनत्वफलसिद्धिनिबन्धनं यागकरणत्वमिति नामधेयोपपत्तिः । न केवलक्रियामात्रकरणत्वाभिप्रायेणेति न्याय्यः पक्षः। पूर्णमासशब्दं व्याचष्टे पूर्णमास इति चन्द्रमस आख्या। मासार्धमासानामाम्नानात्। स यस्मिन्क्षणे पूर्यते स क्षणः पूर्णमासस्तद्योगादहोरात्रं तत्कालवर्तित्वात्प्रधानसमुदायः । कानि पुनस्तान्याग्नेयोपांशुयाजाग्नीषोमीयाणामाग्नेयोपांशुयाजयोर्वाऽऽग्नेयैन्द्राग्नयोर्वाऽऽग्नेयसांनाय्ययोर्वा होम इति पूर्ववद्व्याख्या । सर्वहोमेषु फलक्लृप्तिर्न्याय इति। फलं कल्प्यते साध्यतेऽनेनेति अपूर्वं फलक्लृप्तिः । तदधीनकरणभूतयागनामधेयं पूर्णमासशब्दार्थः। अथवा सोमयागादूर्ध्वमग्नीषोमीयसंपत्तेः करणभूताग्नीषोमीयसाध्यापूर्वस्य च तदुत्तरकालत्वात्पाश्चात्यकरणत्वाभिप्रायेण पूर्वमपि प्राधान्यनिर्देश इति सर्वशब्दाभिप्रायः। दर्शश्च पूर्णमासश्च दर्शपूर्णमासाविति पदविग्रहः । अल्पाच्तरं पूर्वं निपततीतिवचनात्पश्चात्प्रयोगिणोऽपि दर्शस्य पूर्वनिपातः समासः। कथं दर्शस्य पश्चात्प्रयोगः। उच्यते—सारस्वतहोमब्राह्मणे 'यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेत, इति पौर्णमास्याः प्रथमप्रयोगं सिद्धवदनूद्य प्रातिलोम्यमाशङ्क्य सारस्वतहोमाभ्यां प्रातिलोम्यपरिहारस्योक्तत्वात्पूर्णमासस्य प्रथमप्रयोगः । तथा त्वष्टा हतपुत्र इत्यनुवाके पूर्वमग्नीषोमीयोत्पत्तेः। हुतानुमन्त्रणे चैन्द्राग्नसांनाय्ययोः पश्चात्पाठात्। सूत्रकारेण चामावास्याधाने दर्शारम्भमनुक्त्वा पौर्णमास्यारम्भवचनाच्च। तथा भगवता भारद्वाजेन पौर्णमासीं पूर्वां यजेतेत्युक्तत्वाच्च । विशब्दो विस्तरार्थः। ये त्वधिकविधयः शाखान्तरस्थास्तानपि वक्ष्याम इति। आङ्बलवदर्थे। श्रुत्यर्थसंशये कारणैर्बलवद्भिरुपपाद्य विधिं वक्ष्याम इति। व्याख्यास्याम इति चक्षिङो व्यक्तवागभिधायिनः ख्याञादेशोऽ-

यम्। तत्र पिण्डितार्थः परिभाषानन्तरं दर्शपूर्णमासौ वक्ष्यामः। यस्मादेतावन्तरेण सकलं श्रौतं न प्राप्यत इति। इष्टिपशूनां सोमाङ्गानां च बहूनां तद्विकारत्वात्सकलशब्दः। तत्र कश्चिद्ब्रूयात्–मन्त्रब्राह्मणयोर्व्याख्याततत्वाद्दर्शपूर्णमासयोरनर्थकः सूत्रकारयत्न इति। तच्च न। दुर्ज्ञानत्वाच्छ्रुत्यर्थस्याग्रतनैरधिकाविध्युपसंहारस्य चाशक्यत्वादतो नानर्थक इति ॥ १ ॥

सूत्रदीपिका—शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्याये * सर्वविघ्नोपशान्तये ॥ १ ॥
आज्ञा श्रुतिस्मृती यस्य यस्य यज्ञाः सभाजनम्।
नमः परस्मै विश्वस्मात्तस्मै श्रीवत्सवक्षसे ॥ २ ॥
आदिमं ब्रह्मणः कोशमध्यस्थितपरावरम्।
अपास्तरोषपाप्मानमापस्तम्बं मुनिं स्तुमः ॥ ३ ॥
आपस्तम्बीयसूत्रार्थेऽप्यन्यथाज्ञानसंशयान्।
सूत्रदीपिकया वृत्त्या रुद्रदत्तः परास्यति ॥ ४ ॥
सन्तु ये सुविवक्तारः सन्तः स्युर्गुणसाक्षिणः।
रत्नं रत्नमिति ग्राह्यं मूल्यं किं तस्य गृह्यते ॥ ५ ॥

अत्र भगवानापस्तम्बः समस्तलोकहितकाङ्क्षी विध्यर्थवादमन्त्रात्मकविविधवेदभागव्याकीर्णं विभक्तानेकशाखाव्यासक्तं च विश्वस्य वैतानिकस्य कर्मणो याजुर्वैदिकं प्रयोगं व्याचिख्यासुस्तत्र सर्वप्रथमभाविनोऽग्न्याधेयस्य सेष्टिकत्वात्सर्वेष्टीनां च दर्शपूर्णमासप्रकृतित्वात्समाम्नाये च दर्शपूर्णमासमन्त्राणामेव प्राथम्यात्तावेवाग्रे व्याख्यास्यन्नधिकारं दर्शयति–

अथातःशब्दोऽयं प्रकरणारम्भे प्रायः प्रयुज्यते वृद्धैः क्वचिदानन्तर्येऽपि। यथा–इमे भगवो व्याख्याता अथातोऽङ्गिरसामित्यादौ। न पुनरिहाऽऽनन्तर्यार्थः। वृत्तस्य कस्यचिदनन्तरस्यानुपलम्भात्। न दृश्यतेऽस्मिंश्चन्द्रमा इति विपरीतलक्षणया दर्शइत्यमावास्योच्यते। न त्वियमन्वर्थसंज्ञेति चन्द्रदर्शनस्य सर्वतिथिसाधारण्यात्। न च सूर्येण संगतो दृश्यत इति विशेष्टव्यं सूर्यसंगतेरमावास्याशब्दप्रवृत्तिहेतोर्दर्शनात्। अमा सह वसतोऽस्यां चन्द्रार्काविति वाच्यम्। अतितेजस्विसूर्यमण्डलान्तर्विलीनः क्षीणक-

* ध्याये—इत्यत्राऽऽत्मनेपदं "छान्दसमित्यस्तु मन्यन्ते धातोरुभयं पदम्" इत्युक्तः।

लश्चन्द्रमाः सिद्धैरेव दृश्यते नास्मद्विधैरिति । तत्रापि सिद्धदर्शनस्याविशेषकत्वादस्मद्दर्शनपरिसंख्यापर एव शब्दोऽभ्युपगन्तव्य इति स एवार्थश्छद्मनोक्तः स्यात् । न चासौ प्राञ्जलः, विवक्षिततिरोधानात् । सूत्रकृतैव विपरीतलक्षणया विवरणाच्च । यथा यदहर्न दृश्यते तदहरमावास्येति । तस्माद्यथोक्त एवार्थः शोभते । मासश्चन्द्रः । यदाहुर्नैरुक्ताः–मासो मानात्कालश्चन्द्रश्चेति । स पूर्यते यस्मिंस्तदहः पूर्णमासः । दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ । इह च दर्शपूर्णमासाख्यकालचोदितानामाग्नेयादिप्रधानानां यौ विद्वद्वाक्यानुवन्दितौ समुदायौ य एवं विद्वान्पौर्णमासीं य एवं विद्वानमावास्यामिति तयोरपि तत्तत्कालसंबन्धेन दर्शपूर्णमासाविति नामनी । तत्र पूर्णमासस्य प्रयोगतः प्रथमत्वेऽपि दर्शशब्दस्याल्पाच्तरत्वात्पूर्वनिपातः । तौ व्याख्यास्यामः । श्रुतौ संक्षिप्तयोर्व्याकरणेन शाखान्तरोपसंहारादिना च विस्पष्टीकरणं व्याख्यानम् ॥ १ ॥

प्रातरग्निहोत्रꣳ हुत्वाऽन्यमाहवनीयं प्रणीयाग्नीनन्वादधाति ॥ २ ॥

भा० वृ०—प्रातरिति कालवाच्यव्ययम् । संगवान्तः प्रातरित्याश्वलायनेनोक्तम् । स उषस आरभ्य । अग्निहोत्रमिति कर्मनाम । अग्नेर्यत्र सायमाहुतिरिति । स एतद्भागधेयमभ्यजायत । यदग्निहोत्रं तस्मादग्निहोत्रमुच्यत इति निर्वचनादिति । प्रजापतिरग्निमसृजतेत्यनुवाके प्रजापतिप्रविष्टेऽग्नौ जायस्वेत्युक्तेनाग्निना । किं भागधेयमभिजनिष्य इति पृष्टे तुभ्यमेवेदꣳ हूयाता इत्युक्तत्वादग्नेरेव होमे प्राप्ते तद्धूयमानमादित्योऽब्रवीदित्यादिना सूर्याय प्रातरित्यन्तेन प्रातर्होमे सूर्यदेवताऽवगम्यत इति । तस्मादग्नेः सायंहोमादग्निहोत्रमिति निर्वचनोपपत्तेरुभयकालवर्तिहोमस्य नामधेयम् । तदग्निहोत्रꣳ हुत्वा होमेनाऽऽराध्याग्निमिति । यद्यपि मीमांसकमत्या न देवताप्राधान्यं तथाऽपि देवताराधनरूपयागस्यैव प्राधान्याद्धोमेनाऽऽराध्येत्युच्यते । आराधनं देवतायाः कर्मणीति स्वाभिप्रायः । आहूयन्तेऽ-

स्मिन्नाहुतयः। ताः क्षिप्यन्त इत्याहवनीयः। नन्वग्न्यन्तरेऽप्याहुतयो विद्यन्त इत्यत आह—इतरेभ्यो भूयस्य इति। तत्रैवाऽऽहवनीयशब्दः। नार्थान्तरवचनता संज्ञाशब्दानामिति। अस्यार्थः—आहवनीयशब्दस्य यौगिकत्वेऽपि पङ्कजादिशब्दवन्नियतवृत्तित्वान्नाग्न्यन्तरवचनता। प्रणयनं पुरस्तान्नयनं तदस्याऽऽहवनीयस्य कृत्वाऽग्नयोऽग्रं यज्ञेषु नीयन्ते प्रथममिति। अन्वाधानमानुपूर्व्येण बलवदिन्धनेनार्थसमर्थमिति। आङो बलवदर्थत्वादग्निधारणसमर्थं बलवदिन्धनम्। एवं पदार्था उक्ताः। प्रातःशब्दोऽन्वाधानेन संबध्यते। तस्य कालापेक्षत्वात्तेन संबन्धे सत्यनन्तरवृत्ततयाऽर्थात्प्रातर्होमावगतेः। कथं प्रातरन्वाधानं क्रियते। अग्निहोत्रं हुत्वेत्यानन्तर्यार्थक्त्वाप्रत्ययस्य पूर्वप्रवृत्तानन्तर्यार्थत्वान्मा भूदहुते प्रवृत्तिरिति। इतरथा तस्मिन्नेवेष्ट्यर्थे हूयेत। यथा सायंहोमोऽन्यार्थाहवनीय इति। सिद्धेऽपि प्रणयन इति। अर्थायार्थायाग्निं प्रणयतीति सिद्धे प्रणयनेऽन्यमाहवनीयं प्रणीयेति पुनर्वचनं चतुर्होत्रर्थे प्रणीते मा भूत्पौर्णमास इति। कथमन्य एव प्रणीयत इति। चतुर्होतुर्दर्शपूर्णमासार्थत्वादेककालीनत्वाच्च तयोः साधारणाग्निप्रणयनशङ्कानिवृत्त्यर्थमन्यमाहवनीयं प्रणीयेत्युच्यते। चतुर्होतुः सर्वदर्शपूर्णमासार्थत्वात्प्रथमपौर्णमास्या सह न प्रयोग उपपद्यते। अतः पृथक्प्रणयनोपदेशः। अथवैकफलार्थत्वाद्दर्शपूर्णमासयोः पौर्णमास्यर्थे प्रणीते मा भूद्दर्श इति फलैक्यात्प्रधानानामङ्गतन्त्रताशङ्कायां परिहार उच्यते—कालभेदात्साङ्गप्रधानप्रयोगस्य प्रतिकालमनुष्ठेयत्वादग्निभेदः। आहवनीयग्रहणं प्रदर्शनार्थं दक्षिणाग्नेरपि प्रणयनं यथा स्याद्यद्येकयोनिः स दक्षिणाग्निः। सदाऽऽहार्यस्य च पुनराहरणं तथा सभ्यावसथ्ययोः। उद्धृत आहवनीयेऽस्थापिते दक्षिणाग्नेर्निधानमाधाने तथा दृष्टत्वात् क्रमापेक्षत्वात्। प्रकृतित्वाभावेऽपि वैदिकत्वसामान्यादत्रापीति। केचिदुद्धरणाग्रहणादाहवनीयं प्रतिष्ठाप्य वा दक्षिणाग्नेः प्रणयनम्। उद्धरणादिस्थापनान्तस्यैकपदार्थत्वात्। वचनादृते तन्मध्येऽन्यस्यासंभवात्। प्रातरग्निहोत्रꣳ हुत्वाऽन्यस्य प्रणयनम्। न सायमग्निहोत्रꣳ हुत्वेष्टौ निशीष्ट्यादौ नक्तधारणपक्षे नान्यः प्रणीयतेऽन्य-

ग्रहणमपि न्यायमात्रदर्शनार्थमिति । आहवनीयग्रहणेऽक्रियमाणे गतश्रियादेर्धार्या अप्यग्नयो देशान्तरं प्रणीयेरन्नतस्तद्ग्रहणमग्नीनन्वादधातीत्यधिकारात् । देवा गातु विद इति जपोऽप्यङ्गमन्वाधानस्यातोऽस्य सोमेष्टिषु प्रायणीयादिषु निवृत्तिः। अत्र संक्षेपतोऽर्थः- अग्निहोत्रं हुत्वा प्रणीयाऽऽहवनीयं प्रातरन्वाधानं कर्तव्यमिति । त्रीणि चैतानि सूत्राणि प्रणीयान्वादधातीत्येवमन्तानि आम्नानमपि अमात्रार्थत्वेन विधिपरस्तथा गिरपेक्षत्वात्क्रियार्थमित्यर्थान्तरवाचकत्वादिति प्रत्येकं भिन्नार्थवाचकत्वादुपदेशः परिहारः। अन्यशब्देनाग्निहोत्रविहरणविधिस्तूष्णीको भवति । अन्या वा यजुषोत्पूयेति वचनादिति । उपदेशमतेनान्यशब्दस्य न्यायसिद्धानुवादित्वेनाऽऽनर्थक्यशङ्कां परिहरति । यजुर्ग्रहणेन मन्त्र निवृत्तावप्यस्तु तूष्णीं प्रणीतायमर्माणामभिमन्त्रणादीनां प्राप्तिरस्तीत्यभिप्रायः। बलवत्करणमन्वाधानम् ॥ २ ॥

सू०दी०—अन्वाधानं नामाग्नौ काष्ठाधानं तच्च कर्माङ्गत्वेन सुरथादिगुणविशिष्टानामग्नीनां ग्रहणार्थं तद्द्वारेण देवतापरिग्रहार्थं च । कुतः । अग्निं गृह्णामि सुरथं यो मयोभूः स्व आयतने देवताः परिगृह्णामीति कर्मविधिवाक्यशेषाभ्यामग्निं गृह्णाति देवताश्च परिगृह्णाति स्व आयतन इति मन्त्रलिङ्गाच्च । तथा ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति तूष्णीमितराविति भारद्वाजवचनाच्च। प्रातरग्निहोत्रं हुत्वेत्यनुवाद आनन्तर्यार्थः । यथौपवसथ्येऽह्नि प्रातरग्निहोत्रं हुत्वा प्रागेवान्येभ्यः कर्मभ्योऽन्वादध्यान्मा विलम्बिष्ट मा चाहुतेऽन्वादध्यादिति । अविलम्बश्च ब्राह्मणे प्रशस्यते यो वै देवताः पूर्वः परिगृह्णातीति । मन्त्रवर्णश्च भवति तान्देवान्परिगृह्णामि पूर्व इति । अर्थादन्यत्वे सिद्धेऽन्यमाहवनीयं प्रणीयेति किमर्थम् । दर्शपूर्णमासावारभमाणस्य चतुर्होत्रर्थाग्निव्युदासार्थमिति केचित् । तदयुक्तम् । सर्वदर्शपूर्णमासप्रयोगसाधारणस्यैव तन्त्रस्याधिकारात् । तत्र नामैतद्वक्तव्यं यत्र तयोरारम्भोऽभिधायिष्यते वक्ष्यन्ते च तद्वैशेषिका धर्मास्तत्रैव दर्शपूर्णमासावारभ्यमाण इत्यादिना । तस्मान्न तदर्थं वचनम् । किमर्थं तर्हि । माऽग्निहोत्रार्थोऽग्निरन्वाधायीति । कः प्रसङ्गः । अस्ति

परमतेन। यथाऽऽह भारद्वाजः—य एवैषोऽग्निरग्निहोत्राय प्रणीतस्तं गृह्णीयादित्याश्मरथ्योऽन्यं प्रणीयेत्यालेखन इति। दक्षिणाग्नेरन्वाहार्यस्याऽऽधानक्रमेणार्थसिद्धा स्वयोनित उत्पत्तिः ॥ २ ॥

## न गतश्रियोऽन्यमग्निं प्रणयति ॥ ३ ॥

भा० वृ०—गता प्राप्ता यस्य श्रीः स गतश्रीः। स उत्तरत्र व्याख्यास्यते। त्रयो वै गतश्रिय इत्युक्तमित्यत्र। न तस्यान्यमग्निं प्रणयतीति। नित्यो गतश्रियो ध्रियत इति वचनात्। नाऽऽरब्धव्य इह गतश्रीप्रतिषेध इति चेदुच्यते। वरुणप्रघासेषु प्रतिप्रस्थातुः प्रणयनं मा भूदाहवनीयस्य विभागो यथा स्यादिति गतश्रीप्रतिषेधः क्रियते। आहवनीयद्वयाभावादेकस्यैव विहरणद्वये विभज्य निधानम्। अन्यग्रहणमतिप्रणीते मा भूदन्योपलक्षितस्य प्रतिषेध इति। अन्यं प्रणीयेति निर्दिष्टस्यैव प्रतिषेधः। न पिण्डपितृयज्ञे। नाऽऽहिताग्नेर्गतश्रियोऽतिप्रणयनप्रतिषेधः। इह पूर्वोक्तप्रणयनविषयत्वात्प्रतिषेधस्य। अग्निग्रहणमन्यशब्दोपलक्षणेनातिप्रणीतादीनां प्रणयनप्रतिषेधो मा भूदिति ॥३॥

सू० दी०—अनुसंधास्यति स्वयमेव गतश्रीशब्दार्थम्। तस्यान्यं न प्रणयेत्। नन्विदमपार्थकं वचनं नित्यो गतश्रियो ध्रियत इत्यनेनैव सिद्धत्वात्। सत्यमत्रापार्थकम्। वरुणप्रघासेषु तु दक्षिणविहारार्थं भविष्यतीत्येके। सम्यक्तावदुक्तमिदम्। यद्दर्शपूर्णमासौ व्याख्यास्याम इत्यधिकृत्य वरुणप्रघासा व्याख्यायन्त इति पर्यनुयोगः प्रत्यवशिष्यते न्यायत एव च तत्र प्रणयनप्रसङ्गः। तस्मादनन्तरेणैव प्रणयनानुवादेन गतश्रियोऽप्यन्वाधास्यतोऽन्यः प्रणेतव्य इति मा कश्चिद्ब्रवीदिति सिद्धस्यैवायमनुवादः स्पष्टत्वाय कथनमिति। नन्वेवमपि न गतश्रियः प्रणयतीत्येतावद्वक्तव्यम्। किमन्यग्रहणेनाग्निग्रहणेन वा। इदं तावदग्रे विदांकुर्वन्तु तत्र भवन्तो यन्नातिसूक्ष्मेक्षिकया शैल्या शब्ददरिद्रः सूत्रकारः किं तर्हि व्यक्ताभिर्वचनव्यक्तिभिरर्थान्व्याचष्ट इति तदलमनेनाऽऽक्षेपक्लेशेन ॥ ३ ॥

देवा गातुविदो गातुं यज्ञाय विन्दत। मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति जपित्वा

**ममाग्ने वर्चो विहवेष्वित्याहवनीयमुपसमिन्धे । उत्तरया गार्हपत्यमुत्तरयाऽन्वाहार्यपचनम् ॥ ४ ॥**

भा० वृ०—जपत्युत्तरतो विहारस्य । उत्तरत उपचारो विहार इति वचनात् । चातुःस्वर्येण सर्वजपाः । अन्ये मन्त्रा एकश्रुत्या । "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति स्मृतेः । केचिद्यज्ञयोगार्थत्वाद्विहरणात्पूर्वं जपं कुर्वन्ति । वाताद्यज्ञः प्रयुज्यतामिति लिङ्गात् । यज्ञप्रयोगार्थत्वाद्विहरणस्य च यज्ञाद्यपदार्थत्वात्तदनुपपन्नम् । विहरणमुक्त्वोपरि पाठात् । तैश्च समिष्टयजुः सर्वान्ते प्रयोक्तव्यम् । गातुं वित्त्वेति यज्ञसमाप्तिलिङ्गात् । अतो यथापाठं प्रयोगः । धारणसमर्थमिन्धनमुपसमिन्धनं महाकाष्ठाधानम् । तदाहवनीयस्य कृत्वा पूर्वं गृहपतिना संयुक्तोऽग्निर्गार्हपत्यः सर्वेषां गृहपतिसंयोगेऽपि पङ्कजादिवदेकत्र वर्तते । तस्यानन्तरमुपसमिन्धनम् । इदानीमन्वाहार्यपचनशब्दनिर्वचनम् । क्रूरं बीजवधादिहिंसासंयुक्तं विलिष्टं यदयथाकृतं तदन्वाहरति तत्प्रणाशयतीत्यन्वाहार्य इति । यद्वै यज्ञस्य क्रूरं यद्विलिष्टमित्यादि ब्राह्मणस्य व्याख्यानम् । स यस्मिन्पच्यते सोऽन्वाहार्यपचनः । सभ्यावसथ्ययोरिह सूत्रकारानुपादानेऽपि यजमानोपस्थानदर्शनात्तयोस्तूष्णीमुपसमिन्धनं कर्तव्यम् । तदर्थं तच्छब्दयोरप्यत्र निर्वचनम् । सभायां भवः सभ्यः । आवसथे भव आवसथ्यः । सर्वकल्पेषु तयोस्तूष्णीमुपसमिन्धनम् । यजमानोपस्थानदर्शनात् । व्याहृत्यन्तेषु तयोस्तूष्णीमुपसमिन्धनं दक्षिणाग्नेरूर्ध्वमिति ॥ ४ ॥

सू० दी०—अन्वाधानाधिकारात्तस्याङ्गं जपः । तेन प्रायणीयादौ निवर्तते । उपसमिन्धे काष्ठैर्दीपयति । तत्र त्रीणि त्रीणि काष्ठान्यादधीतेति बौधायनः । समिध आदधातीति कात्यायनः ॥४॥

**तिसृभिस्तिसृभिर्वोत्तमां तु जपेदाहवनीये वाऽऽदध्यात् ॥ ५ ॥**

भा० वृ०—सर्वेषु कल्पेषु तिसृभिस्तिसृभिर्विहव्यस्यापवर्ग इति । ममाग्ने वर्च इत्यनुवाकसमाप्तिस्तिसृभिरिति पक्षेऽवधारणात् । अस्मिन्नेव पक्ष उत्तमाया जपः । तुशब्दप्रयोगादत्रोत्तमां जपेदित्यर्थेनैकैकस्मिन्पक्ष आहवनीये वा सर्वाः पञ्चापि समिध आदध्यात् । सर्वसमिधामुपलक्षणार्था संख्या नेतरेषु ॥ ५ ॥

सू० दी०—विहव्यानुवाकस्य दशर्चस्य तिसृभिस्तिसृभिर्ऋग्भिस्त्री-नेतानग्नीन्सकृत्सकृदुपसमिन्धे ॥ ५ ॥

व्याहृतिभिरन्वाधानमेके समामनन्ति ॥ ६ ॥

भा० वृ०—एकैकया व्याहृत्याऽन्वाधानम्। यद्यपि व्याहृतिभिरन्वाधानमित्युपादेयगतत्वेन बहुत्वाविवक्षा प्राप्ता तथाऽपि भिन्नार्थत्वात् समस्तोपदिष्टानां विभागकरणम्। स्वयमातृण्णोपधाने भूर्भुवः सुवरिति स्वयमातृण्णामुपदधातीति समस्तोपदिष्टानां सूत्रकारेण भूरिति चैतया व्याहृत्येति विभागोपदेशात्। अत्र तु गार्हपत्यादिव्याहृतिपक्षे वाजसनेयिनां समस्तोपदिष्टानां विभागकरणात् प्राक्संस्थावचनात्तिसृभिस्तिसृभिरेकैकस्योपदेशः। व्याहृतिपक्षेऽपि पूर्वोक्तबहुत्वविवक्षान्यायेनाऽऽहवनीयाद्येव।

प्रयोगक्रमः—अथ कर्मानुपूर्वं सारस्वतहोमयोः पुरस्ताद्दर्शपूर्णमासावारप्स्ये। ताभ्यां यावज्जीवं यक्ष्ये। स्वर्गं लोकमवाप्नवानीति संकल्पः। यद्यपि मानसव्यापारः संकल्पस्तथाऽपि तद्वाचकशब्दोच्चारणपर्यन्त एव। यो यक्ष्य इत्युक्त्वा न यजत इत्युच्चारणपर्यन्तनिर्देशात्। नित्याधिकारेऽपि फलनिर्देशो मोक्षार्थत्वात्। तस्मिन्नपि स्वर्गनिर्देशस्याविरोधः। अपरिमितनिःश्रेयसरूपमोक्षवाचित्वं स्वर्गशब्दस्येत्युक्तम्। पूर्वं निःश्रेयसार्थिना तदपि नाभिसंधातव्यम्। इत्ययमी पक्षाः। सर्वकामाणां वा कामनं युगपत्कामनापक्षे। ननु किमिति सारस्वतहोमयोः पूर्वं संकल्पः। यावता पौर्णमास्यारम्भकाले युक्त उच्यते। सारस्वतहोमान्वारम्भणीयाचतुर्होतॄणां सर्वदर्शपूर्णमासार्थत्वात्सकलप्रयोगसाधारणसंकल्पं कृत्वैव तानि कर्तव्यानीति। यथा त्वाह्वारपृथक्त्वे कामस्तथाऽपि सारस्वतहोमयोः पुरस्ताद्दर्शपूर्णमासावारप्स्य इति संकल्पः। नात्र फलनिर्देशः। ताभ्यां यावज्जीवं यक्ष्ये। त्रिंशतं वा वर्षाणि जीर्णो वा विरमणं करिष्य इति। एतदुभयत्र साधारणम्। हुने चतुर्होतरीत्युक्ते च सारस्वतहोमचतुर्होतृहोमौ दर्शपूर्णमासयोः साधारणमङ्गमग्नौ दर्शपूर्णमासाभ्यां यक्ष्ये स्वर्गं लोकमवाप्नवानीत्यादयः कामाः। पौर्णमासी-

प्रयोगादौ सारस्वतहोमयोः पुरस्तान्नित्याधिकारं संकल्प्य प्रयोगादौ कामसंकल्पः । तदा काम्याधिकारप्रसङ्गेन नित्याधिकारस्यापि सिद्धिः । पौर्णमास्यादौ वपनमिति । वपनस्यापूर्वाश्रयपुरुषयोग्यतापादनेन पुरुषसंस्कारत्वाद्दर्शपूर्णमासाभ्यामेकापूर्वसिद्धेस्तद्योग्यता पौर्णमास्यादौ सकृत्कृतेनैव वपनेन सिध्यतीति नोभयत्र वपनम् । अत एवाप्यल्पशो लोमानि वापयत इति प्रतिपर्व वपनं वाजसनेयिमतेन विकल्पेनोपदिष्टम् । ततो विद्युदसीत्यत्राऽऽम्नानादिति पर्वणि च केशश्मश्रु वापयत इत्युक्त्वोपस्पर्शनाम्नानात् । वपनादूर्ध्वं विद्युदसीत्युपस्पर्शनम् । ततो विहरणं जपः समिन्धनमिति क्रमः प्रथमे प्रयोगे । अन्येषु तु हुत्वाऽग्निहोत्रममुना यक्ष्य इत्युक्त्वा कामो वपनं ततो विद्युत् ततो विहरणादि । यदि ह्यसंकल्पिते क्रतौ विद्युत्कामो वा याजमानं प्रथममुक्तत्वात्क्रियेत तर्हि न ज्ञायते कस्य क्रतोरारम्भ इति । उपदेशो वपनं विद्युदसि क्रतुसंकल्पः कामो विहरणमिति । यक्ष्यमाण इति प्रयोगारम्भात्पूर्वत्वमवगम्यते । अतः संकल्पात्प्रागेव युक्तम् । संकल्पस्य प्रयोगारम्भरूपत्वादिति ॥ ६ ॥

उत्तमां तु जपेदाहवनीये वाऽऽदध्यात् ॥ ६ ॥

सू० दी०—तदा तूत्तमां दशमीं जपेत् । तया पुनराहवनीये काष्ठानि वाऽऽदध्यात् ॥ ६ ॥

संनयतः पलाशशाखां शमीशाखां वाऽऽहरति बहुपर्णां बहुशाखामप्रतिशुष्काग्रामसुषिराम् ॥ ७ ॥

भा० वृ०—यस्मात्पशुभिरोषधीभ्य इन्द्रस्येन्द्रियं संनीतमात्मनि तस्माद्दधि च पयश्च सांनाय्यम् । यत्समनयं तत्सांनाय्यस्य सांनाय्यत्वमिति । इन्द्रस्य वृत्रं जघ्नुष इत्यादिब्राह्मणे सांनाय्यशब्दनिर्वचनमुक्तमित्यर्थः । तेन यो यजते स संनयन्नित्युच्यते । तस्य संनयतः पलाशस्य शाखा पलाशशाखा । शम्याः शाखा शमीशाखा तामाहरति । पर्णानि पत्राणीति पर्णशब्दस्यार्थः । संनयत इति वचनात्सांनाय्यार्था शाखा नोपवेषार्था लोकप्रसिद्धानां द्रव्याणामिहानुपदेशादुपादानमिति । इह विशेषानुपदेशात् ।

पौर्णमास्यामुपवेषकाष्ठाद्युपादानं शाखाभावेऽपि। बहूनि पर्णानि बह्व्यश्च शाखा यस्याः शाखाया अग्रं प्रति अशुष्का अप्रतिशुष्काग्रा, असुषिरा यस्या नान्तश्छिद्रम् ॥ ७ ॥

सू० दी०—एकैकया व्याहृत्या तानेवाग्नीन्गार्हपत्याद्याहवनीयान्तानेकैकमुपसमिन्धे। कुत एतत्। वाजसनेयिनां तथाऽऽम्नानात्। महाव्याहृतिभिर्वा प्राक्संस्थमिति कात्यायनवचनात्। आधाने च तस्य तस्याग्नेस्तत्तद्व्याहृतिसंबन्धप्रसिद्धेः स्वयमातृण्णासु समस्तोपदिष्टानामपि विभागप्रदर्शनाच्च। सभ्यावसथ्यावप्यत्र तूष्णीमुपसमिन्धनीयौ। तत्तु याजमाने दर्शयिष्यामः ॥ ७ ॥

**यं कामयेतापशुः स्यादित्यपर्णां तस्मै शुष्काग्रामाहरेदपशुरेव भवति ॥ ८ ॥**

भा० वृ०—अपशुत्वादयः प्रतिषेधार्था अनिष्टत्वात्। न ह्यशुभमृत्विग्विचिन्तयेद्यजमानस्य सूत्रकारमतिश्च पदाभ्यासप्रतिषेध इति। यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयत इत्यस्य प्रतिषेधपरत्वेन पदाभ्यासप्रतिषेध इति सूत्रकारेणोक्तत्वात्। उपदेशोऽध्वर्युकाम इति एतत्सूत्रतुल्यश्रुतिस्थले निषेध एव सूत्रकारेणोक्त इत्यर्थः ॥ ८ ॥

सू० दी०—सांनाय्ये नाम दार्शिके दधिपयसी ताभ्यां प्रवृत्तेज्यः संनयन्नित्युच्यते ॥ ८ ॥

**यं कामयेत पशुमान्स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत्पशुमन्तमेवैनं करोतीति विज्ञायते ॥ ९ ॥**

भा० वृ०—सूत्रकारेण कामोपदेशाद्बहुपर्णप्रशंसार्थमिति न्याय इति उत्तरविधिप्रशंसार्था पूर्वस्य निन्देति। तस्मादबहुपर्णाऽप्यापदि ग्राह्या ॥ ९ ॥

सू० दी०—यं कामयेतापशुः स्यादित्यगुणाया वर्जनार्थं न त्वध्वर्युकामवशात्तस्या एव ग्रहणार्थम्। कुतः। यजमानपरिक्रीतस्यर्त्विजस्तदहिते प्रवर्तनायोगात्, यं कामयेतापशुः स्यादिति

पराचीं तस्येत्युक्तं पदाभ्यासप्रतिषेध इति सूत्रकारवचनाच्च। यत्र प्रतिपादनीयेऽर्थे ब्राह्मणं प्रदर्शयति तत्र विज्ञायत इत्याहेत्यनुसंधातव्यम् ॥ ९ ॥

**सा या प्राच्युदीची प्रागुदीची वा भवतीषे त्वोर्जे त्वेति तामाच्छिनत्ति ॥ १० ॥**

भा० वृ०--उत्तरा सैव केवला यस्या नान्यदुपस्थितमिति । सा या प्राच्युदीचीति । सेत्युपादानं यस्या नान्यदुपस्थितं सुषिरत्वादि सैव केवला ग्रहीतव्येत्येवमर्थम् । उत्तरेति बहुपर्णामित्युक्त्वा पूर्वनिषिद्धापेक्षयोत्तरा । वृक्षस्य प्राची वोदीची वा ब्राह्मणेऽधिकृतत्वादिति 'ब्रह्म वै पर्णः' इति प्रकृत्य यत्प्राचीमाहरेदिति वृक्षापेक्षा प्राच्याद्यवगतिः । लोके यदनर्थकं तत्पुनरुक्तं तद्वच्च सूत्रकारव्यवहारः । अतोऽन्वादेशेषूपसर्गबहुत्वे च न दोष इति । अस्यार्थः—या प्राची तामाच्छिनत्तीत्याद्यनुबन्धानां प्राप्तार्थानुवादित्वेऽपि न दोषः । उपसर्गशब्दोऽनुबन्धपरः । उपदेशमतादुच्यते परिहारः । या त्वविरुद्धा तामेवाऽऽच्छिनत्ति याऽन्या न च्छिद्यत इतीति । या तामिति पदयोः प्रयोजनम् । यस्यां शाखायां छिद्यमानायां शाखान्तरं न च्छिद्यते पर्णमपि तथाऽमावास्यायां छेदननिषेधस्मृतिरपि अनुग्रहीष्यते । आच्छिनत्त्येकयत्नेनाविश्रान्त इति । अविरुद्धशाखाच्छेदनाभाव एकयत्नेनैकपर्णमात्रस्याप्याच्छेदनमित्युपदेशपक्षः ॥ १० ॥

सू० दी०—सा, एवंगुणा, आहार्या शाखा यस्य वृक्षस्य प्रागादिषु दिक्षु प्रवृत्ता भवति तामाच्छिनत्तीत्यर्थः । भवत्यन्तं न वाक्यं भेत्तव्यम् । या प्राची सा भवतीति वाऽन्वयः ॥ १० ॥

**अपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा ॥ ११ ॥**

भा० वृ०—संनमनमृजूकरणम् । मूलादारभ्याऽऽग्रात्स्पर्शनमनुमार्जनम् । छित्त्वाऽपामुपस्पर्शनम् । छेदनभेदनेत्यादिविधानात् । छिनद्मि संनमयामीति केचिदध्याहरं कुर्वन्त्यपूर्णार्थेष्विति । इषे

त्वा छिनद्मि, ऊर्जे त्वा संनमयामाति । न तु तत् । सूत्रकारेणा-
नुपदेशात् । यथा महेन्द्रयाजिन इत्युपदेक्ष्यते ॥ ११ ॥

इति प्रथमा कण्डिका ।

---

सू० दी०—संनमयत्यृजु करोति वक्रत्वे । इतरथाऽनुलोममनु-
मार्ष्टि ॥ ११ ॥

इति प्रथमा कण्डिका ।

---

**इमां प्राचीमुदीचीमिषमूर्जमभिसꣳस्कृताम् ।**
**बहुपर्णामशुष्काग्राꣳ हरामि पशुपामहमित्याहरति ॥ १ ॥**

भा० वृ०—आहरणमन्त्रः । प्रागुदीच्यामेव शाखायां केचिल्लि-
ङ्गादिति । इमां प्राचीमुदीचीमित्युभयनिर्देशात्केवलप्राच्यामुदीच्यां
वा नोपपद्यत इति । अनिवृत्तिर्वा । कथमुच्यते । भाविप्राक्त्व-
मुदक्त्वमस्याश्चान इति तस्यां प्रागग्रꣳ शाखापवित्रमत्यादधा-
त्युदक्प्रातरित्यस्याधाने यज्ञावि प्राक्त्वमुदक्त्वं च तदनेनोच्यत
इति सर्वपक्षेषु मन्त्र इत्यनूहश्च केवलेऽपि प्रातर्दोहे प्रकृतिस्थस्य
प्रागुदक्त्वस्य संस्तवनादिति । केवले प्रातर्दोहात्मके वायव्यं
पयो भवतीत्यादौ प्रकृतिस्थस्य प्रागुदक्त्वस्य संस्तवात् कथं
वैकृतशाखायां तत्संस्तवोपपत्तिः । जात्येकत्वाच्च संस्तव इति ।
शाखाजात्येकत्वात् । लोके यथा नवेषु लाङ्गलैरेभिर्वयं जीवाम
इति । अप्रवृत्तेष्वपि कर्षणे पूर्वलाङ्गलसजातीयत्वात्संस्तवः ।
तथा त्वया ह्येता संतनोत्यर्धमासानित्यर्धमाससंतानः प्रकृतिस्थ
उच्यते । विकृतावपि वेदस्य कालान्तरे वर्तमानस्य स्तुतित्वेन
तथा च प्रकृतौ, इषमूर्जमभिसꣳस्कृतामिति भूतनिर्देश उप-
पद्यते ॥ १ ॥

सू० दी०—प्रागुदीचीलिङ्गत्वेऽपि मन्त्रस्य प्राच्युदीच्योरपि शाखयो-
रनिवृत्तिः शाखाजात्यभिप्रायेण तत्तदभिधानोपपत्तेः ॥ १ ॥

**वायवः स्थोपायवः स्थेति तया षड-**
**वराध्यान्वत्सानपाकरोति ॥ २ ॥**

भा० वृ०—अपाकरणं मातृभ्यः पृथक्करणम् । तत्र मन्त्रावृत्तिः

प्रतिवत्सम् । एकयत्नेनाशक्यत्वात् । यद्यपि बहुवचनात्संख्यायुक्तत्वं तथाऽपि सकृदनुष्ठानाशक्तेर्बहुवचनस्याविवक्षा । असंभवतां मन्त्रावृत्तिरिति । असंभवे भक्त्यावृत्तिः । अवरोऽर्धो भागः । षट्कृत्व इति । षडवरार्ध्यानिति अर्धशब्दो भागवचनः। अवरार्धसंबन्धिनो वत्सानवरार्ध्यानिति । कुम्भिपरार्ध्या, इति सूत्रान्तरे । अपरभागे निर्दिष्टेऽवरभागापेक्षायां यावत्कुम्भीपूरणसमर्थदोहनगवां वत्सानपाकुर्यादिति सूत्रान्तरवचनम् ॥२॥

सू० दी०—अर्धशब्दोऽत्र स्थानवाची यथाऽस्यार्धं वव्राज त्रिर्दक्षिणार्ध्यमित्यादौ येषामवरे स्थाने षट् संख्या भवति ते षडवरार्ध्याः । तानपाकरोति मातृभ्यः पृथक्करोति । मातृसंगतानां वत्सानां युगपद्दुरपाकरणीयत्वात् । प्रतिवत्सं मन्त्रावृत्तिः । बहुवचनं तु मन्त्रगतमुपरवमन्त्रवत्सर्वापेक्षं द्रष्टव्यम् ॥ २ ॥

दर्भैर्दर्भपुञ्जीलैर्वा ॥ ३ ॥

भा० वृ०—पुञ्जीलः स्तम्बः ॥ ३ ॥

सू० दी०—पुञ्जीलं स्तम्बः ॥ ३ ॥

देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति ॥ ४ ॥

भा० वृ०—गावो यत्र चरन्ति स गोचरस्तदर्थं प्रस्थापयति अघशंसान्तेन मन्त्रेण । देवभागमित्यपि लभ्यते । आर्षपाठस्य दृष्टार्थत्वात् । न तूपदेश इति ब्राह्मणे देवेभ्य एवैना इन्द्रायाऽऽप्याययतीतीन्द्रसंबन्धावगमात् ।अत्रेन्द्रशब्दग्रहणं प्रदर्शनार्थम्। तेषां महेन्द्रो देवतेति महेन्द्रस्यापि स्वशाखोक्तत्वान्मन्त्रपाठे देवताविशेषानिर्देशाच्च । यथाधिकारं व्यवस्थया देवतोपलक्षणम् । बहु दुग्धीति वा विसर्गविधिशेषे यथादेवतमेव प्रसौतीति प्रदर्शनाच्च । इन्द्राय देवभागमित्येके समामनन्ति महेन्द्रायेत्येक इति शाखान्तरोपदेशस्तस्मिन्नपि पक्षे व्यवस्थयोपलक्षणम् । नाऽऽवर्तते प्रतिगु युगपदेकयत्नेन प्रस्थाप्यन्ते गावः । यत्नान्तरेण प्रस्थापने मन्त्रावृत्तिः ॥ ४ ॥

सू० दी०—गावो यत्र चरन्ति तस्मै देशाय यथासमाम्नातेनाघशंसान्तेन मन्त्रेण गाः सर्वा निष्कासयति । वत्सविनाकृतानां गवां युगपच्छक्यनिष्कासनत्वान्नाऽऽवृत्तिर्मन्त्रस्य । यत्र तु न शक्यते तत्राऽऽवृत्तिः ॥ ४ ॥

प्रस्थितानामेकां शाखयोपस्पृशति दर्भैर्दर्भपुञ्जीलैर्वा ॥ ५ ॥

आ० वृ०—शाखयोपस्पर्शनं तूष्णीम् ॥ ५ ॥

सू० दी०—गतः ॥ ५ ॥

आप्यायध्वमघ्न्या इन्द्राय देवभागमेके
समामनन्ति । महेन्द्रायेत्येके ॥ ६ ॥

आ० वृ०—समामनन्ति, परिपठन्त्यन्ये शाखिनः ॥ ६ ॥

सू० दी०—अथ देवो व इत्यादेः प्रस्थापनमन्त्रस्यैव शाखान्तरीयौ कौचित्पाठविकारौ दर्शयति । आप्यायध्वमघ्निया देवभागमिति यथासमाम्नातेन पाठेन द्विप्रकारोऽयं पाठो विकल्पते । अथान्योः पाठयोः सर्वत्र तुल्यवद्विकल्पे प्राप्ते व्यवस्थासिद्ध्यर्थं सामान्येनेन्द्रमहेन्द्रशब्दयोर्देवतापरयोः प्रयोगव्यवस्थामाह ॥ ६ ॥

इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो
महेन्द्रं महेन्द्रयाजिनः ॥ ७ ॥

आ० वृ०—निगमा मन्त्राः । उपलक्षणं क्षेपः ॥ ७ ॥

सू० दी०—निगम्यन्ते येषु हविषः प्रतियोगित्वेन रूपेण देवतास्ते मन्त्रा निगमाः । तेषु सांनाय्यदेवता । निगम इन्द्रयाजिनो यजमानस्येन्द्रं निर्दिशेन्महेन्द्रयाजिनो महेन्द्रमित्यर्थः । एतेन चानन्तरोक्तौ प्रयोगविकल्पावन्ये च कामधुक्ष इत्यादयो निगमा व्याख्याता भवन्ति । एतदेवाभिप्रेत्य निगमेष्विति बहुवचनं कृतमिति वोदितव्यम् ॥ ७ ॥

शुद्धा अपः सुप्रपाणे पिबन्तीः
शतमिन्द्राय शरदो दुहानाः ।
रुद्रस्य हेतिः परि वो वृणक्त्विति
प्रस्थिता अनुमन्त्रयते ॥ ८ ॥

भा० वृ०—इन्द्राय शरद इति नात्र महेन्द्र उपलक्षणीयः । आवर्तमानप्रयोगो यस्मादुच्यते । शतमिन्द्राय शरदो दुहाना इति । शतसंवत्सरसंबन्धिदोहनाभिधानेनाऽऽवर्तमानप्रयोगनिर्देशादसमवेताभिधायित्वात्तदनुमन्त्रणम् । तदभिसंधाय वचनं तन्मुखेनैव ॥ ८ ॥

सू० दी०—अनुपूर्वोऽभिपूर्वश्च मन्त्रयतिस्तदभिसंधाय मन्त्रोच्चारणे प्रयुज्यते । अभिपूर्वस्तु तस्मिन्नेवाऽऽभिमुख्याधिक इत्यपरम् । अत्र केचिच्छतमिन्द्रायेति निगमे महेन्द्रयाजिनो महेन्द्रोपलक्षणं निषेधन्ति । तत्तु न मृष्यामहे पूर्वसूत्रविरोधात् । न चास्यानिगमत्वं शङ्कनीयम् । इन्द्राय दुहाना इति दोहदेवतासंबन्धस्य प्रयोगसमवायिनोऽभिधानात् । तथा च शतमिन्द्रायेति प्रकृत्याऽऽह भारद्वाजः—महेन्द्रायेति वा यदि महेन्द्रयाजी भवतीति ॥ ८ ॥

ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति
यजमानस्य गृहानभिपर्यावर्तते ॥ ९ ॥

भा० वृ०—गृहानभिपर्यावर्तते, गृहाभिमुखः पर्यावर्तते ॥ ९ ॥

सू० दी०—अभिपर्यावर्ततेऽभिमुखः प्रतिनिवर्तते ॥ ९ ॥

यजमानस्य पशून्पाहीत्यग्निष्ठेऽनस्यग्न्यागारे वा पुरस्तात्प्रतीचीꣳ शाखामुपगूहति पश्चात्प्राचीं वा ॥ १० ॥

भा० वृ०—अग्न्यागारे यत्तिष्ठति निर्वपणार्थमनस्तदग्निष्ठम् । अग्नीनामागारमग्न्यागारम् । पुरस्तादनसोऽग्न्यागारस्य वा पुरस्तात्प्रतीचीं प्रत्यगग्रामपरतो वा प्रागग्रामुपगूहति । अप्रकाशं करोति मूलतो निधानं संस्कारो गोः प्रस्थापने पालनेन कृता-

र्थाया: शाखायाः पशूनां गोपीथायेति लिङ्गात्। उपगूहनं संस्कारो गोप्रस्थापनार्थः शाखायाः। अतः पशौ निवृत्तिः॥१०॥

सू० दी०—अग्निसमीपस्थमनोऽग्निष्ठं यद्वक्ष्यति शकटमवस्थितं भवतीति। तस्मिन्नन्यगारे वा पुरस्तात्प्रतिपद्य प्रत्यग्गतामुपगूहति पश्चाद्वा प्रतिपद्य प्राग्गतामित्यर्थः। पुरस्ताद्भागेऽनसः प्रत्यगग्रां पश्चाद्भागेऽनसो वा प्रागग्रामित्यन्ये। शाखानिधानं भाव्युपयोगार्थं न वत्सापकरणशेषः। तेन पशावपि भवत्येव॥ १०॥

अथेदानीमुत्तरोत्तरेष्वनुष्ठेयेष्वृत्विजामप्रमादार्थं कर्मानुसंधानप्रशंसां ब्राह्मणोक्तामुदाहरति—

**यो वा अध्वर्योर्गृहान्वेद गृहवान्भवति। आ चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीत्येते वा अध्वर्योर्गृहाः। य एवं वेद गृहवान्भवतीति विज्ञायते॥ ११॥**

भा० वृ०—यो वा अध्वर्योर्गृहान्वेदेत्यस्यार्थमाह—अध्वर्युरस्य नेता तस्य यो यजमानो गृहान्वेद कर्माणीति। गृहशब्दः कर्मणि वर्तते। अध्वर्योः कर्मणां यजमानेन वेदनं कर्माङ्गम्। तस्यापि गृहाः कर्माणि महाफलवन्ति भवन्तीति फलस्तुतिः। न फलविधिः कर्माङ्गत्वाज्ज्ञानस्य न ह्युभयं कुर्यात्। क्रतूपकारं फलं चान्तरेण वचनमतो नित्यवद्यजमानेन कर्मवेदनं कर्तव्यम्। फलेच्छया विनाऽपि यानि त्वनिबद्धानि सूत्रकारेण यो वै सप्तदशमित्येवमादीनि तान्यपि याजमानानि फलसंस्तुतेरनियतानीति य एवं वेद प्रतियज्ञेन तिष्ठति न यज्ञाद्भ्रंशत इति सप्तदशत्ववेदनस्य फलसंबन्धावगमाद्याजमानत्वम्। सूत्रकारेणानिबन्धनादनित्यत्वम्। यो वा अध्वर्योरिति तु सूत्रकारेण निबन्धनेऽपि कर्मणामङ्गतया नित्यत्वात्फलार्थवादः। समीक्षणमध्वर्योः स्वकर्मणां ध्यानम्। प्रणयनं कृत्वाऽग्नीनन्वाधास्ये। ततः शाखाहरणम्। ततो वत्सापाकरणम्। करिष्यामीत्येवं चतुर्णामिष्टिपशुबन्धसोमेषु ध्यानमेवमेते कर्मपदार्था अध्वर्योर्गृहा इति। अभिसमीक्षणमाध्वर्यवं तेषां वेदनं याजमानम्। तत्र वेदने चतुःसंख्या-

नियमो नास्ति। यत्राविकृतं ब्राह्मणमुच्चारयति प्रत्यक्षं पठ्यमानं तत्र विज्ञायत इत्याह सूत्रकारः। उक्तं चेति त्रयो वै गताश्रिय इत्युक्तमित्यादिषूक्तामिति निर्देशेऽपि प्रत्यक्षब्राह्मणपाठोपन्यास उक्तं चेति। अत्रापि चेत्यर्थः। पदार्थप्रमाणकं कर्मेति। आ चतुर्थात्कर्मण इति कर्मशब्दः पदार्थपरः। अतः शाखाहरणपदार्थश्छेदनाद्याहरणान्तः। एवमन्येऽपि पदार्थाः साङ्गप्रधानाः। एकैकं कर्मवाचि तत्पदमध्वरवाचीति। अध्वरशब्दस्य सोमयागवाचित्वादध्वर्युरध्वरस्य नेतेति दर्शपूर्णमासकर्तरि गौणतयौचित्येन वर्तत इति ॥ ११ ॥

इति द्वितीया कण्डिका।

कौशिकेन रामेणाग्निचिता कृतायामापस्तम्बसूत्रधूर्तभाष्यवृत्तौ प्रथमः पटलः ॥ १ ॥

सू० दी०—योऽध्वर्युरध्वर्योर्गृहान्वेद स गृहवान्भवति। के तेऽध्वर्योर्गृहाः। अग्नीनन्वाधास्यामि शाखामाहरिष्यामीत्येवमा चतुर्थात्कर्मणोऽभिसमीक्ष्य येऽनुसंधीयन्ते पदार्थास्तेऽध्वर्युगृहाः। य एवं वेद य एतेऽध्वर्युगृहा इति वेद सोऽपि गृहवान्भवतीत्यर्थः। तत्र तु वेदनस्य परार्थत्वात्फलवचनं प्ररोचनार्थं यथा यो वा अध्वर्योः प्रतिष्ठां वेद यो वा अध्वर्योः स्वं वेद यो वा अध्वर्योरायतनं वेदेत्यादौ। ततश्चैवं न शङ्कितव्यं यजमानस्यैवेदमेवं विदुषः फलमिति। चतुर्थग्रहणं यावच्छक्यस्योपलक्षणमनुसंधानाधिक्ये गुणाधिक्यात्। तथाऽध्वर्युग्रहणमपि सर्वर्त्विजामुपलक्षणमुपयोगसाम्यात् ॥ ११ ॥

इति द्वितीया कण्डिका।

इति प्रथमः पटलः ॥ १ ॥

---

उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहिता ॥ १ ॥

भा० वृ०—उत्तरेण गार्हपत्यमित्येनप्प्रत्ययोऽदूरवाची। अदूरेणोत्तरतो गार्हपत्यस्यासिदो दात्रकः। पर्शुः पार्श्ववङ्क्रिरश्वस्य। अनो वहतीत्यनड्वान् ॥ १ ॥

सू० दी०—असिदो दात्रम्। पर्शुः पार्श्वास्थि ॥ १ ॥

देवस्य त्वा सवितुः प्रसव इत्यसिदमश्वपर्शुं वाऽऽदत्ते । तूष्णीमनडुत्पर्शुम् ॥ २ ॥

भा० वृ०—यदि नोच्येत तूष्णीमनडुत्पर्शुमिति। अर्थान्नीयेतान्येनापि लवनार्थं नाध्वर्युरादद्यादादानकाले। अतोऽध्वर्युरादद्यात्तूष्णीमिति विधिः। वाग्यत आदद्यादित्युपदेश इति। तूष्णींग्रहणं वाग्यमनार्थमिति। अर्थप्राप्तमादानमनूद्यासिदे मन्त्रनियमादेष हि चेष्टानां कर्ता भवतीति वचनाच्चान्तरेणापि तूष्णींग्रहणमध्वर्युणैवानडुत्पर्शुरादीयते मन्त्रश्च निवर्तत इति ॥ २ ॥

सू० दी०—गतौ ॥ २ ॥

यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति ॥ ३ ॥

भा० वृ०—अभिमन्त्रणं प्रतितपनार्थं तस्मादाहवनीयस्यापि यदि तस्मिंस्तपनं क्रियते तस्यैव चोत्तरतो विधानम्। गार्हपत्यग्रहणं त्वसिदाभिमन्त्रणानिवृत्त्यर्थम्। प्रकृतत्वात्तदभिमन्त्रणप्राप्तेः। उपवेषमादाय रक्षसः पाणिं दहाहिरसि बुध्निय इतिवत्। प्रतितपन एव वा विकल्पः। निधानमुत्तरतो गार्हपत्यस्यैवाभिमन्त्रणं च। यत आहवनीये हविःश्रपणपक्षे शूर्पाग्निहोत्रहवण्योस्तत्रैव तथा प्रयोगदर्शनम्। आहवनीयहोमपक्षे होमाङ्गानामपि शुन्धनपरिस्तरणादीनामितरयोर्दर्शनाद्धिरण्यकेशिमताच्च ॥३॥

सू० दी०—यदाऽप्याहवनीये प्रतितप्स्यति तदाऽप्यभिमन्त्रणं गार्हपत्यस्यैव प्रतितपन एव विकल्पवचनात् ॥ ३ ॥

न पर्शुम् ॥ ४ ॥

भा० वृ०—पर्शोस्तपनप्रतिषेधाद्वैकल्पिकोऽस्मिन्विधिरुपदिष्टः सर्वार्थो भवतीति ख्याप्यत इति। उपदेश एष साधारणः। यथा व्रीहिधर्मोपदेशो यवेषु ॥ ४ ॥

सू० दी०—प्रतितपतीति शेषः । अत एव प्रतिषेधाज्जानीमो यदे-कत्रानेकसाधनविकल्पेषु मुख्ये कृतो विधिः सर्वार्थो भवतीति ॥४॥

प्रेयमगादित्युक्त्वोर्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिरा-हरति ॥ ५ ॥

भा० वृ०—स्त्रीलिङ्गनिर्देशात्प्रेयमगादित्यसिदे मन्त्रनिवृत्तिः । मानवी हि पर्शुः स्वधाकृतेति लिङ्गादिति पर्शुलिङ्गात्स्त्रीलिङ्ग-निर्देशाच्चासिदे मन्त्रनिवृत्तिः । केचिदनिवृत्तिर्वाऽसिदे मन्त्र-स्येत्याहुः । असिदाकृतेरपि मनुना कृतत्वान्मनुष्यकृतत्वादन्नमय-त्वाच्चेति अन्नसाधनत्वात्स्वधाकृतेति स्वधामन्नं लवनादिना करोतीति कर्तृनिष्ठा मनुना कृतेत्यसिद एव मुख्यत्वादिति पर्शौ मनुजातेति योगेन प्रजापता वर्तत इति द्रव्यगुणो हि लिङ्गम् । अतो लिङ्गादरोऽसिदे । अदितिः पाशान् प्रमुमोक्तु इति मन्त्र एकस्मिन्पशुपाशमोचने बहुवचनमनादृतं तद्वत् । पाशानितिवत् । प्रकृत्यर्थान्वयानुपपत्तेः । उभौ गमनार्थौ मन्त्रौ । यौ गम-नार्थाविति वचनादिति प्रेयमगादित्युक्त्वोर्वन्तरिक्षमन्विहीति । प्राचीमुदीचीं वा दिशमभिप्रव्रजतीति उर्वन्तरिक्षमन्त्रस्यैव प्रव्रज-नार्थत्वमित्याशङ्क्याऽऽह । उभौ गमनार्थौ प्रतिगमने यौ गमना-विति प्रकृतिद्वित्वनिर्देशात् । उक्त्वेति मन्त्रयोरसंधानार्थं पाठतो मन्त्रविच्छेदेऽपि एककार्यत्वादुभयोः संश्लिष्टप्रयोग-शङ्कायां विच्छिद्य प्रयोगार्थमुक्त्वेति निर्देशः । अतोऽन्यत्रै-ककार्याणां मन्त्राणां नानादेशाधीतानामपि प्रश्लिष्टपाठो गम्यते । शाखापर्णलोचनयोक्त्वेत्यस्य प्रयोजनान्तरमेवेत्याह—अस्माकं त्विति । अस्माकं तु अथो यदेतदुक्तेति वाक्यशेषेण पुरस्ताद्दे-वेभ्यो जुष्टमिति मन्त्रे पुरस्तादिति वचनाद्दिगन्तराद्बर्हिराहरणे मन्त्रस्याप्राप्तिशङ्कायां मन्त्रप्रयोगेणैव प्राचीत्वसंपादनम् । उर्व-न्तरिक्षमन्विहीति प्रत्यायनाङ्गत्वादिति लवनोत्तरकालप्रतिनिव-र्तने विनियोगात् । एवमेव भारद्वाजमतिश्च । यतः कुतश्चेतिदिङ्-नियमो नास्ति ॥ ५ ॥

सू० दी०—प्रथमं विहारात्प्राचीमुदीचीं वा दिशमभिप्रव्रज्य ततो यतः कुतश्चिद्दिशो दर्भमयं बर्हिराहरति यतो लभ्यते। बौधायनस्त्वाह—आहवनीयादेवाग्रे त्रीन्वा चतुरो वा प्राचः प्रक्रमान्प्रक्रम्याथ तां दिशमभिप्रव्रजेद्यत्र बर्हिर्वेत्स्यन्मन्यत इति। प्रेयमगादित्यपि गमनमन्त्र एव तल्लिङ्गत्वात्। यौ गमनावित्युत्तरत्रानुवादाच्च। किमर्था तर्ह्युक्त्वेत्यधिकोक्तिः। उच्यते—मन्त्रसमाम्नाये हि द्वितीयो मन्त्रः प्रत्यागमनक्रमे पठितो न गमनक्रमे कल्पान्तरकारैश्च तावुभयत्र व्यवस्थया विकल्पेन च विनियुक्तौ। आचार्यस्तूभयोरुभयत्र समुच्चयं मन्यते। तेन यत्नं कृतवानेतत्प्रथममुक्त्वा ततोऽनेन प्रव्रजतीति। अथवा यतः कुतश्च बर्हिराहरणेऽपि पुरस्ताद्बर्हिरासद इति मन्त्रार्थवशेन पुरस्तादाहरणगुणसिद्धिर्ब्राह्मणे दर्शिता। अथो यदेतदुक्त्वा यतः कुतश्चाऽऽहरति तत्प्राच्या एव दिशो भवतीति तस्यैवार्थमनुकरोत्याचार्यः प्रेयमगादित्युक्त्वा यतः कुतश्चाऽऽहरतीति। स चायं मन्त्रः स्त्रीलिङ्गादसिदे नीयमाने निवर्तेत इति केचित्। तदयुक्तं तूष्णीमनडुत्पर्शुं न पर्शुमिति पर्श्वसिदयोरभिप्रेतविशेषवचनादवचनाच्चात्र विशेषस्य। न च स्त्रीलिङ्गविरोधः, धिषणाभिधानात्। यथोक्तं ब्राह्मणे विद्या वै धिषणा विद्ययैवैनदच्छैतीति। यदपि पर्शुविधानबलाद्धिषणाशब्दो गुणवृत्त्या पर्श्वभिधायीष्यते तथैवेष्यतामसिदेऽपि। न च तत्रासिदे वैलिङ्ग्यं दोषाय धिषणात्वेन तस्योपचारात्। असिदाकृतिविवक्षया व्यत्ययेन वा स्त्रीलिङ्गोपपत्तेः। यदप्यस्या विशेषणं मनुना कृतेत्यादि तदप्यविशिष्टमेवोभयोस्तस्मादनिवृत्तिरुभयत्रापि मन्त्रस्य॥ ५॥

देवानां परिषूतमसीति दर्भान्परिषौति॥ ६॥

भा० वृ०—परिषवणं सवनाय परिग्रहचिह्नैः स्वीकारः॥ ६॥

सू० दी०—परिषौति यावता पर्याप्तं तावत्परिगृह्णाति॥ ६॥

विष्णोः स्तूपोऽसीत्यभिप्रेतानामेकं स्तम्बमुत्सृजति॥ ७॥

भा० वृ०—अभिप्रेताः परिगृहीताः। अच्छिन्नस्योत्सर्गबुद्ध्येदं

पशूनामिति लिङ्गादिति । पशूनां भक्षणार्थत्वादच्छिन्नस्यैव मनसोत्सर्ग इदं पशूनामिति ॥ ७ ॥

सू० दी०—तेषां लाव्यत्वेनाभिप्रेतानां मध्ये स्तम्बं त्वेकमुत्सृजति यथा न लूयते तथा बहिष्करोतीत्यर्थः ॥ ७ ॥

एकं वा स्तम्बं परिषूय तं सर्वं दाति ॥ ८ ॥

भा० वृ०—एकस्तम्बपरिषवणे नोत्सर्गो नाभिमर्शनमिदं देवानामिति असंदेहात्कृत्स्नस्य देवतार्थत्वात् । यथा—इदमग्नेरित्याग्नेये न केवल इति । यथाऽमावास्यायाᳫ संनयत इदमग्नेरित्यभिमर्शननिवृत्तिः । केचित्कुर्वन्तीहाभिमर्शनम् । हविषोर्युगपदवच्छेदात्संदेह इति । हविर्द्वयस्य युगपद्विभागात्संदेहो भवति । अतस्तत्परिहाराय पृथग्देवतानिर्देशविधानात् । असंदेहार्थस्येदमग्नेरित्यस्यैकपुरोडाशे निवृत्तिरसंदेहात् । इह त्वसंदिग्धे क्रियत इति बर्हिषि तु उत्सृष्टादन्यस्य लवनार्थस्य देवतार्थत्वेनासंदिग्धत्वेऽपि, इदं देवानामिति निर्देशविधानाददृष्टार्थत्वादेकस्तम्बपरिषवणेऽपि, इदं देवानामिति निर्देशः कर्तव्य इति केचित् ॥ ८ ॥

सू० दी०—एकमूलप्रभवो दर्भसमूहः स्तम्बः । तावत्सर्वं छिनत्ति न तु किंचिदुत्सृजति, अन्ये त्वपरिषूता एव लूयन्त इत्यर्थः ॥ ८ ॥

अतिसृष्टो गवां भाग इति वैकां द्वे तिस्रो वा नाडीरुत्सृजतीदं देवानामिति परिषूतानभिमृशति । इदं पशूनामित्यतिसृष्टान् ॥ ९ ॥

भा० वृ०—नाडी मुष्टिः शलाका वा । एकस्तम्बपरिषवणे नोत्सृज्यते पुनरुपन्यासः किमर्थः । उच्यते । तᳫ सर्वं दातीत्युक्त्वाऽतिसृष्टो गवां भाग इति वैकामिति विकल्पेनोत्सर्जनविधानादेकस्तम्बेऽपि पाक्षिकोत्सर्जनशङ्कायां पुनरुपन्यासः । अतिसृष्टो गवां भाग इत्यादेरनेकस्तम्बेष्वन्यतरोत्सर्गे मन्त्रविकल्पार्थत्वान्नैकस्तम्बपरिषवणे प्राप्तिः ॥ ९ ॥

अतिसृष्टो गवां भाग इति वैकां द्वे तिस्रो वा नाडीरुत्सृजति ॥ ९ ॥

सू० दी०—नाडी शलाका ॥ ९ ॥

इदं देवानामिति परिषूतानभिमृशति ।

इदं पशूनामित्यतिसृष्टान् ॥ १० ॥

सू०दी०—अनुत्सर्गपक्षेऽपि भवत्येव परिपूतस्तम्बाभिमर्शनं बर्हिःसंस्कारत्वात् ॥ १० ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभ इति विशाखेषु दर्भानारभते ॥ १० ॥

भा०वृ०—स्पष्टम् ॥ १० ॥

सू०दी०—विशाखाः प्रकाण्डादूर्ध्वभागाः। यतः शलाकाः पृथग्भवन्ति तेष्वारभत आलभते स्पृशतीति यावत् ॥ १० ॥

देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यगिति संयच्छति ॥ ११ ॥

भा०वृ०—संयच्छति गृह्णाति सव्यहस्तेन ॥ ११ ॥

सू०दी०—संयच्छति लवनानुगुणं सव्यमुष्टिना गृह्णाति ॥ ११ ॥

पर्व ते राध्यासमित्यसिदमधिनिदधाति ॥ १२ ॥

भा०वृ०—यत्परुषि दिनमिति लिङ्गात् पर्वण्यधिनिदधाति ॥ १२ ॥

सू०दी०—पर्वणि निदधाति यत्परुषि दिनं तद्देवानामिति श्रुतेः। पर्व ते राध्यासमिति मन्त्रवर्णाच्च ॥ १२ ॥

आच्छेत्ता ते मा रिषमित्याच्छिनत्ति संनखं मुष्टिं लुनोति स प्रस्तरः ॥ १३ ॥

भा०वृ०—स्पष्टम् ॥ १३ ॥

आच्छेत्ता ते मा रिषमित्याच्छिनत्ति ॥ १४ ॥

सू०दी०—गतः ॥ १४ ॥

संनखं मुष्टिं लुनोति ॥ १५ ॥

सू०दी०—संनखं संगताङ्गुल्यङ्गुष्ठनखं तावत्प्रमाणमित्यर्थः। लुनोति लुनाति विकरणव्यत्ययः ॥ १५ ॥

स प्रस्तरः ॥ १६ ॥

सू०दी०—सोऽयं प्रथमलूनो मुष्टिः प्रस्तरः समाख्यायते ॥ १६ ॥

कुल्मिमात्रोऽरत्निः प्रादेश ऊर्वस्थि जान्वस्थि स्रुग्दण्ड इति वा तिर्यक्प्रमाणानि ॥ १७ ॥

भा०वृ०—कुल्मिर्गोपुच्छो गोग्रासो वा । अरत्निरन्तरस्थौल्यं प्रस्तरस्य मध्यमस्थौल्यमरत्निः स्थौल्यप्रमाणम् । द्वादशाङ्गुलविस्तारः प्रादेशः सामर्थ्यादिति तदर्थः । प्रादेश इतिनिर्देशसामर्थ्यात् । ऊर्वस्थि ऊरोरस्थि जानोरस्थि जान्वस्थि स्रुचो दण्डः स्रुग्दण्ड इति । इति तिर्यक्प्रमाणानि प्रस्तरस्थौल्यस्य न तु दैर्घ्यत्वस्य ॥ १७ ॥

इति तृतीया कण्डिका ॥

---

सू०दी०—कुल्मिर्गोवालः । अरत्निर्हस्तस्य पूर्वभागः । प्रादेशः प्रदेशिन्यङ्गुष्ठयोरायामः । स चात्र सामर्थ्यात्संनखवन्मण्डलीकृतः संनिवेशो गृह्यते । अरत्नि प्रादेश इति पठतां विसर्जनीयः प्रमादभ्रष्टः । ऊरोरस्थि ऊर्वस्थि । तिर्यक्प्रमाणानि स्थौल्यप्रमाणानि । तानि च संनखप्रमाणेन विकल्पन्ते ॥१७॥

इति तृतीया कण्डिका ।

---

पृथिव्याः संपृचः पाहीत्यनधो निदधाति ॥ १ ॥

भा० वृ०–अधो भुवि नाधोऽनधः, उपरिष्टान्निदधाति न भूमौ ॥ १ ॥

सू० दी०— अनधोऽभूमौ ॥ १ ॥

अयुजो मुष्टीर्लुनोति तथा निधनानि ॥ २ ॥

भा० वृ०–न युजोऽयुजः । विषमाणि निधनानि च । लुनोति लुनाति । लुनातीति वक्तव्य ओकारश्छान्दसः ॥ २ ॥

अयुजो मुष्टीर्लुनोति ॥ २ ॥

सू० दी०—अयुजोऽयुग्मान् ॥ २ ॥

तथा निधनानि ॥ २ ॥

सू० दी०—निधनानि मुष्टीनां रात्र्यपस्तानि चायुञ्जि भवन्तीत्यर्थः ॥ ३ ॥

तेषां प्रस्तरोऽयुगर्थ इत्येके ॥ ३ ॥

भा० वृ०—अयुजः प्रस्तरेणेत्येके समा मुष्टयो निधनानि च प्रस्तरेण विषमत्वमिति। तेषां प्रस्तरोऽयुगर्थ इत्येक इत्यस्यार्थः ॥ ३ ॥

सू० दी०—तेषां मुष्टीनां निधनानां च प्रस्तरेण विना युग्मानां सतां प्रस्तरोऽयुगर्थोऽयुग्भावार्थः । न तु प्रस्तररहितानामयुक्त्वमित्येके मन्यन्ते। न तथा वयमिति भावः। कथं तर्हि यूयं मन्यध्वे। अत आह ॥ ४ ॥

प्रस्तरे याथाकामी ॥ ४ ॥

भा० वृ०—अस्यार्थ उच्यते। यथाऽस्य काम इच्छा तथा प्रयुक्तः इति। कर्तुर्यथाकामित्वमध्वर्योः। इह वा प्रस्तरं प्रथमं मुष्टिं करोति। विष्णोस्तूपोऽसीति वा पूर्वस्माद्भागात्पुरस्तात्प्रस्तरं गृह्णातीतीह वा लवनकाले परिगृहीतबर्हिषां पूर्वभागे प्रस्तरलवनम्। विष्णोस्तूपोऽसीति स्तरणकाले वा वेदः पूर्वस्यां दिशि पुरस्तात्प्रस्तरं गृह्णाति। इयन्तं गृह्णातीति श्रुतेः। अन्ये त्वाहुः—प्रकृतिभ्योऽपि परिमाणेभ्योऽन्यत्परिमाणं लभ्यत इति सर्वस्य कृत्वा परिपवणम् ॥ ४ ॥

सू० दी०—प्रस्तरेऽयुगर्थत्वं प्रति याथाकामी याथाकाम्यं सह वा प्रस्तरेणायुक्त्वमस्तु विना वा प्रस्तरेण। न त्वेकतरपक्षनिर्धारणाय प्रभवामः। अयुञ्जायुञ्जान्मुष्टीँल्लुनोतीति श्रुत्यर्थस्य विशयित्वादिति भावः। भारद्वाजश्चाऽऽह—प्रस्तरो युग्म इत्येकेषामयुग्म इत्येकेषामिति ॥ ५ ॥

यदन्यत्परिषवणाद्धुत्सर्जनाच्च तत्सर्वत्राऽऽवर्तते ॥ ५ ॥

भा० वृ०—स्पष्टम् ॥ ५ ॥

सू० दी०—सर्वत्र सर्वेषु मुष्टिषु दर्भालम्भनाद्यावर्तते ॥ ६ ॥

प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति वाजसनेयकम् ॥६॥

भा० वृ०—प्रस्तर एव मन्त्रेण लूयत एकस्तम्बपरिषवणेऽपि अपरिगृहीता अपि मन्त्रेण लूयन्ते । भगवता भारद्वाजेनैवमुक्तम्—छिन्ने छेदनमन्त्राः, लूने लवनमन्त्राः, दुग्धे दोहनमन्त्राः, पिष्टे पेषणमन्त्राः प्रयोक्तव्या इति । अत्रार्थलुप्ताः पदार्था निवर्तन्ते । अतोऽत्रैव बर्हिराहरणेऽसिदादानादीनि निवर्तन्ते । छिन्ने छेदनाभावाद्दृष्टार्थत्वाच्छेदनस्य तन्निवृत्तौ तत्संस्काराश्च निवर्तन्त प्रस्तरतो निधानादयः । मन्त्रास्तु प्रयुज्यन्ते । एवं सर्वत्र ॥ ६ ॥

सू० दी०--इतरन्मुष्टिजातम् ॥ ७ ॥

सत्रं लुत्वा देवबर्हिः शतवल्शं विरोहेत्यालवानभिमृशति ॥ ७ ॥

भा० वृ०—आलवाः सच्छेदाः, छिन्नानि मूलानि ॥ ७ ॥

सू० दी०—लुत्वेति ह्रस्वश्छान्दसः । येषु काण्डेष्वालूना दर्भास्त आलवाः ॥ ८ ॥

सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानम् ॥ ८ ॥

भा० वृ०—अभिमृशतीति शेषः ॥ ८ ॥

सू० दी०—गतः ॥ ९ ॥

अदित्यै रास्नाऽसीति त्रिधातु पञ्चधातु वा शुल्बं करोति ॥ ९ ॥

भा० वृ०—अदित्यै रास्नाऽसीति रज्ज्ववयवाभिधानान्मन्त्रावृत्तिः । प्रतिनिधानव्यवायाच्च ॥ ९ ॥

सू० दी०—धातुः संधिः । शुल्बमेकसरा रज्जुः । यानि शुल्बानि समासं गच्छन्तीति लिङ्गात् । अत्राऽऽह भारद्वाजः—धातौ धातौ मन्त्रमावर्तयतीति । तथा तत एव बर्हिषः शुल्बं करोतीति च ॥ १० ॥

अयुपिता योनिरिति प्रतिदधाति ॥ १० ॥

भा० वृ०—स्पष्टम् ॥ १० ॥

सू० दी०—प्रतिदधाति संदधाति ॥ ११ ॥

अदित्यै रास्नाऽसीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्यालुभिता योनिरित्युत्तमे निधने प्रस्तरमत्याधायेन्द्राण्यै संनहनमिति संनह्यति ॥ ११ ॥

भा० वृ०—सुसंभृतेति चाऽऽवृत्तिः प्रतिनिधनम् । अलुभितेत्यन्त्यस्य निधनस्योपरिष्टात्प्रस्तरं निदधाति ॥ ११ ॥

सू० दी०—निधनानामेकैकस्य संभरणं त्वेत्येकवचनात् ॥ १२ ॥

पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति ॥ १२ ॥

भा० वृ०—स्पष्टम् ॥ १२ ॥

सू० दी०—गतः ॥ १३ ॥

स ते मा स्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा ॥ १३ ॥

भा० वृ०—प्रत्यञ्चं ग्रन्थिं प्रत्यक् क्रियापरिसमाप्तिः ॥ १३ ॥

सू० दी०—शुल्बादधः पुरस्ताद्भागेन प्रत्यग्गमयति, ग्रन्थिम् । प्राग्वा पश्चाद्भागेन ॥ १४ ॥

आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभ इति बर्हिराराभत इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते । बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधिनिधत्ते ॥ १४ ॥

भा०वृ०—आरभत आलभते । शिरस्येव निधानम् । न दर्भादिव्यवधानेन ॥ १४ ॥

सू०दी०—आरभते, आलभते । शीर्षन्, शिरसि ॥ १५ ॥

इति चतुर्थी कण्डिका ।

---

प्रेयमगादुर्वन्तरिक्षमन्विहीति यौ गमनौ तौ प्रत्यायनौ ॥ १ ॥

भा०वृ०—व्याख्यातौ ॥ १ ॥

सू०दी०—याभ्यामेताभ्यां प्राग्गमनमुक्तं प्रत्यागमनेऽपि द्वावपि तौ भवतः। न तु क्रमानुसाराद्द्वितीय एवेति भावः ॥ १ ॥

अदित्यास्त्वोपस्थे सादयामीत्यन्तर्वेदि परिधिदेशेऽनधः सादयति ॥ २ ॥

भा०वृ०—अन्तर्वेदि समीपे यः परिधिदेशो मध्यमस्य पश्चिमे प्रदेशे निदधाति ॥ २ ॥

सू०दी०—अन्तर्वेदि सादयति। कुत्र प्रदेशे। परिधिदेशे। समीपे सप्तमी चेयं मध्यमपरिधिस्थानसमीप इति ॥ २ ॥

बर्हिरसि देवंगममित्यासन्नमभिमन्त्रयते देवंगममसीत्यनधो निदधाति यथा प्रागुपसादयेत् ॥ ३ ॥

भा०वृ०—यथा प्रागुपसादयेदित्यस्यार्थः—यथोपसादने क्रियमाण उत्तरं बर्हिः प्राग्भवत्यप्रयत्नेनानधो निधानदेशात् ॥ ३ ॥

सू०दी०—यथोपसादनकाले प्राचीनमुपसादयितुं योग्यं भवति तथा निदधाति बर्हिपस्त्वाहरणेऽनुग्रहमाह बौधायनः—आहृतं वा यजुषा करोतीति। कात्यायनश्चाऽऽह—खातलूनच्छिन्नावहतपिष्टदुग्धदग्धेषु यजुष्क्रियासंभवादिति। बर्हिरसि देवंगममित्यादि स्पष्टार्थम् ॥ ३ ॥

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा। तासां पर्व राध्यासं परिस्तरमाहरन्। अपां मेध्यं यज्ञियꣳ सदेवꣳ शिवमस्तु मे। आच्छेत्ता वो मा रिषं जीवानि शरदः शतम्। अपरिमितानां परिमिताः संनह्ये सुकृताय कम्। एनो मा नि गां कतमच्च-नाहं पुनरुत्थाय बहुला भवन्त्विति परिस्तरणाना-

## मधिनिधान्याच्छेदनी संनहनीति यथालिङ्गम् ॥ ४ ॥

भा०वृ०—परिस्तरणानामधिनिधानच्छेदनसंनहनानि यथा लिङ्गेषु क्रियन्ते न मन्त्रान्त इत्युपदेश इति अधिनिधान्याच्छेदनीति निर्देशक्रमादेव मन्त्रव्यवस्थासिद्धौ परिभाषासिद्धमन्त्रान्तकर्मसंनिपातस्यापवादत्वेन यथालिङ्गवचनमतस्तल्लिङ्गाभिधानसमये क्रियानुष्ठानमिति । अथवा यथालिङ्गवचनमनुवादमात्रम् । मन्त्रान्त एव क्रियानुष्ठानमन्तरेणापि लिङ्गवचनं यथालिङ्गं विनियोगो भवतीति सूत्रकारेणानुक्तेऽपि मन्त्रसामर्थ्येन विनियोगो भवति । यथा—अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्यै, अभिमर्शने वैकल्पिकं भवतीति इदमग्नेरित्याग्नेयमित्याद्यभिमर्शनं मन्त्रेण विकल्पते । अग्नये त्वाऽग्नीषोमाभ्यामिति मन्त्रसामर्थ्यादग्नीषोमाभ्यामित्यत्रापि त्वेत्यनुषङ्गेणार्थावगमः । तद्वदत्रापि सामर्थ्यतो विनियोगसिद्धिर्यथालिङ्गवचनमनुवादः । अतो मन्त्रान्तेन क्रियादिसंनिपातः । लिङ्गविनियोगेऽपि कृत्स्नमन्त्रस्य करणत्वात् ॥ ४ ॥

सू०दी०—यथासंख्येनैव सिद्धे यथालिङ्गवचनं लिङ्गविनियोगमासां दर्शयितुं विस्पष्टार्थं वा ॥ ४ ॥

## खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति ॥ ५ ॥

भा० वृ०—अभिन्नं दारु सशकलान्दारूणि वाऽऽहरन्निति व्यपदेशादिति दारुशकलयोः पृथग्व्यपदेशादेकविंशतिदारुरिध्मः खादिरः पालाशो वा । अतः पुनर्वचनाद्वैभीतक इध्मे परिधयोऽपि वैभीतका एवेति परिधीनां पालाशकार्ष्मर्यखादिरेति वृक्षनियमे सत्यपि खादिरं पालाशं वैकविंशतिदारुमिध्ममिति परिधिसहितस्येध्मस्य पुनर्वृक्षवचनादिध्मवृक्षः परिधीनामपि भवति । अतो वैभीतक इध्मे ब्राह्मणस्पत्यं तूपरमित्यादिषु परिधयोऽपि वैभीतकाः । अवभृथे च निवृत्तिरिति । इध्मेन सहैकविंशतिसंख्यानिर्देशादवभृथे परिधिसंभवेऽपीध्माभावान्निवृत्तिः । सर्वत्रैवेध्माभावे गृहमेधीयादिष्वपि ॥ ५ ॥

सू० दी०—दार्वभिन्नं काष्ठं सशकलान्दारूणि वेति दर्शनात् । ब्राह्मणे त्वेकविंशतिरिध्मदारूणि भवन्तीति प्रकृत्य पञ्चदशेध्मदारूण्यभिदधाति त्रीन्परिधीन्परिदधाति ऊर्ध्वे समिधावादधाति अनूयाजेभ्यः समिधमतिशिनष्टीत्येकविंशत्या विभाग उक्तः । तमिदानीं विवक्षयंस्तत्र पञ्चदश सामिधेन्यो दर्शपूर्णमासयोरित्यादिना विभागसिद्धिमुपजीव्यावशिष्टस्य षट्कस्य विभागं दर्शयति ॥ ६ ॥

त्रयः परिधयः ॥ ६ ॥

भा० वृ०—स्पष्टम् ॥ ६ ॥

सू० दी०-तेषु त्रयः परिधानार्थाः परिधय इति समाख्यानात् ॥ ७ ॥

पालाशकार्ष्मर्यखदिरोदुम्बरबिल्वरोहीतकविकङ्कतानां ये वा यज्ञिया वृक्षाः ॥ ७ ॥

भा० वृ०—कार्ष्मर्यः श्रीपर्णी रोहीतको वटाकृतिर्ह्रस्वपर्णः, विकङ्कतः, गोपर्णः । अनिध्मवृक्षस्यापि कार्ष्मर्यादेः परिधिषूपदेशात्पालाशादिभिर्विकल्पः । उक्तानामभावे यज्ञियाः ॥ ७ ॥

सू० दी०—ते च पलाशादीनामवयवभूता ग्राह्याः । तदभावेऽन्यस्यापि यज्ञियस्य वृक्षस्य । तत्र पलाशखदिरयोः पुनरुपादानं तौ परिध्यर्थेऽपि यथा स्यातां नेतरैर्बाध्येयातामिति । रोहीतको वटावान्तरजातिः ॥ ८ ॥

आर्द्राः शुष्का वा सत्वक्काः ॥ ८ ॥

भा० वृ०—आर्द्राः शुष्का वेति मिश्रप्रतिषेधः । त्रयो वाऽऽर्द्रास्त्रयः शुष्का वा नैकः शुष्क इतरावार्द्रावितर आर्द्रोऽन्यौ शुष्कौ वा सह त्वग्भिः सत्वक्काः ॥ ८ ॥

सू० दी०—आर्द्राः परिधयो भवन्ति शुष्का अपीष्यन्ते न चेद्गलितत्वचो भवन्तीत्यर्थः । अथवेध्मस्याग्नीन्धनार्थत्वादनिन्धनार्थत्वात्परिधीनामार्द्रानुज्ञानार्थमुभयवचनम् ॥ ९ ॥

स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः ॥ ९ ॥

भा०वृ०—स्थविष्ठः स्थूलतमो मध्यमः परिधिर्मध्यमाद्दक्षिणस्तनु-

रणीयान्द्राघीयान्दीर्घतमो मध्यमादेव दक्षिणार्धे भवो दक्षिणार्ध्यः। अणिष्ठः पूर्वाभ्यां तनुर्ह्रसिष्ठो ह्रस्वतमश्च पूर्वाभ्याम् । उत्तरार्धे भव उत्तरार्ध्यः। बाहुमात्राः परिधयः शम्या चेति भारद्वाजमतात्। तत्पक्षे सर्वे समायामाः । अस्माकं तूत्तरपरिधिराहवनीयायतनायामः। इतरौ तस्मादेकाङ्गुलेन चतुरङ्गुलेनाऽऽयतौ ॥ ९ ॥

सू० दी०–अर्धशब्दोऽत्रापि स्थानवाची। दक्षिणार्धे भवो दक्षिणार्ध्यः स मध्यमादणुतरो दीर्घतरश्च। तथा सर्वतोऽणुतमो ह्रस्वतमश्चोत्तरार्ध्यः। आयामस्त्वर्थलक्षणः सर्वेषाम्। तत्र प्रादेशमात्राणीध्मकाष्ठानि बाहुमात्राः परिधय इति तन्त्रान्तरकाराः ॥ १० ॥

द्वे आघारसमिधावनूयाजसमिदेकविंशीति ॥ १० ॥

आ० वृ०—प्रथमस्येध्ममन्त्रस्यानूहो न च निवृत्तिः काष्ठविवृद्धौ। सप्तदशानुब्रूयाद्वैश्यस्येत्यादिसामिधेनीवृद्धौ काष्ठवृद्धिपक्षेऽप्याख्यानवादादेकविंशतिधा स्थितत्वादग्नेः संभरामीति न काष्ठाभिधानम्। अग्निर्देवेभ्योनिलायत यत्कृष्णो रूपं कृत्वेति दर्शनात्। यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीनिति भासरूपकथनवादादिध्मेष्वेकविंशतिधाऽवस्थितस्याग्नेरभिधानान्न काष्ठसंख्यानिर्देशः। अतो न विकारो न च निवृत्तिः। आघारसमिधावाघारार्थत्वात्तदभावे निवृत्तिरिति । आघारार्थत्वादाघारसमिद्व्यपदेशस्तदभाव आघाराभावे निवृत्तिः समिधोस्तथाऽनूयाजसमिदनूयाजाभावे निवर्तते। गणनायां द्वे युगपत्क्षिप्येते। द्वे आघारसमिधाविति द्विशब्द आघारसमित्संभरणे युगपत्संभरणार्थः। अतो युगपदिध्म आघारसमिधावुपादातव्ये। तथा तत्राऽऽघारसमिधमाधायेत्येतावतैव सिद्ध एकसमिदाधान एकामाघारसमिधमाधायेत्येकामिति वचनं द्वयोः संभृतत्वादेकामनूयाजसमिधमितिवत्समिधमिति वचनस्य विवक्षितत्वाद्द्वयोरप्यविरुद्धमाधानं भवतीति तन्निवृत्त्यर्थं भवति । तस्याः संभृताया आहवनीये दारुमयाणीति स्वकाले प्रक्षेपः। इतरथोभयत्रापि संख्याग्रहणमनर्थकं स्यात्। उपदेश एकामनूयाजसमिधमवशिष्येनिवदिहैकविंशी चानूयाजसमित्क्षिप्यते ॥ १० ॥

सू०दी०—अथ द्वे आघारार्थे समिच्छब्दिते च भवतः । तथैकाऽनूयाजार्था । तस्यास्तु पारिशेष्यात्सर्वान्ते विनियोगाच्चैकविंशत्ववादः । इतिकरण एकविंशतिविभागनिगमनार्थः । विभागोपयोगश्चानन्तरसूत्रे दर्शयिष्यते ॥ ११ ॥

इति पञ्चमी कण्डिका ॥ ५ ॥

---

समूलानामृतेऽमूलानां वा दर्भाणां पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य ॥ ११ ॥

भा०वृ०—समूलामूलनियमो मिश्रप्रतिषेधार्थः । एकसरः शुल्ब इत्युपदेशः । क्वचिद्दर्शनात् । यानि शुल्बानि न समस्यन्त इत्यसमस्ते शुल्बशब्ददर्शनादनियमो वा । एकसराभिरिति क्वचिद्विधानादिति । सम्राडासन्दी एकसराभिरिति नियमादन्यत्रानियमः । पूर्ववदुदगग्रं वितत्य मन्त्रेण करणमुदगग्रस्येति । मन्त्रेणोदगग्रनिधानकरणं पूर्ववदुदगग्रं वितत्येति सूत्रान्वयः । अतस्तूष्णीं शुल्बकरणम् । केचिच्छुल्बकरणमपि मन्त्रेणेत्याहुः । शुल्बकरणात्प्रागेव पूर्ववदितिप्रयोगादितरथा शुल्बं कृत्वा पूर्ववद्वितत्येति भविष्यतीति ॥ ११ ॥

इति पञ्चमी कण्डिका ॥ ५ ॥

---

समूलानामृतेऽमूलानां वा दर्भाणां पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य ॥ १२ ॥

सू०दी०—समूलामूलवचनं समूलप्राप्त्यर्थम् । अन्यथा हि यत्समूलं तत्पितृणामिति श्रुतेरमूला एव गृह्येरन् । पूर्ववदिति कृत्वा वितत्येत्युभयत्रापि संबध्यतेऽविशेषात् ॥ १२ ॥

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविꣳशतिधा संभरामि सुसंभृता । त्रीन्परिधीꣳस्तिस्रः समिधो यज्ञायुरनुसंचरान् । उपवेषं

मेक्षणं धृष्टिः संभरामि सुसंभृतेति शुल्व इध्मं संभरति ॥ १ ॥

भा० वृ०—काम्यनैमित्तिकानां तद्विकारत्वाद्यत्कृष्णो रूपमित्यत्र न प्रकृतावूह इति न्याय इति। एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य यो बहुयाज्यपरिमितमनुब्रूयादित्यादिगुणकाम्यनैमित्तिकानां नैमित्तिकतुल्यत्वात्समानविधानं स्यादिति न्यायेन नित्यविकारत्वाद्यत्कृष्णो रूपमित्यत्र दर्शपूर्णमासयोरप्यनूहः। एकविंशतिधेत्यस्येति न्यायः समवेताभिधानार्थोऽतः सप्तदशानुब्रूयाद्वैश्यस्येत्यादौ गुणकाम्यनैमित्तिकरूपत्वाभावात् प्रकृतावूहप्रतिषेधान्निवृत्तिरेवानूह आपस्तम्बस्य प्रकृतौ बहुयाज्यादीनां काम्यानां च प्रधानविकारादिति गुणमात्रविकारत्वादनूहः। प्रधानविकारत्वादिति केचित्पठन्ति। तस्यार्थः—प्रधानविकारादनूहो भवति न गुणमात्रविकारादिति निवृत्तिस्तु प्रथमस्येध्ममन्त्रस्य काष्ठविवृद्धौ काम्येष्वपि समवेताभिधानाद्व्रीहिमन्त्रस्य तस्मिन्त्सीदेत्यस्य यवेष्विव गुणविवृद्धौ दृष्टान्तः। तूर्णीं कंसं मृन्मयं चेति दर्शनादिति काम्यविधौ दृष्टान्त इतीडान्तपक्षे द्वयोर्मन्त्रयोर्निवृत्तिः। अनूयाजसमिदभावादनूहो वा प्रथमायाः सर्वत्राऽऽख्यानवादाभिधानादिति। विकृतिष्वपि काष्ठह्रासविवृद्धावनूहः। तथा हि अग्निर्देवेभ्यो निलायत। कृष्णो रूपं कृत्वा स वनस्पतीन्प्राविशदिति भासरूपकथाप्राप्तस्य यत्कृष्णो रूपमित्यस्यानुवादात्। ततस्त्वामेकविंशतिधा संभरामीति अग्नेरेव प्रकृतिस्थैकविंशतिकाष्ठावस्थितस्यानुपादानान्न संख्याविशिष्टकाष्ठाभिधानपरत्वमित्यनूहः। ननु पूर्वमेवायमर्थ उक्तः प्रथमस्येध्ममन्त्रस्यानूहो न च निवृत्तिः। काष्ठविवृद्धावाख्यानवादादिति। सत्यमुक्तमयमर्थो भाष्यकारस्याभिप्रेतः। काम्यनैमित्तिकानां नित्यविकारत्वान्न प्रकृतावूह इति न्यायपक्षेऽपि प्रकृतौ समवेताभिधायित्वाभावात्प्रथममन्त्रस्यानूह इति। तस्मात्प्रकृतौ समवेताभिधायिनामेव विकृतावूहो नासमवेताभिधायिनाम्। विकृतावूहपक्षस्तु समवेतसंख्याविशिष्टकाष्ठद्वारेणैवाग्नेरेकविंशतिधा संभरणोपपत्तिः। नाग्नेः स्वरूपेणैकविंशतिधात्वमिति दृष्टार्थसंभवेनादृष्टकल्पनाऽन्याय्येति

त्रीन्परिधीनिति द्वितीया यथार्थमूह्यते विकृतौ पितृयज्ञादौ । उपवेषादीनीध्माभिधानानि गौणार्थानि प्रकृतार्थाभिधानादिति । इध्मसंभरणमन्त्र उपवेषं मेक्षणं धृष्टिमित्युपवेषस्याभिधानत्रयानिर्देशादुपवेषादीनीति पदभेदाभिप्रायेण बहुवचनम् । ते शब्दा गौण्या वृत्त्येध्ममेव प्रतिपादयन्ति काष्ठसामान्येन । न तूपवेषस्येध्मान्तर्भावः । प्रकृतार्थाभिधानादिति गौणत्वे हेतुः । मन्त्रस्य प्रकृतेध्माभिधानपरत्वात् । अनुष्ठेयार्थप्रकाशका हि मन्त्राः । अर्थलक्षण इध्मो वर्षीयानर्थादिति लिङ्गादिति पितृयज्ञे हविर्बहुत्वे वर्षीयस्त्वदर्शनात्सर्वत्रार्थलक्षण इध्मः । आघारप्रभृति प्रज्वलित इध्मस्तत्कर्मणि स्विष्टकृदन्तं हविर्यावता स्थौल्येन युक्तः शक्नोति दग्धुं तावता स्थौल्येन युक्तो ग्रहीतव्यो भारद्वाजमतात् । द्विःप्रादेश इध्म बैलिकेरिति । बैलिकेर्मतेन दीर्घत्वलक्षणम् । पूर्वमर्थलक्षणमिति स्थूलत्वे । अन्यस्य तु अर्थलक्षण इति दीर्घत्वमप्यर्थलक्षणमन्येषां मतेन । स च प्रादेशायामः । अनूयाजसमिध आघारसंभेदात्प्रागाहवनीयदेशपरिमितत्वाबगतेस्तं गणयित्वा शुल्ब इध्मं युगपत्संभरति सर्वं तमिध्मं संभरतीति ॥ १ ॥

सू० दी०—मन्त्रयोरेकविंशतिधा त्रीन्परिधींस्तिस्रः समिध इति दारुपरिधिसमित्संख्यावाचिनां शब्दानां विकृतिषु दार्वादेर्न्यूनाधिकभावेन वा परिधिसमिधामभावे वा तत्तत्संख्यावशेन यथायथं भवत्यूहः । प्रकृतौ तु पञ्चदशकल्पादन्येषु सामिधेनीकल्पेषु प्रथमो मन्त्रो निवर्तते लिङ्गविरोधादूहप्रतिषेधाच्च । काम्यनैमित्तिकानां नित्यविकारत्वादूह इति केचित् । तदयुक्तम् । तूष्णीं कंसं मृन्मयं चेति न्यायप्रदर्शनात् । यज्ञायुरनुसंचरशब्दः पुमान् स्त्रियेति कृतलिङ्गैकशेषः परिधिसमिधामभिधायकः । तेनोपसदादौ परिध्यभावेऽपि समित्संख्यावशेन यथार्थमूहः । उपवेषादेस्त्वसमवेताभिधानेन एकविंशतिविभागानन्तरभूतस्येध्मार्थवादत्वात्सर्वत्रानूहः ॥ १ ॥

कृष्णोऽस्याखरेष्ठो देव पुरश्चर सघ्यासं त्वेति संनह्यति । पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा । अनधो निदधाति ॥ २ ॥

भा० वृ०—गतार्थः ॥ २ ॥

सू० दी०—व्याख्याताः ॥ २ ॥

इध्मप्रव्रश्चनानि निदधाति ॥ ३ ॥

भा० वृ०—पुनरिध्मग्रहणादिध्मप्रव्रश्चनानि च्छेदनानि तेषां निधानम् । पदार्थगणनायामन्तर्भवतीत्या चतुर्थात्कर्मणोऽभिसमीक्षेतेति समीक्षणार्थम् ॥ ३ ॥

सू० दी०—इध्मच्छेदनप्रभवाः शकला इध्मप्रव्रश्चनानि ॥ ३ ॥

त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वान्त्वया होता संतनोत्यर्धमासानिति दर्भाणां वेदं करोति ॥ ४ ॥

भा० वृ०—यज्ञसंतानस्यार्थवादत्वाद्विकृतेरपि मन्त्रेण वेदकरणमिति । वेदकरणमन्त्रे त्वया होता संतनोत्यर्धमासानिति निर्देशस्य विकृतिष्वर्धमाससंतानाभावेऽपि यज्ञमेव तत्संतनोत्योत्तरस्मादर्धमासादिति होतुः संततस्तरणार्थवादप्राप्तस्याप्रकृतिस्थस्यानुवादाद्विकृतावपि मन्त्रेण वेदकरणम् । किंच जात्येकत्वाद्दर्शपूर्णमासस्थो योऽर्धमाससंतान उच्यते । जात्येकत्वात्प्रकृतिविकृत्योर्वैकजातित्वात्प्रकृतिस्थानुवादोपपत्तिर्विकृतावपि ॥ ४ ॥

सू० दी०—दर्भाणां दर्भैः ॥ ४ ॥

वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य ॥ ५ ॥

भा० वृ०—वत्सज्ञुः वत्सजानुतुल्यः । मूतकार्यः । मूतवत्क्रियते यत्र धान्यं निधीयते (मूतः–भाषायां तृणविशेषस्य 'आगोळा' इति प्रसिद्धः) अथवा (तऱ्याची पेंडी) त्रिवृदेकशिराः । त्रिवृच्छिराः । त्रीणि शिरांसीति केचित् । कामाभावेऽप्येता एवाऽऽकृतयः । अकाम्यस्यान्यस्याविधानात् ॥ ५ ॥

सू० दी०—वत्सज्ञुर्वत्सजान्वाकृतिः । मूतवत्कार्यो मूतकार्यः । मूतो धान्यावपनार्थं तृणपुञ्जसंनिवेशविशेषः । अन्नाद्यं भोज्यं भोज-

नशक्तिर्वा । त्रिवृच्छिरास्त्रिगुणशिराः । नित्यास्वेवाऽऽकृतिष्वमी कामाः । आकृत्यन्तरस्यानुपदेशात् ॥ ५ ॥

शुल्बात्प्रादेशे परिवास्य वेदपरिवासनानि निदधाति ॥ ६ ॥

भा० वृ०—वेदपरिवासनानि सर्वाण्येव वेदाग्राणीति मूलानां कार्यान्तराभाववादनादरः ॥ ६ ॥

सू०दी०—शुल्बाद्बन्धनशुल्बात् । परिवास्य छित्त्वा । वेदपरिवासनानि वेदाग्राणि ॥ ६ ॥

अन्तर्वेदि शाखायाः पलाशान्यसर्वाणि प्रशात्य मूलतः शाखां परिवास्योपवेषं करोत्युपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः शिवः शग्मो भवासि न इति ॥ ७ ॥

भा० वृ०—वेदिं कृत्वा प्रशातनममावास्यायामन्तर्वेदिविधानात् । पलाशान्यल्पान्यवशेषयति । परिवासनं कुर्वन्पर्णवल्कं पातयतीति । परिवास्योपवेषं करोतीति न क्रियाद्वयम् । पौर्वापर्येणैकेन परिवासनयत्नेनोपवेषेण सहैव पर्णवल्कपातनं शाखायामुपवेषात्पृथक्करणार्थं परिवासनं न शकलार्थमतः प्रमादादिना शकलानुत्पादनेन पुनः परिवासनमनुनिष्पादितत्वात् । उपवेषार्थो मन्त्रः । उपवेषोऽसीति लिङ्गात् ।अतः पौर्णमास्यामपि मन्त्रेण तदुपादानम् । इन्द्राय हविः कृण्वन्त इत्यनूह आख्यानवादात् । उपवेषाभिधानपरत्वाद्देवतासंबन्धिहविःकरणाभिधानपरत्वाभावादाख्यानवादः । अतो महेन्द्रयाजिनोऽपि न महेन्द्रायेति ॥ ७ ॥

सू० दी०—अन्तर्वेदीति देशोपचारः । वेदो वेदिरिति वक्ष्यमाणपक्षाभिप्रायं वा । प्रशात्य भङ्क्त्वा । मूलतः परिवास्य तदेव मूलमुपवेषं करोति । अङ्गारप्रेषणार्थं काष्ठमुपवेष इति समाख्यायते । स च सांनाय्यार्थमुत्पन्नः प्रभुत्वात्पुरोडाशस्याप्युपकरोति । यस्तु न संनयति तस्यान्यत उत्पाद्यः, उपवेषं प्रातर्दोहपात्राणीति लिङ्गात् । तत्र ह्युपवेषवचनमसंनयदर्थं संनयतः प्रातर्दोहपात्रा-

णीत्यनेनैव सिद्धत्वात् । भारद्वाजश्चाऽऽह–चोद्यमाने कर्मणि द्रव्यमुत्पादयेद्यथा पौर्णमास्य उपवेष इति । बौधायनस्त्वाह —पौर्णमास्यामुपवेषकरण इति कुर्यादिति बौधायनो न कुर्यादिति शालीकिरिति । मन्त्रे त्विन्द्राय हविः कृण्वन्त इति परकृतिवादेनोपवेषः स्तूयते । तस्मादविकारः ॥ ७ ॥

तृतीयस्यै दिवो गायत्रिया सोम आभृतः । सोमपीथाय संनयितुं वकलमन्तर आदद इति परिवासनशकलमादाय प्रज्ञातं निदधाति ॥ ८ ॥

भा० वृ०—स्पष्टम् ॥ ८ ॥

सू० दी०–लिङ्गादादाने मन्त्रः । तूष्णीं निधानम् । स च पर्णशकलाभिधायी तल्लिङ्गत्वात् । तृतीयस्यामितो दिवि सोम आसीदिति च पर्णार्थवादसालिङ्ग्यात् । पर्णवल्कः पवित्रं पर्णवल्कमुत शुन्धतेति तद्विषयमन्त्रान्तरलिङ्गाच्च । तेन शमीशकले निवर्तते । तथा चोत्तरसूत्रे स्पष्टं भविष्यति ॥ ८ ॥

त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायाꣳ शिथिलमवसजति मूले मूलान्यग्रेऽग्राणि । न ग्रन्थिं करोति ॥ ९ ॥

भा० वृ०–पवित्रं प्रादेशमात्रम् । मन्त्रलिङ्गादिति । त्रिवृत्पवित्रं प्रादेशमात्रम् । त्रिवृत्पलाशे दर्भ इयान् प्रादेशसंमित इति मन्त्रलिङ्गात् । नवगुणितं त्रिवृत्स्तोत्रमिति लिङ्गदर्शनात् । दर्भश्चैको मन्त्रलिङ्गादेव । मूले मूलानीति मूलोपलक्षितेभ्यस्तद्दर्भभागस्तथाऽग्रेऽग्राणि । अथवा त्रिगुणमेव त्रिवृत् । त्रिगुणायां पशुरशनायां त्रिवृता यूपं परिवीयेति त्रिवृच्छब्दप्रयोगात् । दर्भ इत्येकवचनं स्वजात्यभिप्रायम् । अवसजति लङ्घयति । त्रिवृत्प-

लाश इति विरुद्धलिङ्गाच्छमीशाखायां लोपो मन्त्रस्येति । पवित्रपलाशयोरभिधानपक्षे शमीशाखायां निवृत्तिः । कथं पवित्रविशेषणभूताप्रधानपलाशानभिधानाभिधानाभ्यां प्रवृत्तिर्निवृत्तिर्वा मन्त्रस्योच्यते । पयसि चरुं दधनि चरुमितिवदुभयप्राधान्यात् । तथा च दृश्यते–इमौ पर्णं च दर्भं च देवानाꣳ हव्यशोधनाविति । अनिवृत्तिर्वा पवित्राभिधानादिति । पलाशे दर्भ इति पलाशस्याधिकरणत्वेन निर्देशात्पवित्रपरत्वान्मन्त्रस्यानिवृत्तिः । शमीशाखामप्युभयोरुपयोगतुल्यत्वेऽप्यत्र पवित्रस्यैव संस्कार इत्यर्थः॥९॥

सू०दी०--प्रादेशमात्रं पवित्रं प्रादेशसंमित इति मन्त्रलिङ्गात् । शाखाया मूले दर्भाणां मूलान्यवसजति अग्रेऽग्राणि । न तु तयोः सह बध्नाति ॥ ९ ॥

त्रिवृत्पलाशे दर्भ इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे । इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ संचरतां पवित्रे हव्यशोधन इति क्रियमाणे यजमानोऽनुमन्त्रयते ॥ १० ॥

भा०वृ०—क्रियमाणे शाखायामवसज्जमाने त्रिवृत्पलाश इति त्रिवृतमनुमन्त्रयते । पवित्राभिधानपक्ष इमौ प्राणापानाविति सशाखस्यानुमन्त्रणं सर्वदा ॥ १० ॥

सू०दी०—क्रियमाणे व्यतिषज्यमाने शाखां च पवित्रं चोभे अप्यनुमन्त्रयत इत्यर्थः । इमौ प्राणापानाविति लिङ्गात् । पलाशलिङ्गत्वान्मन्त्रः शम्यां निवर्तते । न चाविशेषवचनादनिवृत्तिर्युक्ता पलाशशब्देन शम्यभिधानानुपपत्तेः । प्रकृतावूहप्रतिषेधाच्च । तथा च न्यायं प्रदर्शयिष्यति तूष्णीं यवमयमिति ॥ १० ॥

समूहन्त्यग्न्यगारमुपलिम्पन्त्यायतनान्यलं कुर्वाते यजमानः पत्नी च ॥ ११ ॥

भा०वृ०—समूहन्तीति बहुवचने चोदिते यजमानः पत्नी च प्रवृत्ते कर्मण्यध्वर्योः सहायभूतौ । ऋत्विजामभावाच्चत्वार ऋत्विज

इत्यपरेद्युर्विधानात् । अमावास्यायां चाऽऽग्नीध्र एवेति तु पूर्वे पक्षे संभवति ऋत्विजो बहवः कुर्वन्तीति । यद्यपि ध्यावरणवि-धानमविशेषेण । तथाऽऽवृताः कर्म कुर्वन्तीति निर्देशादास्म-त्पक्षे ब्रह्माऽऽग्नीध्रश्च ऋग्वेदेन होता करोतीति नियमादितरयो-रनियमश्चालंकरणमायतनानां यजमानः पत्नी च कुरुते माऽऽत्मनोः । कुर्वाते इत्यात्मनेपददर्शनात् । केचिद्दंपत्योरेवाऽऽ-त्मनोरलंकरणमिच्छन्ति तन्न, आदधीयातामिति दर्शनादग्निसम-वेतत्वेऽप्याधानस्य ॥ ११ ॥

सू० दी०—समूहन्ति संमृजन्ति सर्वमग्न्यगारम् । अग्न्यायतनानि परितो लिम्पन्ति सगोमयाभिरद्भिः । बहुवचनमध्वर्य्वादीनाम-न्यतमप्राप्त्यर्थम् । कुत एकेन कृते समूहेऽन्येन पुनःकरणा-योगात् । यथा परिस्तृणीत व्रतं कृणुताग्नीन्प्रज्वलयन्तीत्यादौ परिस्तरणादेः ॥ ११ ॥

अलं कुर्वाते यजमानः पत्नी च ॥ १२ ॥

सू० दी०—एवमग्नीनलंकृत्य स्वयमप्यलंकृतौ भवत इत्यर्थः । अन्ये स्वयमप्यग्न्यलंकारविधिरिति मन्यन्ते । तदयुक्तम्—विहितस्य विधानायोगात् । ततोऽन्यस्याग्न्यलंकारस्याभावाच्च । यथा वक्ष्यति परिसमूहनेनाग्नीनलं कुर्वन्तीति । तथा कर्त्रभिप्रायार्थादा-त्मनेपदादप्यवगच्छामः कर्तृसंस्कारोऽयं नान्यसंस्कार इति । स्यान्मतम्—अग्निसंस्कारत्वेऽप्यदृष्टद्वारा करणानुग्राहकत्वेन कर्त्र-भिप्रायोपपत्तेरुपपन्नमेवाऽऽत्मनेपदमिति । तन्मन्दम्—तथा-विधेष्वपि परगोचरेषु द्रव्यसंस्कारेषु परस्मैपददर्शनादात्मगोच-रेषु विपर्ययदर्शनाच्च । यथाऽग्नीनलं कुर्वन्ति पुरोडाशानलं कुरु द्वारं मत्यलं कुर्वीत सर्वान्ग्रहानभिमृशति व्रतयित्वा नाभिदेशम-भिमृशति यथालिङ्गमङ्गानि संमृशति पुनात्येवाग्निं पुनीताऽऽ-त्मानं द्रव्यामित्यादि । व्यक्तोक्तं चैतद्भारद्वाजेन—यथा परि-समूहन्त्यग्न्यगाराणि उपलिम्पन्त्यायतनानि यावच्छर्करं सांना-य्यकुम्भ्यौ गोमयेनानुलिप्ते भवतोऽलं कुर्वाते यजमानः पत्नी चेति । बौधायनश्चाऽऽह—स्नागादाञ्जीताभ्यञ्जीतेति । तथौ-पवसथ्येऽहनीत्यधिकृत्य स्मृतं पैठीनसिना—अलंकृतोऽभ्यक्तो गन्धपुष्पाणि सेवेतेति ॥ १२ ॥

नवे सांनाय्यकुम्भ्यौ यावच्छर्करगोमयेनानुलिप्ते भवतः ॥ १३ ॥

भा० वृ०—नवत्वं कुम्भ्योः प्रथमप्रयोग इति आधानप्रभृति पात्राणां प्रथमप्रयोगदर्शनार्थत्वात् । तथा चाग्निहोत्रस्थाल्यादीनामग्निहोत्रारम्भप्रयुक्ताना भेदनादौ प्रायश्चित्तदर्शनात् । गोमयानुलेपनं तु सर्वत्र तेषां प्रतितन्त्रं संस्कार इति यावच्छर्करं यावच्छर्करया कुम्भ्या बुध्नमालिप्तं कुलालेन ।

इत्यापस्तम्बसूत्रप्रथमप्रश्ने धूर्तभाष्यवृत्तौ द्वितीयः पटलः ॥ २ ॥

सू० दी०—यावज्जीवं पात्रधारणवचनान्नवे इति । प्रथमप्रयोगविषयमिति केचित् । यावच्छर्करं यावानंश उपरिष्टाच्छर्कराभिरभिरञ्जितः कुलालैस्स तावतोंऽशादित्यर्थः ॥ १३ ॥

इति षष्ठी कण्डिका ॥ ६ ॥

---

इति द्वितीयः पटलः ॥ २ ॥

---

अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुतेऽपराह्णे ॥ १ ॥

भा० वृ०—यदहश्चन्द्रमसं न पश्यन्तीतिवचनाददृष्टचन्द्रायां प्रतिपद्यपराह्ण इति चतुर्दशीमिश्रणेन पूर्वेद्युः । पुरस्ताच्चन्द्रदर्शने सत्युत्तरेद्युः पूर्वाह्णे पर्वसंधौ तदपराह्ण एव प्रयोगः । यदहश्चन्द्रमसं न पश्यन्तीति वचनात्पर्वसंधावत्यन्तचन्द्रदर्शनात्तद्युक्ताहोरात्रापराह्ण एव । मासि पितृभ्यः क्रियत इति लिङ्गादिति तल्लिङ्गानुरोधेन सूत्रं वर्णनायमित्यर्थः । मासे पूर्णे पितृभ्यः पूर्वेद्युः क्रियत इति ब्राह्मणस्यार्थः । परिपूर्णमासोऽमावास्यायामन्तिमक्षणे, तस्मात्तद्योगिनोऽहोरात्रस्यापराह्ण एव पिण्डपितृयज्ञः । अतश्चतुर्दशीमिश्रणेऽपि क्षये तदहोरात्रपर्वसंधौ तस्यापराह्णे क्रियते पिण्डपितृयज्ञश्चतुर्दश्यभावेऽपि वृद्धौ श्वःसंधौ तस्यापराह्ण एव । स्वतन्त्रस्यापि पिण्डपितृयज्ञस्य दर्शपूर्णमासप्रयोग-

मध्ये कथनमौपवसथ्येऽहनि संधौ बद्धक्रमेषु [illegible]र्थेषु स्थाननियमार्थमतः प्रमादादिना कुम्भ्यालेपनान्ते कर्मण्यकृतेऽन्तरितं प्रायश्चित्तं भवति ॥ १ ॥

सू० दी०—पिण्डैर्युक्तः पितृणां यज्ञः पिण्डपितृयज्ञः स च कर्मान्तरं न तु दर्शशेषः। यथा वक्ष्यति—पितृयज्ञः स्वकालविधानादनङ्गं स्यादिति। तन्मध्योपदेशस्तु पक्षे तत्कालमध्यपातात्। तं च यदहश्चन्द्रमसं न पश्यन्ति पञ्चदश्यां प्रतिपदि वा तदहः कुरुते। यदहस्तयोः संधिस्तदहरित्यर्थः। तथा दृश्यमाने तूपोष्य श्वोभूते यजेत इति सत्याषाढः ॥ १ ॥

अधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन चरन्ति ॥ २ ॥

भा० वृ०—अधिवृक्षसूर्ये यत्र वृक्षाणामुपर्येवोष्मा न पृथिव्याम्। पिण्डैः साध्यः पिण्डपितृयज्ञ इति। पिण्डप्रदानस्यापि होमतुल्यनिर्देशेन तस्यापि प्रधानत्वात्। पिण्डैः साध्य इति निर्वचनम्। स्वर्गार्थः पिण्डपितृयज्ञ इति मीमांसकाः।

सूत्रकारमतिस्तु पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इत्यमावास्यानिष्क्रयणार्थतयाश्रित्य इति। अत एव पिण्डपितृयज्ञेन यक्ष्य इत्युक्त्वा विद्युदसीति भाष्यकारेणोक्तम्। न फलनिर्देशः कृतः। मीमांसकपक्षे पिण्डपितृयज्ञानारम्भे न दोषः। आरब्धस्य विच्छेद एव प्रायश्चित्तम्। आरम्भप्रभृति प्राचीनावीती, अन्यत्र वचनादिति अध्वर्युरुपवीतीत्यादिवचनाभावे प्राचीनावीती न विद्युदसि दर्विहोमेष्वित्युपदेशः। वक्ष्यमाणो वेष्टवा वेति वचनात्। नाऽऽहवनीयप्रणयनमर्थाभावाद्यदा प्रतिपद्यपराह्णे क्रियते। चरन्तीति बहुवचनं पत्न्या सहाधिकारार्थम्।

---

१ अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेत्यारब्धचतुर्थे लक्षणे क्रतुप्रयुक्तत्वाभावात्पिण्डपितृयज्ञस्य स्वतन्त्रकालविधानात्पुरुषार्थत्वमेव साधितं भगवता जैमिनिना "पितृयज्ञः स्वकालत्वादनङ्गं स्यात्" ॥ ४। ४। १९। इत्यादिना। तस्माद्विश्वजिन्न्यायेन स्वर्गकल्पनौचित्यमिति न्यायतः सिद्धमेव भाष्यवृत्तौ निबन्धयांबभूवात्रभवान्रामाण्डारः।

सामान्यतः सहाधिकारे सिद्धे पुनर्वचनमनालम्भुकायामपरुध्य करणं न भवतीति ॥ २ ॥

सू० दी०—नवधाकृतस्याह्नः सप्तमो भागोऽपराह्णः। तथा देवस्य सवितुः प्रातरित्यनुवाके विवेचनात्। पृथिवीं मुक्त्वा वृक्षाणामुपर्येव यस्मिन्काले सूर्यरश्मयो निविशन्ते सोऽधिवृक्षसूर्यः कालः। चरन्तीति बहुवचनं पत्न्यपेक्षया। तत्र यदौपवसथ्येऽहनि चरन्ति तदाऽन्वाहित एवाग्नौ प्रयोगः। अन्यथा दक्षिणाग्निं योनित उत्पादयेन्नाऽऽहवनीयमर्थाभावात्। न च विद्युदसीत्यपामुपस्पर्शनं दर्विहोमत्वात्। पितृयज्ञवत्सर्वधर्माः प्राचीनावीतादयः सर्वत्र। वचनात्तु विपर्ययः ॥ २ ॥

**अपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति सकृदाच्छिन्नानि तृणान्युपमूलं दिनानि ॥ ३ ॥**

भा० वृ०—अपां मेध्यं यज्ञियमित्याच्छेदनलिङ्गादित्याहरतिनाऽन्वयेऽप्याच्छेत्ता वो मा रिषमिति लिङ्गादाच्छेदने मन्त्रो नाऽऽहरणे ॥ ३ ॥

**अपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति ॥ ३ ॥**

सू० दी०—सकृदेकव्यापारेण यावदेवाऽऽच्छिन्नं तावदेवाऽऽहरति समूलं च। तत्र च्छेदने मन्त्रस्तल्लिङ्गत्वादन्यत्रापि च्छेदने दृष्टविनियोगत्वाच्च ॥ ३ ॥

**सकृदाच्छिन्नानि वा तृणान्युपमूलं दिनानि ॥ ४ ॥**

सू० दी०—अथवा मूलादूर्ध्वं दिनान्यवखण्डितानि सकृदाच्छिन्नान्येव दर्भतृणान्याहरति। दर्भादन्यान्यपि यज्ञियानि तृणानीत्येके ॥ ४ ॥

**दक्षिणाप्रागग्रैर्दर्भैर्दक्षिणमग्निं परिस्तीर्य दक्षिणतः पश्चाद्वा दर्भान्संस्तीर्य दक्षिणाप्राञ्च्येकैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति स्फ्यं मेक्षणं कृष्णा-**

जिनमुलूखलं मुसलं शूर्पमाज्यस्थालीं चरुस्थालीं येन चान्येनार्थी भवति ॥ ४ ॥

भा० वृ०–दक्षिणाप्रागग्राः कोणाग्रा उपचारोऽपि दक्षिणापवर्ग इति। दक्षिणापवर्गाणि पित्र्याणीति वचनात्। अपिशब्दात्प्रसव्यं च परिस्तरणादि। अर्थी भवतीत्युपस्तरणाभिघारणार्था दर्वी मृन्मयं च निर्वपणार्थम्। चकारान्मेक्षणस्थतण्डुलनिधानार्थपात्र-कशिप्वाञ्जनाभ्यञ्जनपात्राण्यप्यासाद्यन्ते ॥ ४ ॥

सू० दी०–पश्चात्पुरस्ताच्च दक्षिणाग्रैः प्रागग्रैरितरैरित्यर्थः। दक्षिणा-प्राञ्चीति कोणदिगपवर्गवादः। येन चान्येनार्थी प्रयोजनवान्भ-वति तदपि प्रयुनक्ति। यथोपस्तरणार्थां दर्वीं निर्वापार्थं मृन्मयं पात्रं कशिपूपबर्हणादीनि च ॥ ५ ॥

दक्षिणतः प्राग्गीषं व्रीहिमच्छकटमवस्थितं भवत्यध्व-र्युरुपवीती स्थालीमेकपवित्रेणान्तर्धाय तया दक्षि-णतः शकटादधिनिर्वपत्युत्तरतो वा तां पूरयित्वा निमार्ष्टि मृन्मये निर्वपति पितृभ्यो वो जुष्टं निर्व-पामीति तूष्णीं वाऽपरेणान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिन उलूखले प्रतिष्ठिते दक्षिणाप्राची ति-तिष्ठन्ती पत्न्यवहन्ति परापावमविवेकम् ॥ ५ ॥

भा०वृ०–दक्षिणाप्राचीति कोणदेशवादः पत्न्याश्चेति। दक्षिणाप्राची तिष्ठन्ती पत्न्यवहन्तीति कोणदेशमुखता पत्न्या अपि न क्रिया-मात्रस्यानाहिताग्नेरप्यध्वर्युरध्वर्युग्रहणादिति। यजमानोऽत ऊर्ध्व-मित्युत्तरत्र नियमात्पूर्वत्राध्वर्युकर्तृकत्वस्य प्राप्तत्वादनाहिताग्न्यर्थ-मध्वर्युग्रहणम्। यजमानशब्दस्याऽऽहिताग्नौ प्रसिद्धत्वादनाहिता-ग्नेः पिण्डपितृयज्ञे स्वयंकर्तृत्वप्राप्तावध्वर्युविधिः। परापावं परा-पूय परापूयाविवेकमविविच्याविविच्य ॥ ५ ॥

दक्षिणतः प्राग्गीषं व्रीहिमच्छकटमवस्थितं भवति॥६॥

सू०दी०—गतः ॥ ६ ॥

अध्वर्युरुपवीती स्थालीमेकपवित्रेणान्तर्धाय तया दक्षिणतः शकटादधिनिर्वपत्युत्तरतो वा ॥ ७ ॥

सू०दी०—उपवीती भूत्वा दक्षिणतः शकटस्य दक्षिणार्धाद्वाऽथ कस्मिंश्चित्पात्रे निर्वपति शकटान्निष्कृष्य वपतीति व्रीहीन् । प्राचीनावीत्येव वा सन्नुत्तरतः । अध्वर्युवचनं विस्पष्टार्थम् । अनाहिताग्नेरप्यध्वर्युकर्तृकत्वासंदेहार्थं वा ॥ ७ ॥

तां पूरयित्वा निमार्ष्टि ॥ ८ ॥

सू०दी०—तां स्थालीं पूरयित्वोपरि गतान्व्रीहीन्मोह्य स्थालीमुखं समी करोतीत्यर्थः ॥ ८ ॥

मृन्मये निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति तूष्णीं वा ॥ ९ ॥

सू०दी०—ततो मृन्मये पात्रे निर्वपति ॥ ९ ॥

अपरेणान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिन उलूखले प्रतिष्ठिते दक्षिणाप्राची तिष्ठन्ती पत्न्य-वहन्ति परापावमविवेकम् ॥ १० ॥

सू०दी०—तिष्ठन्त्येव पत्न्यवहन्ति नाऽऽसीना । परापावं परापूय परापूय । अविवेकमविविच्याविविच्य । शूर्पेण तुषमोहणं परापवनम् । सतुषवितुषाणां पृथक्करणं विवेकः ॥ १० ॥

सकृत्फली करोति दक्षिणाग्नौ
जीवतण्डुलꣳ श्रपयति ॥ ६ ॥

भा०वृ०—स्पष्टार्थः ॥ ६ ॥

सकृत्फली करोति ॥ ११ ॥

सू०दी०—फलीकरणं नाम कणापाकरणार्थस्तण्डुलावघातः । तमपि पत्नी सकृत्करोति सकृत्तानोप्यावहत्योप्तान्न पुनरुपावहन्या-दित्यर्थः ॥ ११ ॥

दक्षिणाग्नौ जीवतण्डुलꣳ श्रपयति ॥ १२ ॥

सू०दी०—यथा, ईषत्तण्डुला जीवन्ति तथा श्रपयत्यध्वर्युः ॥ १२ ॥

अपहता असुरा रक्षाꣳसि पिशाचा वेदिषद इत्यन्तरा गार्हपत्यान्वाहार्यपचनौ दक्षिणपूर्वेण वाऽन्वाहार्यपचनं दक्षिणाप्रा चीमेकस्फ्यां पराचीं वेदिमुद्धत्य शुन्धन्तां पितर इत्यद्भिरवोक्ष्याऽऽयन्तु पितरो मनो जवस इत्यभिमन्त्र्य सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति सकृदाच्छिन्नेन बर्हिषा वेदिꣳ स्तृणाति ॥ ७ ॥

भा०वृ०—जीवत्पितुरपि वेदिरपिण्डार्थत्वाद्धविरासादनार्थत्वाच्च कशिप्वादीनि विहितानि तेषां स्वातन्त्र्येण पदार्थतया न विधानं पिण्डभोक्तृपित्रर्थत्वात् । यथाभागमेवैनान्प्रीणातीति निर्देशात् । जीवत्पितुस्तु पिण्डाभावात्कशिप्वादीनि न भवन्ति ॥ ७ ॥

इति सप्तमी कण्डिका ॥ ७ ॥

---

सू०दी०—एकस्फ्यकृता लेखैकस्फ्या सा वेदिर्भवति तां पराचीमपरावृत्तामुद्धत्य सकृदेवोल्लिखेदित्यर्थः । अवाचीनेन करेणोक्षणमवोक्षणम् ॥ १३ ॥

इति सप्तमी कण्डिका ॥ ७ ॥

---

उत्पूतेन नवनीतेनानुत्पूतेन वा सर्पिषा स्थालीपाकमभिघार्यैकस्फ्यायां मेक्षणमासाद्य स्थाली-

पाकमासादयति दक्षिणतः कशिपूपबर्हणमाञ्जन-मभ्यञ्जनमुदकुम्भमित्येकैकश आसादयति ॥ १ ॥

भा०वृ०—उदकार्थः कुम्भ उदकुम्भः । न प्रणीतावत् ॥ १ ॥

सू०दी०—नवनीतकल्पे हविरुपस्तरणाभिघारणे अपि तेनैव भवत इत्येके । एतानि च वेद्यामेव सादयति । दक्षिणतः स्थालीपाकस्य । कशिपु शयनीयमुपबर्हणमुपधानम् ॥ १ ॥

अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य तेनावदायाभिघार्य सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ जुहोति ॥ २ ॥

भा०वृ०—अध्वर्युरध्वरस्य नेता कथं स्यादिति पुनरध्वर्युरुपवीती दक्षिणं जान्वाच्येति अध्वर्युग्रहणं दर्शार्थाध्वर्युरेवात्रापि यथा स्यादिति देवहूत ऋत्विक्पक्षेऽपि दर्शाद्धविष्प्रयोगेऽपि । नमस्कारः प्रदानार्थक इति । अतः स्वाहाकारो निवर्तते । नमस्कारो हि पितृणामिति लिङ्गात् ॥ २ ॥

सू०दी०—अध्वर्युवचनं पूर्ववत् । उपवीतीति प्राचीनावीतापवादः । दक्षिणं जान्वाच्येति दर्विहोमत्वादेव सिद्धस्य वचनमनाच्य चेति विकल्पनिवृत्त्यर्थम् । आच्य संकोच्य भूमौ निपात्येत्यपरम् । मेक्षणेनावदाय तेनैव स्वाहाकारान्तैर्मन्त्रैर्जुहोति चोदनत्वात् । अग्नये कव्यवाहनाय स्वधा स्वाहेति लिङ्गाच्च । बौधायनीये च स्वाहाकारान्तानामेव पाठाच्च ॥ २ ॥

यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम् । अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् । ये मेक्षणे तण्डुलास्तान्हुत्वा तूष्णीं मेक्षणमादधाति ॥ ३ ॥

भा०वृ०—यमायाप्युपस्तरणाभिघारणे द्वितीयामिति निर्देशात् । यथा गोर्द्वितीयेनार्थ इत्युक्ते नाजो बध्यते गौरेव बध्यते तथाऽ-

अपि। कव्यवाहनस्य न ते भवतः शेषप्रतिपत्तित्वादुभयशेषा-त्कव्यवाहनस्येति। ये मेक्षणे तण्डुला इत्युभयशेषं मेक्षणे निधाय कव्यवाहनहोमः। उपस्तरणाभिघारणवर्जं शेषप्रतिपत्ति-त्वाच्छेषाभावे निवृत्तिरपि। मेक्षणाधानं वाग्यतेनैव मन्त्रानुपदे-शादेव मन्त्रनिवृत्तौ तूष्णींग्रहणं लौकिकवाङ्निवृत्त्यर्थम्॥ ३॥

यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्विती-याम्। अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम्॥ ४॥

सू०दी०—आहुतिं जुहोतीति शेषः॥ ४॥

ये मेक्षणे तण्डुलास्तान्हुत्वा तूष्णीं मेक्षणमादधाति॥ ५॥

सू०दी०—ये मेक्षणे पूर्वाहुत्योः संश्लिष्टास्तण्डुला जीवतण्डुलत्वादो-दनस्य तथा व्यपदेशः। तानेव तृतीयामाहुतिमग्नये कव्यवाह-नाय हुत्वा मेक्षणमग्नौ तूष्णीं प्रहरतीत्यर्थः। नैवमत्र भ्रमितव्यं ये मेक्षण इत्यादिना चतुर्थ्याहुतिस्तूष्णीकोच्यत इति। तिस्र आहुतीरिति श्रुतेः। न च वाच्यं सन्तु तास्तिस्रः प्रधानाः स्विष्ट-कृदर्थैषा चतुर्थी भविष्यतीति। तृतीयस्या एवाऽऽहुतेस्तदर्थ-त्वात्। यथाऽग्निं कव्यवाहनं यजतीति प्रकृत्याऽऽह ब्राह्मणमथो यथाऽग्निं स्विष्टकृतं यजति तादृगेव तदिति। निगदव्याख्यातमे-तद्धिरण्यकेशिनेति द्रष्टव्यम्॥ ५॥

न यमाय जुहोतीत्येके॥ ६॥

भा०वृ०—स्पष्टम्॥ ६॥

सू०दी—गतः॥ ६॥

अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याऽऽचरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्।

ये देवाः पितरो ये च मानुषा य गर्भे मम्रुरुत ये परास्ताः । य उद्धृता उत ये निखातास्ते सम्यञ्च इह मादयन्ताम् । ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्य- ग्निष्टाल्लोकात्प्रणुदात्यस्मात् । ये ज्ञातीनां प्रतिरूपाः पितॄन्माययाऽसुराः प्रविष्टाः । परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति दाक्षिणाग्नेरे- कोल्मुकं धूपायद्धरति ॥ ५ ॥

भा०वृ०—एकोल्मुकसंसृष्टमन्यैरेकवचनादेकत्वसिद्धावेकशब्दग्रहणा- द्यावत्कर्मसमाप्ति धारणम् । अवाड्ढव्यानि सुरभीणि कृत्वेति लिङ्गात् । पिण्डदानात्पूर्वं नाशे मन्त्रेण पुनर्हरणं सर्वप्रायश्चित्तं चाऽऽहवनीये । एतच्च जीवत्पितुः । अथवोल्मुकधारणान्त एव होमः । अस्मिन्पक्षे, अवाड्ढव्यानीति होमसमवेताभिधानम् । अत्र न पुनर्हरणम् । अस्माकं तु ये ज्ञातीनां प्रतिरूपाः पितॄन्माययाऽ- सुराः प्रविष्टाः परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति मन्त्रलिङ्गात् । ज्ञातिभ्यः पिण्डान्दास्यामीति ज्ञाति- रूपेण पिण्डादिष्वसुरप्रणोदनमर्थयते । अग्निमित्यग्नेः पिण्डदाना- र्थत्वमेव ॥ ५ ॥

सू०दी०—एकमुल्मुकमेकोल्मुकम् । धूपायद्धूमायमानम् ॥ ७ ॥

दक्षिणपूर्वमवान्तरदेशं सक्ृत्स्फ्येनोल्लिख्योदीरतामवर इत्यद्भिरवोक्ष्योल्लिखितान्ते निदधाति ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—अवान्तरदेशः कोणदिक् ॥ ८ ॥

यजमानोऽत ऊर्ध्वं प्राचीनावीती कर्माणि करोति मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा इत्येकस्फ्यायां त्रीनु-

दकाञ्जलीन्निनयति प्रसव्यं वा त्रिः परिषिञ्चति त्रीनुदपात्रान्वाजसनेयिनः समामनन्ति सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान् पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं तूष्णीं चतुर्थं स कृताकृतः प्रपितामहप्रभृतीन्वा ॥ ७ ॥

भा०वृ०—यजमानोऽत ऊर्ध्वमिति सूत्रप्रभृति प्रपितामहप्रभृतीन्वेति सूत्रस्य गतोऽर्थः। अत ऊर्ध्वं प्राचीनावीती यजमानः। प्राचीनावीतिवचनं श्रौतप्रायश्चित्तार्थमिति प्राचीनावीतिना प्रसव्यमिति परिभाषासिद्धेऽपि प्राचीनावीतीतिपुनर्वचनं तद्भ्रेषे यजुर्भ्रेषप्रायश्चित्तार्थम्। सा परिभाषा श्रौतस्मार्तसाधारणैतद्भ्रेषे सर्वप्रायश्चित्तमेव स्यादिति पुनरुपदेश एतदन्तं जीवपितुरिति। आ होमात्कृत्वा विरमेदित्येतद्धोमाङ्गभूतमेक्षणाधानान्तं कर्तव्यम्। नास्मात्प्रागित्येतद्दर्शयितुं जीवत्पितेत्याद्यपक्षमाकृष्य व्याचष्ट। जीवन्तः पितर इति विग्रहाज्जीवपितामहो, जीवप्रपितामहोऽपि होमान्तम्। मनुष्याः पितरोऽनुप्रपिपते त्रिर्निदधातीति यजमानपितृपितामहप्रपितामहानां पिण्डनिधानात्पिण्डत्रयनिधानात्मकस्यैकशास्त्रार्थत्वात्त्रयाणामन्यतमे जीवति पिण्डत्रयनिधानानुपपत्तेर्होमान्तमेव। प्रपितामहप्रभृतीनपि दक्षिणापवर्गाञ्जलयः। प्रपितामहप्रभृति दक्षिणापवर्गास्तत्र प्रपितामहादूर्ध्वं त्रयाणां पिण्डदानम्। प्रभृतीनिति द्वितीया तत्संबन्धपिण्डदानाभिप्रायेण। अथवा त्रिषु पिण्डेषु प्रपितामहप्रभृतीन्वाऽऽचष्ट इति ॥ ७ ॥

यजमानोऽत ऊर्ध्वं प्राचीनावीती कर्माणि करोति ॥ ९ ॥

सू०दी०—अतः परं यजमानः कर्ता भवति प्राचीनावीती च। अत एव वचनादितः पूर्वमुपवीत्येव भवति ॥ ९ ॥

मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपिता-

महा इत्येकस्फ्यायां त्रीनुदकाञ्जली-
न्निनयति ॥ १० ॥

सू०दी०—उदकपूर्णोऽञ्जलिरुदकाञ्जलिः। तांस्त्रीनुदकाञ्जलीन्वेद्या-
मासिञ्चति ॥ १० ॥

प्रसव्यं वा त्रिः परिषिञ्चति ॥ ११ ॥

सू०दी०-तैरेवाञ्जलिभिः परिषिञ्चति परितः सिञ्चत्येकस्फ्याम्॥ ११ ॥

त्रीनुदपात्रान्वाजसनेयिनः समामनन्ति ॥ १२ ॥

सू० दी०—अञ्जलिस्थाने पात्रमेव भवति। समानमन्यत् ॥ १२ ॥

इत्यष्टमी कण्डिका ॥ ८ ॥

---

सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि
दक्षिणापवर्गान्पिण्डान्ददात्येतत्ते ततासौ ये च
त्वामन्वित्येतैः प्रतिमन्त्रम् ॥ १ ॥

सू० दी०-मन्त्रेष्वदसां स्थाने पित्रादिनामानि संबुद्ध्या गृह्णाति॥१॥

तूष्णीं चतुर्थम् ॥ २ ॥

सू० दी०—तस्याञ्जलिरपि तूष्णीं भवति ॥ २ ॥

स कृताकृतः ॥ ३ ॥

सू० दी०—चतुर्थः पिण्डः क्वचिच्छाखायां विहितः क्वचिच्चावि-
हितो वैकल्पिक इति यावत् ॥ ३ ॥

प्रपितामहप्रभृतीन्वा ॥ ४ ॥

सू० दी०—पिण्डान्ददातीत्यन्वयः। प्रदानेषु प्रपितामहः प्रभृतिरा-
दिर्येषां ते प्रपितामहप्रभृतयः। प्रपितामहशब्देन च तत्पिण्डल-
क्षणा। ते च मन्त्रक्रमप्रातिलोम्येन दक्षिणापवर्गा एव भवन्ति।
पिण्डशेषत्वादञ्जलयोऽपि तत्प्रभृतय एव स्युः ॥ ४ ॥

नानामगृहीतं गच्छति यदि बन्धू न विद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यात्। स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्। स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्। यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेत्॥ ८॥

भा० वृ०—एतद्वां ततौ देवदत्तयज्ञदत्तौ ये च युवामनु। एवं पितामहप्रपितामहावपीति। पिण्डदानमन्त्रप्रसङ्गेनापकृष्य द्विपितुरुपलक्षणप्रकार उपदिश्यते। नानामगृहीतं गच्छतीति पित्रादिनामग्रहणरहितपिण्डदाने तत्पिण्डदानं पितॄन्न प्राप्नोतीति॥ ८॥

नानामगृहीतं गच्छति॥ ५॥

सू० दी०—नामगृहीतं नामग्रहणं तद्रहितमनामगृहीतं तद्दानं देयं पिण्डादि पितॄन्न प्राप्नोति। तस्मादवश्यं ग्राह्यं नामेति॥ ५॥

यदि बन्धू न विद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यात्स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्। स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्॥ ६॥

सू० दी०—बन्धुनामशब्दौ पर्यायौ। अथवा बन्धू नामतो न जानीयादित्यर्थः॥ ६॥

यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेत्॥ ७॥

सू० दी०—पितृशब्देनात्र पितृपितामहप्रपितामहानां त्रयाणां ग्रहणम्। तेष्वन्यतमौ द्वौ यस्य क्षेत्रजादेः स द्विपिता। कुत एतत्। एकैकस्मिन्पिण्डे द्वौ द्वाविति वीप्सावचनान्न्यायसाम्याच्च। उपलक्षयेन्नामभ्यां कीर्तयेत्, यथा एतद्वां ततौ सूर्यविष्णू ये च युवामन्वित्यादि॥ ७॥

यदि जीवपिता दद्यादा होमात्कृत्वा विरमेत् ॥ ९ ॥

भा० वृ०—प्रसङ्गात्पूर्वं व्याख्यातम् ॥ ९ ॥

सू० दी०—पितृशब्दः पूर्ववद्व्याख्येयः। त्रयाणामन्यतमजीवनेऽपि पित्रादित्रयसंप्रदानपिण्डप्रदानाविरोधसाम्यात् शास्त्रान्तरेषु व्यक्तत्वाच्च। तदयमर्थः–त्रिष्वपि पित्रादिषु मध्ये यदि कश्चिज्जीवेत्तदा न दद्यात्पिण्डान् होमान्तमेव कृत्वा कर्म समाप्नुयादिति। अत्र सूत्रान्तरकारैर्जीवपितुः पिण्डदानं प्रत्यनेके कल्पा विकल्पेनोपदिष्टाः—येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति न जीवन्तमाति ददातीत्येक इत्यादयः। कात्यायनेन तु कर्मण एवाऽऽरम्भो विकल्पितः। जीवत्पितृकस्य होमान्तमनारम्भो वेति। सर्वैश्चोपात्तः प्रायशो होमान्तकल्पः। तमेवैकं कल्पमभिरोचितवानित्यास्तामन्यत् ॥ ८ ॥

यन्मे माता प्रममाद यच्चचारानुव्रतम्। तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽपपद्यताम्। पितृभ्यः स्वधाविभ्यः स्वधा नमः पितामहेभ्यः स्वधाविभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नम इत्युपस्थायात्र पितरो यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तते ॥ १० ॥

भा० वृ०—पिता वृङ्क्तामित्यनूहः सर्वपितॄणामभिधानादिति। पितृभ्यः स्वधाविभ्य इति बहुवचनात्सर्वपितॄणामुपस्थानपरत्वान्मन्त्रस्य सर्वपितॄणां पिता वृङ्क्तामित्यभिधानम्। जात्यभिप्रायेण चैकवचनम् ॥ १० ॥

सू० दी०—प्रथमस्योपस्थानमन्त्रस्याऽऽवृत्तिरूहश्च पितामहप्रपितामहयोर्मासि श्राद्धे तथा दर्शनात्तथालिङ्गविरोधाच्च। न च पितृशब्देन त्रयाणामभिधानादपि नोह इति वाच्यम् एकवचनान्मातृशब्दसमभिव्याहाराच्च। तस्मादूहः। पितुरेवोपस्थानं प्रथमेन ॥ ९ ॥

ओष्मणो व्यावृत उपास्तेऽमीमदन्त पितरः सोम्या इति व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वा ॥ ११ ॥

भा० वृ०—गतार्थः ॥ ११ ॥

ओष्मणो व्यावृत उपास्ते ॥ ११ ॥

सू० दी०—व्यावृत्, व्यावृत्तिः साचोद्गच्छत ऊष्मणो न त्वान्तरस्यापि वीतोष्मसु पिण्डेष्वित्युत्तरत्र वचनात् ॥ १० ॥

अमीमदन्त पितरः सोम्या इति व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वा ॥ ११ ॥

सू० दी०—व्यावृत्तव्यावृत्त्योरन्यतोऽवगमः पराङ्मुखत्वादात्मनः॥११॥

यः स्थाल्यां शेषस्तमवजिघ्रति । ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां वीरं धत्त पितर इत्यामयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय सन्नाद्यात्तेन वा प्राश्यात् ॥ १२ ॥

भा० वृ०-योऽलमन्नाद्यायेति नैमित्तिकं यस्य नास्ति भोजनशक्तिः सत्यन्ने, भोजनकामो वा यदि भोक्तुं न शक्नुयात्। स नैमित्तिकत्वादवश्यं प्राश्यात् । प्राश्याद्द्वितीयालोपश्छा *-न्दसः ॥ १२ ॥

यः स्थाल्यां शेषस्तमवजिघ्रति ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो

* एतन्मते सूत्रस्थतेनेति तृतीया प्रथमात्वेन विपरिणमयितव्या। सूत्रे प्राश्यादिति क्रियापदानुसारेण द्वितीयान्तपदमावश्यकं कर्मत्वसंपत्तये। तदभावः सूत्रे स च्छान्दस इत्याह। छन्दोवत्सूत्राणीति भगवत्पतञ्जल्युक्तेः।

यज्ञो देवेषु कल्पतां वीरं धत्त पितर इति ॥ १२ ॥

सू० दी०—गतः ॥ १२ ॥

आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय सन्नाद्यात्तेन वा प्राश्यः ॥ १३ ॥

सू० दी०—आमयाविना तु यजमानेन प्राश्यो नावघ्रेयः । अन्नाद्यं व्याख्यातम् । योऽलमन्नाद्याय सन्नन्नवत्तया भोजनाय पर्याप्तः सन्नाद्याद्भोक्तुं न क्षमते सत्येव भोज्ये भुक्तिशक्तिशून्य इत्यर्थः ॥ १३ ॥

पूर्ववदेकस्फ्यायां त्रीनुदकाञ्जलीनुपनिनीयाऽऽञ्जनाभ्यञ्जने वासश्च त्रिरनुपिण्डं ददात्याङ्क्ष्व ततासावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्याञ्जनमेवमभ्यञ्जनमभ्यङ्क्ष्वेति मन्त्रश्च संनमति ॥ १२ ॥

ग० वृ०—स्पष्टार्थः ॥ १२ ॥

पूर्ववदेकस्फ्यायां त्रीनुदकाञ्जलीनुपनिनीयाऽऽञ्जनाभ्यञ्जने वासश्च त्रिरनुपिण्डं ददाति ॥ १४ ॥

सू० दी०—आञ्जनादित्रयं त्रिरनुपिण्डं ददाति पिण्डे पिण्डे त्रिस्त्रिर्ददातीत्यर्थः । अन्यथा त्रिग्रहणवैयर्थ्यात् ॥ १४ ॥

आङ्क्ष्व ततासावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्याञ्जनम् ॥ १५ ॥

सू० दी०—ददातीति शेषः । तत्र सकृत्सकृन्मन्त्रः । पिण्डेषु द्विपितुरूहश्च पूर्ववत् ॥ १५ ॥

एवमभ्यञ्जनमभ्यङ्क्ष्वेति मन्त्रश्च संनमति ॥ १६ ॥

सू० दी०—गतः ॥ १६ ॥

यदि नामानि न विद्यादाञ्जतां मम पितर आञ्जतां मम पितामहा आञ्जतां मम प्रपितामहा इत्याञ्जनम् । एवमभ्यञ्जनमभ्यञ्जतामिति मन्त्रश्च संनमति ॥ १३ ॥

भा०वृ०—यदि बन्धु + न विद्यादिति नामानि बान्धवानां न विद्यादिति शेषः । बन्धनं बन्धु नामरहिताः पितरः पिण्डे न संबध्यन्ते । नानामगृहीतं गच्छतीति दर्शनात् । नात्र बन्धुशब्दो बान्धववाची विलिङ्गत्वात् ॥ १३ ॥

इति नवमी कण्डिका ॥ ९ ॥

सू०दी०—पित्रादिषु मध्ये यस्य यस्य नाम न विद्यात्तस्य यथालिङ्गं स स मन्त्रो भवति ॥ १७ ॥

इति नवमी कण्डिका ॥ ९ ॥

---

एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा योष्टेति वाससो दशां छित्त्वा निदध्यात्पूर्णांस्तुकां वा पूर्वे वयसि । उत्तर आयुषि स्वं लोम ॥ १ ॥

भा०वृ०—एतानि वः पितर इति सर्वत्रैव बहुवचनान्तस्यैव पाठात्प्रतिपिण्डं वासोनिधानस्य कर्तव्यत्वादनूहः । आर्षपाठस्य क्वचिदप्यनुयोगादूहेनोपदेश इति । समुदायाभिप्रायोऽयं पाठ इति सर्वत्र पिता वृङ्क्तां पितृभ्यः स्वधाविभ्य इत्यत्रापि बहुवचनं नोपपद्यते । पितरः पितामहा इति लिङ्गात्तस्मादार्षपाठोपयोगः । पिता वृङ्क्तां पितामहो वृङ्क्तां पितृभ्यः स्वधा पितामहेभ्यः स्वधा पितरो वासांसि पितामहा वासांसीति । उत्तरमायुः, पञ्चाशत ऊर्ध्वमिति वक्ष्यति ॥ १ ॥

---

+ अत्र भाष्यवृत्तिकारेण बन्धुपाठः स्वीकृतस्तदनुसारं तद्व्याख्यानम् ।

सू०दी०—अनूह्यो मन्त्रः पितर इति सर्वत्र पित्रभिधानात् । आव- र्थस्त्वविभुत्वात्कर्मणः । बौधायनस्तूहमाह यथा—एतानि वः पितामहा वासांस्येतानि वः प्रपितामहा वासांसीति । दशा वास- सोऽग्रम् । ऊर्णा नामाविलोम्नां कलाप ऊर्णास्तुका । स्वं लोम यदूर्ध्वं नाभेस्तदेवेष्यते । ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाची- नममेध्यमिति श्रुतेः । तत्रार्धपुरुषायुषोऽपेक्षयाऽऽयुषः पूर्वोत्तरत्वं बोद्धव्यम् । तथा च पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोमेत्याश्वलायनः । अथवा तृतीयमायुर्वार्धकाख्यमुत्तरम् । तथा च बौधायनः— ऊर्ध्वं षट्षष्टेभ्यश्च वर्षेभ्योऽष्टभ्यश्च मासेभ्य इति । चतुर्थीपिण्डकल्पे तस्मिन्नपि तूष्णीमाञ्जनादि ददाति ॥ १ ॥

**वीतोष्मसु पिण्डेषु नमो वः पितरो रसायेति नम- स्काराञ्जपति गृहान्नः पितरो दत्त सदो वः पितरो देष्मेति पितॄनुपतिष्ठते ॥ २ ॥**

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—नमस्कारानिति वचनं मन्त्राणां नमस्कारार्थज्ञापनार्थम् । तेन नमस्कुर्वञ्जपति । तथा च ब्राह्मणं नमस्करोति नमस्कारो हि पितॄणामिति शेषो गतः ॥ २ ॥

**ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।**
**स्वधा स्थ तर्पयत मे पितॄनित्युदकं निनयति ॥ ३ ॥**

भा०वृ०—उदकुम्भस्थस्य निनयनं जलस्योर्जं वहन्तीरिति प्रस- व्यम् ॥ ३ ॥

सू०दी—उदकुम्भान्निनयत्येकस्फ्यायाम् ॥ ३ ॥

**मनो न्वाहुवामह इति मनस्वतीभिरुपतिष्ठत उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनुवेतापुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधा**

१ एतानि सूत्राणि भाष्यवृत्तिकारेण न व्याख्यातानि स्पष्टार्थत्वादिति प्रतीमः ।

देवतास्विति । [illegible]ति परेत पितरः सोम्या इति प्रवाहण्या पितॄन्प्रवाहयति ॥ ४ ॥

मनो न्वाहुवामह इति मनस्वतीभिरुपतिष्ठते ॥ ५ ॥

सू०दी०—मनस्वत्यस्तिस्रः ॥ ५ ॥

उत्तिष्ठत पितरः प्रेतशूरा यस्य पन्थामनुवेतापुराणम्। धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतास्विति पितॄनुत्थापयति ॥ ६ ॥

सू०दी०—तादर्थ्येन मन्त्रोच्चारणमेवोत्थापनम् ॥ ६ ॥

परेत पितरः सोम्या इति प्रवाहण्या पितॄन्प्रवाहयति ॥ ७ ॥

सू०दी०—प्रवाह्यन्ते प्रस्थाप्यन्तेऽनया पितर इति प्रवाहणी ॥ ७ ॥

प्रजापते न त्वदेतानीति यज्ञोपवीती गार्हपत्यदेशं गच्छति यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते॥ ५ ॥

भा०वृ०—गार्हपत्यप्रभृत्युत्तरं कर्म यज्ञोपवीत्येवेति । यजमानोऽत ऊर्ध्वं प्राचीनावीतीत्यस्य बाधकतया यज्ञोपवीतस्य प्रस्तुतत्वादत ऊर्ध्वं यज्ञोपवीत्येव । नेत्युपदेशः । अत ऊर्ध्वमिति विहितस्याऽऽ समाप्तेः प्राप्तपूर्वत्वाद्यावद्वचनं बाधो युक्त इति । अथवा प्राचीनावीतिना प्रसव्यमिति साङ्गे पित्र्ये प्राप्तस्यात ऊर्ध्वं प्राचीनावीतीति श्रौतप्रायश्चित्तार्थं तस्यैवानुवादादत ऊर्ध्वम् । यत्र परिभाषायां प्राचीनावीतित्वं तत्र प्राचीनावीतीति । अतः परिभाषाया बाधादूर्ध्वमिति । न चीक्ष्यत उपस्थानान्तमिति न्याय इति । उपस्थानार्थत्वाद्गार्हपत्यदेशं प्रति गमनस्योपस्थानान्तं यज्ञोपवीत्येव ॥ ५ ॥

प्रजापते न त्वदेतानीति यज्ञोपवीती गार्हपत्यदेशं गच्छति ॥ ८ ॥

सू०दी०—उभयमेतद्गार्हपत्योपस्थानार्थं यज्ञोपवीतं गमनं च तेनो-पस्थानान्तमिष्यते यज्ञोपवीतम् ॥ ८ ॥

यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते ॥ ९ ॥

सू०दी०—पङ्क्तित्वमस्याश्चिन्त्यं शक्करीत्वं त्वक्षरपरिमाणात् ॥ ९ ॥

अपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छत्याधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति । पुमाꣳसꣳ ह जानुका भवतीति विज्ञायते ॥ ६ ॥

भा०वृ०—पत्नीबहुत्वे मध्यमपिण्डविभागो मन्त्रावृत्तिश्च । प्रदान-मन्त्रस्य प्राशनमन्त्रस्य च ॥ ६ ॥

अपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छति ॥ १० ॥

सू०दी०—द्वितीयपिण्ड एवात्र मध्यमोऽभिप्रेतो न तृतीयश्चतुर्थस्या-नित्यत्वात् । पिण्डप्राशनं च पत्नीसंस्कारः, गर्भं धत्स्वेति लिङ्गात् पुमांसं ह जानुकेति स्तुतेश्च । अतः पत्नीबहुत्वे विभज्य सर्वाभ्यः प्रयच्छति दानमन्त्रश्चाऽऽवर्तते ॥ १० ॥

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति पुमाꣳसꣳ ह जानुका भवतीति विज्ञायते ॥ ११ ॥

सू०दी०—जानुका जननशीला ॥ ११ ॥

ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समा इत्यवशिष्टानामेकं यजमानः प्राश्नाति न वा स्थाल्यां पिण्डान्त्समवधाय ये समाना इति सकृदाच्छिन्नमग्नौ प्रहरत्यभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते अक्षन् प्रजानन्नग्ने पुनरप्येहि देवानित्येकोल्मुकं प्रत्यपिसृज्य प्रोक्ष्य पात्राणि द्वंद्वमभ्युपाहरति संतिष्ठते पिण्डपितृयज्ञः ॥ ७ ॥

भा०वृ०—गतार्थः, संतिष्ठते समाप्यते ॥ ७ ॥

ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समा इत्यवशिष्टानामेकं यजमानः प्राश्नाति न वा ॥ १२ ॥

सू०दी०—गतार्थः ॥ १२ ॥

स्थाल्यां पिण्डान्समवधाय ये समाना इति सकृदाच्छिन्नमग्नौ प्रहरति ॥ १३ ॥

सू०दी०—समवधाय सह क्षिप्त्वा। ये समाना इत्यृचैव बर्हिः प्रहरति। न वीरं धत्तेति यजुषाऽपि तस्या एवाऽऽदिप्रदेशात् ॥ १३ ॥

अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येहि देवानित्येकोल्मुकं प्रत्यपिसृज्य प्रोक्ष्य पात्राणि द्वंद्वमभ्युदाहरति ॥ १४ ॥

सू०दी०—प्रत्यपिसृज्य पुनः क्षिप्त्वाऽभ्युदाहरति उपादत्ते ॥ १४ ॥

संतिष्ठते पिण्डपितृयज्ञः ॥ १५ ॥

सू०दी०—गतः ॥ १५ ॥

अपः पिण्डानभ्यवहरेद्ब्राह्मणं वा प्राशयेत् ॥ ८ ॥

सू०दी०—अपोऽभ्यवहरेदप्सु क्षिपेत् ॥ १६ ॥

सोऽयमेवं विहित एवानाहिताग्नेः ॥ ९ ॥

भा०वृ०—अनाहिताग्नेरपि एवमेवानुष्ठेयमित्यर्थः ॥ ९ ॥

सू०दी०—एवं विहित एवायमन्यूनाधिकः पिण्डपितृयज्ञोऽनाहिताग्नेरपि भवतीत्यर्थः। अथवाऽनाहिताग्नेरप्ययमेवंविहित एव न केवलमाहिताग्नेरित्यर्थः ॥ १७ ॥

औपासने श्रपणधर्मा होमश्चातिप्रणीते वा जुहुयाद्यस्मिञ्जुहुयात्तमुपतिष्ठेत ॥ १० ॥

भा०वृ०—श्रपणधर्मा इति बहुवचननिर्देशादतिप्रणीते होममात्रमेवेति। श्रपणं च धर्माश्चेति श्रपणधर्मा न षष्ठीसमासः। जुहुयादित्येतावन्मात्रापदेशादितरेषामौपासन एव प्राप्तिः। उल्मुकाहरणं त्वतिप्रणीतादपि लभ्यते। अभून्नो दूतो हविषो जातवेदा इति लिङ्गात्। उभयोरपि परिस्तरणमिति। परिस्तरणस्य सर्वकार्यार्थत्वात् ॥ १० ॥

औपासने श्रपणधर्मा होमश्च ॥ १८ ॥

सू०दी०—तस्य दक्षिणाग्निस्थानीय औपासने श्रपणहोमौ भवतः॥ १८ ॥

अतिप्रणीते वा जुहुयात् ॥ १९ ॥

सू०दी०—औपासन एव श्रपयित्वा ततोऽग्निं दक्षिणाप्राञ्चं प्रणीय तस्मिन्वा जुहुयादित्यर्थः। तथा चाऽऽश्वलायनः—नित्यं श्रपयित्वाऽतिप्रणीय जुहुयादिति ॥ १९ ॥

---

१ स्पष्टार्थत्वाद्वृत्तिकारेण न व्याख्यानम्।

यस्मिञ्जुहुयात्तमुपतिष्ठेत ॥ २० ॥

सू० दी०—यस्मिन्नौपासनेऽतिप्रणीते वा जुहुयात्तमेव यदन्तरिक्षमित्युपतिष्ठेत ॥ २० ॥

तत्र गार्हपत्यशब्दो लुप्यते संस्कारप्रतिषेधात् ॥ ११ ॥

भा० वृ०—गार्हपत्यशब्दस्य लोपः । संस्काराणामाधानिकानामभावादिति सोऽयमेवं विहित एवानाहिताग्नेरित्याधानसंस्काररहितस्य विधानाद्यदन्तरिक्षमित्युपस्थानमन्त्रे गार्हपत्यशब्दस्य लोपः ।

न च तूष्णीं कश्सं मृन्मयं चेतिवत्कृत्स्नमन्त्रस्य लोपः । तत्र मुख्यस्य वानस्पत्यशब्दस्य कश्समृन्मययोरप्रवृत्तेर्मुख्यनिवृत्तेरितरेषां पदानामपि निवृत्तिर्युक्ता । अत्र तूपस्थानमन्त्रे, अग्निर्मा तस्मादिति विशेष्यभूताग्निप्रकाशनपरत्वान्मन्त्रस्य विशेषणवाच्यप्रधानो गार्हपत्यशब्दोऽसंभवान्निवर्तते । प्रधानानुरोधेन प्रवर्तत इति शेषः । अग्निं गृह्णामीति तु मन्त्रे श्वःशब्दप्राधान्यात्तस्य मन्त्रस्य सद्यस्कालायां लोपः श्वोभूते यजत इति श्वोरमणप्रार्थनार्थत्वाच्छ्वःकाले यक्ष्यमाणदेवतापरिग्रहपरत्वाच्च मन्त्रस्य । एवमन्यत्रापि मन्त्रपदलोपभाग ऊहनीयः । संस्कारप्रतिषेधादिति । हेतुव्यपदेशादिति । तस्मिन्नग्नौ संस्कारनिमित्ताच्च गार्हपत्यशब्दस्येति प्रवृत्तिरिति शेषः । न केवलं गृहपतिसंयोगमात्रात् । अथवा गृहशब्दः श्रौतकर्मण्येव रूढः । सगृहः प्रयास्यन्, यो वाऽध्वर्योर्गृहान्वेदेत्यादिदर्शनात्तस्य पतिर्गृहपतिस्तद्योगाद्गार्हपत्य इत्यभिप्रायः । कथं पुनस्तेषामभाव इति । अस्यार्थः—संस्काराभावो हि गार्हपत्यशब्दनिवृत्तौ हेतुः । औपासनेऽपि संस्कारा विद्यन्त एव । कथं पुनराधानसंस्काराणामभावो हेतुरुक्त इत्यर्थः । अनाहिताग्निना कार्य इति ते हि प्रतिषिध्यन्त इति । सोऽयमेवं विहित एवानाहिताग्नेरिति प्रकृत्य संस्कारप्रतिषेधादिति निर्देशादाधानसंस्कारप्रतिषेधानुवाद इत्यर्थः । नन्वेवं विहित एवेतिवचनादाधानपिण्डपितृयज्ञयोरङ्गाङ्गिभावेऽपि साधिकारश्रौतविधिप्रयुक्तत्वादाधानस्यात्रैवकारानिबन्धनेनान्यूनं प्रया-

क्त्यावगतेश्चाऽऽधानसंस्काराः प्राप्नुयुः । अतः संस्कारप्रतिषेधोऽन्वेष्टव्य इत्यत आह—यदि क्रियेरन्नाहिताग्नेरेव स्युरतः संस्कारप्रतिषेधाद्गार्हपत्यस्याप्रयोग इति ॥ ११ ॥

इत्यापस्तम्बसूत्रे धूर्तस्वामिभाष्यवृत्तौ तृतीयः पटलः ॥ ३ ॥

सु०दी०—तत्र त्वग्नावुपस्थीयमाने मन्त्रगतो गार्हपत्यशब्दो लुप्येत । कुत इति चेन्न । संस्कारप्रतिषेधात् । तत्र प्रतिषेधशब्देनाभावलक्षणा । गार्हपत्यशब्दस्याऽऽधानसंस्कारनिमित्तकत्वात्तस्य चाग्नेस्तदभावादित्यर्थः । अत्रानाहिताग्निर्मासि श्राद्धं पिण्डपितृयज्ञं चोभयं करोति । आहिताग्नेर्मासिश्राद्धनिवृत्तिर्मनुनोक्ता । यथा—'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः' इति । ननु विपरीतमपि मानवाः पठन्ति । तथा—'पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्' इति । सत्यम् । अत एव विरोधाद्विकल्पो भविष्यति । केचित्त्वेवमविरोधं नयन्ति । पितृयज्ञं तु निर्वर्त्येत्येतद्ब्राह्मणभोजनात्मकं श्राद्धं विदधाति न दर्शेनेत्येतद्धोमपिण्डात्मकं प्रतिषेधतीति । तथा च नैगमाः—आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि भोजयेत्पूर्वं श्रुतेरिति ॥ २१ ॥

इति दशमी कण्डिका ॥ १० ॥

---

इति तृतीयः पटलः ॥ ३ ॥

---

**अमावास्यायाᳬ रात्र्याᳬ स्वयं यजमानो यथाग्वाऽग्निहोत्रं जुहोत्यग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति ॥ १ ॥**

भा०वृ०—स्वयं विधानादेवोदकादीनामाहरणं यजमान एव करोति। पर्वणि वेति सिद्धत्वाद्यजमानस्यापर्वण्यपि सांनाय्यविकारे स्वयंहोमनियमार्थम् । यथा राजसूये 'ऐन्द्रे दधानि' इति । अस्यार्थः—अहरहर्यजमानः स्वयमग्निहोत्रं जुहुयात्पर्वणि वेति

यजमाननियमे सिद्धे पुनरिह स्वयंग्रहणादेधोदकादीन्यपि यजमान एवाऽऽहरति। ननु पर्वण्येवेत्यत्रापि स्वयंशब्दोऽनुवर्तते। न, ब्रह्मचार्यादिपक्षेऽप्यस्यानुवृत्तिप्रसङ्गात्। तत्राप्यनुवृत्तौ स्वयं यजमान इध्मानाहरतीत्यस्याऽऽनर्थक्यं भवति। यजमानग्रहणादपर्वण्यपि सांनाय्यविकारे कर्मणि क्रियमाणे राजसूय ऐन्द्रदध्नि दर्शे चापर्वणि पथिकृन्मुखे सायमग्निहोत्रं यजमान एव करोति। यवागूहोमो दधिप्रयुक्तो न कालप्रयुक्तोऽतो न भवत्यसंनयत इति अग्निहोत्रोच्छेषणमभ्यातनक्तीति नित्याग्निहोत्राङ्गतया पक्षसिद्धाया अपि यवाग्वाः पुनर्विधानात्तया होमो दधिप्रयुक्तो न कालप्रयुक्तो दधिप्रयुक्तयजमाने समभिव्याहारात्संनिपत्योपकाराच्च। अतः सांनाय्याकरणे यवागूनियमो न भवति। असंनयतः पथिकृन्मुखे यजमानस्यानियमः। संनयतस्तत्र यवाग्वा नियमः। अमावास्यायां चैधोदकादीनां स्वयमाहरणनियमः॥ १॥

सू०दी०—अथ सांनाय्यमारभ्यते। तत्रामावास्याशब्देन कर्मोच्यते न कालः कर्माधिकारात्। यथा पञ्चहोत्रामावास्यायामित्यादौ। तस्यां च सायमग्निहोत्रस्य नियमविशेषो विधीयते—यवाग्वा स्वयं जुहोतीति। तत्र यवागूः सांनाय्यप्रयुक्ता, अग्निहोत्रोच्छेषणमभ्यातनक्तीत्यातञ्चनसंयोगात्। न चेयमुच्छेषणप्रतिपत्तिरिति सांप्रतम्। उच्छेषणाभावे प्रतिनिध्युपदेशात्। नहि प्रतिपत्तिकर्मसु द्रव्यान्तरागमनं न्यायविदो विषहन्ते। न चैवमुच्छेषणनाशेऽग्निहोत्रावृत्तिः प्रतिनिधिनियमात्। बौधायनस्त्वाह—स यद्यग्निहोत्रोच्छेषणात्प्रमाद्येत्पुनरेवाग्निहोत्रं जहुयादिति। तेन संनयत एवायं विधिर्भवति नासंनयतः। तथाऽऽह कात्यायनः—यवाग्वाऽग्निहोत्रहोमः संनयतस्तां रात्रिमिति। सत्याषाढश्चाऽऽह—यवाग्वाऽमावास्यायां संनयत इति। अत एव सांनाय्यविकारेषु वैश्वदेवादिष्वप्रीप्यते॥ १॥

**नास्यैतां᳚ रात्रिं कुमाराश्चन पयसो लभन्ते॥ २॥**

भा०वृ०—कुमारा अपि न लभन्ते सर्वं दुह्यन्ते यथा वा संभवति।

कुम्भीति । षड्वराध्यनिति न्यूनसंख्यानिषेधादुत्तरावधेयावे-त्संभवार्थत्वात्कुमाराः पयो न लभन्ते यावद्वत्सं दोहनविधाना-त्सूत्रान्तरे कुम्भीपरार्ध्यविधानात्कुम्भीपरिमितपयःपर्याप्ता धेनव उत्तरावधिरिति । अस्मिन्पक्षेऽधिकं पयः कुमाराणां न लभ्यते । पूर्वस्मिन्पक्षे कुम्भ्यन्तरे सर्वा यजमानस्य गा दोहयित्वा शेषं भक्षणकाले ऋत्विज एव प्राश्नीयुः ॥ २ ॥

सू०दी०—चनेति निपातोऽप्यर्थः । अस्यां शाखायामस्य कुमारा अपि पयस एकदेशं न लभन्ते । सर्वमेव तु पयो हविर्थं दुह्यत इत्यर्थः ॥ २ ॥

## हुते सायमग्निहोत्रे सायंदोहं दोहयति ॥ ३ ॥

भा०वृ०—सायंदोह इति वचनाद्दोहश्च सायंकाल एव । निशायां सायंहोमं कुर्वतः पुरस्ताद्दोहोद्वासनान्तः पश्चादासेचनम् ॥ ३ ॥

सू०दी०—अग्निहोत्रानुवाद आनन्तर्यार्थः ॥ ३ ॥

## अग्नीन्परिस्तीर्याग्निमर्शी वा ॥ ४ ॥

भा० वृ०—परिस्तरणं सभ्यावसथ्ययोरकिंचित्करत्वादित्युपदेश इति । अग्नीनिति बहुवचनं त्रिष्वेव पर्यवस्यति । कपिञ्जलानितिवत् । का-र्याभावान्न संस्कारस्तयोर्होमादिकार्याभावात् । संस्कृतस्य कार्या-न्तरोपयोगाभावान्न संस्कारः । अनयोरन्वाधानं तूष्णीं क्रियते याजमानदर्शनादित्युक्तम् । अग्नीनित्यविशेषवचनात्कार्याभा-वेऽपि संस्कृतानामेवाग्न्यन्तरसाहचर्यम् । यथा—ऐकादशिन्यामुप-शययूपवदिति न्याय इति । अग्नेरग्न्योर्वा प्राधान्यं कार्यं वा भवति तदतिक्रम्याविशेषेणोपादानशब्दास्त्रिषु न पर्यवस्यति कार्यान्वयश्च त्रिषु नैकान्ततः । इडान्तपक्षेऽन्वाहार्यपचनस्याप्यभावाद्धार्यमा-णाश्च संस्काराः संभवन्ति । धारणमेवोपयोग इति । प्रणीताव-च्चानीषधे । यस्मिन्नग्नौ श्रपयति अग्निमिति पक्ष इत्यर्थः । अग्नी गार्हपत्याहवनीयौ । अग्नी इति पक्षे इत्यर्थः । अधिश्रयणमाहव-

नीयेऽपि लभ्यते हवींष्षीतिबहुवचननिर्देशादिति दर्शपूर्णमासयोर्नित्यवद्बहुपुरोडाशाभावेऽप्याहवनीये गार्हपत्ये वा हवींष्षि श्रपयतीति बहुवचननिर्देशात् । तथा यदेनयोः शृतंकृत्या थान्यत्रावभृथमवैतीति सिद्धवदनुवादाच्च । आहवनीयेऽपि सायंदोहादिश्रपणं तदग्निमिति पक्षे तस्यैव परिस्तरणम् ॥ ४ ॥

सू० दी०—अग्निं गार्हपत्यं तस्यैव कर्मसंयोगात् ।: अग्नी गार्हपत्याहवनीयौ प्राधान्यात् । उपस्तीर्यः पूर्वश्चाग्निरपरश्चेति श्रुतेश्च । परिस्तरणप्रकारश्चोपरिष्टाद्वक्ष्यते ।

सांनाय्यपात्राणि प्रक्षाल्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति ॥ ५ ॥

भा० वृ०—स्पष्टार्थः ॥ ५ ॥

कुम्भीं शाखापवित्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वाऽपिधानार्थमग्निहोत्रहवणीमुपवेषं च ॥ ६ ॥

भा० वृ०—अभिधानीं रज्जुर्वत्सबन्धनार्था । निदाने नियोगे बन्धने साधनभूते ॥ ६ ॥

सू० दी०—अभिधानी वत्सबन्धनी रज्जुः । निदाने गोः पादबन्धिन्यौ ॥ ५ ॥

समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते ॥ ७ ॥

भा० वृ०—समौ पृथुत्वेनेति । पवित्रयोर्दीर्घत्वस्य प्रादेशमात्रत्वात् । आयामतः समत्वे सिद्धे पृथुत्वेन समत्वम् ॥ ७ ॥

सू० दी०—समौ पृथुत्वेन ॥ ६ ॥

पवित्रे स्थो वैष्णवी वायुर्वां मनसा पुनात्विति तृणं काष्ठं वाऽन्तर्धाय छिनत्ति न नखेन विष्णोर्मनसा

पूते स्थ इत्यद्भिरनुमृज्य पवित्रान्तर्हिताया मां होत्र्यवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्विति प्रथमम् । अच्छिद्रेण पवित्रेणेति द्वितीयम् । वसोः सूर्यस्य रश्मिभिरिति तृतीयम् ॥ ८ ॥

भा०वृ०—गतार्थः ॥ ८ ॥

सू०दी०—तृणं काष्ठं वाऽन्तर्धाय दर्भयोर्दात्रस्य च मध्ये कृत्वा तेन सह च्छिनत्ति । अनुमार्जनं पवित्रक्रियाङ्गम् । अतः पवित्रे कृत्वेत्यादौ तदङ्गं क्रियते । उत्पवने त्वाहाऽऽश्वलायनः—नानाऽन्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामिति ॥

आपो देवीरग्रे पुव इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधाति । आपो देवीः शुद्धा स्थेमा पात्राणि शुन्धत । उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धत । देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिर्गो दोहपवित्रे रज्जुं सर्वा पात्राणि शुन्धतेति प्रोक्ष्यमाणान्यभिमन्त्र्यैता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते यजमानः ॥ ९ ॥

भा०वृ०—पर्णवल्कस्यापि प्रयोगः । पर्णवल्कमुत शुन्धतेति लिङ्गात् । प्रोक्ष्यमाणाभिमन्त्रणं न प्रातर्दोहे । उपातङ्क्याय देवानामिति लिङ्गात्प्रातर्दोह आतञ्चनाभावात् । गा आयतीरग्निसमीपमतः प्रातर्दोहेऽपि न तूपदेश इति । प्रस्थापितानां गोचराद्यजमानस्य

[illegible]। अतो न प्रातरिति। प्रोक्ष्यमाणान्यभिमन्त्रयेता अ.चरन्तीत्यादिना प्रतीक्षणस्य समानकर्तृकत्वावगमात्। प्रोक्ष्यमाणाभिमन्त्रणं च याजमानमतः प्रोक्ष्यमाणाभिमन्त्रणाभावे प्रतीक्षणस्यापि निवृत्तिः। स्वपक्षे च गोप्रस्थापनादिशाखोपस्थापनान्तं न प्रातर्दोहे। पक्षद्वयेऽपि नित्यधर्मोपदेशप्रसङ्गेनात्रैषां निवर्तनमुक्तं वत्सापाकरणस्य पुनर्विधानादिति। प्रातःकालापाकृतानां सायंदोहे संसर्जनात्। प्रातर्दोहार्थमर्थप्राप्तमपि वत्सापाकरणं पुनर्विधीयते। अत इतरेषां निवृत्तिः। प्रातर्दोहप्रत्यागतानां भक्षणार्थं प्रस्थापनाभावाच्च निवृत्तिः। उपगूहनस्यापि तदङ्गत्वान्निवृत्तिः॥ ९॥

इत्येकादशी कण्डिका ॥ ११ ॥

---

सू० दी०— उपातङ्कयाय देवानां पर्णवल्कमुत शुन्धतेति लिङ्गात्परिवासनशकलस्यापि प्रोक्षणमिष्यते। प्रातर्दोहे त्वभिमन्त्रणनिवृत्तिरत एव लिङ्गात्। तथा शमीशकले मन्त्रनिवृत्तिः पूर्ववत्। गोष्ठाद्विहारसमीपं प्रत्यायतीर्गाः प्रतीक्षते। महेन्द्रोपलक्षणं चात्र पूर्ववत्। तथा चाऽऽह बौधायनः—इह व इन्द्रो रमयतु गावो महेन्द्र इति वा यदि महेन्द्रयाजी भवतीति ॥ १० ॥

इत्येकादशी कण्डिका ॥

---

निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति गार्हपत्ये सांनाय्यपात्राणि प्रतितप्य धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय निरूढं जन्यं भयं निरूढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य मातरिश्वनो घर्मोऽसीति तेषु कुम्भीमधिश्रयति ॥ १ ॥

भा० वृ०—अङ्गारनिरूहणं न बहिरायतनात्। गार्हपत्ये श्रपयतीति वचनादिति बहिरायतनान्निरूढे गार्हपत्यत्वं न विद्यत इति। अग्निहोत्रे व्यन्तानगार्हपत्येन कृत्वेति विशेषदर्शनाच्च ॥ १ ॥

सू०दी०—अन्तरायतनमेव निरूहणं व्यन्तान्कृत्वेति क्वचिद्व्यन्तकरणात् ॥ १ ॥

अग्रस्य स्थ यज्ञस्योखे उपदधाम्यहम्। पशुभिः संनीतं बिभृतमिन्द्राय शृतं दधीति वा ॥ २ ॥

भा०वृ०—महेन्द्राय शृतं दधीति महेन्द्रयाजिनो नायं प्रातर्दोहे दधित्वाभावादिति। अग्रस्यस्थायेत्ययं मन्त्रो न भवति। एकस्यामप्युखायां द्विवचनमिति। एकस्मिन्काले कुम्भीद्वयप्रयोगाभावादुखे उपदधामीति द्विवचनमविवक्षितम्। नमः स्वरुभ्य इति वद्व्यत्ययो वा। सर्वासां दोहनियमादुखे इत्यपि लभ्यत इति यजमानस्य बहुगुत्वाद्यदा सर्वा यजमानस्य गा दोहयित्वेतिनियमादेककुम्भ्यधिकं पयस्तदाऽयं मन्त्रो व्यवतिष्ठत इत्यर्थः ॥ २ ॥

सू०दी०—प्रातर्दोहकुम्भ्यपेक्षमुखे इति द्वित्वम्। तेन केवले पयसि दधनि च यथार्थमूहः ॥ २ ॥

भृगूणामङ्गिरसां तपसा तप्यस्वेति प्रदक्षिणमङ्गारैः पर्यूह्य वसूनां पवित्रमसीति तस्यां प्रागग्रं शाखापवित्रमत्यादधातीत्युदक् प्रातः कुम्भीमन्वारभ्य वा यच्छति पवित्रं वा धारयन्नास्ते ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—प्रदक्षिणवचनमविस्मरणाय। प्रातर्दोह उदगग्रमत्यादधाति मन्त्रादन्यस्याव्याहरणं वाग्यमनं यदि प्रमत्तो व्याहरेदिति लिङ्गात्। आश्वलायनश्चाऽऽह—"अन्यद्यज्ञस्य साधनादा पद्ये" ति। कुम्भ्यन्वारम्भेणेदं विकल्पते कुम्भ्या उपरि पवित्रं धारयन्वाग्यत आस्त इति ॥ ३ ॥

अदित्यै रास्नाऽसीत्यभिधानीमादत्ते। त्रयस्त्रिंशोऽसि तन्तूनां पवित्रेण सहाऽऽगहि शिवेयं रज्जुरभिधा-

न्यघ्नियामुपसेवतामित्यादीयमानामभिमन्त्रयते यजमानः पूषाऽसीति वत्समभिदधाति ॥ ४ ॥

भा०वृ०—अभिधान्यादानादि दोग्धुः। वत्सबन्धनमभिधान्या लिङ्गस्य चाविवक्षा। अस्यार्थः—वत्सबन्धनानुमन्त्रे शिवेयꣳरज्जुरभिधानीति लिङ्गात्। सा च सूक्ष्मा मृदुः श्लक्ष्णा शिवेति लिङ्गात्। त्रयस्त्रिꣳशोऽसीति पुंलिङ्गस्याविवक्षा वत्साभिधानादभिदधाति बध्नाति ॥ ४ ॥

सू०दी०—इयं दोहचेष्टा दोग्धृकर्तृका सामर्थ्यात्। अभिदधाति बध्नाति। अत्र निदानरज्ज्वा गोः पादौ च बध्नाति ॥ ४ ॥

उपसृष्टां मे प्रब्रूतादिति संप्रेष्यत्युपसृजामीत्यामन्त्रयते। अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीरिति वत्समुपसृजति गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टेति संप्रेष्यति ॥ ५ ॥

भा०वृ०—उपसृष्टां म इति संप्रैषोऽध्वर्योः, उपसृजामीति दोग्धुः, वत्सोपसर्गोऽयक्ष्मा व इत्यर्धर्चेन। उत्तरार्धर्चं उप वः सदेयमित्युपसदनलिङ्गादर्धर्चस्य पाठाच्च। अन्यथा, आदिं कृत्वा कृत्स्नं वा गृह्णीयात्। द्वितीयेन निदानेन गोः पादे वत्सबन्धनमिति। उपसृष्टो वत्सः स्तनप्रदेशादपनीय गोः पादे* बध्नीत। प्रथमेन निदानेन गोः पादयोर्बन्धनम्। अभिधान्या तु प्रथमम् प्राकृतस्थाने वत्सबन्धनम्। यदा प्राप्नुयाद्वत्सो गां तदा गां चोपसृष्टामित्यध्वर्युर्यजमानायाऽऽचष्ट इति मा संचारिष्टेत्येकवचनाद्यजमानस्य कर्मसंबन्धितया संनिहिततयाद्दोग्धुश्च दोहनदेशेऽवस्थितत्वात् ॥ ५ ॥

सू०दी०—उपसृष्टामुपगतवत्सां मे प्रब्रूहीति दोग्धारं प्रेष्यत्यध्वर्युः। आमन्त्रयतेऽध्वर्युं दोग्धा तत उपसृजत्यर्धर्चेन। मा संचारिष्टेत्याह यजमानमध्वर्युः ॥ ५ ॥

---

* पादसमीप इत्यर्थः।

यद्युपसृष्टां व्यवेयात्सांनाय्यं मा विलोपीति ब्रूयात् ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—यदि यजमानोऽन्तरा गच्छेत्तत्र प्रायश्चित्तार्थमेतद्यजुर्जपेत् ॥ ६ ॥

उपसीदामीत्यामन्त्रयते । अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः । ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयमिति दोग्धोपसीदति न शूद्रो दुह्याद्दुह्याद्वा दारुपात्रे दोग्धि ॥ ७ ॥

भा०वृ०—उपसीदामीति दोग्धाऽध्वर्युमामन्त्रयते, दारुपात्रे दोग्धि काममेव दारुपात्रेणेति प्रतिप्रसवाद्दारुपात्रेण शूद्रोऽग्निहोत्रमेव न दुह्यादित्यग्निहोत्र एव शूद्रनिषेधादत्र शूद्रस्याभ्यनुज्ञानाच्छूद्र एव न दुह्यादिति प्रतिषेधः प्रकृतदारुपात्रनिषेधपरः ॥ ७ ॥

सू०दी०—दोहयाजमानार्थं यजमानमामन्त्रयते तत उपसीदति। शूद्र एव न दुह्यादित्यादि ब्राह्मणे तस्य निषेधादनुज्ञानाच्चेति । शूद्रस्यापि दोग्धुर्मन्त्रा भवन्तीति वचनात् ॥ ७ ॥

उपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते । अयक्ष्मा वः प्रजया संसृजामीत्युपसृष्टाम् । द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधात्विति दुह्यमानाम् ॥ ८ ॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

इति द्वादशी कण्डिका ॥

---

सू०दी०—गतार्थः ॥ ८ ॥

इति द्वादशी कण्डिका ॥

---

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ सुवर्विदम् । तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्यजमानममृतत्वे दधात्विति धाराघोषम् ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—द्विरुपसृष्टादिग्रहणं वैचित्र्यार्थम् ॥ १ ॥

दुग्ध्वा हरति तं पृच्छति कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियमित्यमूमिति निर्दिशति यस्यां देवानां मनुष्याणां पयो हितमिति प्रत्याह ॥ २ ॥

भा०वृ०—महेन्द्रायेति महेन्द्रयाजिनः । अमूमिति दोग्धुः । अमूं यस्यां देवानामिति मश्लिष्टपाठादमूमिति द्वितीयान्तं नाम निर्दिश्य गङ्गामिति प्रतिवचनं पयो हितमित्यन्तं दोग्धुः ॥ २ ॥

सू०दी०—हस्तयध्वर्यवे दोग्धा । तं दोग्धारमध्वर्युः पृच्छति कां गां दुग्धवानसीति स च दुग्धां गां नाम्ना निर्दिशन्नेवं प्रत्याह ॥ २ ॥

सा विश्वायुरित्यनुमन्त्रयते ॥ ३ ॥

भा०वृ०—सा विश्वायुरित्यध्वर्योर्गोरनुमन्त्रणम् ॥ ३ ॥

सू०दी०—निर्दिष्टां गामध्वर्युः ॥ ३ ॥

देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवेति कुम्भ्यां तिरः पवित्रमासिञ्चति हुतस्तोको हुतो द्रप्सं इति विप्रुषोऽनुमन्त्रयत इति द्वितीयां तृतीयां च दोहयति सा विश्वव्यचा इति द्वितीयामनुमन्त्रयते । सा विश्वकर्मेति तृतीयाम् ॥ ४ ॥

भा०वृ०—स्पष्टार्थः ॥ ४ ॥

सू०दी०—तिरोऽन्तर्धौ । आसिञ्चति पय आदायाऽऽनयत्यध्वर्युः । रज्ज्वादानस्य सर्वार्थत्वाद्वत्साभिधानाद्यावर्तते ॥ ४ ॥

तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा ॥ ५ ॥

भा०वृ०—बहु दुग्धि महेन्द्राय देवेभ्य इति धोक्ष्यमाणगवार्थमिति तिस्रो दोहयित्वा बहु दुग्धीति पुनर्दोहविधानाद्धव्यमाप्यायतां पुनरिति हविर्वृद्ध्यर्थत्वाच्चातो न गृह्यामिति । नक्षत्रेष्ट्यां वायवे निष्ट्यायै गृष्ट्यै दुग्धमित्यत्र गवान्तरदोहाभावाद्बहु दुग्धीत्यस्य निवृत्तिः ॥ ५ ॥

सू०दी०—बहु दुग्धीति संप्रैषं त्रिरुक्त्वा ततः परं वाङ्नियमान्निवर्तत इत्यर्थः । अनन्वारभ्य कुम्भीमिति शेषः । बौधायनस्त्वत्रानुग्रहमाह दुग्धमलभमानस्य । वत्सापाकरणप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः । आसेचनप्रभृतीनिति शालीकिरिति ॥ ५ ॥

दोहनेऽप आनीय संपृच्यध्वमृतावरीरिति कुम्भ्याः संक्षालनमानीयात्रिष्यन्दयन्सुशृतं करोति दृꣳह गा दृꣳह गोपतिं मा वो यज्ञपती रिषदितिवर्त्म कुर्वन्प्रागुद्वासयत्युदक्प्रागुदग्वैकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथाद्यातञ्चनार्थं दोहयित्वा संततमभिदुहन्त्योपवसथात्तेन शीतबुध्नमातनक्ति ॥ ६ ॥

भा०वृ०—स्पष्टार्थः ॥ ६ ॥

सू०दी०—वर्त्म कुर्वन्कर्षन् । संततं सायंप्रातरविच्छेदः, अभिदोह उपरिदोहः । प्रथमं महत्यां कुम्भ्यां दोहयित्वा तस्यामेव काले काले दुहन्तीति यावत् । शीतमनुष्णं कुम्भीपृष्ठं यस्य तच्छीतबुध्नम् ॥ ६ ॥

सोमेन त्वाऽऽतनच्मीन्द्राय दधीति दध्ना ॥ ७ ॥

भा०वृ०—महेन्द्राय दधीति महेन्द्रयाजिनः। अयमपि न गृह्यमातञ्चनाभावात् ॥ ७ ॥

सू०दी०—पयस्तेन दध्नाऽऽतनक्ति ॥ ७ ॥

यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यग्निहोत्रोच्छेषणमन्ववधायायं पयः सोमं कृत्वा स्वां योनिमपि गच्छतु। पर्णवल्कः पवित्रः सौम्यः सोमाद्धि निर्मित इति परिवासनशकलमन्ववदधाति ॥ ८ ॥

भा०वृ०—स्पष्टार्थः ॥ ८ ॥

इति त्रयोदशी कण्डिका।

---

सू०दी०—द्वितीयमन्त्रस्य पलाशलिङ्गत्वाच्छम्यां निवृत्तिः पूर्ववत्। अथ प्रथमातञ्चनद्रव्यस्य दध्नो विकल्पानाह ॥ ८ ॥

इति त्रयोदशी कण्डिका।

---

ओषधयः पूतीकाः फलास्तण्डुलाः पर्णवल्का इत्यातञ्चनविकल्पाः ॥ १ ॥

भा०वृ०—ओषध्यादय आतञ्चनेन दध्ना विकल्पन्ते। यत्पूतीकैरित्युपक्रम्य यद्दध्नाऽऽतनक्ति सेन्द्रत्वायेत्युपात्तानां समानार्थत्वाद्दध्नाऽऽतनक्तीति पुनर्विधानात्तस्य मुख्यत्वमितरेऽनुकल्पाः ॥ १ ॥

सू०दी०—ओषधयो व्रीह्यादयः। पूतीका लताविशेषाः फला बदरीफलानि। पर्णवल्काः पलाशशकलानि। अथ द्वितीयातञ्चनद्रव्यस्योच्छेषणस्य नाशादौ प्रतिनिधिमाह ॥ १ ॥

उच्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभाव ओषधीभिः ॥ २ ॥

भा०वृ०—स्पष्टार्थः ॥ २ ॥

सू०दी०—असत्युच्छेषणे न तत्पुनरागमयितव्यं न च लोपः कर्मणः। अपि तु तण्डुलैरातञ्च्यात्तदभावे व्रीह्यादिभिरित्यर्थः। एतेन सौमिके च पयस्यादावपि द्वितीयातञ्चनं व्याख्यातम् ॥२॥

आपो हविःषु जागृत यथा देवेषु जाग्रथ। एवमस्मिन्यज्ञे यजमानाय जागृतेत्ययस्पात्रे दारुपात्रे वाऽप आनीयादस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इति तेनापिदधाति। अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम्। तिरः पवित्रमतिनीता आपो धारय मातिगुरिति यजमानो जपति यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वाऽपिधानेऽनुप्रविध्येत् ॥ ३ ॥

भा० वृ०—अमृन्मयमिति न मृन्मये। मृन्मयेऽपीत्युपदेशः। अनुप्रविद्ध्येत्तृणकाष्ठाभिप्रायेण। आपो धारयेत्यपां धारणप्रकाशनादमृन्मयमिति च पात्रोपलक्षणार्थत्वादपां धारणे तत्सहायमात्रं मृन्मयं करोतीति ॥ ३ ॥

सू० दी०—मृन्मयेन वाऽपिदध्यात्। तदा तस्मिंस्तृणं काष्ठं वा क्षिपेदित्यर्थः। तत्रामृन्मयमितिमन्त्रो लिङ्गविरोधान्निवर्तते।

विष्णो हव्यꣳ रक्षस्वेत्यनधो निदधाति ॥ ४ ॥

भा० वृ०—न भूमौ निदधात्युपरि निदधातीत्यर्थः ॥ ४ ॥

सू० दी०—गतः ॥ ४ ॥

इमौ पर्णं च दर्भं च देवानाꣳ हव्यशोधनौ। प्रातर्वेषाय गोपाय विष्णो हव्यꣳहि रक्षसीति प्रज्ञातꣳ शाखापवित्रं निदधाति ॥ ५ ॥

भा० वृ०—शाखापवित्रनिधानं प्रातर्दोहार्थं प्रातर्वेषायेतिलिङ्गादतो न केवले दधनि पयसि तु केवलेऽपि भवति पर्णवल्कमुतेत्यत्र पर्णवल्कः पवित्रम्, इमौ पर्णमिति च शमीशाखायां निवर्तते।

पर्णवल्कमुतेत्यस्य ग्रहणान्मन्त्रैकदेशलोप इतरयोः, अयं पयः सोममिति, इमौ पर्णमिति आपो देवीरितिमन्त्रे कात्स्न्र्येन निवृत्तिः। पर्णवल्कशब्दयोगादतः शमीशाखायां पर्णवल्कनिवृत्तिरेव। पवित्राभिधानादनिवृत्तिरुपदेश इति पवित्रपर्णयोरुभयोः प्राधान्यात्पवित्राभिधानमाश्रित्यानिवृत्तिरिति ॥ ५ ॥

सू० दी०—शाखापवित्रनिधानं प्रातर्दोहार्थं तत्रोपयोगात्प्रातर्वैषायेतिलिङ्गाच्च। तेन तद्विकारे पशुपयस्यादौ सद्यस्कालेऽपि भवत्येव। न च भवति केवले दाध्नि ॥ ५ ॥

**तयैव शाखया दर्भैर्वा सायंदोहवत्प्रातर्दोहाय वत्सानपाकरोति ॥ ६ ॥**

भा० वृ०—स्पष्टम् ॥ ६ ॥

सू० दी०—तयैवेति शाखान्तरस्य निरासः पवित्रस्य चेत्येके। गवां प्रस्थापनादि त्वर्थलोपान्निवृत्तं रात्रावसंचारात् ॥ ६ ॥

**उपधाय कपालानि सायंदोहवत्प्रातर्दोहं दोहयति। आतञ्चनापिधाने निधानं च निवर्तते ॥ ७ ॥**

भा० वृ०—उपधाय कपालानि प्रातर्दोहं कृत्वाऽङ्गाराध्यूहनमित्युपदेश इति। उपधाय दोहयतीत्यानन्तर्यविधानात्। कृत्वाऽध्यूहनमिति न्याय इति। कपालसंस्कारतया तदङ्गत्वादध्यूहनान्त उपधानसमाप्तिरित्यर्थः ॥ ७ ॥

सू० दी०—गतः ॥ ७ ॥

**नासोमयाजी संनयेत्संनयेद्वा ॥ ८ ॥**

भा० वृ०—असंनयतः सांनाय्यविकारा अपि न भवन्त्यग्नीषोमीयविकाराश्चासोमयाजिन इति। अस्यार्थः–सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवदितिन्यायात्सोमयाज्येव संनयेदाग्नेयो वै दैवतया ब्राह्मणः स सोमेनेष्ट्वाऽग्नीषोमीयो भवतीति च सोमयागोत्तरकालस्य सांनाय्याग्नीषोमीयाङ्गत्वात्तद्विकाराणां च

नाधिकारस्तत्कालप्राप्तिस्तत्कालसंपादनसमर्थस्यैवेति विकृतिष्वपि तत्कालप्राप्तेस्तत्कालसंपादनसमर्थस्यैवाधिकार इति । असोमयाजिन इति वक्तव्येऽसंनयतः सांनाय्यविकारा इतिवचनमसोमयाजिनोऽपि संनयनविधानात् । वचनात्तु भवन्ति । यथा पशुचातुर्मास्यानीति च क्रमात् । अस्यार्थः—असोमयाजिनोऽपि भवन्ति वचनाद्विकृतयः । यथाऽऽग्रयणपशुचातुर्मास्यान्याधानोत्तरकालं क्रमेणोपदेशाद्भवन्ति । नैष क्रमोऽनुष्ठाने प्रमाणमाधानात्प्रागेव दर्शपूर्णमासोपदेशादिति न वक्तव्यम् । दर्शपूर्णमासयोः स्वरूपमात्रं प्रागुक्तमनुष्ठानं तु दर्शपूर्णमासावारप्स्यमान इत्यत्रोपदिश्यते । तथा, आश्वलायनः—दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेनेति । सोमयाजिनो मृतभार्यस्य पुनर्दारग्रहणोत्तरमग्नीषोमीयसांनाय्ये भवत एव न पत्न्यनधिकारान्निवर्तते । स्त्रीणां पतिप्रयुक्ताधिकारोपजीवनात्तथा च क्षत्रियाया अग्नीषोमीयेऽधिकारदर्शनमप्रधानत्वाच्च । यदा वाऽङ्गेन विधुरतां नीयादिति । यजमानस्याङ्गं पत्नीतिदर्शनात् । तथा त्रयोदशरात्रमहतवासा यजमानोऽप्रसन्नत्रैव सोमेन पशुना वेष्ट्वेति पशुः ॥ ८ ॥

सू०दी०—अथ सांनाय्यदेवताव्यवस्थां ब्राह्मणोक्तां दर्शयति ॥ ८ ॥

**नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रिय इत्युक्तम् ॥ ९ ॥**

भा०वृ०—त्रयो वै गतश्रिय इत्यस्य व्याख्या । शुश्रुवांस्त्रिवेदी ब्राह्मणः । ऋचः सामानि यजूꣳषि सा हि श्रीरिति गता प्राप्ता श्रीर्यस्य स गतश्रीरितिवचनाच्छ्रीशब्देन वेदत्रयाभिधानाच्च । शुश्रुवाꣳसो वै कवयः । कविर्वेदप्रान्तदर्शीति वचनात् । य एवं त्रिवेदः स एव शुश्रुवान् गतश्रीर्भवति । श्रुतत्रय्यर्थ इत्यर्थः । नान्यतमग्रामणीर्महत्तरो वैश्यानामिति । श्रीशब्दस्य लोके धनसमृद्धौ वृत्तेस्तद्वानपि गतश्रीः । राजन्योऽभिषिक्तस्य पुत्रस्तस्यापि धनयोगाद्गतश्रीत्वं यो वैनां स्वां देवतामित्यत्रागतश्रियो

वादः संवत्सरमिन्द्रमितिनियमविधिशेषत्वाद्भ्रातपतिं कृत्वेन्द्रयाजिन्द्रो महेन्द्रो वा इज्येतेति शेषः। ततोऽधिकामं यजेतेत्यस्याः श्रुतेरर्थः। संवत्सरमिन्द्रयाजिनो भ्रातपत्युत्तरकालमिन्द्रं महेन्द्रं वा तयोरनियमः। इतरस्य महेन्द्र एव गतश्रियस्तेषां महेन्द्रो देवतेति नियमात् ॥ ९ ॥

सू०दी०—एवं प्रतीके ब्राह्मणे यदुक्तं तत्तत्रैवानुसंधातव्यम्। न पृथगभिधास्यत इति भावः। तत्र नागतश्रीर्महेन्द्रं यजेतेति प्रकृत्य गतश्रीशब्दार्थस्तावद्व्याख्यातः। त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्य इति। तत्र शुश्रुवान्वेदतदर्थयोः श्रुतवान्। ग्रामणीर्वैश्यपरिवृढः। राजन्यः क्षत्रियः। अत्र केचिच्छुश्रुवच्छब्दार्थे विवदन्ते वदन्ति च शुश्रुवानिति त्रिवेदविदेवोच्यते नैकवेदवित्। गतश्रीशब्दव्युत्पत्तिवशाद्गता प्राप्ता श्रीर्येन स गतश्रीः। श्रीश्च त्रिवेदविदुषामृचः सामानि यजूंषि सा हि श्रीरमृता सतामिति श्रुतेरिति। तन्न विश्रब्धव्यम्। शुश्रुवच्छब्दव्युत्पत्त्या शुश्रुवांसो वै कवय इति श्रुतेरेकवेदविदोऽपि गतश्रीत्वाविरोधाच्च। न हि सा हि श्रीरमृता सतामित्यत्रर्गादिसमुच्चयः प्रमाणवान्येन विरोधः स्यादेकैकस्यापि वेदस्य श्रीत्वोपपत्तेः। न हि गोहिरण्यव्रीहयो नृणां धनमित्युक्ते तेष्वेकैकवतां धनवत्ता न गम्यते। अतो गतश्रीशब्दाविरोधात्, शुश्रुवच्छब्दाविरोधाच्च यथोक्त एव शुश्रुवान्गतश्रीशब्दार्थः। एवं नित्यो गतश्रियो ध्रियत इत्यादावपि द्रष्टव्यम्। अथ तेषां महेन्द्रो देवतेत्यस्यार्थः। तेषां गतश्रियां नित्यं महेन्द्रो देवता ततोऽन्येषां सर्वेषां नित्यमिन्द्रः। यदि तेऽपि महेन्द्रं यियक्षेरंस्तदा सांनाय्योपक्रमप्रभृति संवत्सरमिन्द्रमिष्ट्वा ततो भ्रातपतीमिष्टिं निरुप्य तत ऊर्ध्वं कामं महेन्द्रं यजेरन्निति। अयं चार्थः कल्पान्तरेषु व्यक्तोऽनुसंधेयः। यथा शुश्रुवदादीनां नित्यं महेन्द्रयागमुक्त्वाऽऽह भारद्वाजः। इन्द्रयाजिनः स य इन्द्रयाजी महेन्द्रं यियक्षेत संवत्सरमिन्द्रमिष्ट्वेत्यादि। अथ गतश्रियामपि मध्ये केषांचिच्छाखान्तरोक्तं विशेषमाह ॥ ९ ॥

और्वो गौतमो भारद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् ॥ १० ॥

भा०वृ०—और्वादयोऽकृतसोमा इन्द्रयाजिन एव गतश्रियः । अगतश्रीणामेषामपि सोमादूर्ध्वं महेन्द्र एव ॥ १० ॥

सू०दी०—येऽमी त्रयस्ते सोमयागात्प्रभृति नित्यं महेन्द्रं यजेरन्प्राक् सोमात्तु नित्यमिन्द्रम् । न तु तेषां संवत्सरमिन्द्रयागादिनियमः । स चायं कल्पः पूर्वोक्तेन वा विकल्पते शाखान्तरत्वात् । व्यवस्थितोऽयं विकल्प और्वादीनामित्यन्ये । अथेमं विधिं सर्वेषां गतश्रियामगतश्रियां च विकल्पयति ॥ १० ॥

यो वा कश्चित् ॥ ११

भा०वृ०—यो वा कश्चिदित्यस्य द्विधा योजना और्वादिव्यतिरिक्तानामगतश्रीणामपि सोमादूर्ध्वं महेन्द्र एव । अथवा, और्वादीनामेव गतश्रीरगतश्रीर्वा सोमादूर्ध्वं महेन्द्रं यजेतेति ॥ ११ ॥

सू०दी०—अनन्तरमित्यादेरनुषङ्गो यजेतेति विपरिणामश्च ॥ ११ ॥

ततः संप्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु । अपां रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिँल्लोक इति ॥ १२ ॥

भा०वृ०—संप्रेष्यतीतिवचनादाग्नीध्रं प्रति संप्रेष्यति । संप्रैषस्तु परार्थ एव ॥ १२ ॥

सू०दी०—अध्वर्योरन्यस्य परिस्तरितुरवचनात्स्वयमात्मानमनुजानीयादितिवदात्मन एव संस्कारार्थः संप्रैषः । तेनाध्वर्युरेव परिस्तृणाति संप्रैषमन्त्रस्तूच्चैरेकश्रुत्या सकृद्भवति । १२ ॥

परिस्तरणीमेतामेके समामनन्ति ॥ १३ ॥

भा० वृ०—प्रत्यग्नि मन्त्रावृत्तिर्यदि परिस्तरणी । परिस्तरणीपक्षेऽध्वर्युरेव परिस्तृणाति प्रत्यग्नि मन्त्रावृत्तिः ॥ १३ ॥

सू०दी०—अस्मिंस्तु कल्पे मन्त्रः करणत्वादुपांशु चातुःस्वर्येण प्रत्यग्नि भवति ॥ १३ ॥

**उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्परिस्तृणात्युदगग्राः पश्चात्पुरस्ताच्च ॥ १४ ॥**

भा०वृ०—न क्रमार्थः, उदगग्राः पश्चात्पुरस्ताच्चेतिवादो न क्रमपरः। अतः परिस्तरणसमाप्तिः प्राग्वोदग्वोदगग्रानियमार्थः। अत्रोदगग्रनियमादन्यत्र प्रागग्रैर्दर्भैरग्निं परिस्तृणातीत्यर्थात्सिध्यति। द्वयोरपि परिस्तरणपक्षे तदाहवनीयादि। परिस्तीर्यः पूर्वश्चाग्निरपरश्चेति क्रमनिर्देशात् ॥ १४ ॥

सू०दी०—दर्भैः परिस्तरणीयैराधानक्रमेण परिस्तृणाति सर्वान्। द्वयोरेव तु परिस्तरणमुक्तं ब्राह्मणे यथोपस्तीर्णः पूर्वश्चाग्निरपरश्चेतिश्रुतेः। तेषु पश्चात्पुरस्ताच्च ये दर्भास्त उदगग्रा भवन्ति तत्र दक्षिणः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तर इति भारद्वाजः ॥ १४ ॥

**एतत्कृत्वोपवसति ॥ १५ ॥**

भा०वृ०—एतत्कृत्वाऽग्राम्येभ्य उपवसति उपदेशादेव क्रमे सिद्ध एतत्कृत्वेति पुनरुपादानमन्यत्र यजमानस्य रात्र्युपवासनिषेधार्थम्। यदनाश्वानुपवसेत्पितृदेवत्यः स्यादितिदर्शनाच्च समानकर्तृकता परिस्तरणोपवासयोः। सायं परिस्तीर्यमाणेषु जपतीतिकार्यान्तरविधानादारण्यानश्नाति ॥ १५ ॥

सू० दी०—यदेतदग्न्यन्वाधानादि परिस्तरणान्तं कर्मोक्तमेतावति कृते यजमान उपवसति। अथवैतत्परिस्तरणं कृत्वेत्यर्थः। श्वो यागार्थोऽग्निसमीपे नियमविशिष्टो वास उपवासः। नियमाश्च वक्ष्यन्ते। एवं तावद्यथाब्राह्मणमुपवासप्रकार उक्तः। तत्रैवेदानीं शाखान्तरीयं विधिं दर्शयति ॥ १५ ॥

**अग्न्यन्वाधानं वत्सापाकरणमिध्माबर्हिर्वेदो वेदिः। प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूत आज्यलेपं निनीयोत्तरं परिगृह्णीयात्परिस्तरणं च पूर्वेद्युरमावास्यायां पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः ॥ १६ ॥**

भा०वृ०—वेदिः परिस्तरणं च पूर्वेद्युरमावास्यायामिति वेदो वेदिः परिस्तरणं च पूर्वेद्युरिति सूत्रान्वयः। वेदिसंस्कारश्च प्रागुत्तरात्परिग्राहात्कृत्वेति वेदो वेदिरित्युक्तस्य वेदिकरणस्यावधिनिर्देशः। आप्यलेपं निनीयोत्तरपरिग्रहणमिति न्यायमाप्तानुवादः। अन्वाधानादीनि पौर्णमास्यां पूर्वेद्युः श्वोभूत इध्माबर्हिर्वेदिश्च। श्वोभूते पाणिप्रक्षालनात्पूर्वं इध्माबर्हिर्वेदान्कृत्वा पाणिप्रक्षालनादि आप्यलेपं निनीय वेदिकरणम्। उपदेशस्तु पूर्वेद्युरिध्माबर्हिः करोतीत्यविशेषवचनात्पुरा बर्हिष आहर्तोरिति लिङ्गाच्चैतान्यपि लभ्यन्ते पूर्वेद्युः पूर्वेद्युर्वेदिकरणपक्षे न सादनप्रोक्षणे स्फ्यवेदयोः पाठक्रमबाधादिति। पात्रासादनप्रोक्षणयोरुत्तरेद्युः पाठात्॥१६॥

सू० दी०—वत्सापकरणशब्देनात्र सर्वपूर्वोक्तदोहतन्त्रलक्षणा। इध्माबर्हिरिति बर्हिःप्राथम्येऽपीध्मशब्दस्याजाद्यदन्तत्वात्पूर्वनिपातः। वेदो वेदिर्वेदानन्तरं वेदिकर्म तच्चोत्तरपरिग्रहावधि कृत्वा विरम्य शेषं श्वोभूत आप्यलेपनिनयनानन्तरं कुर्यात्। तत उत्तरकाले परिस्तरणं चेति। एतानि कर्माण्यमावास्यायां पूर्वेद्युर्भवन्ति। पौर्णमास्यां त्वन्वाधानादित्रयमेव पूर्वेद्युः सर्वमन्यदिध्माबर्हिराद्युत्तरेद्युः। नन्वेतौ कल्पौ किमिति वैकल्पिकौ व्याख्यायेते। यावता उक्तानामेव कर्मणां विषयव्यवस्थयेमावेव नित्यौ भवितुं युक्तौ विकल्पलिङ्गाभावात्। नैवं युक्तौ। कुतः। पूर्वत्र तावद्वेदेरनुक्तत्वात्तदनुक्रमानुपपत्तेः पुरा बर्हिष आहर्तोरिति लिङ्गविरोधात्तथा मन्त्रब्राह्मणयोरविशेषेणोत्तरेद्युराप्यलेपनिनयनानन्तरमाम्नातक्रमाया वेदेरमावास्यायां पूर्वेद्युः प्रतिकर्षविरोधात् पूर्वेद्युरिध्माबर्हिः करोतीत्यविशेषश्रुतयोरिध्माबर्हिषोः पौर्णमास्यामुत्तरेद्युरुत्कर्षविरोधाच्च। तथा कल्पान्तरकृद्भिर्नियमविकल्पाभ्यां चतुर्णामपि कल्पानामुपन्यासाच्च। तस्माद्यथोक्तैव व्याख्या साधीयसी॥१६॥

सद्यो वा सद्यस्कालायां सर्वं क्रियते॥१७॥

भा० वृ०—सद्यस्काला अपर्यावर्त आदित्ये यस्यां पर्वकालः सद्यः समानेऽहनि यस्यां पौर्णमासी प्रतिपच्च तस्यां सद्यो वैतानि क्रियन्ते पूर्वेद्युर्वेति। अग्न्यन्वाधानादीनि क्रियन्त इति

शेषः । अन्वाधानादेरेव कालविकल्पः, नेज्यायाः । प्रमादादौ-पवसथ्येऽतिक्रान्ते प्रधानभूतयागकालानतिपत्तौ तस्मिन्नेवा-न्वाधानादीनि क्रियन्त एवाविरोधात् । अमावास्यायां तु दध्य-निवृत्तेः प्रधानविरोधादापद्यपि न सद्यस्कालत्वम् । दुग्धे दोह-नमन्त्रा इति भारद्वाजमताल्लौकिक एव दधनि मन्त्रप्रयोगोपपत्ते-रमावास्याऽपि सद्यस्कालोपलभ्यते । ननु संधिमभितो यजेतेति श्रुतेः कर्ममध्ये यथा पर्वसंधिस्तथा कर्तव्यम् । अपि च पौर्ण-मास्यां पौर्णमास्या यजेतामावास्यायाममावास्ययेति प्रतिपत्पर्व-संधौ यागविधानेनानुष्ठानासंभवाद्धि तत्संबन्धिकालान्तरे यागसंभव इति सत्यम् । एतानि वचनानि संधिलक्षितपूर्वापर-तिथिपराणीष्टिपश्वादीनाममावास्यादिनियमे सत्यपि श्वःपूरिता-दिपक्षे श्वःप्रकृतिमिष्टाऽऽरम्भमध्ये संध्यभावेऽनुष्ठानविरोधात् । तथाऽऽवर्तमानात्परतः पर्वसंधौ पशुनेष्टा प्रकृत्यारम्भे मध्ये संध्य-भावेऽपि प्रकृत्यनुष्ठानदर्शनाच्च न संधिमदहोरात्रपराणि । औपव-सथ्ये पर्वसंधौ श्वो यागे संध्यभावेऽपि पौर्णमास्यां पौर्णमास्येत्यसं-गतेः । अतो मध्याह्नादर्वागेव पर्वसंधौ पञ्चदश्यां यागानुष्ठानान्म-ध्याह्नात्परतः कलामात्रे संधिपक्षे चोत्तरेद्युर्यागविधानाच्च । पर्व-णश्चतुर्थो भागः प्रतिपद आद्यास्त्रयः पादाश्च यागकालः । अमावा-स्यायां श्वो न द्रष्टार इत्यस्मिन्पक्षेऽतिक्रान्त औपवसथ्येऽपि श्वः संधिसद्भावान्मुख्यकालानतिवृत्तिरेव । अङ्गगुणविरोधे च ताद-र्थ्यादिति न्यायाच्चोत्तरेद्यू राजभयदेशविप्लवदेहविनाशादिसं-भावनायां पञ्चदश्यां चतुर्थांशादिकालालाभे पूर्वेद्युरपि यागः । अथाऽऽपदि प्रक्रान्तेऽपि यागकालानागमे विरम्याऽऽपदि गतायां यथाविधानमनुष्ठानम् । सर्वं क्रियते । शंय्वन्तादयः खण्डसंस्थाः सद्यस्कालायां सर्वं क्रियत इति वचनात् । उपदेशः सद्यो वेति । सर्वस्य विकल्प इति सद्यस्कालायामपि खण्डसंस्थाः सर्वाः विकल्पन्ते सद्यस्काला विकृतिरिति तस्यां सर्वं क्रियत इति वक्तव्ये सद्यस्कालायामिति पुनरुपादानाद्यदीष्ट्या यदि पशुनेति पाक्षिकसद्यस्काला विकृतयो न गृह्णन्त इत्यर्थः । तस्यां तु

सर्वं क्रियते कपालविमोचनान्तम् । अशनमुभावमी अरण्याशन-
मित्यादि निवर्तते ॥ १७ ॥

इति चतुर्दशी कण्डिका ॥ १४ ॥

इत्यापस्तम्बसूत्रदर्शपूर्णमासधूर्तभाष्यवृत्तौ चतुर्थः पटलः ॥ ४ ॥

सू० दी०—आनन्तर्यादत्र पौर्णमास्यामित्येव संबध्यते नामावा-
स्यायामिति । न चाधिकारादुभयसंबन्धः, एकवचनात्तथा सद्य-
स्कालां पौर्णमासीमिति भारद्वाजादिभिर्व्याक्रियवचनाच्च । सद्य
सद्यस्कालानुवादेन शाखान्तरीयसद्यस्कालविधिः सूचितः । स
एव पुनर्व्याक्रियत इति । तदयमर्थः—सद्यस्कालां पौर्णमासीं
कुर्वता सद्यः समानेऽहनि प्रधानस्य काले यजनीयेऽहनि सर्वम-
न्यन्वाधानादि क्रियते न किंचिदपि पूर्वेद्युरिति । केचित्तु
पूर्वाह्णे पूर्यमाणचन्द्रां प्रतिपदं सद्यस्कालेत्याचक्षते । तत्र मृग्यं
प्रमाणम् ॥ १७ ॥

इति चतुर्दशी कण्डिका ॥ १४ ॥

इति चतुर्थः पटलः ॥ ४ ॥

उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागु-
दयादमावास्यायाः ॥ १ ॥

भा० वृ०—तन्त्रमित्यङ्गसमुदायस्तं प्रक्रमयत्यारभते । सूर्योदय
उदिते सति पौर्णमास्याः । अमावास्यायास्तन्त्रमुदयात्प्रागेवाऽऽ-
रभेत ॥ १ ॥

सू० दी०—अङ्गसमुदायस्तन्त्रम् । तत्प्रक्रमयति यजमानोऽध्व-
र्युणा । स्वार्थिको वा णिच् द्रष्टव्यः । गत्यर्थाश्चेति चुरादिषु पाठात् ।
तत्रोदितहोमेऽपि प्रागुदयात्प्रक्रमोऽमावास्यायाः । होष्यते तु
तन्त्रमध्येऽपि स्वकालेऽग्निहोत्रम् । एवमन्यत्र विप्रक्रान्त इति
लिङ्गात् ॥ १ ॥

चत्वार ऋत्विजः ॥ २ ॥

भा० वृ०—कर्तृसंख्याग्रहणाद्बहुवचनचोदितासु चतुर्णामृत्विजां बहुत्वम्। नान्यबहुत्वमिति चत्वार ऋत्विज इति। संख्याग्रहणान्नान्य आगमयितव्यो यजमानः पत्नी वा। नच त्रिभिरेव समाप्यते। प्रथमं वा नियम्यत इति न्यायात्। यथा हविःशेषभक्षणे। ऋत्विजो हविःशेषान्भक्षयन्तीत्यादौ ऋत्विजो भवन्तीत्येतावतैवार्थप्राप्ता ऋत्विजो व्रियन्त एव। ब्रह्मणोऽप्यत्रैव तूष्णीं वरणं मानुषस्य। उत्तरत्र तु दैवस्य। भूपत इत्यादिमन्त्रलिङ्गात्, होतृवत्। अत्रैव होतृवरणमाग्नीध्रवरणं चामावास्यायास्तन्त्रे तु आग्नीध्रवरणं वेदकरणानन्तरम्॥ २॥

सू० दी०—यजमानेन परस्परेण चासमासार्थं वचनं ब्राह्मणानुकरणार्थं वा॥ २॥

पूर्ववदग्नीन्परिस्तृणाति यद्यपरिस्तीर्णा भवन्ति ॥ ३ ॥

भा० वृ०—यद्यपरिस्तीर्णा भवन्तीति सद्यस्कालायामसद्यस्कालायामपि प्रमादे प्रायश्चित्तं न भवतीत्युपदेशः। सद्यस्कालायामिति विशेषानुवादात्सद्यस्कालायां हस्तावनेजनात्प्रागेव परिस्तरणप्राप्तेः परिस्तरणस्य विधानानर्थक्यशङ्कायां तत्परिहारभूतमिदं सूत्रम्॥ ३॥

सू० दी०—यद्यपरिस्तीर्णा भवन्तीत्यनेन परिस्तरणस्य कालविकल्पः सूच्यतेऽर्थान्तरस्यानिरूपणाद्भारद्वाजादिभिरत्रैव परिस्तरणवचनाच्च॥ ३॥

कर्मणे वां देवेभ्यः शकेयमिति हस्ताववनिज्य यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततामुलपराजीं स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तरां च ॥ ४ ॥

भा० वृ०—कर्मणे वामितिलिङ्गादशक्तौ हस्तद्वयेन कर्म कर्तव्यम्। उलपा उशीरतृणानि लूनतृणानि वा तेषां स्तरणं संततं यथा राजित्रयं व्यक्तं भवतीत्येवाशिथिलं राजिशब्दात्॥ ४॥

सू०दी०—शुष्कं बर्हिस्तृणमुलप इत्याचक्षत उशीरतृणमित्यन्ये ॥४॥

दक्षिणेनाऽऽहवनीयं ब्रह्मयजमानयोरासने प्रकल्पयति पूर्वं ब्रह्मणोऽपरं यजमानस्य ॥ ५ ॥

भा०वृ०—गतार्थः ॥ ५ ॥

सू०दी०—गतः ॥ ५ ॥

उत्तरेण गार्हपत्याहवनीयौ दर्भान्सꣳस्तीर्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि॥६॥

भा०वृ०—द्वंद्वप्रकरणधर्म इति सर्वपात्राणामत्र साद्यमानानामन्वाहार्यस्थाल्यादीनामपि द्वंद्वत्वम्। केचिद्द्वंद्वत्वं दशसंख्यायामेवेच्छन्ति। संख्याया अर्थवत्त्वाय दशापराणि दश पूर्वाणीति दशभ्योऽधिकानामपि साद्यमानत्वात्संख्यानियमोऽनर्थकः स्यादतो दशानामेव द्वंद्वनियमार्थं संख्योपादानमिति। एककार्याणां बहूनामप्येकत्वमाद्वंद्वनिधानात्। यथा कपालानां दशत्वसंख्या स्फ्येन सह कृत्वेति। यथा कपालानां स्फ्येन सह द्वंद्वकरणे कपालानामेकत्वं कृत्वा दशसंख्यानिर्देशः। दोहसंस्कारार्थत्वात्सांतर्दोहपात्राणामुपवेषेण सह प्रयोगः शम्ययाऽऽहननपक्षेऽश्मनो निवृत्तिः। पात्रप्रयोगात्प्राक्प्रणीतानयनपक्षेऽन्वाहार्यस्थाल्या सहेडापात्रप्रयोगः॥ ६ ॥

सू०दी०—तत्र प्रक्षाल्यैव प्रयुनक्तीति कल्पान्तराणि ॥ ६ ॥

स्फ्यश्च कपालानि चेति यथा समाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि ॥ ७ ॥

भा०वृ०—स्फ्यः अस्याऽऽकृतिरिति। असेरिवाऽऽकृतिः स्फ्यस्य। भिन्नस्य घटादेः कपालानि कर्तव्यानि लौकिकार्थपरिग्रहणात्। अभिन्नान्यपि रौहिणकपालवदेके। एतस्या एव मृदो रौहिणकपाले

करोतीति दर्शनात् । मृदा कपालानि कर्तव्यानीत्येके । अग्निहोत्रहवणी, वैकङ्कतीत्यग्निहोत्रे व्याख्यास्यते । शूर्पमैषीकम् । वर्षवृद्धा इषीका इति लिङ्गादिति । वर्षवृद्धमसीति शूर्पोपहनने विनियोगाद्वर्षवृद्धा इषीका इति वाक्यशेषादैषीकं शूर्पम् । चातुर्मास्येष्वैषीक शूर्प इति दर्शनादन्यत्र लोकसिद्धमिति सूत्रकारमतिः । वैणवं नलमयं वेति भारद्वाजः । शम्या, या युगे क्षिप्यते अनडुद्ग्रीवासु । ईषत्स्पष्टा, श्लक्ष्णीकरकाकृतिः । उपला पोतिका अपराणि पूर्वाणीति दिङ्नियमः । परस्परं प्रतीति पूर्वाण्यपेक्ष्य परत्वमपराण्यपेक्ष्य पूर्वत्वं दशत्वसंख्यानिर्देशान्नान्यापेक्ष्य परत्वं पूर्वत्वं च । नानाबीजेषु शूर्पोलूखलादिभेदेऽप्यर्थैकत्वेन द्वंद्वताऽग्निहोत्रहवण्या ॥ ७ ॥

सू०दी०—एवमत्र संख्ययोपदेशादेव सिद्धे पूर्वत्र दशत्वसंख्यावचनम् । विकृतिष्वनयोर्देशकयोर्मध्ये पात्रविवृद्धौ सत्यां तैः सहापि दशत्वसंपत्तिरेव यथा स्यान्नाधिका संख्येति । तत्र च लिङ्गं कपालभूयस्त्वेऽपि एतानि वै दश यज्ञायुधानीति दशत्ववचनम् । तेनाऽऽग्रयणादावुलूखलादीनां नानात्वेऽपि कपालवत्समानकार्याणामनेकेषामप्येकैकवत्करणेन द्वंद्वप्रयोगः । एवं पूर्वदशकेऽपि पश्वादिषु द्वितीयां जुहूं द्वितीयामुपभृतमित्यादौ जुह्वादीनां द्रष्टव्यम् ॥ ७ ॥

**तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति ॥ ८ ॥**

भा०वृ०—स्पष्टम् ॥ ८ ॥

**तान्युत्तरेणावशिष्टानि ॥ ८ ॥**

सू०दी०—द्वंद्वं न्यञ्चि प्रयुनक्तीत्यन्वयः । तान्येवावशिष्टानि दर्शयति ॥ ८ ॥

**अन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति ॥ ९ ॥**

---

१ पाटा । २ परवंटा । इति भाषायाम् ।

सू०दी—उपवेषमसंनयतः प्रातर्दोहपात्राणीत्येव सिद्धत्वात् । इतिः प्रकारवचनः । एवंप्रकाराणि वेदयोक्त्रवेदाग्रादीनि यैरर्थो भवतीत्यर्थः ॥ ९ ॥

प्रणीताप्रणयनं पात्रसंसादनात्पूर्वमेके समामनन्ति ॥ ९ ॥

भा०वृ०—प्रणयनं चेत्पूर्वं पात्रसंसादनात्तत्र क्रमः, ब्रह्मयजमानयोरासने कृत्वा ब्रह्मवरणं प्रणयनं ततो दर्भास्तरणादि उत्तरेण गार्हपत्याहवनीयौ दर्भान्संस्तीर्येत्यादिप्रयोगः ॥ ९ ॥

सू०दी०—गताः ॥ १० ॥

खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवैतेषां वा वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्योऽरत्निमात्र्यो वाऽऽग्राग्रास्त्वक्कोबिला हंसमुख्यः स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि ॥ १० ॥

भा०वृ०—अक्षमात्रं स्रुवस्योदरम् । अक्षः पर्व, अङ्गुष्ठपर्वमात्रं स्रुवस्य बिलम् । स्रुगञ्जल्याकृतिः ।

आयामः पञ्चभागः स्याद्द्विभागः पात्रमुच्यते ।
पात्रं बिलं त्रिभागे हि दण्ड आयामलक्षणम् ॥
विस्ताराद्द्विगुणं पात्रं ग्रीवाविस्तारमर्धतः ।
विस्तारार्धं बिलं कुर्यादेतत्पात्रस्य लक्षणम् ॥

आयामात्पञ्चमो भागः बिलविस्तारः, विस्तारार्धग्रीवा दशमो भागो ग्रीवार्धं तु बिलं कुर्यादेतत्पात्रस्य लक्षणम् । बिलस्योच्छ्रायो विंशत्यंश इति यावत् । स्रुचां शास्त्रान्तरीयम् । प्राशित्रहरणं गोकर्णाकृति । चमसाकृति वा विद्वज्जनसंमतात् । स्फ्यः शम्या च बाहुमात्राविति भारद्वाजः । त्रिंशदङ्गुला शम्येति बौधायनः । षट्त्रिंशदङ्गुलेत्यन्ये । "एकस्य स्रुचः" सह स्रुवेण एतावसदतामिति लिङ्गात् । अस्यार्थः–एता असदन्निति स्रुचोऽभिमन्त्रयेति स्रुचामभिमन्त्रणे विनियुक्तस्य मन्त्रस्य स्रुवेऽपि प्राप्ति-

मङ्गीकृत्य सूत्रकारेणेहोपदेशात् । ब्राह्मणे " स्रुचः संमार्ष्टि " इति विधाय क्रमविधानपरे स्रुवमग्र इति विधानाच्चैकस्य स्रुचः कारयेदित्यत्रापि स्रुक्शब्देन स्रुवस्यापि ग्रहणम् ।

सू० दी०—सर्वेषामलाभे तेषामन्यतमेनापि सर्वाः स्रुचः कारयेत् । स्रुग्ग्रहणेन स्रुवोऽपि गृह्यते स्रुचः संमार्ष्टि स्रुवमग्र इतिलिङ्गात्, एतावसदतामिति लिङ्गाच्च। अग्रभागेऽग्रं मुखं यासां ता अग्राग्राः। त्वग्भागे बिलं यासां तास्त्वक्तोबिलाः। हंसमुखमिव मुखं यासां ता हंसमुख्यः कर्तव्या इति शेषः। वायसपुच्छा हंसमुखप्रसेचना इति भारद्वाजः। तथाऽङ्गुष्ठपर्वमात्रबिलः स्रुवो भवत्यर्धप्रादेशमात्राबिलाः स्रुच इति च ।

स्फ्योऽस्याकृतिरादर्शाकृतिः प्राशित्रहरणं चमसाकृति वेति कात्यायनः । शम्याकृतिः समाख्यया व्याख्याता । बाहुमात्राः परिधयः शम्या चेति भारद्वाजः । तथाऽङ्गुल्यधिकारे चत्वारोऽष्टकाः शम्येति कात्यायनः ॥ ११ ॥

वारणान्यहोमार्थानि भवन्ति ॥ १२ ॥

भा० वृ०—वारणेन कृतानि । पात्री तु मृन्मयी निष्टपनविधानात् ॥ १२ ॥

सू० दी०—गतः ॥ १२ ॥

इति पञ्चदशी कण्डिका ।

---

अत्र पूर्ववत्पवित्रे करोति यदि न संनयति संनयतस्तु ते विभवतः ॥ १ ॥

भा० वृ०—संनयतस्तु ते विभवतः । कार्यान्तरेऽपि समर्थे । यानि विभवन्ति सकृत्तानीत्येव सिद्धे संनयतस्तु ते विभवत इति पुनर्वचनं सायंदोहे प्रयुक्तानां सांनाय्यपात्राणां विमुक्तेऽपि पुनः प्रयोगविधानात्पवित्रयोरपि पुनःकरणप्रसङ्गनिवृत्त्यर्थम् । अतः क्वचित्संनियोगशिष्टानामन्यतरापायेऽन्यतरस्यापि निवृत्तिः

सूचिता । यथाऽन्वारम्भणीयाविकृतौ न स्यादित्यत्र सारस्वत-चतुर्होतॄणामपि निवृत्तिः ॥ १ ॥

सू० दी०—अत्र पात्रप्रयोगान्ते । संनयनस्तु ये सायंदोहार्थे तै एवाद्यापि कर्मणे प्रभवतः ॥ १ ॥

वानस्पत्योसि देवेभ्यः शुन्धस्वेति प्रणीताप्रणयनं चमसमद्भिः परिक्षालयति तूष्णीं कꣳसं मृन्मयं च कꣳसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठा-कामस्य गोदोहनेन पशुकामस्यापरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन्को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व इत्यप आनयति ॥ २ ॥

भा०वृ०—तूष्णीं कꣳसं मृन्मयं चेति तु प्रकृतावूहाभावाद्गुणका-मानामप्रवृत्तिर्विकृताविति । गुणकामानां विकृतिष्वाश्रयसद्भाव-निबन्धनाक्षेपतः प्राप्तिरपि नास्ति । गोदोहनादीनामाश्रयाभा-वात्परमार्थतस्तु दर्शपूर्णमासावेवाऽऽश्रय इति मीमांसकोक्तेः । तथाहि गोदोहनादिसाध्यप्रणयनादिद्वारेणाऽऽग्नेयादिप्रधानसाहि-तस्यैव गोदोहनादेः पश्वपूर्वसाधनत्वाद्विकृतिष्वाग्नेयाद्यभावेन तत्संबन्धिरूपप्रणयनाद्याश्रयाभावान्नूपदेश इति । द्रव्यस्यापि प्रणयनादिक्रियामात्रानुरक्तापूर्वविषयत्वेन विधानोपपत्तेः । गोदोहनादीनामपि क्रतूपकारित्वादाक्षेपतो विकृतौ प्राप्तिरिति । गोदोहनं प्रणयनार्थं लौकिकं प्रयुज्यते खलेवालीवत् । मृन्म-यकांस्ये तु तदर्थं संपाद्ये ॥ २ ॥

सू०दी०—गताः ॥ २ ॥

अपो गृह्णन्ग्रहीष्यंश्च पृथिवीं मनसा ध्यायति ॥ ३ ॥

भा०वृ०—अनयाऽपः पृथिव्या ग्रहीष्यामि गृह्णामि प्रणयामि, इति ध्यानमर्थसंबन्धेनेति प्रणयनादिक्रिया अर्थः, पृथिव्या ध्यानं ध्यानेन क्रियमाणेन क्रियासाधनत्वानुगुणतृतीयान्तेन ध्यानम् ।

करणत्वेनानयैवैनाः प्रणयतीति लिङ्गादिति । अनयेति तृतीयानिर्देशादपो गृह्णन् ग्रहीष्यामीति पृथिवीध्यानस्य ग्रहणसंबन्धित्वेऽपि अनयैवैनाः प्रणयतीति श्रुत्या प्रणयनसंबन्धावगतेः। साङ्गप्रणयनार्थत्वं श्रुत्या व्यवसीयत इति सूत्रकाराभिप्रायः। अतो ग्रहणे प्रणयने च ध्यानम् ॥ ३ ॥

सू०दी०—मनसेति वचनान्न वाचा कीर्तयति । ध्यानं चात्र पृथिव्या अपो ग्रहीष्यामीति विशिष्टप्रकारं केचिदिच्छन्ति । न तदादृत्यम् । यत्र हि विशिष्टध्यानमाचार्यो मन्यते तत्र स्वयं विशेषं दर्शयति यथा वायविडा ते मातेति वायुं मनसा ध्यायेत्। यदद्श्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति । शुचा त्वाऽर्पयामीति द्वेष्यं मनसा ध्यायन्नित्यादि । अतः केवलेषु ध्यानविधिषु न कश्चिद्विशेष इति ॥ ३ ॥

उपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति सर्वत्र प्रसव उक्ते करोति ॥ ४ ॥

भा०वृ०—उपबिलं चमसं पूरयित्वेति किंचिन्न न्यूनपूरणम्। सर्वत्र प्रसव उक्ते करोतीति प्रेषानन्तरम् ॥ ४ ॥

सू०दी०—उपबिलमा बिलसमीपात् । प्रसवोऽनुज्ञा ॥ ४ ॥

प्रणीयमानासु वाचं यच्छतोऽध्वर्युर्यजमानश्चाऽऽहविष्कृतः ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—वाग्यमनं व्याख्यातम् ॥ ५ ॥

को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञꣳ सꣳसादयन्तु नः। इदं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चतीरिति समं प्राणैर्धारयमाणः स्फ्येनोपसंगृह्याविषिञ्चन्हरति ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—समं प्राणैर्नासिकया संमितं स्फ्येनोपसंगृह्य स्फ्येन चमसमुपश्लेष्य ॥ ६ ॥

पृथिवीं च मनसा ध्यायति ॥ ७ ॥

भा०वृ०—स्पष्टम् ॥ ७ ॥

सू०दी०—व्याख्यातः पूर्वेण ॥ ७ ॥

को वो युनक्ति स वो युनक्त्वित्युत्तरेणाऽऽहवनीयमसꣳस्पृष्टा दर्भेषु सादयति ॥ ८ ॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

सू०दी०—असंस्पृष्टा द्रव्यान्तरेण ॥ ८ ॥

नेङ्गयन्ति नेलयन्त्यासꣳस्थातोर्दर्भैरभिच्छाय ॥ ९ ॥

भा०वृ०—इङ्गनं कम्पनमीलनं क्षेपणमासंस्थानात् । इडान्तादिखण्डसंस्थायामतः परं कम्पनादौ न दोषः ॥ ९ ॥

सू०दी०–ता दर्भैरभिच्छाद्याऽऽसंस्थानान्नेङ्गयन्ति । नेलयन्ति नान्यत्र प्रेरयन्ति । ता आहृताः पिष्टसंयवनार्थास्तत्राऽऽसां विनियोगात् । दृष्टार्था भविष्यन्ति न त्वदृष्टार्थाः, दृष्टे संभवत्यदृष्टकल्पनानवकाशात् । पशूपसदादिषु संयवनाभावेन द्वारादर्शनाच्च । यथा तत्र तत्राऽऽह पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति वाग्यतः पात्राणि संमृशतीति च । इष्टिविधे तु पशौ संयवनाभावेऽपि वचनादित्यविरोधः । तत्रापि पशुपुरोडाशार्था भविष्यन्ति । तस्मात्पुरोडाशतन्त्र एव प्रणीता नान्यत्रेति सिद्धं भवति । अन्यत्तु मतं ब्राह्मणे तासां रक्षःशान्त्यादिद्वारा यज्ञरक्षार्थत्वेन स्तवनात्पाकयज्ञेष्वपि तद्विधानाच्च । अदृष्टार्था एव सत्यः प्रभुत्वात्संयवनायापि स्पृर्यन्ते तस्मादनिवृत्तिः सर्वत्रेति । तदुक्तं भारद्वाजेन–सर्वसंस्थासु वा प्रणीता इति ॥ ९ ॥

**संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति सपवित्रेण पाणिना पात्राणि संमृश्य ॥ १० ॥**

भा० वृ०—अत्रभव इत्यभिमर्शने पात्राणां मन्त्रावृत्तिः । सपवित्रेण पाणिनेति दक्षिणेन हस्तेन । “ दक्षिणं प्रतीयादनादेशे ” इति वचनात् ॥ १० ॥

इति षोडशी कण्डिका ॥

---

सू० दी०—समानदेशानां बहूनामपि सकृत्संमर्शनमन्त्रो बह्वभिधायित्वात् । देशभेदे त्वावर्तते । तथा च भारद्वाजः—मन्त्रव्यवाये मन्त्राभ्यासो द्रव्यपृथक्त्वेऽर्थपृथक्त्वे देशपृथक्त्वे चेति । तस्य चाऽऽदितश्चतुर्णां पदानां पात्राभिधायित्वाद्विकृतौ पात्रैकत्वद्वित्वयोर्यथार्थमूहः ॥ १० ॥

इति षोडशी कण्डिका ॥

---

**वानस्पत्यासि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते । वेषाय त्वेति शूर्पम् । प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते ॥ १ ॥**

भा० वृ०—स्पष्टम् ॥ १ ॥

सू० दी०—यजमानमिति शेषः ॥ १ ॥

**प्रवसत्यग्ने हविर्निर्वप्स्यामीति ॥ २ ॥**

भा० वृ०—अग्ने हविर्निर्वप्स्यामीत्युपांश्विति परपुरुषसंबोधनाभावाद्याजुर्वैदिकोपांशुत्वप्राप्तेः । तद्विकारत्वादुच्चैरित्युपदेशः । तत्स्थानापन्नत्वात्तद्धर्मप्राप्तेः ॥ २ ॥

सू० दी०—प्रवसति यजमानेऽग्निमामन्त्रयते ॥ २ ॥

उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति ॥ ३ ॥

भा० वृ०—स्पष्टम् ॥ ३ ॥

सू० दी०—शकटाय शकटं प्रति ॥ ३ ॥

अपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकट-मवस्थितं भवति व्रीहिमद्यवमद्वा ॥ ४ ॥

भा० वृ०—स्पष्टम् ॥ ४ ॥

सू० दी०—मुक्तानडुत्कमपि नद्धयुगमेवावतिष्ठते ॥ ४ ॥

धूरसीति दक्षिणां युगधुरमभिमृशत्युत्तरां वा ॥ ५ ॥

भा० वृ०—केचिद्धुरोरभिमर्शनं कुर्वन्त्यत्र दर्शपूर्णमासवद्धुराव-भिमृश्येति वचनादिति । दर्शपूर्णमासयोर्धूर्द्वयसंबन्ध्यभिमर्शने सति राजप्रवहणे तद्वदिति निर्देश उपपद्यत इति । अस्मिन्पक्षे धूरसीति दक्षिणामुत्तरां वेति मन्त्रस्यान्यतरसंबन्धनियमार्थम् । स्वमते तु अन्यतरसंबन्धिनोऽभिमर्शनस्य विकल्पविधान-मिति ॥ ५ ॥

सू० दी०—धूरिति युगाच्छिद्रयोरन्तरालमाख्यायते । ते द्वे भवतो युगस्य तयोरन्यतरामभिमृशति नोभयम् । यस्त्वत्र कैश्चिद्दर्श-पूर्णमासवद्धुरावभिमृश्येति लिङ्गविरोधाश्चोदितः स तु तत्र मन्त्रमात्रातिदेशार्थतया तत्रैव परिहरिष्यते ॥ ५ ॥

त्वं देवानामसि सस्नितममित्युत्तरामीषामालभ्य जपति ॥ ६ ॥

भा० वृ०—स्पष्टम् ॥ ६ ॥

सू० दी०—ईषे युगशकटयोः संबन्धके दारुणी ॥ ६ ॥

विष्णुस्त्वा क्रंस्तेति सव्ये चक्रे दक्षिणं पादमत्या-धायाहुतमसि हविर्धानमित्यारोहति ॥ ७ ॥

भा० वृ०—गतार्थः ॥ ७ ॥

सू० दी०—गतः ॥ ७ ॥

**उरु वातायेति परीणाहमपच्छाद्य मित्रस्य त्वा चक्षुषा प्रेक्ष इति पुरोडाशीयान्प्रेक्षते ॥ ८ ॥**

भा० वृ०—परीणाहः कटः, अपच्छाद्य उत्पाट्य पुनः पातयति। तमसीव वा एषोऽन्तश्चरतीति लिङ्गादिति। परीणाहप्रच्छादने कृते पुनः पातने लिङ्गमिदमन्तश्चरति यः परीणहति। परीणाहप्रच्छादने तदन्तर्वर्तिनां तमसि वर्तमानत्वेनानुवादोपपत्तेः। उद्घाटने कृते पुनः पाटनेऽन्तर्वर्तिनामेव निर्वापार्थम् ॥ ८॥

सू० दी०—परितो नीडे नद्धः कटःपरीणाहः। अपच्छाद्यापोद्धृत्य। पुरोडाशीयास्तदर्था व्रीहियवाः ॥ ८ ॥

**निरस्तꣳ रक्षो निरस्तोऽघशꣳस इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्योर्जाय वः पयो मयि धेहीत्यभिमन्त्र्य दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्निहोत्रहवण्या हवींꣳषि निर्वपति तया वा पवित्रवत्या ॥ ९ ॥**

भा० वृ०—अभिमन्त्र्येत्यन्तं गतार्थकम्। नानाख्यानं व्याख्यानं वाक्ये वाक्ये छित्त्वा दशहोतारं व्याचष्टे। यत्र वाक्यशोऽधीतेषु व्याख्यायेति निर्देशस्तत्रैवम्। यथा चतुर्होतृन्व्याख्यायेति यत्र वाक्यशोऽधीतेषु सूत्रकारस्य संततपाठस्तत्रानवानं प्रयोगः अन्येष्वनियमः। यत्रानवानप्रयोगस्तत्रार्धर्चेऽवसाय ॥ ९ ॥

सू० दी०—व्याख्यानमिह जपोऽभिमेतः। यत्र जपा याजमाना इति लिङ्गात्। देवतार्थत्वेन पृथक्करणं निर्वापः। तया वा पवित्रवत्येति तस्यां पवित्रनिधानविकल्पः ॥ ९ ॥

**व्रीहीन्यवान्वा ॥ १० ॥**

भा० वृ०—व्रीहीन्यवान्वेति पुनर्वचनाद्विकृतौ व्रीहिकाले यवा अपि लभ्यन्त इत्युपदेश इति। व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेतेत्यस्मिन्काले वर्तमानविकृतीनां स पक्षोऽप्ययमेव ॥ १० ॥

सू० दी०–हवींषि निर्वपतीत्यन्वयः । यद्यपि प्राग्व्रीहिमद्यवमादिति-शकटविशेषणव्रीहियवयोर्हविष्ट्वं सूचितं तथाऽपि तस्याः स्फुटत्वा-त्तदुद्घाटनार्थः पुनरुपन्यासः ॥ १० ॥

यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥

भा०वृ०—स्पष्टम् ॥ ११ ॥

सू०दी०—निर्वपतीत्यन्वयः ॥ ११ ॥

इति सप्तदशी कण्डिका ।

---

एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमा-स्याम् । इन्द्राग्निभ्यामित्यमावास्यायाम् ॥ १ ॥

भा०वृ०—यथादेवतमिति सिद्धेऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिति निय-माद्दाक्षायणयज्ञे प्रयोजनम् । अग्नीषोमीयोऽसोमयाजिनोऽपि भवति । अग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामिति । ऐन्द्राग्रश्चासंनयतः सर्वस्येति वर्णाविशेषेण ॥ १ ॥

सू०दी०—पूर्वेण सह निर्वाप उत्तरत्र विभागवचनात् । संनयद्-सोमयाजिनोरैन्द्राग्नाग्नीषोमीयनिवृत्तिर्यथादेवतामिति वचनात् । यथादेवतमित्यनेनैव सिद्धे पुनरग्नीषोमाभ्यामिति तु शाखान्तर-मन्त्रप्रदर्शनार्थम् । अथवा यथादेवतमित्यस्यैव व्याकरणार्थ-मुभयमित्यलमतिक्लेशेन । तत्रासोमयाजिनः सांनाय्याग्नीषोमी-यविकारा ऊर्ध्वं सोमात्प्रकृतिवदिति । पशुस्तु वचनाद्भ-विष्यति ॥ १ ॥

चतुरो मुष्टीन्निरुप्य निरुप्तेष्वन्वोप्यं ॥ २ ॥

भा०वृ०—निरुप्तेष्वन्वोप्येत्यावृत्तिः प्रतिदैवतम् । पुनश्चतुर इति वच-

---

१ असोमयाजिनोऽप्यग्नीषोमीयाभावेऽपि वैमृधश्चिन्त्य इति ॥

न्नादिति त्रिर्यजुषा तूष्णीं चतुर्थमिति सिद्धे पुनश्चतुरो मुष्टीन्निरुप्येति वचनं चतुर्मुष्टिनिर्वापानन्तरमन्वावपनं कृत्वा पश्चाद्धविरन्तरनिर्वाप इति उपदेशक्रमात्सर्वान्ते सकृच्चतुर्ग्रहणाच्चतुर्मुष्टिनिर्वाप एवान्वावाप इति उपदेश इति । सर्वनिर्वपणान्त उपदेशात्सर्वान्ते सकृदन्वावापः । चतुरो निरुप्येति चतुर्निर्वाप एवान्वावापो यथा स्यादिति । तस्मादातिथ्यायामन्वावापो न विद्यते ॥ २ ॥

**चतुरो मुष्टीन्निरुप्य निरुप्तेष्वन्वोप्येदं देवानामिति निरुप्तानभिमृशति । इदमु नः सहेत्यवशिष्टान् ॥२॥**

सू० दी०—पुनश्चतुर्मुष्टिग्रहणात्प्रतिदेवतमन्वावापः । निरुप्तेष्विति निरुप्तैरेव सहेत्यर्थः । अथापरा व्याख्या । कैश्चित्कल्पकारैरुक्तं चतुरो मुष्टीन्निरुप्यान्वोप्यैवमुत्तरं निर्वपतीति । तन्निरासायोच्यते चतुरो मुष्टीन्निरुप्य ततः सर्वेष्वपि हविःषु निरुप्तेष्वन्वोप्य तत इदं देवानामित्यभिमृशतीति । चतुरो मुष्टीन्निरुप्येत्यनेन यत्र चतुर्मुष्टिनिर्वापस्तत्रैवान्वावापो नान्यत्र । यस्मादातिथ्यायामन्वावापो न विद्यत इत्युक्तं भवति । तथा च सवनीयेष्वनुवदिष्यति निरुप्तेष्वन्वोप्येदं देवानामित्येतदादि कर्म प्रतिपद्यत इति ॥ २ ॥

**इदं देवानामिति निरुप्तानभिमृशति । इदमु नः सहेत्यवशिष्टान् । स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्येदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्यमिति प्राङ् प्रेक्षते ॥ ३ ॥**

भा० वृ०—इदं देवानामिति जात्यभिधानमिति । देवताजात्याख्यायां बहुवचनं मन्त्रस्य प्रकरणोपदेशो मा भूदिति । तस्मादाग्नेये केवलेऽप्यनिवृत्तिः । स्त्रीदेवतायां वा विकारोऽविकृतौ । निरुप्तानेवेत्यवधारणात्तानेव केवलानभिमन्त्रयते । यथाऽशिष्टान्न पश्यति । नानाबीजेषु तन्त्रेण सर्वनिर्वापान्ते । निरुप्तावशिष्टाभिमर्शनयोस्तु नानाबीजेष्वावृत्तिरसंभवे ॥ ३ ॥

सू० दी०—निरुप्तानेव नावशिष्टान् । उपनिष्क्रम्य किंचिच्च-लित्वा ॥ ३ ॥

सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते। वैश्वानरं ज्योतिरित्याहवनीयं स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानभिमन्त्र्य दृꣳहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरोह्योर्वन्तरिक्षमन्विहीति हरति ॥ ४ ॥

भा० वृ०—स्पष्टार्थः ॥ ४ ॥

सू० दी०—गतः ॥ ४ ॥

अदित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथा-देवतमुपसादयति ॥ ५ ॥

भा० वृ०—अग्ने हव्यꣳ रक्षस्वाग्नीषोमौ हव्यꣳ रक्षेथामिति नादमूहो भारद्वाजपाठात् । न गार्हपत्याभिधानमग्निशब्देन निरुप्तदेवताना-मेवाभिधानम् । यथा भारद्वाजस्य तथाऽस्माकम् । समानब्राह्म-णानुसंधानाद्यथादेवतमिति वचनादविरोधाच्च । अग्निः केवलो बौधायनस्येति गार्हपत्य आहवनीयो वा निर्दिश्यते यस्य समीप उपसादनं न निरुप्तदेवता । विष्णो हव्यꣳ रक्षस्वेतिवत् । केचि-दग्ने हव्यꣳ रक्षस्वाग्नीषोमाभ्यामिति कुर्वन्ति । अग्ने हव्यꣳ रक्ष-स्वेत्यग्निशब्दसमीपादग्निपरः । निरुप्तदेवतानिर्देशोऽपि चतुर्थ्यन्त-शब्देन कर्तव्य इति तद्देवतायै निरुप्तꣳ हव्यꣳ रक्षस्वेत्ययमर्थः संपन्नो भवति । अपरेण गार्हपत्यं निधानं यदि तत्र अप-णम् ॥ ५ ॥

सू० दी०—यथादेवतमिति वचनादुत्तराऽपि देवताऽनुक्रमणीया । तत्र तु मन्त्रस्थमाख्यातमयोग्यान्वयत्वाद्विपरिणतमन्वीयते यथाऽग्ने हव्यꣳ रक्षस्वाग्नीषोमौ हव्यꣳ रक्षेथामिति । वैमृधे तु समानतन्त्रे योग्यान्वयमपि तद्व्यवायान्नानुषज्यत इति न्यायेनालब्धान्वय-मिति रक्षस्वेति पुनः प्रयोगः ॥ ५ ॥

आहवनीयं वा यथाहवनीये श्रपयति ॥ ६ ॥

भा०वृ०—आहवनीये श्रपयतीत्याहवनीयस्य पश्चात्स्थापनम् ॥६॥

सू०दी०—आहवनीयमपरेणोपसादयतीत्यन्वयः ॥ ६ ॥

यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्याꣳ सर्वाञ्छकटमन्त्राञ्जपेत् ॥ ७ ॥

भा०वृ०—तस्यां सर्वाञ्छकटमन्त्रानित्यस्यार्थः पात्रीमालम्भ्य शकटमन्त्रा जप्यन्ते। निरसनाभिमन्त्रणे क्रियेते समन्त्रकम्। शकटमन्त्रत्वाभावात्परीणाहाभावाच्चोरु वातायेति मन्त्रलोपः ॥ ७ ॥

इत्यापस्तम्बसूत्रभाष्यवृत्तौ पञ्चमः पटलः।

---

सू०दी०—यदि पात्र्या इति विकल्पविधिरनुवादसरूपः। पात्र्यां पुरोडाशीयानोप्य तां शकटस्थानस्थामन्वारभ्य मन्त्राञ्जपेत्। सर्वानिति न कस्यचिदर्थलोपाल्लोप इत्यर्थः ॥ ७ ॥

इत्यष्टादशी कण्डिका।

---

इति पञ्चमः पटलः।

---

सशूकायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये वो जुष्टं प्रोक्षामीति यथादेवतं हवींषि त्रिः प्रोक्षन्नाग्निमभिप्रोक्षेत् ॥ १ ॥

भा०वृ०—शूकं चूलकम्। अभिमन्त्र्य पूर्ववदापो देवीरिति अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां वो जुष्टं प्रोक्षामीति प्रयोगः। एकस्थाननिरुप्तत्वादुत्तरत्र च विभागाद्येषां तु तानि सहावघ्नन्ति तानि सह पिंषन्तीतिश्रुतेः। तेषां पृथक् पृथक् प्रोक्षणमवघातादिसाहि-

त्यवचनात् । प्रागवघातात्पृथगेव । केचिदेकस्थानेऽपि कुर्वन्ति पृथक्प्रोक्षणम् । तदयुक्तम् । सावित्रप्रोक्षणे तन्त्रेण मैत्रायणीयके पाठात् ॥ १ ॥

सू०दी०—शूका धान्यपुच्छानि सकृन्मन्त्रप्रोक्षणे संख्याऽयुक्तेति न्यायात् त्रिर्जुषेत्यवचनाच्च । स च सावित्रादिरग्नीषोमाभ्यामित्यन्तः पौर्णमासे दर्शे तु देवतावशाद्द्विकर्तव्यो यथादेवतमिति वचनात् । वो जुष्टं प्रोक्षामीत्यस्य त्रिपदस्य प्रतिदेवतमनुषङ्गमिच्छन्ति । तदयुक्तं सावित्रप्रसवादिविशिष्टैकप्रोक्षणाभिधायिनो यथोक्तस्यैकमन्त्रस्य सकृत्पठितैरेव तैर्योग्यान्वयैर्निराकाङ्क्षत्वात्साकाङ्क्षत्वादिलक्षणत्वाच्चानुषङ्गस्य । मन्त्रभेदाभ्युपगमे सावित्रस्याप्यनुषङ्गप्रसङ्गः । किंचाभविष्यदप्यनुषङ्गो मन्त्रभेदश्च यदि निर्वापवत्प्रोक्षणमपि पृथग्घविषामेव शिष्येत । न चैवमिष्यते संसृष्टत्वात्तेषामेकस्थत्वाच्च । वक्ष्यति च यानि विभवन्ति सकृत्तानि क्रियन्त इति । तस्माद्यथोक्तमेव युक्तं मन्त्ररूपम् । तथा च पेठुः कल्पान्तरकाराः, यथाऽग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतमित्यादि ॥ १ ॥

**यं द्विष्यात्तस्याभिप्रोक्षेत् ॥ २ ॥**

भा०वृ०—गतार्थः ॥ २ ॥

सू०दी०—अभिप्रोक्षणे यज्ञोपघातप्रायश्चित्तं च वक्ष्यति । अतो न प्रमदितव्यमिति भावः ॥ २ ॥

**उत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय देवस्य त्वा सवितुः प्रसव इति कृष्णाजिनमादायावधूतꣳ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ॥ ३ ॥**

भा०वृ०—प्रोक्षणीशेषनिधानमिध्माबर्हिर्वेदिप्रोक्षणार्थमतोऽवभृथे बर्हिराद्यभावे निवृत्तिः । शेषं सुगमम् ॥ ३ ॥

सू०दी०—शुन्धध्वमिति पात्राभिधानाद्विकृतौ यथार्थमूहः। अपामभिधानादनूह इति केचित्। तदयुक्तं कर्मणोऽश्रुतत्वादिति शोधकद्रव्याभिधायिनः सकर्मकस्य शुन्धतेः सर्वत्र श्रवणात्प्रायः परस्मैपददर्शनाच्च तथा शोध्यद्रव्याभिधायिनः शुध्यतिपदस्याकर्मकस्य विपर्ययाच्च। यथा, आपो अस्मान्मातरः शुन्धन्तु। ता नः शुन्धन्तु शुन्धतीः। शुन्धन्तु शुचयः शुचिम्। सर्वा पात्राणि शुन्धत। पर्णवल्कमुत शुन्धतेत्यादि। तथा, शुन्धतां लोकः पितृषदनः। शुन्धन्तां पितरः। देवेभ्यः शुन्धध्वम्। वानस्पत्योऽसि देवेभ्यः शुन्धस्वेत्यादि। तस्माद्यथार्थमूहः। समानदेशानां च सकृन्मन्त्रः पूर्ववत्। प्रोक्षणीशेषनिधानमिध्माबर्हिर्वेदिप्रोक्षणार्थम्। अतोऽवभृथेऽस्य बर्हिराद्यभावे निवृत्तिः। बहिष्ठाद्विशसनमिति यथाऽवधूयमानस्य बहिः पृष्ठभागो भवत्यन्तर्लोमभागस्तथेत्यर्थः॥ ३॥

अदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति॥ ४॥

भा०वृ०—स्पष्टार्थम्॥ ४॥

सू०दी०—गतः॥ ४॥

पुरस्तात्प्रतीचीं भसदमुपसमस्यति॥ ५॥

भा० वृ०—भसत्कटिप्रदेशः। उपसमस्यति द्विगुणी करोति पुरस्ताच्च यथा भवति न सर्वा गृह्यते कृष्णाजिनस्य पुरस्ताद्द्विगुणीकृता यथा दृश्यते न तेन प्रच्छन्ना भसन्मध्ये समस्यते॥ ५॥

सू० दी०—भसदं कटिप्रदेशं पुरस्ताद्भागेनाधस्तात्प्रतीचीं गमयित्वाऽनन्तरप्रदेशेन सह द्विगुणितां करोतीत्यर्थः। पुरस्तादिति सिद्धानुवादो ब्राह्मणानुकरणेन॥ ५॥

अनुत्सृजन्कृष्णाजिनमधिषवणमसीति तस्मिन्नुलूखलमधिवर्तयति॥ ६॥

भा० वृ०—अधिवर्तयति उपरि वर्तयति॥ ६॥

सू० दी०—अधिवर्तयति प्रतिष्ठापयति ॥ ६ ॥

अनुत्सृजन्नुलूखलमग्नेस्तनूरसीति तस्मिन्हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ७ ॥

भा० वृ०—स्पष्टार्थम् ॥ ७ ॥

सू० दी०—वामेनानुत्सर्गः सामर्थ्यात् ॥ ७ ॥

अद्रिरसि वानस्पत्य इति मुसलमादाय हविष्कृदेहीति त्रिरवहन्ति । अनवघ्नन्वा हविष्कृतꣳ ह्वयति॥ ८ ॥

भा० वृ०—हविष्कृदवहननमन्त्र उपांशु प्रयोग इति । हविष्कृदेहीत्ययमवहननार्थो मन्त्रः । अवघातमन्त्रत्वे प्रैषरूपत्वाभावाद्याजुर्वेदिकोपांशुत्वं सकृत्प्रयोगः । न च द्वितीयोऽवहननमन्त्रः । अव रक्षो दिवः सपत्नमित्ययं तदा न प्रयोक्तव्यः । उभयोः करणमन्त्रत्वेन विकल्पितत्वात् । उच्चैः प्रयोगः पुनश्चावहननमन्त्र इत्युपदेश इति हविष्कृदेहीत्यस्यावहननमन्त्रत्वेऽपि य एव देवानाꣳ हविष्कृतस्तान्ह्वयतीति । देवहविष्कृदाह्वानरूपत्वादुच्चैरिति । पुनश्चावहननमन्त्रः क्रियाऽभ्यासापेक्षया मन्त्रसमुच्चयोपपत्तेः । हविष्कृददृष्टा देवता, आह्वानपक्षे पत्न्यादिर्वा । अदृष्टा वा देवताऽऽह्वयितव्या पत्न्यन्यो वा प्राकृतः प्रैषेषु लोकवत् ॥ ८ ॥

सू० दी०—चातुःस्वर्येणोपांशु सकृच्च मन्त्रः करणमन्त्रत्वे । विपर्ययस्त्वाह्वानार्थत्वे । आह्वानं चात्र देवतारूपस्य हविष्कृतो वेदितव्यं य एव देवानां हविष्कृतस्तान्ह्वयतीति श्रुतेः । मानुषस्यैवावहन्तुर्वक्ष्यमाणस्याऽऽह्वानं संनिधेः । तथा च बौधायनः—हविष्कृदेहीति पर्जन्य एवैष उक्तो भवति । अथाप्युदाहरन्ति हविःसंस्कारिणमेवैतदाहेति ॥ ८ ॥

हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य ॥ ९ ॥

भा० वृ०—हविष्कृदेहीत्यादयोऽपि प्रैषाः। अध्वर्युर्वा येषु कर्मसु कर्तृनाम नास्तीत्युपदेश इति। अग्नीदग्नीन्विहरेतिवत्। कर्तृनामनिर्देशरहितेष्वध्वर्युः कर्ता समाख्यानमात्रः, आत्मसंस्कारो विलिङ्गेऽपि स्वयं वाऽविरोधादिति कात्यायनमतिरिति विलिङ्गेऽपि युष्मदर्थाभावेऽपि स्वयमध्वर्युर्वा प्रैषार्थान्करोत्यविरोधादिति कात्यायनः। स्वयमात्मानमनुजानीयादिति लिङ्गाच्च। शूद्रस्य निषादस्थपतेः केवलशूद्रस्यानधिकारात्॥ ९॥

सू० दी०—शूद्रस्येति निषादस्थपत्यर्थम्॥ ९॥

**प्रथमं वा सर्वेषाम्॥ १०॥**

भा० वृ०—वचनादेकमिति॥ १०॥

सू० दी०—यजुरिति शेषः॥ १०॥

**अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति॥ ११॥**

भा० वृ०—गतोऽर्थः॥ ११॥

सू० दी०—पूर्वं त्रिरवहतमनवहतं वा हविर्यावद्वैतुष्यमध्वर्युरवहन्ति॥ ११॥

इत्येकोनविंशी कण्डिका।

---

**उच्चैः समाहन्तवा इति संप्रेष्यति॥ १॥**

भा० वृ०—उच्चैः समाहन्तवा इति दृषदुपलासमाहननार्थोऽग्नीत्प्रैषः। आग्नीध्रोऽश्मानमिति वचनात्॥ १॥

सू० दी०—समाहन्तवै समाहन्तव्यम्॥ १॥

**कुटरुरसि मधुजिह्व इत्याग्नीध्रोऽश्मानमादायेषमावदोर्जमावदेति दृषदुपले समाहन्ति॥ २॥**

भा० वृ०—इषमावदेति मन्त्रो यस्मिंश्च परिसमाप्तिस्तत्र पुनरारम्भः॥ २॥

सू० दी०—दृषच्चोपला च दृषदुपलम्। तस्मिन्समाहन्ति॥ २॥

तत्र तु—

द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयति ॥ ३ ॥

भा०वृ०—संचारयन्मन्त्रं क्रियां च दृषद्युपलायां च । प्रतिद्रव्यं वा द्रव्यान्तरे क्रियान्तरं न्याय्यमिति । तदा चतुः, अस्मिन्पक्षे मन्त्रस्य चतुर्वारं प्रयोगः । प्रथमोच्चारणेन दृषदि द्विः, द्वितीयोच्चारणेनोपलायां द्विः, तृतीयेन दृषादि द्विर्द्विः, चतुर्थेनोपलायां सकृत् । जेष्मान्तो मन्त्रः, इषमावदेत्यादिः । वदनं यज्ञायुधानामुद्वदतामुपाशृण्वानिति । यत्रोपकारस्तद्राक्षसं नानुपकारे । अस्यार्थः—मनोः श्रद्धा देवस्य यजमानस्यासुरघ्नी वाक् । यज्ञायुधेषु प्रविष्टाऽसीत्यसुरघ्न्या वाचो यज्ञायुधेषु प्रविष्टत्वात्समाहनने दृषदुपलाख्ययज्ञायुधवदनश्रवणेनासुरवद्भ्रातृव्याणां पराभवने सति वयं संघातं जेष्मेति यजमानस्य सगणस्य जयश्रवणाद्यद्यपि द्युमद्वदतेत्यादिब्राह्मणं जेष्मेत्याह भ्रातृव्याभिभूत्या इति ॥ ३ ॥

सू०दी०—सकृदुक्तेन मन्त्रेण द्विर्दृषदि सकृदुपलायां च क्रियासंचारणमेकः संचारणपर्यायः । तस्यैव द्विरावृत्त्या नवकृत्वः समाहननं संपादयति । यत्र पर्यायसमाप्तिस्तत्रोपक्रमः पर्यायान्तरस्येत्येके । समाहननं चैतद्दृषदुपलसंस्कारार्थत्वाच्चर्वादितन्त्रे निवर्तते । यथोक्तं भारद्वाजेन—असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाज्येभ्यो निनयनमिति ॥ ३ ॥

सावित्रेण वा शम्यामादाय तया समाहन्ति ॥ ४ ॥

भा०वृ०—सावित्रो देवस्य त्वेति मन्त्रः । तया शम्यया ॥ ४ ॥

सू०दी०—सावित्रो देवस्य त्वेत्यादिः । स यत्राऽऽदानार्थस्तत्राऽऽदद इति मन्त्रान्तः, आदद इन्द्रस्याऽऽदद ऋतस्य वा आददे ग्रावेत्यादि लिङ्गात् ॥ ४ ॥

वर्षवृद्धमसीति पुरस्ताच्छूर्पमुपोहत्युत्तरतो वा ॥ ५ ॥

भा०वृ०—गतार्थम् ॥ ५ ॥

सू०दी०—पुरस्तादुलूखलस्योपोहत्युपयच्छति ॥ ५ ॥

वर्षवृद्धाः स्थेत्यभिमन्त्र्य प्रति त्वा वर्षवृद्धं वेत्त्वित्युद्वपति ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—पुरोडाशीयानिति शेषः ॥ ६ ॥

परापूतꣳ रक्षः परापूता अरातय इत्युत्करे परापुनाति ॥ ७ ॥

भा०वृ०—परापवनेऽपि परापूतꣳ रक्षः प्रविद्धꣳ रक्ष इति रक्षसामुपघातार्थत्वान्न रक्षसामुपकारनिमित्तमपामुपस्पर्शनं भवति ॥ ७ ॥

सू०दी०—परापवनं व्याख्यातम् ॥ ७ ॥

प्रविद्धꣳ रक्षः पराध्माता अमित्रा इति तुषान्प्रस्कन्दतोऽनुमन्त्रयते ॥ ८ ॥

भा०वृ०—गतोऽर्थः ॥ ८ ॥

सू०दी०—गतः ॥ ८ ॥

मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशम् ॥ ९ ॥

भा०वृ०—स्पष्टार्थः ॥ ९ ॥

सू०दी०—प्रथमोपधेयस्यापि कपालयोगे मध्यमभावित्वादस्य मध्यमत्ववादः। पुरोडाशकपाल इति वचनात्पुरोडाशार्थं प्रयुक्तेनैव कपालेनोपवपति। अवान्तरदेशं कोणदेशं प्रति ॥ ९ ॥

हस्तेनोपवपतीति बह्वृचब्राह्मणम् ॥ १० ॥

भा०वृ०—पुरोडाशतन्त्रे हस्तकपालयोर्विकल्पः ॥ १० ॥

सू०दी०—हस्तकपालविकल्पः पुरोडाशतन्त्रेषु। चर्वादितन्त्रे तु हस्तो व्यवतिष्ठते कपालाभावात् ॥ १० ॥

अद्भिः कपाल॰॰॰स्पर्शमज्ञातं निधायाप उपस्पृश्य वायुर्वो विविनक्त्विति विविच्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पाण्यां तण्डुलान्प्रस्कन्दयित्वाऽदब्धेन वश्चक्षुषाऽवपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाऽऽशिषमाशास इत्यवेक्ष्य त्रिष्फलीकर्तवा इति संप्रेष्यति॥ ११॥

भा०वृ०—[illegible]स्पर्शनविधानात्तस्य भ्रेषे यजुर्वेदविहितप्रायश्चित्तं भवति । रक्षसां भागोऽसीति रक्षसामुपकारकत्वाद्रौद्रराक्षसेत्युपस्पर्शने प्राप्तेऽप उपस्पृश्येति पुनर्वचनाच्छ्रौतप्रायश्चित्तं भवति । पारिभाषिकस्याकरणे तस्याः श्रौतस्मार्तसाधारण्यात्सामान्यविहितं सर्वप्रायश्चित्तमेव प्रकरणविहिताकरणे हि यदक्त इत्यादि भवति । ( प्रकरणविहिताकरणे ह्यन्तरितादि भवति ) वचनादेकमिति । विविनक्ति सर्वानवहत्य परापूय च सर्वेषां प्रस्कन्दनं शूर्पात्पाण्योः ॥ ११ ॥

सू०दी०—तुषोपवपनस्य राक्षसत्वादेव सिद्धेऽपामुपस्पर्शनवचनं क्रमार्थम् । तथा यदेव रक्षसामुपकारकं तदेव राक्षसं न तु रक्षःसंबन्धमात्रादिति ज्ञापनार्थं च । अतः परापवनादौ न भवति । विवेकफलीकरणे व्याख्याते । त्रिष्फलीकर्तवै फलीकरणं त्रिः कर्तव्यमित्यर्थः ॥ ११ ॥

या यजमानस्य पत्नी साऽभिक्रुत्यावहन्ति ॥ १२ ॥

भा०वृ०—गतोऽर्थः ॥ १२ ॥

सू०दी०—गतः ॥ १२ ॥

यो वा कश्चिदविद्यमानायाम् ॥ १३ ॥

भा०वृ०—अनालम्भुकादिना पत्न्यामविद्यमानायां सत्यां कश्चिदवहन्तीत्यर्थः ॥ १३ ॥

सू०दी०—अविद्यमानायामनालम्भुकत्वादिना निमित्तेनासंनिहितायामभावे च तस्या इत्यर्थोऽविशेषात् । वक्ष्यति च पत्न्यभावे तेज-

अग्नि लुप्यत इति। ननु पत्नीवदस्याग्निहोत्रं भवति। युक्ता मे यज्ञमन्वासाता इत्यादिना कर्मणः पत्नीवत्त्ववचनात्तदभावे कर्मैव न संवर्तेत। नैवम्। कर्म न संवर्तेतानङ्गत्वेऽङ्गत्वे तु संवृत्तं स्यात्। कुतः। अस्याग्निहोत्रं मे यज्ञमिति यजमानस्यैव स्वामित्वव्यापनाच्च न पत्न्याः। तथा व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धानीति तस्याः प्रसिद्धाङ्गसमभिव्याहाराच्च। तथा कर्मचोदना अपि यजमानमेवाधिकुर्वन्ति न पत्नीम्। यथा वसन्ते ब्राह्मणोऽग्निमादधीताग्निहोत्रं जुहुयाद्दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इत्यादि। बह्वृचब्राह्मणे चोक्तं तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदिति। किंचोद्घाटितमेतत्कल्पान्तरकारैः पत्न्यभावेऽप्यग्निसद्भावं वदद्भिः। भारद्वाजस्तावत्—अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यामिति। तथा च तलवकारकल्पे जैमिनिः—आहिताग्नेश्चेत्पूर्वं जाया म्रियेत तां निर्मन्थ्येन दहेत्संतपनेन वेति। तथाऽऽहार्येणानाहिताग्निं पत्नीं चेत्याश्वलायनः। किं चाऽऽचारोऽप्यत्र दृष्टः शिष्टतमानां पूर्वेषां यथा कण्वविभाण्डकभीष्मादीनां यथा च भगवतो दाशरथेः। किंच सहाधिकारेऽपि पत्न्या यजमानसाम्यं तावन्नास्त्येव। यथोक्तं मीमांसकैः—यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वादिति। तस्मात्सिद्धमभावेऽपि पत्न्या न कर्मणो निवृत्तिरिति॥ १३॥

इति विंशी कण्डिका।

---

देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमिति सुफलीकृतान्करोति तूष्णीं वा॥ १॥

आ० वृ०—त्रीन्मन्त्रानसकृदुक्त्वा फलीकरणम्। त्रिरभ्यस्य फलीकरणकर्मत्वाद्वचनादेकं कर्म बहुमन्त्रमिति॥ १॥

सू० दी०—मन्त्रत्रयान्तेऽभ्यातः प्रतिमन्त्रमित्यवचनात्॥ १॥

प्रक्षाल्य तण्डुलांस्त्रिष्फलीक्रियमाणानां यो न्यङ्गोऽवशिष्यते। रक्षसां भागधेयमापस्तत्प्रवहतादिति इत्युत्करे त्रिर्निनयति॥ २॥

भा० वृ०—गतोऽर्थः ॥ २ ॥

सू० दी०—फलीकरणोदकनिनयनमपि तुषोपवपनवद्राक्षसं रक्षसां भागधेयमितिमन्त्रलिङ्गात् तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन्निति बह्वृचश्रुतेश्च । तस्मान्निनीयोदकमुपस्पृशति ॥ २ ॥

अत्र कृष्णाजिनस्याऽऽदानादि प्रागधिवर्तनात्कृत्वा दिवः स्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बां शम्यां निधाय धिषणाऽसि पर्वत्येति शम्यायां दृषदमत्याधाय धिषणाऽसि पार्वतेयीति दृषद्युपलामत्यादधाति ॥ ३ ॥

भा० वृ०—कुम्बं तुण्डं स्थूलं यत्र । शेषं स्पष्टम् ॥ ३ ॥

सू० दी०—शम्यायाः स्थविष्ठोऽन्तः कुम्बम् ॥ ३ ॥

पूर्ववदनुत्सर्गः ॥ ४ ॥

भा० वृ०—गतोऽर्थः ॥ ४ ॥

सू० दी०—उलूखलादिवदुत्तरोत्तरस्य निहतस्य शम्यादेर्वामेनानुत्सर्गः ॥ ४ ॥

अंशवः स्थ मधुमन्त इति तण्डुलानभिमन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ५ ॥

भा० वृ०—अग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधिवपामीत्यधिवपेत्तथापाठादसमासेनैकां देवतां निर्दिश्य जुष्टशब्दस्य पाठात्सूत्रकारेण समासेनोपदेशः, अग्नयेऽग्नीषोमाभ्यामिति मन्त्रसमाम्नाये केवलमाधिवपामीत्येतावन्मात्रनिर्देशाद्यथादेवतं समस्याधिवाप इति एकस्य पेषणस्य संस्कार इति ॥ ५ ॥

सू० दी०—अधिवपनमन्त्रः प्रोक्षणमन्त्रेण व्याख्यातः । तद्यथाऽग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय धान्यमसि

धिनुहि देवानित्यादि । तण्डुलास्तु यावन्तः सकृत्पेष्टुं शक्यन्ते तावतोऽधिवपति ॥ ५ ॥

प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति संततं पिनष्टि ॥ ६ ॥

भा० वृ०—असंवपन्ती पिंषेति सहावपननिषेधाद्भागशः पेषणात्पेषणावृत्तौ प्रथमपेषणस्यानुप्रोहणान्तस्य समन्त्रकः प्रयोगः शेषं पत्नी पिनष्टि तूष्णीं प्रोहति प्रापयति संततमविरामं पिनष्टि ॥ ६ ॥

सू० दी०—गतः ॥ ६ ॥

दीर्घामनुप्रसितिमायुषे धामिति प्राचीमन्ततोऽनुप्रोह्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वाऽदब्धेन वश्चक्षुषाऽवेक्ष इत्यवेक्ष्यासंवपन्ती पिंषाणूनि कुरुतादिति संप्रेष्यति ॥ ७ ॥

भा० वृ०—अन्ततः सर्वेषु प्रथमोप्तेषु पिष्टेषु प्रापयति प्राचीमसंवपन्ती न सर्वान्सह क्षिपन्ती पिंषाणूनि कुरुतादिति पत्न्यादेः प्रैषान्न सहाधिवापः ॥ ७ ॥

सू० दी०—असंवपन्ती दृषदि तण्डुलानसंगतानावपन्ती पिंष पिण्ढि पिष्टानि चाणूनि कुर्वित्यवशिष्टतण्डुलार्थः पत्न्या दास्या वा प्रैषः ॥ ७ ॥

दासी पिनष्टि पत्नी वा ॥ ८ ॥

भा० वृ०—गतोऽर्थः ॥ ८ ॥

सू० दी०—ते अपि कृष्णाजिन एव पिंष्टः ॥ ८ ॥

अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ॥ ९ ॥

भा० वृ०—शूद्राऽदारा दासी पिनष्टि पत्नी वेति विधानान्न क्रमविवाहप्राप्ता शूद्रा ॥ ९ ॥

इति षष्ठः पटलः ।

---

सू० दी०—पूर्वं पत्न्याः फलीकरणावघातमुक्त्वा ततः पेषणेऽपि दास्या सह विकल्प उक्तः । अनेन पुनः पेषणे दास्या नियमो वर्ण्यते । पत्न्यवघातमेव करोति न पेषणं तत्तु शूद्रा दास्येव करोति ॥ ९ ॥

इत्येकविंशी कण्डिका ।

---

इति षष्ठः पटलः ।

---

आहवनीये गार्हपत्ये वा हवीꣳषि श्रपयति ॥ १ ॥

भा० वृ०—स्पष्टम् ॥ १ ॥

सू० दी०—अधिकारादौषधहविर्विषयोऽयमग्निविकल्पः । हवींषीति बहुवचनमैन्द्राग्नापेक्षया सांनाय्ययोस्तूपदेशाभ्यां गार्हपत्य एव व्यवतिष्ठते श्रपणम् ॥ १ ॥

धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय रक्षसः पाणिं दहाहिरसि बुध्निय इत्यभिमन्त्र्यापाग्नेऽग्निमामादं जहीति गार्हपत्यात्प्रत्यञ्चावङ्गारौ निर्वर्त्य निष्क्रव्यादꣳ सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्याऽऽ देवयजं वहेति दक्षिणमवस्थाप्य ध्रुवमसीति तस्मिन्मध्यमपुरोडाशकपालमुपदधाति ॥ २ ॥

भा०वृ०—रक्षसः पाणिमित्युपवेषाभिमन्त्रणं तस्याग्निसंपर्कादौष्ण्यमिति तस्याङ्गारनिर्वर्तनेनाग्निसंपर्कादौष्ण्यमिति दहेतिनिर्देशोपपत्तेः । केचिद्गार्हपत्याभिमन्त्रणमाहिरसीति लिङ्गादिति । अहिरसि

बुध्निय इति प्राजहितमित्यत्राहिरसीति गार्हपत्यसंबोधनादग्ने गृह-पतेऽहे बुध्नियेत्यग्न्याधानमन्त्रे निर्देशाच्च । अहिर्बुध्नियशब्दवा-च्यगार्हपत्यस्याभिमन्त्रणम् । तदनुपपन्नं यदाऽऽहवनीये पाकस्तदा गार्हपत्याभिमन्त्रणस्यानुपकारकत्वादभिमन्त्रणलोपप्रसङ्गान्नि-त्यवदुपदेशवैयर्थ्यादन्यतरमेकतरम् । उपवेषादानं तन्त्रेणाङ्गार-निर्वर्तनादीनि प्रतिकपालयोगं प्रतिकपालगणम् । तदर्थकत्वान्निर्व-र्तनस्य । केचिदग्निसंस्कार इति सकृत्कुर्वन्ति तमपहृत्य मध्येऽग्नौ कपालमिति लिङ्गात् । अवस्थापनं च यस्य कस्यचिदङ्गारस्य पुनः पुनर्द्वितीयादिकपालयोगे दक्षिणतोऽवस्थापनं निर्वर्तन-देशान्मध्यमं यथा भवति तथा कार्यम् । तस्य परितः कपाला-न्तरोपधानम् ॥ २ ॥

सू० दी०—अभिमन्त्रणस्याग्निलिङ्गत्वेऽपि कर्मतया प्रकृत उपवेष एवाभिमन्त्रणेनान्वयमर्हति कर्मान्तरानुपादानात् । न च लिङ्ग-विरोधस्तस्यैवाग्नेरेकस्याग्निवदुपचारात् । तथाचैतं मन्त्रमुपवे-षादान एव सत्याषाढो विकल्पितवान् । निर्वर्त्य निष्कृष्य दक्षिणमवस्थाप्य निरस्तादन्यं दक्षिणतोऽवस्थाप्य ॥ २ ॥

**निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गार-मत्याधाय धर्त्रमसीति पूर्वं द्वितीयं संस्पृष्टं धरुणम-सीति पूर्वं तृतीयं चिदसि विश्वासु दिक्षु सीदेति मध्यमाद्दक्षिणं परिचिदसि विश्वासु दिक्षु सीदेति मध्यमादुत्तरम् ॥ ३ ॥**

भा० वृ०–अत्याधानमुपरिस्थापनम् । उपदधातीत्यध्याहारः ॥ ३ ॥

सू० दी०–उपदधातीति शेषः ॥ ३ ॥

**यथायोगमितराणि ॥ ४ ॥**

भा०वृ०—इतराणि कपालानि पुरोडाशस्थापनं यथा भवति तथो-पदधाति ॥ ४ ॥

सू०दी०—अतः पराणि यथायोगमुपदधाति यथा पुरोडाशप्रतिष्ठाप-नयोग्यो योगः संपद्यते तथेत्यर्थः ॥ ४ ॥

इति द्वाविंशी कण्डिका ।

मरुतां शर्धोऽसीति षष्ठम् । धर्मासीति सप्तमम् । चितः स्थेत्यष्टमम् ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—गतः । न्युब्जानि सर्वाण्युपधेयानि उत्तानेषु कपालेष्वधिश्रयतीति क्वचिद्व्यक्तदर्शनात् ॥ १ ॥

एवमुत्तरं कपालयोगमुपदधाति ॥ २ ॥

भा०वृ०—अपाग्नेऽग्निमामादं जहीत्यादिचितः स्थेत्यन्तं प्रतिपुरोडाशमावृत्तिः, उपवेषादानं च प्रतिकपालयोगमित्युपदेशपक्षः प्रतिप्रधानगुणावृत्तेर्न्याय्यत्वात् ॥ २ ॥

सू०दी०—एवमङ्गारनिर्वर्तनादिना विधिनोपदधाति । तन्त्रमुपवेषादानं विभुत्वात् ॥ २ ॥

अपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्याऽभिनिधाय निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति तस्मादपरं धरुणमसीति तस्मात्पूर्वं यथायोगमितराणि ॥ ३ ॥

भा०वृ०—अभिनिधानमभिपीडनमङ्गुल्या ॥ ३ ॥

सू०दी०—अभिनिधायावपीड्य ॥ ३ ॥

तस्य तस्याङ्गुल्याऽभिनिधानमङ्गाराधिवर्तनं च वाजसनेयिनः समामनन्ति ॥ ४ ॥

भा०वृ०—स्पष्टार्थः ॥ ४ ॥

सू०दी०—तस्य तस्य प्रतिकपालमित्यर्थः ॥ ४ ॥

चितः स्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा ॥ ५ ॥

भा०वृ०—आग्नेयविकारेषु न चितः स्थेति । आग्नेयानङ्गत्वाद्विका-

रेणार्थवान्साधारणोपदेश इति प्रयोगः । आग्नेयविकारेष्वपीत्युपदेश इति । साधारणोपदिष्टमन्त्राणां सर्वकरणार्थत्वसंभवे तदनुग्रहस्य युक्तत्वादाग्नेयविकारवैश्वानरादिषु निवेशे सति विकृतिप्राप्ताग्नेयोपकारजनकतया प्रकृतौ साधारणोपदेशस्यार्थवत्त्वमिति ॥ ५ ॥

सू०दी०—उत्तरकपालयोगविषयोऽयं विधिः प्रथमेऽसंभवात्तेनाऽऽग्नेयविकारेषु न भवति । तत्र तु कपालाधिक्ये समशः प्रतिविभज्येति न्यायेनाष्टानामेव मन्त्राणां प्रतिविभागः ॥ ५ ॥

**भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति ॥ ६ ॥**

भा०वृ०—भृगूणामिति प्रतिकपालयोगं यदि न संभवति तन्त्रेण । मदन्त्यधिश्रयणं लौकिकाभिरद्भिर्न प्रणीताभ्यः, तप्ता आपो मदन्त्य इत्याचक्षते । बैलिकिराचार्यो मन्यते । अग्नीन्मदन्त्याप इत्यत्र वक्ष्यते । मदन्तीरधिश्रयतीति भाविव्यवस्थाभिप्रायेण । केचित्प्रणीताभ्य इति । प्रणीताभिः संयौतीति दर्शनादित्यनुपरिप्लावनस्यापि हविर्मिश्रीकरणार्थत्वात्प्रणीताभिः संयौतीत्युभयत्रापि मिश्रीकरणैः प्रणीतानिवेशो युक्त इति प्रणीताभ्यो मदन्तीरिति ॥ ६ ॥

इति त्रयोविंशी कण्डिका ।

---

इति सप्तमः पटलः ॥

---

सू०दी०—अङ्गाराध्यूहनस्य प्रतिकपालयोगमावृत्तिः । आपस्तप्ता मदन्त्य इत्याख्यायन्ते तासामर्थेऽपः प्रणीताभ्योऽधिश्रयति प्रणीताभिः संयौतीति वचनादासामपि संयवनार्थत्वाच्च । लौकिकीभ्य इत्यन्ये । अत्र गोप्रतीक्षणादिविधिना प्रातर्दोहं दोहयति । व्याख्यातोऽस्य श्रपणाग्निः ॥ ६ ॥

इति त्रयोविंशी कण्डिका ।

---

इति सप्तमः पटलः ॥

---

**प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टꣳ संवपामीति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम्॥१॥**

भा०वृ०—उपवाता शुष्का निष्टप्यमाना निष्टपनेन शुष्का संवपति सह क्षिपति सर्वाणि पिष्टानि नाधिवापवदेकदेशक्षेपः । अग्नये जुष्टꣳ संवपाम्यग्नीषोमाभ्यां जुष्टमिति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टꣳ संवपामीत्येकस्य पाठादधिवापवत् । अग्नयेऽग्नीषोमाभ्यामित्युपदेशः। संवपामि समापो अद्भिरग्मतेत्येतावन्मात्रपाठात्॥१॥

सू०दी०—शुद्धायामपि तदानीं प्रक्षालितायां निष्टपनेन शुष्कायां पात्र्यां कृष्णाजिनात्पिष्टानि संवपति । शेषस्तु व्याख्यातः॥१॥

**संवपन्वाचं यच्छति तामभिवासयन्विसृजते ॥ २ ॥**

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—वक्ष्यति पुरोडाशे भस्माध्यूहतीति तदभिवासनमित्युच्यते भस्मनाऽभिवासयतीति ब्राह्मणानुकारात् ॥ २ ॥

**प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिः संयौति ॥ ३ ॥**

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—संयौति मिश्रयति ॥ ३ ॥

**अन्या वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत्॥४॥**

भा०वृ०—अन्या वा यजुषोत्पूयेत्युत्पवनमात्रम् । नाभिमन्त्रणम् । पूर्ववदुत्पूयाभिमन्त्र्येत्यत्राभिमन्त्रणोपदेशात् । केचिदभिमन्त्रणमपि कुर्वन्ति तत्कार्यतापत्तेः प्रणीताकार्यापत्तेः । प्रणयनात्प्राचीनधर्मलाभात् । यदि प्रणीता नाधिगच्छेदिति यदि न प्रणयेदित्यर्थः । अतो विकल्पः । प्रकृतावपि यजुरुत्पूतानां विकल्पश्चरुष्वाज्यलिङ्गात् । पवित्रवत्याज्ये कणानावपन्तीति प्रकृतौ प्रणयनस्य नित्यवदुपदेशाच्छाखान्तरीयस्य यजुरुत्पूतस्य विकृतावुत्कर्षे प्राप्ते चरुष्वेव नियमः पवित्रवत्याज्य इत्युत्पूतमात्रावस्थानुवादस्य चरौ दर्शनाच्छाखान्तरीयस्य यजुरुत्पूतस्य चरावेव

निवेशः । प्रकृतौ विकल्पपरिहारार्थं च पशुपुरोडाशे चायं विधिर्यजुरुत्पूतविधिः । सोमविधे प्रणीता नियता प्रकृताविति हिरण्यकेशिमतिः प्रकृतौ पशवो जगतीरिति लिङ्गात् । घृतवतीः प्रणीता आनयन्तीति केचिदिति । अस्यार्थः—स᳚ रेवतीर्जगतीभिरिति संयवनमन्त्रव्याख्यानावसरे, आपो वै रेवतीः पशवो जगतीः, ओषधयो मधुमतीरित्युक्तत्वात्तानेवास्मा एकधा स᳚सृज्य मधुमतीः करोतीति पशोः संसर्गाभावात्पशुसंबन्धिना केनचित्संसर्गः प्रतीयते । तत्र चैतद्वै दैव्यं मधु वनस्पते मधुना दैव्येनेति च मधुशब्दस्य घृतवचनत्वदर्शनान्मधुमतः करोतीति दर्शनाच्च घृतवतीः प्रणीता आनयन्तीति केचित् ॥ ४ ॥

सू०दी०—यानि प्रणीतारहिततन्त्राणि प्रसङ्गीनि प्रणीतापेक्षाणि कर्माणि यथा सोमविधे पशौ पशुपुरोडाशः सौमिकेषु पशुषु सवनीया देविका देवसुवां हवींषीत्यादि तद्विषयोऽयं विधिः । किमर्थस्तर्हि वाशब्दः प्रणीताभिर्विकल्पार्थः । तदर्थमपः प्रणीय ताभिर्वा संयौत्यन्याभिर्वेत्यर्थः । सत्याषाढस्त्वाह—यदि प्रणीता नाधिगच्छेदित्यापदर्थो वाद इति । नात्रापामभिमन्त्रणमुत्पूयाभिमन्त्रयेत्यन्यत्र विशेषवचनात् । चरुषु श्रपणार्थान्यथाऽऽज्यदधिपयांसि यथार्थमूहेनोत्पूय सपवित्रायां स्थाल्यामानीय तेषूत्पूतांश्चरव्यानावपति पवित्रवत्याज्ये कणानावपतीति लिङ्गात् । तत्र पयोघृतादेश्चरुश्रपणार्थस्योहेनोत्पवनमभिमन्त्रणं चाऽऽह सत्याषाढो यथा—देवस्त्वा सवितोत्पुनात्वित्युत्पवनं संनमति पयो देवाग्रेष्वग्रेग्वग्र इत्यभिमन्त्रणमिति । शृते नेदीयसि वाऽऽज्यमानयतीति बौधायनः ॥ ४ ॥

स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीयाद्भिः परिप्रजाता इति तप्ताभिरनुपरिप्लाव्य जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरोऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादे-

**वतमभिमृशतीदमग्नेरित्याग्नेयमिदमग्नीषोमयोरित्यग्नीषोमीयम् ॥ ५ ॥**

भा०वृ०—जनयत्यै त्वा संयौमीत्येतावान्मन्त्रः संयवन उपलक्षणार्थ उत्तरेऽभिमर्शने विकल्पः । तथा हि अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्या इति ब्राह्मणे पृथक्कृतयोर्हविषोरभिमर्शने देवतोपलक्षणार्थत्वम् । तत्राग्नीषोमाभ्यामित्यत्र त्वाशब्दानुषङ्गः । अत इदमग्नेरित्यादेर्विकल्पस्याभिमर्शने । व्यावृत्त्या इति ब्राह्मणवाक्यस्यायमभिप्रायः-भिन्नदेवतासंबन्धितयाऽभिमर्शनेन शास्त्रीयपृथक्करणं भवति न दृष्टरूपविभागमात्रेणेति अतो न यथाभागं व्यावर्तेथामित्यनेन विकल्पः । अग्नीषोमाभ्यामित्येवमन्तः संयवनार्थ एवेत्युपदेश इति तस्यापि संयवनेऽन्वयसंभवात् । अन्यत्र च सूत्रकारेणाविनियोगात् । उत्तरस्याऽऽदिना पूर्वस्यावसानमिति न्यायाद्यथादेवतं चोह्यते केवलाग्नेये त्वग्नये त्वेत्येतदन्तः । असंनयत ऐन्द्राग्ने सति इन्द्राग्निभ्यामित्यन्तः । ऊहशब्दश्च यथादेवतमुपलक्षणपरः । इन्द्रशब्दवन्महेन्द्रशब्दस्य देवतानिर्देशस्यान्वयिदेवतोपलक्षणार्थत्वाद्व्यावर्तेथामिति हविरभिधानं न पिण्डाभिधानमतश्चरुपुरोडाशगण ऊहइति नायं मन्त्रः संसृष्टपिण्डपृथक्करणार्थः किंतु संसृष्टहविर्विभागार्थः । अतोऽधिवपनात्प्राक् चरुपुरोडाशीयगणसंसर्गेऽनेन विभाग ऊहश्च हविर्बहुत्वे ॥ ५ ॥

सू०दी०—परिप्लाव्य परितः सिक्त्वा । संयुत्य पिष्टान्यपश्च मेलयित्वेत्यर्थः । तत्र तु संयवनमन्त्रोऽग्नीषोमाभ्यामित्यन्त उत्तरस्याऽऽदिनेति न्यायात् । स च देवतादिभेदे प्रोक्षणादिमन्त्रवद्यथादेवतं विकर्तव्योऽन्यथालिङ्गविरोधात् । न चार्थवादत्वं समवेताभिधायित्वादग्नये त्वाऽग्नीषोमाभ्यामिह व्यावृत्त्या इति श्रुतेश्च । न च यथादेवतमित्यवचनादविकार इति वाच्यम् । प्रोक्षणादिमन्त्रस्वरूपतया तत्तुल्यन्यायतया च तैरेव व्याख्यातविकारत्वाद्व्यक्तवचनाच्च बौधायनेन यथाऽग्नये त्वाऽग्नीषोमाभ्याममुष्मा इति यथादेवतमिति । अन्ये तु जनयत्यै त्वा संयौमीत्यन्तं संयवनमन्त्रमिष्ट्वा शेषं विभक्ताभिमर्शने सौत्रेण मन्त्रेण

सह विकल्पयन्ति। नायं सूत्रकृतोऽभिप्रायः। अपृथग्विनियोगात्। कथं चायमाचार्यः कार्त्स्न्येनैतं मन्त्रसमाम्नायं विनियुञ्जानो मन्त्रमेकं भ्रंशितवानिति संभावयामः । तस्मात्सूक्तमैकमन्त्र्येण विकर्तव्यमिति । तदयं प्रयोगात्मा । जनवत्यै त्वा संयौम्यग्नये त्वाऽग्नीषोमाभ्यामिन्द्राय वैमृधायेत्यादि । मखस्य शिरोऽसीति सर्वमेकं पिण्डं कृत्वा ततो विभज्य द्वौ समौ कृत्वा तयोराग्नेयमितरं चाभिमर्शने नियच्छति । वैमृधसमानतन्त्रत्वे तु पुरोडाशगणे यथाभागमित्यादिन्यायेन विभज्योत्तमयोरेव देवतोपदेशनं करोति नाऽऽग्नेयस्य । तथा न केवलाग्नेयाभिमर्शनं विभागाभावात्॥ ५॥

इदमह१ँ सेनाया अभीत्वर्यै मुखमपोहामीति वेदेन कपालेभ्योऽङ्गारानपोह्य घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयति ॥ ६ ॥

भा०वृ०—कपालादङ्गारापोहनमन्त्रः प्रतिकपालयोगं यदि न संभवति सकृदित्युपदेश इति ॥ ६ ॥

सू०दी०—अपोहने कपालेभ्य इत्यविशेषवचनादधिश्रयणेऽष्टासु कपालेष्विति विशेषणाच्चोत्तरस्मादपि कपालयोगादङ्गारानपोह्योत्तरस्मादपोहतीत्येव सत्याषाढः । तत्र प्रतिकपालयोगं मन्त्राभ्यासो देशभेदादसंभवात्॥ ६ ॥

एवमुत्तरमुत्तरेषु ॥ ७ ॥

भा०वृ०—अधिश्रयतीत्यध्याहारः ॥ ७ ॥

सू०दी०—अधिश्रयतीत्यन्वयः। उत्तरत्वमुत्पत्त्यपेक्षया हविषाम्। एवमिति मन्त्रातिदेशः ॥ ७ ॥

एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ८ ॥

भा०वृ०—अत ऊर्ध्वमित्युत्तरत्र वचनादिति अधिश्रयणोत्तरकालमेवमनुपूर्वाण्येवैष्वत ऊर्ध्वमितिवचनादङ्गारापोहनं तन्त्रेण यावत्संभवम्। एवमनुपूर्वाणीत्याग्नेयस्य कृत्वोत्तरस्य संस्कारः प्रथ-

नादिः, एवेत्यवधारणादेकदेवतेष्वपि यथा प्रथमस्य संस्कारः कृतस्तथोत्तरस्य संस्कारः। एषु पुरोडाशेष्वन्येन हविषाऽव्यवेतेषु यथाः—अश्वप्रतिग्रहेष्ट्यादिषु व्यवाये तु शुनासीरीयादौ शुनासीरीयस्योद्वासनं कृत्वा वायव्यस्य पयसः कृत्वाऽभिघारणोद्वासने तत एककपालस्य सौर्यस्याभिघारणादि अत ऊर्ध्वमितिवचनात्। पूर्वं तु प्रोक्षणादयः संस्कारास्तन्त्रेण संभवन्ति॥ ८॥

सू०दी०—अधिश्रयणादूर्ध्वं ये संस्काराः प्रथनादयस्तेऽप्येषु पुरोडाशेष्वेवमधिश्रयणोक्तेनोत्पत्तिक्रमेणैव कर्तव्याः। एष्विति बहुवचनमैन्द्रापेक्षया। समानश्चायं न्यायः सर्वहविषां विशेषहेत्वभावात्। तेन हविर्गणेषु चरुदोहादिव्यतिषङ्गेऽप्युत्पत्तिक्रमेणैव हविःषु संस्कारा भवन्ति। अत ऊर्ध्वमिति चातः पूर्वमविभक्तत्वाद्धविषामानुपूर्व्या संभवादुक्तं न तु तत्र न्यायत्वात्। अतो विकृतिषु सति संभवे पूर्वत्राप्ययमेव न्यायो द्रष्टव्यः। यथा नानाबीजादिषु निरुप्ताभिमर्शनादीनाम्॥ ८॥

अस्त्वेवमुत्पत्तिक्रमेण हविःषु संस्काराणां प्रवृत्तिस्त एव संस्काराः किं काण्डानुसमयन्यायेनैकैकत्र काण्डशः कार्या उत पदार्थानुसमयन्यायेनैकैकशः संस्कारः सर्वेषु परिनिष्ठापनीय इत्यपेक्षायामभिमतं न्यायं दर्शयति—

इति चतुर्विंशी कण्डिका।

---

## समानजातीयेन कर्मणैकैकमपवर्जयति॥ १॥

भा०वृ०—समानजातीयेनैकप्रकारेणैकैककर्मणैकैकस्य परिसमाप्तिः, नान्यस्याकृत्वा प्रथनमन्यः प्रथ्यते। अन्यस्येति केषुचित्कपालेषु प्रथने कृते हविरन्तरस्य प्रथनम्। एवं पूर्वेष्वपि कपालोपधानादिष्वेकैकस्य गणस्योपधाने समाप्तेऽन्यस्याऽऽरम्भः कर्मणेति प्रकृतत्वात्॥ १॥

सू०दी०—एकविधिचोदित एको व्यापारः समानजातीयं कर्म। तस्य बहुषु क्रियमाणस्य व्यक्तिनानात्वात्समानजातीयत्वाभि-

मानः। तेनैकैकं हविरनुसमेत्यापवर्जयति निर्वृत्तार्थं करोति। न तु भिन्नजातीयैरनेकैरेकैकमित्यर्थः। तद्यथा प्रथमस्य कृत्वा प्रथनं द्वितीयस्य करोति तथैव श्लक्ष्णीकरणादीनि। एवं च पदार्थानुसमय एव सर्वत्राभिमत इत्युक्तं भवति। तत्राऽऽह सत्याषाढः–संयुक्तानि त्वेकापवर्गाणि यथाऽवदानप्रदाने उद्वपननिष्पवने चेति। मीमांसकाश्चाऽऽहुः–संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वादिति ॥ १ ॥

**यानि विभवन्ति सकृत्तानि क्रियन्ते ॥ २ ॥**

भा० वृ०—यदि विभवतीति वक्तव्ये यानि विभवन्तीति बहुवचनात्पूर्वाण्यपि सकृन्निरुप्ताभिमर्शनादीनि पर्यग्निकरणान्तानि च नानाबीजेष्वपि वरुणप्रघासादिष्वपि वा पौष्ण इत्यादिपक्षे हविरन्तरव्यवायेऽपि विभवतां सकृत्प्रयोगः, अविभवतां चाऽऽवृत्तिर्निरुप्ताभिमर्शनादीनाम् ॥ २ ॥

सू० दी०–तत्र यानि कर्माणि सकृत्कृतान्येव सर्वेषामुपकाराय प्रभवन्ति तानि सकृदेव क्रियन्ते। न त्वेकैकस्य। यथा पर्यग्निकरणादीनि बहुवचनात्प्रोक्षणादीनि च सर्वाणि ॥ २ ॥

**उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयति ॥ ३ ॥**

भा० वृ०–यथा सर्वाणि कपालानि प्राप्नोति पुरोडाशस्तथा प्रथयति ॥ ३ ॥

सू० दी–यथा सर्वाणि कपालान्यभितिष्ठति पुरोडाशस्तथा प्रथयतीत्यर्थः ॥ ३ ॥

**अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति ॥ ४ ॥**

भा० वृ०—तुङ्ग उच्चः ॥ ४ ॥

सू० दी०–अतुङ्गोऽनुच्चपृष्ठः। अनपूपाकृतिर्न चापूपवदतिनीचः। किं तु यथाऽयं कूर्मस्य प्रतिकृतिरिव भवति तथा करोति। तेऽप-

श्यन्पुरोडाशं कूर्मं भूतामिति कूर्माकृतिसंस्तवादिति भावः । शफः खुरः ॥ ४ ॥

यावन्तं वा मन्यते ॥ ५ ॥

भा० वृ०—स्पष्टम् ॥ ५ ॥

सू० दी०—यावन्तमिज्यायाः शेषकार्याणां च पर्याप्तं मन्यते तावन्तमिति शफप्रमाणविकल्पः ॥ ५ ॥

तं न सत्रा पृथुं करोतीत्येके ॥ ६ ॥

भा० वृ०—सत्रा पृथुरतिपृथुरित्यर्थः । कूर्मप्रतिकृत्या विकल्पः । यावन्तं वा मन्यत इत्यस्मिन्पक्षे कूर्माकृतेः संभवादश्वशफमात्रेण विकल्प्यते । अकूर्मप्रकृत्येति केचित्पठन्ति तस्यार्थश्चिन्त्यः ॥ ६ ॥

सू० दी०—तमुक्तात्प्रमाणात्सत्रा पृथुमत्यर्थं पृथुं न कुर्यात् । अल्पं तु पार्थवं संमतमित्येके मन्यन्त इत्यर्थः ॥ ६ ॥

त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णी करोत्यनतिक्षारयन् ॥ ७ ॥

भा० वृ०- अनतिक्षारयन् यथा न पतत्युदकं कपालेषु ॥ ७ ॥

सू० दी०—अनतिक्षारयन्यथा पुरोडाशमतीत्य नाऽऽपः क्षरन्ति तथा ॥ ७ ॥

अन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्वाणि हवीꣳषि त्रिः पर्यग्नि कृत्वा देवस्त्वा सविता श्रपयत्वित्युल्मुकैः परितपति ॥ ८ ॥

भा० वृ०—सर्वेषां हविषां त्रिः पर्यग्निकरणं दोहयोरपि । सायंदोहमप्यानीय भारद्वाजमतात् । ब्राह्मणे पुरोडाशग्रहणं प्रदर्शनम् । आपस्तम्बस्य मताद्यत्पुरोडाशः स ईश्वरो यजमानमित्यादिषु पुरोडाशग्रहणं प्रदर्शनार्थमतः सर्वेषां पर्यग्निकरणम् । मीमांसकानां द्विबहूनां पुरोडाशानामेकवचनमात्रविवक्षाया द्विबहूनां पुरोडाशानां पर्यग्निकरणं प्रकृत्यर्थाविवक्षाकारणाभावात् । अतो न दोहयोः । परितस्तपनं समन्ततस्तपनम् ॥ ८ ॥

सू० दी०—परित उल्मुकनयनं पर्यग्निकरणं तद्दोहयोरपि करोति सर्वाणीति वचनात्। तथा च भारद्वाजः पर्यग्निकरणकाले दध्युपदधातीति। तत्र यदाऽप्याहवनीये हविःश्रपणं भवति तदाऽपि प्रातर्दोहस्य गार्हपत्यस्थत्वात्तेनाग्निना पर्यग्निकरणं सामर्थ्यात्। परितपाति परितस्तपाति पुरोडाशम्॥ ८॥

अग्निस्ते तनुवं माऽतिधागिति दर्भैरभिज्वलयाति ज्वालैर्वा॥ ९॥

भा० वृ०—अस्पृशद्भिरभिज्वलयाति दर्भैरुपरि ज्वालयाति। अग्निस्ते तनुवं माऽतिधागित्याहानतिदाहायेति श्रुतेः॥ ९॥

सू० दी०—अभिज्वलयत्युपरि ज्वलयाति। ज्वालैर्ज्वलद्भिस्तृणादिभिः॥ ९॥

अविदहन्तः श्रपयतेति वाचं विसृजते॥ १०॥

भा० वृ०—अविदहन्त इत्याग्नीध्रे बहुवचनं पूजार्थम्। पूजितो ह्याग्नीध्रः॥ १०॥

सू० दी०—तामभिवासयन्विसृजत इति प्रागुक्तस्य वाग्विसर्गस्यायं कालः प्रदर्श्यते तामभिवासयन्निति लक्षणार्थे। भस्मनाऽभिवासमात्पूर्वकालस्य लक्षणेत्युक्तं भवति। संप्रैषोऽयमाग्नीध्रं प्रत्यविवक्षितबहुवचनस्तस्यैवोत्तरत्र श्रपणविधानात्॥ १०॥

आग्नीध्रो हवींश्षि सुश्रृतानि करोति॥ ११॥

भा० वृ०—तथा श्रपयति यथा न क्षामं स्याद्व्यत्ययो वा। स चार्थकर्म करोति तूष्णीं सम्यक् श्रपणं करोति हवींषीति बहुवचनादन्यत्रापि हविःश्रपणे यदर्थकृत्यं तदाग्नीध्र एव करोति यन्मन्त्रेण तदेवाध्वर्युः॥ ११॥

सू० दी०—गतः॥ ११॥

सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति॥ १२॥

भा० वृ०—अभिवासनमुपरि भस्माध्यूहनं पाकार्थं तदध्वर्युः करोति तामभिवासयन्निति लिङ्गादिति। संवपन्वाचं यच्छतीत्य-

ध्वर्योर्वाग्यतत्वात्तामभिवासयन् विसृजत इति तस्यैवाभिवासनं कुर्वतो विसर्जनोपदेशादाध्वर्यवमभिवासनं नाऽऽग्नीध्रकर्म । अभिज्वलनदर्भभस्मनामेवाभिवासनम् ॥ १२ ॥

सू० दी०—अध्यूह्यत्यध्वर्युरभिवासयतीत्यर्थः ॥ १२ ॥

**अत्र वा वाचं विसृजेत् ॥ १३ ॥**

भा० वृ०—अभिवासयन्विसृजत इति वचनाद्वर्तमानेऽभिवासने वाग्विसर्गः समाप्ते वा, अध्यूहनोत्तरकालम् । अत्र वा वाचं विसृजेदिति वचनात्, अविदहन्तः श्रपयतेति मन्त्रोच्चारणेन वा वाग्विसर्गः ॥ १३ ॥

सू० दी०—अस्मिंस्तु कल्पे तामभिवासयन्निति शत्राऽभिवासनोत्तरकालो लक्षितो भवति । तेनाविदहन्त इति संप्रैषोऽप्यत्रोत्कृष्यते ॥ १३ ॥

**अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लेखा लिखति प्राचीरुदीचीर्वा ॥ १४ ॥**

भा० वृ०—प्रथनं श्लक्ष्णीकरणं च कृत्वाऽङ्गुलिप्रक्षालनं यथा न लेपसंसर्ग इति एकस्य प्रथने कृते पुनरङ्गुलिप्रक्षालनं तथा श्लक्ष्णीकरणे च कृते हविरन्तरलेपासंसर्गार्थं लेपसंसर्गे हविःसंसर्गनिमित्तं नैमित्तिकं भवति । एवमुद्वासनावदानादिष्वपि अङ्गुलिप्रक्षालनोदकं पात्रीनिर्णेजनेन संसृज्योल्मुकेनाभितापः कार्यः । प्राचीरुदीचीरिति लेखापरिसमाप्तिः । प्राच्यामुदीच्यां वा दिशीति । एकैकरेखाग्रसमाप्तिः प्रागपवर्गा एव तु लेखा इति तिसृणामन्त्यलेखा प्राच्यामेव भवति । यद्यपि परिभाषायामुदगपवर्गत्वमुक्तं तदत्र नोपपद्यते निनयने प्रत्यगपवर्गनियमात् । केचिन्निनयनाङ्गत्वात्प्रत्यगपवर्गा इति वदन्ति ॥ १४ ॥

सू० दी०—अङ्गुलयः प्रक्षाल्यन्ते येन येन च पात्री निर्णिज्यते तदुभयमपि सहगृहीतं जलमुल्मुकेनोपरिगृहीतेन तापयति । तथा च ब्राह्मणम्—उल्मुकेनाभिगृह्णाति शृतत्वायेति । प्राचीः प्रागायता-

स्तथोदीचीः। ताश्चोभय्योऽपि पश्चिमायामारभ्य पूर्वान्ता लेखा लेखितव्याः ॥ १४ ॥

तास्वसꣳस्यन्दयंस्त्रिर्निनयाति प्रत्यगपवर्गमेकताय स्वाहेत्येतैः प्रतिमन्त्रम् ॥ १५ ॥

आ० वृ०—असंस्यन्दयन् यथा न निर्गच्छत्युदकं रेखाभ्यो बहिः। एकतप्रभृतयोऽद्भ्यो जाता इति आप्यास्तेभ्यो निनीयोत्तरपरिग्राह इति आप्यलेपं निनीयोत्तरपरिग्राहमिति आप्यलेपं निनीयोत्तरं परिग्राहं परिगृह्णीयादित्यस्याऽऽप्यशब्दस्य व्याख्यानार्थमद्भ्यो जाता इति यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वमिति निर्वचनादेकतादय आप्याः ॥ १५ ॥

सू० दी०—तासु बहिस्स्यन्दयन्नेकैकेन मन्त्रेणैकैकत्र सकृत्सकृन्निनयति। न त्वेकैकत्र निनयनावृत्तिः, त्रिस्त्रिरित्यवचनात् ॥ १५ ॥

निनीय वाऽभितपेदभितपेत् ॥ १६ ॥

आ० वृ०—तिसृषु लेखासु निनीयोदकमुल्मुकेन प्रतितपति। द्विरुक्तिः समाप्तिसूचिका ॥ १६ ॥ १ ॥ ८ ॥

इत्यापस्तम्बसूत्रभाष्यवृत्तावष्टमः पटलः ॥

---

इति कौशिकेन रामेणाग्निचिता कृतायामापस्तम्बसूत्रदर्शपूर्णमासधूर्तस्वामिभाष्यवृत्तौ प्रथमः प्रश्नः ॥

---

सू० दी०—रेखासूदकं निनीय तत्र वा पृथगुल्मुकेनाभितपेत् ॥ द्विरुक्तिः प्रश्नसमाप्तिसूचिका ॥ १६ ॥

इति पञ्चविंशी कण्डिका ॥

---

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः।

---

इति प्रथमः प्रश्नः ॥

## अथ द्वितीयः प्रश्नः ।

---

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादायेन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्र्य हरस्ते मा प्रतिगामिति दर्भेण संमृज्यापरेणाऽऽहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति ॥ १ ॥

भा०वृ०—सावित्रेण स्फ्यादानम् । स्रुववत्स्फ्यसंमार्ग इत्युपदेशः स्रुववत्स्फ्यसंमार्गरूपत्वम् । ध्रुवाप्राशित्रयोरिव मुख्यभूतस्रुवधर्मकत्वमित्यभिप्रायः । स्वमते तु ध्रुवाप्राशित्रयोः स्रुग्भिः समानविधानात्स्फ्यस्य स्रुग्धर्मकत्वविधानाभावादनियमः । आहवनीयसमीपे वेदिर्यत्रापि महदन्तरमन्तरालं गार्हपत्याहवनीययोश्चतुर्विंशत्यादिपक्षेऽपि प्रागायता यजमानमात्री वेदिः ॥ १ ॥

सू०दी०—गार्हपत्याहवनीययोरन्तरालमहत्त्वेऽप्याहवनीयानन्तर्यं वेदेर्दर्शयन्नपरेणाऽऽहवनीयमिति । अपरिमितशब्दः सर्वत्रोक्तात्प्रमाणादधिकविषय इति न्यायविदः । कात्यायनश्चाऽऽह—अपरिमितं प्रमाणाद्भूय इति । तथाऽपरिमितशब्दे संख्याया ऊर्ध्वमिति भारद्वाजः ॥ १ ॥

यथाऽऽसन्नानि हवींꣳषि संभवेदेवं तिरश्चीम् ॥ २ ॥

भा० वृ०—यथाऽऽसन्नानि हवींषि संभवन्ति तथाऽस्या विस्तीर्णता ॥ २ ॥

सू० दी०—यथाऽऽसन्नानि हवींषि वेदिः संभवेत्संगृह्णीयात्तथा तिरश्चीं तिर्यग्विस्तीर्णाम् ॥ २ ॥

वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते

विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिः संमार्ष्ट्युपरिष्टाद्वा ॥ ३ ॥

भा०वृ०—संमार्गं कृत्वोपरिष्टात्स्तम्बयजुषः खनिप्रत्यवेक्षणात्प्रागुपरिष्टाद्वेत्यस्य व्याख्या स्फ्यसंमार्गं कृत्वा स्तम्बयजुष उपरिष्टाद्वेदिसंमार्गः । खनिप्रत्यवेक्षणात्प्राक् स्तम्बयजुरङ्गं वेदिसंमार्गः । पुरस्तादुपरिष्टाद्वेति निर्देशात्पुरस्तात्सामिधेनीनामितिवत् । उपसत्सु त्वशक्यत्वान्निवर्तते संमार्गः स्तीर्णपक्षे । केचित्तु प्रत्यवेक्षणं कृत्वेति प्रत्यवेक्षणस्यापि स्तम्बयजुरङ्गत्वाभिप्रायेण । येन तृणेन स्फ्यसंमार्गस्तदुत्करे क्षिप्यतेऽन्यच्चैवंविधम् । यद्वै यज्ञस्य कर्मण इति लिङ्गादिति । यज्ञसंबन्धिद्रव्यस्य कृतप्रयोजनस्य सामान्येनोत्करे प्रक्षेपरूपप्रतिपत्तेः सिद्धवदनुवादात् ॥ ३ ॥

सू०दी०—स्तम्बयजुरित्यनन्तरस्य कर्मणो नाम । तस्य पुरस्तादुपरिष्टाद्वा संमार्ष्टि ॥ ३ ॥

पूर्वार्धाद्वेदेर्वितृतीयदेशात्स्तम्बयजुर्हरति ॥ ४ ॥

भा०वृ०—पूर्वमर्धं पूर्वार्धं पूर्वार्धाद्वेदेः स्तम्बयजुस्तत्रापीषद्विगततृतीयदेशो वितृतीयदेशः । तस्माद्देशात्स्तम्बयजुरिति तृणस्य च्छिन्नस्य पांसूनां च व्यस्तसमस्तानां च नामधेयम् । तस्मादुपसत्स्वपि स्तम्बयजुःशब्दो मुख्यः ॥ ४ ॥

सू०दी०—वेदेः पूर्वार्धात्तत्रापि विगतवेदितृतीयदेशात् । किमुक्तं भवति पूर्वं वेदितृतीयं हित्वा मध्यमस्य वेदितृतीयस्य पूर्वार्धादिति यावत् । स्तम्बयजुरिति सतृणाः पांसवोऽभिधीयन्ते तद्योगात्कर्म च क्वचित् ॥ ४ ॥

पृथिव्यै वर्मासीति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिन्स्फ्येन प्रहृत्यापहतोऽररुः पृथिव्या इति स्फ्येन सतृणान्पांसूनपादाय व्रजं गच्छ गोस्थानमिति हरति । वर्षतु

ते द्यौरिति वेदिं प्रत्यवेक्षते यजमानं वा ॥ ५ ॥

भा०वृ०—प्रत्यवेक्षणं तस्मिन्नेव देशे वेदेः । उपसत्सु स्तीर्णपक्षे यजमानमेव प्रत्यवेक्षते ॥ ५ ॥

सू०दी०—गतौ ॥ ५ ॥

बधान देव सवितरित्युत्तरतः पुरस्ताद्वितृतीयदेश उदग्द्विपदेऽपरिमिते वा वेदेर्निवपति ॥ ६ ॥

भा०वृ०—बधान देव सवितरित्युत्तरतो निवपति । कस्योत्तरतः पुरस्ताद्वितृतीयदेशो यो वेदेस्तत्समीप उत्तरतः । समीपसप्तमीयम् । उत्तरतो वितृतीयदेशस्य समीपे कियत्यध्वनि निवपति द्विपदेऽपरिमिते वा । उदगिति कर्तुर्मुखवादः । पुनर्वचनादुदङ्मुखो निवपत्युत्तरत इति सिद्ध उदगिति पुनर्वचनादुदङ्मुखो निवपतीत्यर्थः ॥ ६ ॥

सू०दी०—वेदेरुत्तरतो निवपति । कस्माद्वेदिप्रदेशादुत्तरतः कियति वाऽध्वन्युत्तरतः । पुरस्ताद्वितृतीयदेश उदग्द्विपदेऽपरिमिते वा । एतदुक्तं भवति पूर्वं वेदितृतीयं हित्वाऽनन्तरदेशादुदग्द्विपदे ततोऽधिके वा देशेऽतीते निवपतीति । वक्ष्यति च महावेद्यां चात्वालाद्द्वादशसु प्रक्रमेषु प्रत्यगुत्करस्तावत्येवाध्वन्युदग्यथा चात्वाल इति॥६॥

स उत्करः ॥ ७ ॥

भा०वृ०—तं न्युप्तं [देशम्] उत्करमिति संज्ञां वदन्ति कल्पकाराः॥७॥

सू०दी०—यत्र न्युप्तं स्तम्बयजुः स देश उत्कर इत्यर्थः । तथा चान्यत्रानुवदिष्यत्युत्करे निवपति समान उत्कर इति । उक्तं च प्रागुत्करं परापुनातीत्यादि ॥ ७ ॥

अररुस्ते दिवं मा स्कानिति न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति ॥ ८ ॥

भा०वृ०—अररुस्त इत्येकवचनात्सतृणपांसुयुक्तस्य देशस्याभिग्रहणमुत्करमभिगृह्णमाणमिति दर्शनाद्यजमानेऽभिग्रहणमुपर्यञ्जलिनाऽचाल्यमानस्य ग्रहणं दिवः पर्यबाधन्त इति दर्शनात् ॥ ८ ॥

सू० दी०—उत्करे न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णातीत्यर्थः। याजमाने तूत्करमभिगृह्यमाणमिति तात्स्थ्याभिप्रायं वेदितव्यम् ॥ ८ ॥

एवं द्वितीयं तृतीयं च हरति ॥ ९ ॥

भा० वृ०—स्पष्टम् ॥ ९ ॥

सू० दी०—एवं त्रयो हरणपर्याया भवन्ति ॥ ९ ॥

तूष्णीं चतुर्थꣳ हरन्त्सर्वं दर्भशेषं हरति ॥ १० ॥

भा० वृ०—स्पष्टम् ॥ १० ॥

सू० दी०—गतः ॥ १० ॥

इति प्रथमा कण्डिका।

---

अपाररुम देवयजनं पृथिव्या इति द्वितीये प्रहरणोऽररुर्द्यां मा पप्तदिति तृतीये। अपहतोऽररुः पृथिव्यै देवयजन्या इति द्वितीयेऽपादानोऽपहतोऽररुः पृथिव्या अदेवयजन इति तृतीये ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—प्रह्रियते येन मन्त्रः प्रहरणः। तथाऽपादानः ॥ १ ॥

अवबाढꣳ रक्ष इति द्वितीये निवपन आग्नीध्रोऽभिगृह्णात्यवबाढोऽघशꣳस इति तृतीयेऽवबाढा यातुधाना इति चतुर्थे ॥ २ ॥

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—द्वितीये निवपने न्युप्तमभिगृह्णातीत्यर्थः । आग्नीध्रग्रहणमव्यामोहार्थम् ॥ २ ॥

द्रप्सस्ते द्यां मा स्कानिति खनिं प्रत्यवेक्ष्य स्फ्येन वेदिं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रा इति पश्चादादित्या इत्युत्तरतः ॥ ३ ॥

भा०वृ०—एकस्मिन्नेव रुद्रेऽपामुपस्पर्शनमितिन्याय इति । रौद्रराक्षसेत्यत्र मीमांसकमत्याऽऽग्नेयमिति वेदकदेवतासंबन्धिकत्वावगमाद्रुद्रास्त्वा परिगृह्णन्त्विति बहुरुद्रसंबन्धे नापामुपस्पर्शनमिति । बहुरुद्रेऽप्युपदेश इति मारुतवैश्वदेववद् बहुरुद्रसंबन्धस्याप्युपपत्तेः । नन्वेकस्य बहूनां वा संबन्धनियमेन वक्तुमर्हति रौद्रशब्दो नानियमेन वैषम्यात् । सत्यम् । एकेन रौद्रशब्देनैक एव संबन्धोऽभिधातव्योऽत्र तु नैकं रौद्रमुपादीयते । सर्वाणि रौद्राण्युपादीयन्ते तत्प्रीत्यर्थं शब्दप्रयोगेऽसमानार्थानामपि सरूपाणामेकशेष इति बहवो रौद्रशब्दाः । अथवा निमित्तगतसंख्याया अविवक्षा हविः क्षायतीतिवत् ॥ ३ ॥

सू०दी०—यतः पांसव उपात्ताः स प्रदेशः खनिः परिगृह्णाति परितः स्वीकारचिह्नं रेखादि करोति । रुद्रास्त्वेत्यत्र नापामुपस्पर्शनं रुद्रानुपकाराद्रुद्रगणत्वाच्च । तद्धि क्रूरैकरुद्रार्थकर्मविषयमिति ब्राह्मणप्रसिद्धिः ॥ ३ ॥

अपाररुम देवयजनं पृथिव्या अदेवयजनो जहीति स्फ्येनोत्तमां त्वचमुद्धन्ति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—उत्तमां त्वचं वेदिभूमेरुपरितनीं मृदम् ॥ ४ ॥

समुद्धतस्याऽऽग्नीध्र उत्करे त्रिर्निवपति ॥ ५ ॥

भा०वृ०—अध्वर्युणा वेदेरुपरितनीं भूमित्वचमुद्धतामाग्नीध्र उत्करे निवपति ॥ ५ ॥

सू०दी०—समुद्धतस्य समुद्धतम् ॥ ५ ॥

**इमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे । इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्त्विति संप्रेष्यति ॥ ६ ॥**

भा०वृ०—इमां नरा इति संप्रैषार्थे परकर्तृत्वावगतेरेकस्मिन्नप्याग्नीध्रे बहुवचनं तु पूर्ववत् स्वयमात्मानमनुजानीयादिति लिङ्गस्त्स्वयं वा प्राप्तकाले लोडभिप्रायेण प्रैषार्थत्वाभावादथवाऽऽत्मसंस्कारो विलिङ्गेनेति प्रैषार्थेऽपि प्रेषलिङ्गाविवक्षयाऽध्वर्युसंस्कारो मन्त्रोच्चारणेनेति ॥ ६ ॥

सू०दी०—संप्रेष्यतीति परिस्तरणसंप्रैषेण व्याख्यातम् । अथवा परिकर्मिणश्च वेदिं कुर्वन्ति सौमिकेऽस्मिन्संप्रैषे तथा दर्शनात् ॥ ६ ॥

**देवस्य सवितुः सव इति खनति द्व्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां यावत्पार्ष्ण्याः शुक्लं तावतीं पृथमात्रीं रथवर्त्ममात्रीं सीतामात्रीं प्रादेशमात्रीं वा पुरीषवतीम् ॥ ७ ॥**

भा०वृ०-खननमाग्नीध्रकर्म पार्ष्णी पादस्यापरो भागः पृथो हस्ततलम् । सीता कर्षो रथः स्पष्टः प्रादेशो द्वादशाङ्गुलः, खनतीति पूर्वेणान्वयः ॥ ७ ॥

सू०दी०—पार्ष्णिः पादस्य पश्चिमभागस्तस्य यावाञ्छुक्लो देशस्तावत्खनति । पृथमात्रं त्रयोदशाङ्गुलमिति बौधायनः । रथवर्त्म रथचक्रवर्त्म सीता फालकृष्टा रेखा । पुरीषवतीं पुरीषं पांसुः, तद्वती यथा भवति तथा खनति ॥ ७ ॥

**नैता मात्रा अतिखनति ॥ ८ ॥**

भा०वृ०—अतिखननप्रतिषेधाद्यत्र द्व्यङ्गुलादयो न पूर्यन्ते तत्र दोष इति केचित् । द्व्यङ्गुलादिविधानादेव नियमे सिद्धेऽतीत्यैतानि

खनतीतिवचनादर्वागन्यदपि परिमाणं लभ्यत इत्यपरे । प्रादेशमात्राधिकं न खनतीत्यर्वाग् द्व्यङ्गुलादिपरिमाणनियमो नास्तीति केचित् ॥ ८ ॥

सू०दी०—उक्तासु मात्रासु या या मात्राऽङ्गीकृता तां तामतीत्य न खनति । न्यूनत्वे तु नातीव दोष इति भावः ॥ ८ ॥

**दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा ॥ ९ ॥**

भा०वृ०—दक्षिणतो वर्षीयसीं पुरीषेणोच्छ्रिताम् ॥ ९ ॥

सू०दी०—पुरीषभूम्ना यथा दक्षिणत उन्नता तद्भ्रासाच्च प्राक्प्रवणा स्यात्तथा करोतीत्यर्थः । तथा च श्रुतिः–यथा वै दक्षिणः पाणिरेवं देवयजनमिति ॥ ९ ॥

इति द्वितीया कण्डिका ।

---

**प्राञ्चौ वेद्यंसावुन्नयति प्रतीची श्रोणी ॥ १ ॥**

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—प्राञ्चावुन्नयत्यभित आहवनीयमुन्नयत्युदूहति । श्रोणी च प्रतीच्यावभितो गार्हपत्यम् ॥ १ ॥

**पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवति ॥ २ ॥**

भा०वृ०—अंहीयसा तन्वी ॥ २ ॥

सू०दी०—अंहीयसी तनीयसी संनमनं शुल्बे व्याख्यास्यते ॥ २ ॥

**यन्मूलमतिशेते स्फ्येन तच्छिनत्ति न नखेन ॥ ३ ॥**

भा०वृ०—नखप्रतिषेधाद्दास्यादि सहकारि स्फ्यस्य स्यादिति स्फ्येन च्छिनत्तीति विधानादन्यस्याप्राप्तावपि नखप्रतिषेधाद्दास्यादेरपि सहकारित्वेन प्राप्तिः । अत्र नखप्रतिषेधादन्यत्र विधृत्यादौ नखप्राप्तिर्न दोषः ॥ ३ ॥

सू०दी०—यत्तत्रौषध्यादेश्छिन्नस्य मूलमतिशेतेऽतितिष्ठति पुरीषं तत्स्फ्येन च्छिनत्ति न नखेन सहकारिणा ॥ ३ ॥

यत्पुरीषमतिशेत उत्करे तन्निवपति ॥ ४ ॥

भा०वृ०—यत्पुरीषमतिशेते पुरीषबाहुल्य एकदेशस्योत्करे निक्षपनम् ॥ ४ ॥

सू०दी०—अतिशेतेऽतिरिच्यते ॥ ४ ॥

आहार्यपुरीषां पशुकामस्य कुर्यात् ॥ ५ ॥

भा०वृ०—आहार्यपुरीषामन्यतः पुरीषमाहृत्य यस्या वेदेः करणं साऽऽहार्यपुरीषा यस्या भूमेराहरति तां खनति मन्त्रेण स्फ्यादानादीनां न्यासः कृणुतेत्यन्तं वेदिदेशे कृत्वा पुरीषाहरणस्य स्थाने देवस्य सवितुरिति खनति ततः पुरीषमाहृत्य वेद्यां च द्व्यङ्गुलादिपरिमाणं न्युप्य दक्षिणतो वर्षीयसीं प्राक्प्रवणामित्येवं करोति ॥ ५ ॥

सू०दी०—आहार्यं पुरीषं देशान्तराद्यस्याः सा तथोक्ता । तत्र प्रकारमाह ॥ ५ ॥

यत्प्राक्खननात्तत्कृत्वा यदाहरेत्तन्मन्त्रेण खनेत् ॥ ६ ॥

भा०वृ०—पूर्वसूत्रे व्याख्यातोऽस्य सूत्रस्यार्थः ॥ ६ ॥

सू०दी०—प्राक् खननाद्यदाहरेत्पुरीषं तत्खननमन्त्रेण खनेत् । तदा तु द्व्यङ्गुलादिनियमो वेद्यां पुरीषे भवति ॥ ६ ॥

ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णात्यृतमसीति दक्षिणत ऋतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतः ॥ ७ ॥

भा०वृ०—स्पष्टार्थः ॥ ७ ॥

सू०दी०—गतः ॥ ७ ॥

विपरीतौ परिग्राहावेके समामनन्ति ॥ ८ ॥

भा०वृ०—यत्राविहृतेऽग्नौ वेदिस्तत्र विपरीतौ परिग्राहाविति मन्त्रविपर्यासः । पूर्वम्, ऋतमसीत्यादिः पश्चाद्वसवस्त्वेत्यादयो विप-

रीताः, तेऽग्निना प्राञ्चोऽजयन्निति लिङ्गादिति । अग्निना प्राञ्चोऽजयन् वसुभिर्दक्षिणेत्यादिः । यस्यैवंविदुषो वेदिं परिगृह्णन्तीत्यनेन वस्वादिदेवतासंबन्धपरिग्राहस्याग्निसाहचर्यात्, अग्न्यभाव ऋतमसीत्यादिपरिग्राहः पश्चादौ ॥ ८ ॥

सू०दी०—विपरीतत्वं मन्त्रव्यत्यासात् । तत्र केचिद्वदन्ति तेऽग्निना प्राञ्चोऽजयन्निति लिङ्गाद्यत्राविहृत आहवनीये वेदिस्तत्र विपरीतावेव परिग्राहावन्यत्रानियम इति । तत्तु न मृष्यते प्रकृतौ तुल्यार्थयोर्धर्मयोः प्रकृतिवद्विकृतावपि तुल्यवत्प्राप्तेरनिवारणात् । अर्थवादे च प्राग्भागपरिग्रहार्थायाः प्रागग्निना परिग्रहस्तुतेरुभावपि परिग्राहौ प्रत्यविशेषाद्विशेषे चोत्तरपरिग्राहे प्राग्भागपरिग्रहप्रसङ्गाच्च । तस्मात्तुल्यवद्विकल्पः सर्वत्र ॥ ८ ॥

**धा असि स्वधा असीति प्रतीचीं वेदिं स्फ्येन योयुप्यते ॥ ९ ॥**

भा०वृ०—प्रतीचीं प्रत्यगपवर्गां योयुप्यते घट्टयति घट्टनं प्रत्यगपवर्गम् ॥ ९ ॥

सू०दी०—प्रतीचीं प्रत्यगपवर्गां योयुप्यते निम्नोन्नतसमीकरणार्थं घट्टयति ॥ ९ ॥

**उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते ॥ १० ॥**

भा०वृ०—अनुवीक्षते पुरस्तादारभ्य पश्चात्समाप्यते घट्टनवत् ॥ १० ॥
सू०दी०—गतः ॥ १० ॥

**पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीꣳ संनह्याऽऽज्येनोदेहीति ॥ ११ ॥**

भा० वृ०—एकवचनेन द्विभार्यबहुभार्ययोरपि पत्नीं संनह्येत्यनेकपत्नीकप्रयोगस्यापि प्रकृतित्वादूहासंभवान्न चैकपत्नीक एव मन्त्रव्यवस्था । यथा—अग्निं गृह्णामीत्यसद्यस्कालायाम् । प्रैषकाले पत्नीनामसंनिहितत्वादसमवेतत्वेन पत्नीसंस्कारत्वाभावात् । न

च पाशमन्त्रवत्प्रकृत्यर्थसंभवेन प्रत्ययाविवक्षा । आग्नीध्रसंस्कारत्वात्प्रैषस्याऽऽत्मसंस्कारो वाऽध्वर्योः स्वयमात्मानमनुजानीयादितिवत् । अत एवानेकपत्नीकप्रयोगेऽप्यन्यतरसंस्कारार्थतयैकवचनान्तस्य प्रयोगः । न पत्नीसंस्कारः । वर्तमानोऽप्यवर्तमानस्याप्यमुष्या अर्थे प्रयुक्त इत्यग्रहणाज्जात्यभिधानम् । एकवचनान्ततया वर्तमानस्यापि अमुष्या अर्थे प्रयुक्त इति विशेषाग्रहणम् । तस्मात्पत्नीजात्यनुवादादेकवचनान्त एव सर्वत्र प्रैषः क्रमेण संनहनमनेकपत्नीके युक्तमित्यावृत्तिः । संनिहितपत्नीसंस्कारत्वात्पत्नीमन्त्रनिरूपणप्रसङ्गादन्यदप्युच्यते देवपत्न्युपस्थानस्य चेन्द्राणीवेत्यस्य चाऽऽवृत्तिः । संपत्नीयं तु नैवम् । होमाङ्गत्वान्मा भूदावृत्तिर्गुणवशेन प्रधानावृत्तेरन्याय्यत्वात् । यद्यपि संपत्नी पत्येति मन्त्रे पत्न्याः फलाशंसनं विवक्षितं तथाऽपि संपत्नीयं जुहोतीत्येकस्य होमस्यादृष्टार्थत्वेनोपदेशात्तत्साधनत्वान्मन्त्रस्यानेकपत्नीकेऽपि नाऽऽवृत्तिस्तद्वशेन प्रधानभूतहोमावृत्तेरन्याय्यत्वात्ततो जात्यभिधानं मा भूदार्षबाधः प्रकृतावपि ऊहस्य चाभावः प्रकृतित्वात् ॥ ११ ॥

सू० दी०—पश्चार्धे वेदेरित्यादिः पूर्वार्धाद्वेदेरित्यादिना व्याख्यातः । पाश्चात्यं वेदितृतीयं हित्वा मध्यमस्य वेदितृतीयस्यापरार्ध इत्युक्तं भवति । संप्रैषस्य परार्थत्वादाग्नीध्र एतानि कर्माणि कुर्यात् । अध्वर्युरेव वा करोति संप्रैषे परानुपादानात् । आग्नीध्रोऽश्मानमाग्नीध्रो हवींषीत्यादिवच्च विशेषावचनात् । स्वयमात्मानमनुजानीयादिति न्यायेनाऽऽत्मन्यपि संप्रैषोपपत्तेश्च । न चैवं प्रैषानर्थक्यं कर्तृसंस्कारार्थत्वादित्याहानुपूर्वताया इति श्रुतेश्च । तदुक्तं कात्यायनेन यथाप्रेषितमन्यः करोति पराधिकारात्स्वयं वाऽविरोधादिति । भारद्वाजश्च—आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्युरित्यपरमिति । पत्नीद्वित्वबहुत्वयोरपि पत्नीं संनह्येत्यविकारः प्रकृतावूहप्रतिषेधात् । न च संप्रैषस्य निवृत्तिः पत्नीप्रातिपदिकार्थसमवाये तद्गुणसंख्याविरोधमात्रेण मन्त्रबाधस्यायुक्तत्वात् । जातिसंख्याविवक्षयाऽपि कथंचिदेकवचनोपपत्तेश्च । एवं च प्रकृतिसिद्धस्यैवास्य विकृतावप्यनूहः ॥ ११ ॥

अपि वा न संप्रैषं ब्रूयात् ॥ १२ ॥

भा० वृ०—असंप्रेषपक्षेऽध्वर्युरेव करोति परप्रैषाभावात् ॥ १२ ॥

सू० दी०—तदा तु परानधिकारादाध्वर्यवाण्येव कर्माणि ॥ १२ ॥

प्रोक्षणीरभिपूर्योदञ्चं स्फ्यमपोह्य दक्षिणेन स्फ्यमसंसृष्टा उपनिनीय स्फ्यस्य वर्त्मन्त्सादयत्यृतसधस्थेति द्वेष्यं मनसा ध्यायन् ॥ १३ ॥

भा० वृ०—अभिपूरणसादने इध्मादिप्रोक्षणार्थे । तस्मान्नावभृथेऽवेदिपक्षे । वेदिपक्षे तु बर्हिर्वेदिप्रोक्षणार्थे कर्तव्ये तन्मध्ये पतितान्युदसनादीन्याग्नीध्रस्तदङ्गत्वात् प्रेषितकर्मगणमध्यपतितान्युदसनसंमार्गप्रहरणादीनि प्रेषितकर्माङ्गभूतान्याग्नीध्र एव करोति यजमानद्वेष्यस्य ध्यानम् । ऋतसधस्थेत्याध्वर्यवेऽपि कर्मणि स्फ्यमुदस्यन्नित्यारभ्य शुचैवैनमर्पयतीति फलशंसनात्सर्वफलानां यजमानार्थत्वात् । न चाभिचारार्थमुदसनस्य नित्यत्वान्नाभिचारकामना नित्यफलसिद्धेर्द्वेष्यस्य ध्यानमङ्गम् ॥ १३ ॥

सू० दी०—स्फ्यमुदञ्चं कर्षन्नपोहति स्फ्यस्य वर्त्मन्निति वचनात् । असंसृष्टाः स्फ्येन । द्वेष्यं यजमानशत्रुम् । पाप्माऽपि शत्रुर्हिंसकत्वात् पाप्मानमेवास्य भ्रातृव्यं हन्तीति लिङ्गाच्च । मनसा ध्यायन्निति व्याख्यातं प्राक् ॥ १३ ॥

शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन् ॥ १४ ॥

भा० वृ०—पुरस्तादुत्करस्य प्रत्यञ्चं प्रत्यगग्रमुदस्यति परित्यजति सर्वत्र तु पाप्मा द्वेष्यः । व्याहृत्तिं पाप्मना भ्रातृव्येणेति सामानाधिकरण्येन नित्यसिद्धस्यापि पाप्मनो द्वेष्यत्वान्मन्त्रस्य च नित्यप्रयोगार्थं स एव ध्येय इत्युपदेश इति स्वमते तु शुचैवैनमर्पयतीति लिङ्गाद्द्वेष्यस्य मनुष्यस्यापि ध्यानमिति तत्पक्षे ध्यानानियमः ॥ १४ ॥

सू० दी०—स्फ्यं पुरस्ताद्भागे प्रत्यगग्रमुदस्यति ॥ १४ ॥

नानवनिज्य हस्तौ पात्राणि पराहन्ति ॥ १५ ॥

भा० वृ०—अभिमर्शनं पराहननं तत्पात्राणामन्येषां न करोति स्फ्यस्योदसने कृते पाणिप्रक्षालनात्पूर्वं पात्राणामभिमन्त्रणं न कुर्यात् ॥ १५ ॥

सू० दी० —अभिमृशति ॥ १५ ॥

हस्ताववनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृशन् ॥ १६ ॥

भा० वृ०—प्रक्षाल्य तु पाणी स्फ्यप्रक्षालनस्य विधिरित्यग्रमप्रतिमृशन्निति विधिः ॥ १६ ॥

सू० दी०—स्फ्यप्रक्षालनमप्यवनिक्तहस्तेनैवेत्यत्रासंदेहार्थं पुनर्हस्तावनेजनवचनम् ॥ १६ ॥

उत्तरेणाऽऽहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति दक्षिणमिध्ममुत्तरं बर्हिः ॥ १७ ॥

भा० वृ०—स्पष्टार्थः ॥ १७ ॥

सू० दी०—गतः ॥ १७ ॥

इति तृतीया कण्डिका ।

---

इति प्रथमः पटलः ।

---

पत्नीसंनहनमेके पूर्वं समामनन्ति स्रुक्संमार्जनमेके ॥ १ ॥

भा०वृ०—पत्नीसंनहनं कृत्वा स्रुक्संमार्गोऽग्रप्रहरणान्तस्ततः पत्न्या गार्हपत्योपस्थानादीनि । संनहनमात्रं प्रतिकृष्यते । पत्नीसंनहनमात्रं प्रतिकृष्यते प्रतिकृष्यते । पत्नीसंनहनमेके पूर्वमित्यतः प्रायणीयादिष्वप्युपस्थानादि क्रियते संनहनाङ्गत्वात् ॥ १ ॥

सू०दी०—यदा पत्नीसंनहनं पूर्वं तदा संप्रैषनिवृत्तिः । क्रमविरोधादित्याहानुपूर्वताया इति लिङ्गविरोधात् तूष्णीं यवमयमिति लिङ्गाच ॥ १ ॥

घृताचीरेताग्निर्वो ह्वयति देवयज्याया इति स्रुच आदाय प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यानिशिताः स्थ सपत्नक्षयणीरित्यभिमन्त्र्य वेदाग्राणि प्रतिविभज्याप्रतिविभज्य वा तैः संमार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाणः ॥ २ ॥

आ०वृ०—सह स्रुवेण प्राशित्रहरणेन च स्रुचां सर्वसंस्काराः स्रुचः संमार्ष्टीति विधाय स्रुवमग्र इति क्रमविधानात् । स्रुच आदायेत्यादिषु स्रुक्शब्द उपलक्षणार्थः । एतावसदतामिति लिङ्गाच्च स्रुवतुल्यतया संमार्गोपदेशात्प्राशित्रहरणस्यापि सर्वे संस्काराः । यत्र तु प्राशित्रहरणस्यैव संमार्गस्तत्र घृताचीरित्यस्य निवृत्तिः, घृताक्तत्वाभावात्तूष्णीमादानं प्राचीरुदीचीरित्यग्रनियमः स्रुचाम् ॥ २ ॥

सू०दी०—स्रुवप्राशित्रहरणयोरपि सह स्रुग्भिरादानं प्रतितपनं च तयोरपि संमार्गवचनात् । प्राचीरुदीचीर्वेत्यग्रविकल्प उपभृतोऽन्यासां तस्या उपभृतमुदीचीमिति नियमात् ॥ २ ॥

उपभृतमेवोदीचीमित्येके ॥ ३ ॥

आ०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—उपभृतमेवोदीचीं प्राचीरन्या इत्येके व्यवस्थामाहुरित्यर्थः ॥ ३ ॥

गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तरतोऽभ्याकारं सर्वतो बिलमभिसमाहारम् । मूलैर्दण्डम् ॥ ४ ॥

आ०वृ०—वेदाग्रैरभ्याकारं पुनः पुनः संमार्ष्टि सर्वतः सर्वासु दिक्षु बिलमभिसमाहारं बिलापवर्गं संमृशति । मूलैर्वेदाग्रमूलैर्दण्डमुपरिष्टात्प्रागपवर्गमधस्तात्प्रत्यगपवर्गं तस्मादरत्नाविति लिङ्गादिति

दण्डसंमार्गे भाष्यपाठक्रमोऽनादरणीयः प्रागपवर्गाण्युदगपवर्गाणि वेति परिभाषासिद्धेररत्निलोमतुल्यतयाऽधस्तात्प्रतीचीमित्यादिनियमपरत्वाद्भाष्यस्यातोऽधस्तात्पूर्वं संमार्गः प्राचीरुदीचीरिति प्राक्त्वोदक्त्वस्य सिद्धत्वात् ॥ ४ ॥

सू०दी०—अग्रैर्वेदाग्रैः। अन्तरतो बिलोदरम्। अभ्याकारमित्याभीक्ष्ण्ये णमुल्। अभ्याकारं संमार्ष्टि पुनः पुनः संमार्ष्टीत्यर्थः। सर्वतो बिलमभिसमाहारं सर्वेभ्यः पार्श्वेभ्यो बिलं प्रति समाहृत्य समाहृत्य संमार्ष्टि। मूलैर्वेदाग्रमूलैर्दण्डमुपरिष्टात्प्राचीनमधस्तात्प्रतीचीनं च संमार्ष्टि तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तादिति लिङ्गात् ॥ ४ ॥

**वाचं प्राणमिति जुहूमग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीं सर्वतो बिलमभिसमाहारं मूलैर्दण्डम् ॥ ५ ॥**

भा०वृ०—प्राचीं मध्यैरिति क्रियापवर्गवादः। उदगग्रासु पूर्वपार्श्वे समाप्तिः प्रागग्रास्वग्रे समाप्तिर्बाह्यतः प्रतीचीं मध्यैरेव पात्रस्याधोभागे ॥ ५ ॥

सू०दी०—प्राचीं प्रतीचीमिति क्रियापवर्गवादः। वेदाग्रमध्यैर्बिलादारभ्याग्रात्प्रागपवर्गमुपरिभागं संमृज्य तावन्तं बाह्यभागं प्रत्यगपवर्गं संमार्ष्टि। पूर्ववन्मूलैर्दण्डम् ॥ ५ ॥

**चक्षुः श्रोत्रमित्युपभृतमुदीचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीं मूलैर्दण्डम् ॥ ६ ॥**

भा०वृ०—उदीचीमुदगग्राम्। उदक्त्वनियमार्थं वचनम्। प्रतीचीं मध्यैर्बाह्यतः प्राचीं बिलस्य सव्यं पार्श्वमुपरिभागे प्राक् संमार्ष्टि ॥ ६ ॥

**प्रजां योनिमिति यथा स्रुवमेवं ध्रुवाम् ॥ ७ ॥**

भा० वृ०—गतार्थः ॥ ७ ॥

सू० दी०—गतः ॥ ७ ॥

रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसा-
हꣳ संमार्ज्मीति प्राशित्रहरणं तूष्णीं वा ॥ ८ ॥

भा० वृ०—स्रुववदुपदेशः प्राशित्रहरणस्येति तस्य मुख्यत्वात्तद्धर्मकत्वम् ॥ ८ ॥

सू० दी०—अनियमोऽस्य संमार्गप्रकारे। यथा स्रुवमिति केचिदनुवर्तयन्ति ॥ ८ ॥

न संमृष्टान्यसंमृष्टैः संꣳस्पर्शयति ॥ ९ ॥

भा०वृ०—न संमृष्टान्यसंमृष्टैः सार्वकालमित्या प्रयोगसमाप्तेः संमृष्टस्यासंमृष्टपात्रस्पर्शने पुनर्निष्टप्य संमृज्यात्स्वेन मन्त्रेणेति भारद्वाजः। संमार्गो येन केनचिद्दर्भेण। अस्माकं तु सर्वप्रायश्चित्तं सूत्रकारेण निबन्धनात् ॥ ९ ॥

सू०दी०—संमृज्यमानपात्रेषु न संमृष्टासंमृष्टयोः संसर्गः कार्यः। तत्र यदि स्पर्शयेत्पुनरेव निष्टप्य संमृजेदिति भारद्वाजः ॥ ९ ॥

अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीति पुनः प्रतितप्य
प्रोक्ष्याग्रेणोत्करं दर्भेषु सादयति जघनेन वा ॥ १० ॥

भा०वृ०—गतार्थः ॥ १० ॥

सू०दी०—उत्करं जघनेनापरेणेत्यर्थः ॥ १० ॥

स्रुक्संमार्जनान्याज्यैः संꣳस्पर्श्य ॥ ११ ॥

भा०वृ०—गतार्थः ॥ ११ ॥

सू०दी०—स्पष्टार्थः ॥ ११ ॥

इति चतुर्थी कण्डिका।

---

दिवः शिल्पमवततं पृथिव्याः ककुभि श्रितं तेन
वयꣳ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यग्नौ
प्रहरति यस्मिन्प्रतितपत्युत्करे वा न्यस्यति ॥ १ ॥

भा० वृ०--अग्नावेव प्रहरेदिति प्रकृतौ प्रहरणमेव विकृतौ प्रहरणमुत्करे त्यागो वा त्यागे न स्वाहाकारः, यस्मिन्नग्नौ प्रतितपति तस्मिन्नेव प्रहरति ॥ १ ॥

सू०दी०-यस्यैतान्यन्यत्राग्नेर्दधतीत्यन्यनिन्दाऽग्निस्तुत्यर्थेति भावः॥ १॥

**आशासाना सौमनसमित्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां पत्नीं संनह्यति तिष्ठन्तीं वा ॥ २ ॥**

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—ऊर्ध्वे जानुनी यस्याः सोर्ध्वज्ञुः ॥ २ ॥

**वाचयतीत्येके ॥ ३ ॥**

भा० वृ०-स्पष्टम् ॥ ३ ॥

सू० दी०-पत्नीं वाचयति वा मन्त्रलिङ्गानुगुण्यार्थमिति भावः॥ ३॥

**मौञ्जेन दाम्नाऽन्यतरतःपाशेन योक्त्रेण वाऽभ्यन्तरं वाससः ॥ ४ ॥**

भा० वृ०—योक्त्रेणेति बलीवर्दनियोजनार्थेन शम्यायां प्रतिमुक्तेन रज्जुविशेषेणेत्यर्थः। अभ्यन्तरमपि वाससो न बहिः ॥ ४ ॥

सू० दी०—संनह्यतीत्यन्वयः। योक्त्रमनोवाहबन्धनी रज्जुः। वाससोऽभ्यन्तरं वस्त्राव्यवहिते शरीरे ॥ ४ ॥

**न वासोऽभिसंनह्यति। अभिसंनह्यतीत्येके ॥ ५ ॥**

भा० वृ०—यथा न बध्नाति वास इति न वासोऽभिसंनह्यतीति विकल्पविधानार्थोऽनुवादः ॥ ५ ॥

सू० दी०—न वासोऽभिसंनह्यतीत्यस्य पूर्वेण सिद्धस्याभिसंनह्यतीत्यनेन विकल्पार्थोऽनुवादः ॥ ५ ॥

**उत्तरेण नाभिं निष्टक्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थायाग्ने गृहपत उप मा ह्वयस्वेति गार्हपत्यमुपतिष्ठते ॥ ६ ॥**

भा० वृ०—उत्तरेण नाभिमित्यादि पत्न्याः । पत्नीं संनह्यति संनहनस्याऽऽग्नीध्रकर्मत्वात्। त्तरेण नाभिमित्यादेरुपस्थानेन समानकर्तृकत्वाच्च पत्नीकर्तृकत्वम्। ग्रन्थिकरणादीनां तु संनहनाङ्गत्वम्। भिन्नकर्तृकत्वेऽपि ग्रन्थिं ग्रथ्नाति। आशिष एवास्यां परिगृह्णातीत्यादि वाक्यशेषात्संनहनमन्त्रप्राप्ताशीःसंरक्षणार्थत्वात्। भाष्यकारेण च पत्नीसंनहनमेके पूर्वमित्यस्मिन्पक्षे कृत्वा संनहनं स्रुक्संमार्गोऽग्रप्रहरणान्तस्ततः पत्न्या गार्हपत्योपस्थानादेरुक्तत्वाच्च। प्रदक्षिणं सर्वतः प्रापयति ॥ ६ ॥

सू० दी०—उपोत्थानसमानकर्तृकत्वात्पत्नीकर्माण्येतानि । अध्वर्युस्तु योक्त्रान्ते पाशं प्रतिमुच्य विरमति। निष्टक्र्यः शिखाकृतिर्ग्रन्थिः। तं दक्षिणेन नाभिं नयति प्रदक्षिणं नीत्वाऽवस्थापयति न तु प्रसव्यम् ॥ ६ ॥

**देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसीरिति देवपत्नीरुपतिष्ठते ॥ ७ ॥**

भा० वृ०—अपरेण गार्हपत्यं देवपत्न्यस्तासां स्थानमुपतिष्ठते ॥ ७॥

सू० दी०—अपरेण गार्हपत्यं देवपत्नीनां लोकस्तत्र ता उपतिष्ठते ॥ ७ ॥

**तस्माद्देशादपक्रम्य सुप्रजसस्त्वा वयमिति दक्षिणत उदीच्युपविशति ॥ ८ ॥**

भा० वृ०—तस्माद्दक्षिणतः पत्न्यन्वासस्थानम् । देशाद्दक्षिणत उदीच्यन्वास्त इति विधानात्। यत्पश्चात्प्राच्यन्वासीतेति सिद्धवदनूद्य देवानां पत्निया समदं दधीतेति निर्देशाद्देवपत्नीनां तत्स्थानम्। अतो देवपत्नीनामुपस्थानं तत्रैव स्थित्वा गार्हपत्योपस्थानं च। अतो दर्शपूर्णमासयोरन्वावासस्थानं दक्षिणतस्तद्विकाराणां च। उदीची—उत्तराभिमुखी ॥ ८ ॥

सू० दी०—देशाद्दक्षिणत उदीच्यन्वास्त इति ब्राह्मणव्याचिख्या-

सयोक्तं तस्माद्देशादपक्रम्येति। दक्षिणतः कस्य। तस्यैव देशस्य ततोऽन्यस्यानुपादानात्। उक्तं च हिरण्यकेशिना—दक्षिणतः पश्चाद्गार्हपत्यस्योदीच्युपविशतीति ॥ ८ ॥

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा। अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति जपति ॥ ९ ॥

भा० वृ०—गतार्थः ॥ ९ ॥

सू० दी०—गतः ॥ ९ ॥

युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति ॥ १० ॥

भा० वृ०–युक्ता म इत्यन्वासनार्थः। अतः परास्वपि दीक्षणीयायाः क्रियते ॥ १० ॥

सू० दी०–पत्नीमिति शेषः। संनहनादिः संप्रैषान्तो विधिः पत्नीसंस्कारत्वात्प्रतिपत्न्यावर्तते ॥ १० ॥

बह्वाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते ॥ ११ ॥

भा० वृ०–स्पष्टार्थः ॥ ११ ॥

सू० दी०–गतः ॥ ११ ॥

इति पञ्चमी कण्डिका।

---

पूषा ते बिलं विष्यत्विति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्नावाज्यं विलाप्यादितिरस्यच्छिद्रपत्रेत्याज्यस्थालीमादाय महीनां पयोऽस्योषधीनाꣳरसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्येदं विष्णुर्विचक्रम इति दक्षिणाग्नावधिश्रित्येषे त्वेति दक्षिणार्धे

गार्हपत्यस्याधिश्रित्योर्जे त्वेत्यपादाय वेदेनोपयम्य पत्न्या उपहरति ॥ १ ॥

भा०वृ०—आज्यस्यैव सकलो निर्वापमन्त्रः । न मधूदकयोरिति । आज्यं निरुप्येति वचनात् । दधि मधु घृतमापो धाना इत्यत्र यद्यप्या-ज्यविकारत्वं मधूदकयोस्तथाऽपि न तयोर्मन्त्रः । दक्षिणाग्नावाज्यं विलाप्येति प्रकृतेऽप्याज्ये, आज्यं निरुप्येति पुनर्वचनात् ॥ १ ॥

सू०दी०—सर्पिर्धीयते यस्मिन्भाण्डे तत्सर्पिर्धानम् । बहुभिरत्र कल्प-कारैर्गव्यस्यालाभेऽजामहिष्योराज्यं तदभावे तैलं च प्रतिनिधेय-मुक्तं यथा तदभाव आज्यं माहिषं वा तदभावे तैलमित्यादि । तत्र प्रतिनिधित्वात्तैलस्याप्याज्यवद्धर्मा द्रष्टव्यास्ताच्छब्द्यं च । यथोक्तमाश्वलायनेन—प्राकृतास्त्वेव मन्त्राणां शब्दाः प्रतिनिधि-ष्वपीति ॥ १ ॥

तत्सा निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते महीनां पयोऽसीति ॥ २ ॥

भा०वृ०—प्रतिपत्न्यवेक्षणं तत्संस्कारत्वात्तत्स्थानापन्नत्वात् । अवेक्षे सुप्रजास्त्वायेति मन्त्रलिङ्गात् । पत्न्यवेक्षते मिथुनत्वाय प्रजात्या इति वाक्यशेषाच्च । अवेक्षणं पत्नीसंस्कारः । अतः प्रतिपत्न्यवेक्ष-णम् । अतो व्यापत्तौ पुनराज्यनिर्वापेणावेक्षणम् । आज्यसंस्कारो वा पुरोडाशीयावेक्षणवत्तस्मिन्पक्षे नाऽऽवृत्तिर्मन्त्रस्य संपत्नीय-वत् । निमीलनावेक्षणे मन्त्रात्पूर्वं कृत्वा पश्चादाज्यमसीत्यनुच्छ्वासं मन्त्रान्तेनावेक्षणं पुनः पत्न्यवेक्षणेऽपि तुल्यम् ॥ २ ॥

सू०दी०—तूष्णीं निमील्य वीक्ष्य पश्चान्मन्त्रेणावेक्षते । पत्न्यनेकत्वे चाऽऽवृत्तिर्बौधायनेनोक्ता यथैकैकामाज्यमीक्षयेदिति ॥ २ ॥

तेजोऽसीत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—गतः ॥ ३ ॥

पत्न्यभावे तेजआदि लुप्यते गार्हपत्येऽधि-श्रयणम् ॥ ४ ॥

भा०वृ०—पत्न्यभावे तेजआदि लुप्यत इत्यस्याभिप्रायः। अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येऽधिश्रयति मेध्यत्वायेति निर्देशादाज्यस्य पत्न्यवेक्षणनिमित्तदोषशमनार्थं गार्हपत्येऽधिश्रयणविधानात्। रजस्वलाद्यवस्थासु पत्न्यभावे तेजोऽसीत्यधिश्रयणं तेजसे त्वेत्यपादानं च लुप्यते गार्हपत्येऽधिश्रयणमपादानान्तम् ॥ ४ ॥

सू०दी०—तेज इति मन्त्रस्याऽऽदिर्यस्याधिश्रयणस्य तत्तेजआदि। तद्गार्हपत्येऽधिश्रयणं पत्न्यभावे लुप्यते तदीक्षणाभावात् ॥ तथा च ब्राह्मणम्—अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येऽधिश्रयति मेध्यत्वायेति। अधिश्रयणान्तरं तु भवत्येव पत्न्यभावनिमित्तं च प्रागेव व्याख्यातम्। तत्र पत्नीमन्त्राणां प्रतिषेधमाह बौधायनः—यथा यजमानायतन आसीनो यजमान एवैतान्मन्त्रान्निगदेदिति। तथा नैवैनानाद्रियेतेति च ॥ ४ ॥

तेजसे त्वेत्यपादाय तेजोऽसि तेजोऽनुप्रेहीति हरति। अग्निस्ते तेजो मा विनैदित्याहवनीयेऽधिश्रित्याग्नेर्जिह्वाऽसीति स्फ्यस्य वर्त्मन्सादयति ॥ ५ ॥

भा०वृ०—तेजोऽसि तेजोऽनुप्रेहीत्यादि कर्तव्यमेव ॥ ५ ॥

सू०दी०—गतौ ॥ ५ ॥

आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते ॥ ६ ॥

भा० वृ०—स्पष्टार्थः ॥ ६ ॥

सू० दी०—पत्न्यवेक्षणेन व्याख्यातः ॥ ६ ॥

अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति ॥ ७ ॥

भा० वृ०—स्पष्टार्थः ॥ ७ ॥

इति षष्ठी कण्डिका।

---

सू० दी०—पुनराहारमविच्छेदेन पुनराहृत्याऽऽहृत्य ॥ ७ ॥

इति षष्ठी कण्डिका।

शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयम् ॥ १ ॥

भा० वृ०—स्पष्टार्थः ॥ १ ॥

सू० दी०—गतः ॥ १ ॥

पूर्ववदाज्यलिप्ताभ्यां प्रोक्ष्य
स्रुवेण वेदमुपभृतं कृत्वाऽन्तर्वेद्याज्यानि गृह्णाति ॥ २ ॥

भा० वृ०—अनिष्कासिना—अशेषेण शेषरहितेन पूर्वस्योत्तरोत्तरग्रहणं न पुराणलेपनिषेधः। तस्य संमृष्टत्वात् ॥ २ ॥

सू० दी०—अनिष्कासिना निष्कासः शेषः। वारुण्यै निष्कासेनेति दर्शनात्। स्रुवोद्धृतं निःशेषं गृह्णातीत्यर्थः। वेदमुपभृतं कृत्वा वेदेनोपयम्य स्रुचम् ॥ २ ॥

सम्ं बिलं धारयमाणो जुह्वां मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाम् ॥ ३ ॥

भा० वृ०—आज्यस्थाल्या बिलेन समं जुह्वा बिलम्। तस्या मध्यदेश उपभृद्बिलं भूमौ प्रतिष्ठितायां सवेदायामिति। वेदमुपभृतं कृत्वेति सर्वेष्वविशेषेण चोदितत्वात् ॥ ३ ॥

सू० दी०—समं बिलं जुह्वा बिलमाज्यस्थाल्या बिलेन समम्। मध्यदेश उपभृति तस्या एव मध्यदेश उपभृतो बिलं धारयमाण उपभृति गृह्णातीत्यर्थः। ध्रुवायां तु सह वेदेन प्रतिष्ठितायां गृह्णाति ॥ ३ ॥

चतुर्जुह्वामष्टावुपभृति चतुर्ध्रुवायाम् ॥ ४ ॥

भा०वृ०—गतार्थः ॥ ४ ॥

सू०दी०—गतः ॥ ४ ॥

पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः ॥ ५ ॥

भा०वृ०—पशुकामस्य वा, अकामस्य वेति। अस्यार्थः—पशुकामस्य पञ्च गृहीतमित्येतावता काम्यपक्षे सिद्धे विकल्पनिर्देशात्कामनारहितस्यापि पञ्चगृहीतं लभ्यते चतुरवत्तिनोऽपि यथाप्रकृतीतरयोरित्यस्याभिप्रायः॥ ५॥

सू०दी०—इतरयोर्यथाप्रकृति चतुरष्टकृत्वश्चेत्यर्थः। वाशब्दः पूर्वविधिविकल्पार्थः पक्षव्यावृत्त्यर्थो वा॥ ५॥

दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके॥ ६॥

भा० वृ०—पञ्चगृहीतमितरयोरित्यादि पञ्चावत्तिनां वक्ष्यमाणत्वात्तद्प्यत्रापि युज्यत इति शङ्का मा भूदिति॥ ६॥

सू० दी०—नायं कल्पः काम्येन पूर्वेण विकल्पते किं तु पूर्वतरेण नित्येन। स चायं पञ्चावत्तिविषय इति केचित्। तदयुक्तं द्विः पञ्चावत्तिन इत्यादिवद्विशेषावचनात्, आज्यभागप्रभृत्यवदानाविधिष्वेव तद्वचनाच्च। तस्मादविशेषेण सर्वविषय एवायं कल्पो युक्तः॥ ६॥

भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायाम्॥ ७॥

भा० वृ०—स्पष्टार्थः॥ ७॥

सू०दी०—गतः॥ ७॥

शुक्रं त्वा शुक्रायामिति त्रिभिः पञ्चानां त्वा वातानामिति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रं पञ्चानां त्वा दिशां पञ्चानां त्वा पञ्चजनानां पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामीति चरोस्त्वा पञ्चबिलस्येति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा प्रतिमन्त्रम्॥ ८॥

भा०वृ०—उपभृति द्वौ गणौ प्रयाजानूयाजार्थाविति मीमांसकैरुपपा-

दितम्। अष्टगृहीते गणान्त्ययोर्लोपश्चतुरवत्तिनाम्। प्रतिगणमन्त्यमन्त्रयोर्लोपः। प्रयाजार्थं जुह्वां नाऽऽघारार्थं यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वचनात्प्रयाजप्रयुक्तद्रव्यमाघारस्याप्यतोऽप्रयाज आघारस्यापि लोपः प्रयाजप्रयुक्ताज्येनैन्द्राघारस्य क्रियमाणत्वात्तदभावे तदाघारस्य लोपः। उभयार्थत्वाद्धौपभृतस्यानूयाजाभावेऽन्त्यगणस्यापि लोपः। प्रयाजाभावे पूर्वगणस्य लोपः। यत्र चतुर्गृहीतमनूयाजश्च तत्र गणयोर्द्वौ द्वावादितः प्रथमाद्गणाद्द्वौ मन्त्रावाद्यावुत्तमाद्गणाच्च द्वौ मन्त्रौ। आद्यावेकः प्रयाजगण एकोऽनूयाजगणश्च। चतुः पञ्चकृत्वो वा ग्रहणं प्रयुङ्क्तेऽदर्विहोमत्वाच्चतुर्गृहीतं वषट्कारश्चादर्विहोमानामिति वचनाद्ग्रहणस्य द्रव्यसंस्कारत्वात्तस्मादेकस्य प्रयाजस्यानूयाजस्य वा। द्रव्ये स्कन्न उपदस्ते वा तद्गणेन यथाधिकारं ग्रहणं तूष्णीं वा द्रव्यमुत्पाद्य यागो यागवदन्ते वा व्यापद्येतेति दर्शनात् ॥ ८ ॥

सू० दी०—शुक्रं त्वेत्यादिषु त्रिषु धाम्ने धाम्न इत्यादेरनुषङ्गः। उपभृति प्रयाजानुयाजार्थौ द्वाविमौ पञ्चमन्त्रकौ गणौ तद्द्योतकश्च पञ्चममन्त्रान्त इतिकरणः। तत्र यदाऽष्टगृहीतं तदा गणान्त्ययोः पञ्चमदशमयोर्लोपः। तथा प्रायणीयोदयनीययोः प्रयाजानुयाजानामन्यतराभावे तदर्थस्य गणस्य लोपः ॥ ८ ॥

शेषेण ध्रुवायां पञ्चकृत्वो वा प्रतिमन्त्रम् ॥ ९ ॥

भा० वृ०—स्पष्टम् ॥ ९ ॥

सू० दी०—शेषेणानुवाकशेषेण ॥ ९ ॥

नोत्कर आज्यानि सादयति ॥ १० ॥

भा० वृ०—स्पष्टम् ॥ १० ॥

सू० दी०—गतः ॥ १० ॥

नान्तर्वेदि गृहीतस्य प्रतीचीनं हरन्ति ॥ ११ ॥

भा० वृ०—अन्तर्वेदि गृहीतस्य प्रतीचीनहरणप्रतिषेधाद्ध्रुवात आहवनीये होम एवेति, अस्यार्थः सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवाज्यमिति ध्रौवस्य सर्वयज्ञार्थत्वेऽपि प्रतीचीनहरणप्रतिषेधाद्ध्रु-

वात आहवनीये होमा एवेति गम्यन्ते। आज्यस्थाल्या अपराज्यो-र्बहिर्वेदि गृहीतत्वादिडोपस्तरणादि च ॥ ११ ॥

इति सप्तमी कण्डिका ॥ ७ ॥

इति द्वितीयः पटलः ॥ २ ॥

सू० दी०—अन्तर्वेदि गृहीतं स्रुग्गतमाज्यं न पश्चाद्धरन्ति। कः प्रसङ्गः। पत्नीसंयाजेषु ध्रौवप्रासेरदर्विहोमाणाम्। केचित्त्वत एव प्रतिषेधात्पूर्वाग्निवर्तिनो दर्विहोमानपि ध्रौवादिच्छन्ति। तन्मन्दम्। तस्यादर्विहोममात्रार्थत्वेऽप्येवं प्रतिषेधोपपत्तेः स्रुवेण ध्रुवाया आज्यमादायेत्याघारे यत्नविशेषाच्च। ब्राह्मणमपि प्रजा-पतिर्देवेभ्यो यज्ञान्व्यादिशदिति प्रकृत्य तस्माद्यजन्त्याज्यभागा-वुपस्तृणन्त्यभिघारयन्तीति यज्ञार्थतामेव ध्रौवस्य दर्शयति। श्रुत्यन्तरं चात्रोदाहरन्ति सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवा-यामाज्यमिति। कात्यायनश्चाऽऽह यजतयो ध्रौवादिडाप्राशित्रा-घाराश्चेति। तस्माद्यागा एव ध्रौवात्कार्याः। दर्विहोमास्त्वृते वच-नादाज्यस्थाल्या इत्येव सांप्रतम् ॥ ११ ॥

इति सप्तमी कण्डिका ॥ ७ ॥

इति द्वितीयः पटलः ॥ २ ॥

पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्रस्येध्मं कृष्णोऽस्या खरेष्ठ इति त्रिः प्रोक्षति। वेदिरसीति त्रिर्वेदिं बर्हिरसीति त्रिर्बर्हिः। अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम् ॥ १ ॥

भा० वृ०—गतार्थः ॥ १ ॥

सू० दी०—गताः ॥ १ ॥

स्रुच्यग्राण्युपपाद्य मूलान्युपपाययति ॥ २ ॥

भा० वृ०—पायनं क्लिन्दनम् ॥ २ ॥

सू० दी०—उपप्याययति क्लेदयति ॥ २ ॥

पोषाय त्वेति सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्य प्रोक्षणीरानयति स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संहतं विनीय पूषा ते ग्रन्थिं विष्यत्विति ग्रन्थिं [illegible] ॥ ३ ॥

भा०वृ०—सह स्रुचा हस्तेन पुरस्तात्प्रत्यगपवर्गं सहशब्दप्रयोगाच्च हस्तेन प्रोक्षणीरानयति अङ्कष्वपि प्राचीनावीती स्वधा पितृभ्य इति इतिकरणादेवंप्रकारेष्वपीति ॥ ३ ॥

सू०दी०—सह स्रुचा हस्तेन पुरस्ताद्गतेन स्रुचः प्रत्यञ्चं सन्तं ग्रन्थिं प्रत्युक्षति दक्षिणायै दक्षिणायाः ॥ ३ ॥

प्राञ्चमुदूढं प्रत्यञ्चमाकर्षति ॥ ४ ॥

भा०वृ०—प्रत्यञ्चमुदूढं प्राञ्चं प्राञ्चमुदूढं प्रत्यञ्चमिति सौकर्यप्राप्तिदर्शनात् ॥ ४ ॥

सू०दी०—संनहनकाले यदि पश्चात्प्रागुदूढो ग्रन्थिस्तं, पुच्छे गृहीत्वा पश्चादाकर्षति । प्रागपवर्गत्वापवादार्थं वचनम् ॥ ४ ॥

विष्णोस्तूपोऽसीति कर्षन्निवाऽऽहवनीयं प्रति प्रस्तरमपादत्ते नोद्यौति न प्रयौति न प्रतियौति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि॥५॥

भा०वृ०—कर्षन्निव लिखन्निवाऽऽहवनीयं प्रति यत आहवनीयस्ततो नयति नोद्यौति नोत्क्षिपति न प्रयौति न पुरस्तात्सादयति न प्रतियौति न पश्चात्सारयति न विक्षिपति न विचालयति न प्रमार्ष्टि न स्पृशत्यन्येन हस्तेन न प्रतिमार्ष्टि अग्रादारभ्य मूलपर्यन्तं नानुमार्ष्टि मूलादारभ्याऽऽग्रात् ॥ ५ ॥

सू०दी०—प्रस्तरमाहवनीयं प्रति बर्हिषः कर्षन्निव शनैरादत्ते । नोद्यौति नोर्ध्वं हरति । न च प्रयौति न च प्रकर्षेण पुरस्ताद्धरति । न च प्रतियौति न प्रतीचीनं हरति । न विक्षिपति, इत-

स्ततो न चालयति । न प्रमार्ष्टि न तिर्यङ्मार्ष्टि सव्येन तत्सहकृतेन वा दक्षिणेन न प्रतिमार्ष्टि न प्रतिलोमं मार्ष्टि । नानुमार्ष्टि नानुलोमम् ॥ ५ ॥

अयं प्राणश्चापानश्च यजमानमपि गच्छताम् । यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामीति तस्मिन्पवित्रे अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति यजमानाय प्रयच्छति यजमानो ब्रह्मणे ब्रह्मा प्रस्तरं धारयति यजमानो वा ॥ ६ ॥

भा०वृ०—यजमानो धारयति यदा तदा न ब्रह्मणे प्रयच्छति तदाऽपीत्युपदेश इति यजमानो ब्रह्मण इत्यविशेषचोदितत्वाद्धारणार्थत्वे प्रयोजनस्य यदा ब्रह्मा धारयति तदा यजमानस्यापि प्रदानं निवर्तयति प्रसङ्गपरिहार उपदेशपक्षः । धारणं तु विकल्प्यते । प्रदानं त्वदृष्टार्थं यजमानो ब्रह्मण इत्यविशेषेण चोदितत्वात् ॥ ६ ॥

सू० दी०—अपिसृज्य क्षिप्त्वा गतः शेषः । स्वयमेव वा यजमानो धारयति न ब्रह्मणे प्रयच्छतीति भावः ॥ ६ ॥

इत्यष्टमी कण्डिका ॥ ८ ॥

---

दर्भैर्वेदिमन्तर्धाय दक्षिणतः संनहनꣳ स्तृणात्यक्ष्णया वा ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—संनहनं शुल्बम् । दक्षिणतः प्राचीनं प्रागुदीचीनं वा स्तृणाति निदधाति · यद्वा विस्रस्य दर्भांस्तृणाति । तद्वत्संनहनं विस्रस्येति कात्यायनबौधायनौ ॥ १ ॥

ऊर्णाम्रदसं त्वा स्तृणामीति बर्हिषा वेदिꣳ स्तृणाति

**बहुलमनतिदृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वा ॥ २ ॥**

भा०वृ०—अनतिदृश्यं यथा न दृश्यते भूमिः । नियतपरिमाणेन बर्हिषा स्तरणविधानेऽपि बहुलमनतिदृश्यमित्यत्र वचनादनाच्छन्नायां भूमौ दर्भा असंस्कृता अप्युपादातव्याः। धातुः परिपाटिः । बहुष्वपि निधनेषु त्रिधातु पञ्चधातु वेति नियमो निधनानि संसृज्य त्रिधातु पंचधातु वा स्तरणमतः पशुसोमादौ महत्यां वेद्यामपि त्रिभिः पञ्चभिर्वा धातुभिरपरेणाऽऽहवनीयं स्तारितुं शक्यते तावती प्रचाराङ्गतया स्वीकर्तव्या यावती यादृशी च दार्शिकी वेदिस्तावती तादृशी च स्वीकर्तव्येत्यर्थः। तामपेक्ष्यातिक्रमणश्रोण्यंसादिव्यपदेशाः ॥ २ ॥

सू०दी०—बहुलं भूयिष्ठम् । अनतिदृश्यं यथा तृणान्यतीत्य न दृश्यते भूमिस्तथा । त्रिधातु त्रिसंधि ॥ २ ॥

**अग्रैर्मूलान्यभिच्छादयति ॥ ३ ॥**

भा०वृ०—प्रागपवर्गेऽप्यग्रैर्मूलान्यभिच्छाद्यन्ते । अग्राणामधो मूलानि यथा भवन्ति तथा स्तृणाति ॥ ३ ॥

सू०दी०—प्रागपवर्गपक्षेऽप्येतत्समानमित्यनुसंधातव्यम् ॥ ३ ॥

**धातौ धातौ मन्त्रमावर्तयति ॥ ४ ॥**

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—गतः ॥ ४ ॥

**प्रस्तरपाणिः सꣳस्पृष्टान्परिधीन्परिदधाति गन्धर्वोऽसि विश्वावसुरित्येतैः प्रतिमन्त्रमुदगग्रं मध्यमं प्रागग्रावितरौ ॥ ५ ॥**

भा०वृ०—संस्पृष्टाः परस्परेण परिधयो नान्योन्यस्योपरि ॥ ५ ॥

सू०दी०—संस्पृष्टानन्योन्यम् ॥ ५ ॥

**आहवनीयमभ्यग्रं दक्षिणमवाग्रमुत्तरम् ॥ ६ ॥**

भा०वृ०—अभ्यग्र आहवनीयस्याभिमुखाग्रः नाऽऽहवनीयाभिमुखाग्रः। यस्य परिधेराहवनीयाभिमुखमग्रं नास्ति सोऽवाग्रः । उत्तरं परिधिम् । उत्तरः परिधिराहवनीयाभिमुखाग्रो यथा न स्यात्तथेत्यर्थः ॥ ६ ॥

सू०दी०—आहवनीयं प्रत्यभिमुखाग्रं दक्षिणं परिदधाति विपरीताग्रमुत्तरम् ॥ ६ ॥

**सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीयमभिमन्त्र्योपर्याहवनीये प्रस्तरं धारयन्नग्निं कल्पयति ॥ ७ ॥**

भा०वृ०—सूर्यस्त्वा पुरस्तात्पात्विति परिध्यङ्गमित्युपदेशः । आदित्यो ह्येवोद्यन्निति लिङ्गात् तस्मान्नावभृथे नोपसदि गृहमेधीये च । अयमभिप्रायः—परिधीन्परिदधाति रक्षसामपहत्या इति परिधानस्य रक्षोहननार्थत्वात् पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्तादित्यस्य रक्षोपहन्तृत्वेन कीर्तनात्सूर्यस्त्वा पुरस्तात्पात्विति सूर्यरक्षितृत्वेन निर्देशात् परिधिपरिधानाङ्गताऽऽहवनीयाभिमन्त्रणस्यातः परिधिपरिधानाभावेऽवभृथादौ निवृत्तिः। उपसदि तु तत्परिधि(हि)ताः परिधय इतिपक्षे परिधिसद्भावेऽपि परिधानाभावान्निवृत्तिः परिधानपक्षे भवत्येव परिध्यङ्गमिति । परिधानक्रियाङ्गमित्यर्थः। अग्निं कल्पयति बलवन्तं करोतीध्मेन । इन्धानास्त्वा सुप्रजस इति याजमानदर्शनात् ॥ ७ ॥

सू०दी०—पुरोभागपरिधानार्थमभिमन्त्रणं मन्त्रलिङ्गात् । तथा न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहतीन्ति वाक्यशेषात् । अथ सूर्येण पुरस्तात्परिदधाति सूर्यस्त्वा पुरस्तात्पात्विति बौधायनवचनाच्च । तेनोपसदवभृथादिषु परिध्यभावे न भवत्यभिमन्त्रणम् । कल्पयति बलवन्तं करोति ॥ ७ ॥

**अनूयाजार्थे प्राची उल्मुके उदूहतीति वाजसनेयकम् ॥ ८ ॥**

भा०वृ०—प्राची नयत्युल्मुके विकल्पेन वाजसनेयिमतात् ॥ ८ ॥

सू०दी०—अथानूयाजार्थे द्वे उल्मुके उदूहति प्राग्भागगते करोति। वाजसनेयग्रहणमादरार्थं न तु कल्पनेन विकल्पार्थमपिसृज्योल्मुके इत्युत्तरत्र नित्यवदनुवादात्। उल्मुके उदूह्याऽऽहवनीयं कल्पयित्वेति सत्याषाढेन व्यक्तवचनाच्च ॥८॥

मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावादधाति ॥ ९ ॥

भा०वृ०—सकृन्मध्यमपरिधिस्पर्शनं हस्तेन समिद्भ्यां वेत्यन्ये। उपदेशः पुनः पुनरपीति। आघारसमिदङ्गत्वादुपस्पर्शनस्य प्रतिसमिदुपस्पर्शनम् ॥ ९ ॥

सू० दी०—सकृदुपस्पृश्य परिधिं समिधावूर्ध्वाग्रे आदधाति। कुत्र। मध्येऽग्नेरिति भारद्वाजः ॥ ९ ॥

वीतिहोत्रं त्वा कव इति दक्षिणां समिदस्यायुषे त्वेत्युत्तराम् ॥ १० ॥

भा०वृ०—आघारसमिदेकाग्नेर्दक्षिणा, एका चोत्तरा सर्वविधिषु दिङ्नियमाद्यदाऽपि प्राञ्चौ तिर्यञ्चौ वेति यद्यप्याघारसमिदिति समाख्यानादाघारसमाप्तिप्रदेशे समित्प्राप्तिस्तदाऽप्यग्नेर्दक्षिणत उत्तरतश्च नियम्यते। उपदेशस्तु यत्र परिसमाप्तिराघारयोस्तत्र स्थापितव्ये यदाऽपि प्राञ्चौ तदा प्रथमोत्तरपूर्वेण द्वितीया दक्षिणपूर्वेणेति समाख्याबलात्तदन्ते प्राप्तत्वादूर्ध्वे चाऽऽधेये। उपरिष्टादेव रक्षांस्यपहन्तीति वचनात् ॥ १० ॥

सू०दी०—दक्षिणोत्तरत्वं मिथः ॥ १० ॥

तूष्णीं वा ॥ ११ ॥

भा०वृ०—स्पष्टम् ॥ ११ ॥

सू०दी०—उत्तरामिति शेषः। आनन्तर्याद्यजुषाऽन्यां तूष्णीमन्यामिति श्रुतेश्च ॥ ११ ॥

समावनन्तर्गर्भौ दर्भौ विधृती कुरुते ॥ १२ ॥

भा०वृ०—समौ करोति छिनत्ति कुरुत इति वचनाच्छेदनेन समी करणं विधृत्योः । नास्ति ययोर्गर्भस्तावनन्तर्गर्भौ ॥ १२ ॥

सू०दी०—विधृती कुरुते विधृतित्वेन कल्पयति ॥ १२ ॥

**विशो यन्त्रे स्थ इत्यन्तर्वेद्युदगग्रे निधाय वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेति तयोः प्रस्तर-मत्यादधाति ॥ १३ ॥**

भा०दी०—स्थापयति ॥ १३ ॥

सू०दी०—विशो यन्त्रे स्थ इति निधाने मन्त्रो न करणे । साद्य-ति विशो यन्त्रे स्थ इति कल्पान्तरेषु व्यक्तदर्शनात् ॥ १३ ॥

**अभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः ॥ १४ ॥**

भा० वृ०—अभिहततराणीति बर्हिर्मूलेभ्यो यस्मिन्धातौ सादयति तस्य मूलेभ्यः पुरस्तादतिशयेन हृतान्यभिहततराणीति तरप्शब्द-श्रवणात् ॥ १४ ॥

सू० दी०—यत्र धातौ प्रस्तरः साद्यते तद्बर्हिर्मूलेभ्यः प्रस्तरमूलान्य-भिहततराणि आहवनीयाभिमुखं पुरस्ताद्धृतानि भवन्ति ॥ १४ ॥

**जुहूरसि घृताचीत्येतैः प्रतिमन्त्रमनूचीरसꣳस्पृष्टाः स्रुचः प्रस्तरे सादयति ॥ १५ ॥**

भा० वृ०—अनूचीः प्राचीः परस्परेणासंस्पृष्टाः सर्वाश्च प्रस्तरे ॥ १५ ॥

सू०दी०—जुहूरसीत्यनुषक्तरूपनिर्देश उपभृद्ध्रुवयोरपि प्रदर्शनार्थः । अनूचीः प्राचीः । असंस्पृष्टा मिथः ॥ १५ ॥

इति नवमी कण्डिका ।

---

**अपि वा जुहूमेव प्रस्तरे ॥ १ ॥**

भा० वृ०—सादयतीत्यध्याहारः ॥ १ ॥

सू० दी०—सादयतीत्यन्वयः । अस्मिन्कल्पे सर्वासां सादनप्रकार-माह ॥ १ ॥

समं मूलैर्जुह्वा दण्डं करोति। उत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः। उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योः ॥ २ ॥

भा० वृ०—अधस्ताद्विधृत्योरुपभृत्प्रतिकृष्टतराऽतिशयेन पश्चान्नीता। उपभृतोऽप्यतिशयेन पश्चान्नीता। ध्रुवोपरिष्टाद्विधृत्योः॥ २ ॥

सू० दी०—यथा प्रस्तरमूलसमं जुहूमूलं भवति तथा जुहूं सादयित्वा तस्या ईषत्प्रतिकृष्टां प्रत्यक्कृष्टामुपभृतं सादयति तस्या अपि प्रतिकृष्टतरां ध्रुवाम् ॥ २ ॥

ऋषभोऽसि शाक्वरो घृताचीनां सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति दक्षिणेन जुहूं स्रुवं सादयत्युत्तरेणोत्तरेण वा ध्रुवाम् ॥ ३ ॥

भा० वृ०—याजमानदर्शनात्तूष्णीमाज्यस्थाल्यप्यासाद्यते, आसाद्यमानाभिमन्त्रणयाजमानेष्वियं स्थालीति दर्शनात् ॥ ३ ॥

सू० दी०—गतः। तूष्णीमाज्यस्थाल्यप्यासाद्या, तस्या अपि याजमानदर्शनात् ॥ ३ ॥

एता असदन्निति स्रुचोऽभिमन्त्र्य विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानीत्याज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्र्याऽऽप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम्। खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽग्नये जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरम्॥४॥

भा०वृ०—विष्णूनि स्थेति स्रुग्गतानामाज्यानामेवाभिमन्त्रणं स्रुचामधिकृतत्वादिति। एता असदन्निति स्रुचोऽभिमन्त्र्येति प्रकृतत्वादतो यत्र ध्रुवायामेव ग्रहणमुपसदादौ तत्र विष्णवसीति ध्रुवा-

स्थस्यैवाभिमन्त्रणं न स्थालीस्थस्य भारद्वाजमताच्च पुरोडाशादङ्गारानपोह्येति मन्त्रावृत्तिर्युगपदसंभवात् । सूर्यं ज्योतिः स्योनं त इति च । द्रव्यगते प्रकृतत्वात् । अतो द्रव्यसंबोधनरूपत्वादेकवचनान्तत्वाच्चैकद्रव्याभिधानपरत्वादावृत्तिरनयोः प्रकरणस्य च बाधादिति । सूर्यं ज्योतिरिति न ज्योतिषोऽभिमन्त्रणं हविष्प्रकरणबाधप्रसङ्गाद्धविषोऽप्यग्निसंपर्काज्ज्योतिष्ट्वम् ॥ ४ ॥

सू०दी०—स्रुच इति सस्रुवा गृह्यन्ते । एतावसदतामिति लिङ्गात् । आज्यानीति च स्रुग्गतानि स्रुचामधिकारात् । केचित्त्वाज्यानीत्यविशेषवचनादाज्यस्थाल्या आसादितत्वाच्च तद्गतस्याप्यभिमन्त्रणमिच्छन्ति । समानजातीयेनेति न्यायेनाङ्गारापोहनादीनां प्रवृत्तिक्रमः । हविरभिमन्त्रणमन्त्रस्यैकाभिधायित्वादावृत्तिः। अभिघारणमन्त्रस्त्वाग्नेयार्थत्वात्तद्विकारेष्वेव भवति । तत्र च देवतावाचिनो द्वितीयाग्निशब्दस्यैवोहः ॥ ४ ॥

यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्सोमघृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति प्रातर्दोहम् ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—गतः ॥ ५ ॥

स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त इति पात्र्यामुपस्तीर्याऽऽर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामित्यपर्यावर्तयन्पुरोडाशमुद्वास्य ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—गतः ॥ ६ ॥

इति दशमी कण्डिका ।

वेदेन भस्म प्रमृज्य तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति पात्र्यां प्रतिष्ठापयति ॥ १ ॥

भा० वृ०—स्पष्टम् ॥ १ ॥

सू० दी०—सदनकरणं सर्वस्य कृत्वोद्वासनादिप्रतिष्ठापनान्तमेकैकस्य करोति। सदनकरणाद्येकैकस्येत्यन्ये। ततः प्रातर्दोहमुद्वासयति ॥ १ ॥

तूष्णीं यवमयम् ॥ २ ॥

भा० वृ०—स्पष्टम् ॥ २ ॥

सू० दी०—यदा यवान्निर्वपति तदा तूष्णीं प्रतिष्ठापयति। व्रीहीणामिति लिङ्गविरोधादिति भावः। एवं च विकृतावपि यवमयं तूष्णीमिति सिद्धं भवति ॥ २ ॥

इरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति स्रुवेण कपालानि प्रत्यज्य देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण पुरोडाशमनक्ति स्वक्तमकूर्मपृषन्तमपरिवर्गमणिकाषम् ॥ ३ ॥

भा० वृ०—योगे योगे कपालाञ्जनमन्त्रावृत्तिरेकपुरोडाशप्रयोगेऽपि विद्यमानत्वात्सर्वगणेषु युगपदसंभवाच्च। प्रतिकपालं हिरण्यकेशिनः। अञ्जनस्य कपालसंस्कारार्थत्वात्प्रतिप्रधानं गुणावृत्तिरित्यपरिवर्गमपरित्यजन्नविच्छिन्दन्स्तोकेन प्रदेशेषु अणिकाषममृषन्स्रुवेण पुरोडाशे ॥ ३ ॥

सू० दी०—कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्तिः। अविभवादेकैकशः कपालानीति तु सत्याषाढः। पुरोडाशग्रहणात्सांनाय्ययोर्न भवत्यलंकरणम्। पृषदिव पृषद्बिन्दुर्यस्य नास्ति सोऽकूर्मपृषन्। नुम्छान्दसः। क्वचित्क्वचिन्नानक्तो भवतीत्यर्थः। परिवर्गो विच्छेदः। निकाषो निकषणम्। तौ यथा न भवतस्तथाऽनक्तीत्यर्थः। णमुलन्तौ वा। णकारश्छान्दसः ॥ ३ ॥

उपरिष्टादभ्यज्याधस्तादुपानक्ति ॥ ४ ॥

भा० वृ०—हस्तेनोपाञ्जनमधस्ताद्धिरण्यकेशिमताद्यपि प्रतिष्ठितम् ॥ ४ ॥

सू० दी०—अधस्तादञ्जनं हस्तेन पर्यावर्तनप्रतिषेधात् । तथा हस्तेनाधस्तादुपानक्तीति सत्याषाढः ॥ ४ ॥

चतुर्होत्रा पौर्णमास्यां हवीꣳष्यासादयेत्पञ्चहोत्राऽमावास्यायाम् ॥ ५ ॥

भा० वृ०–असंभवतामासादने मन्त्रावृत्तिर्युगपदासादनासंभवात्॥५॥

सू० दी०–युगपदासादनं सर्वेषामसंभवे त्वावृत्तिर्मन्त्रस्य ॥ ५ ॥

प्रियेण नाम्ना प्रियꣳ सद आसीदेति यदन्यद्धविर्दार्शपूर्णमासिकेभ्यस्तदेतेनाऽऽसादयेदिति विज्ञायते ॥ ६ ॥

भा० वृ०—प्रियेणेति विकृत्युत्पन्नत्वादनूहः। सर्वविकृतिषूपदिष्टत्वादेकवचनान्तस्यातो हविर्जातिमात्रपरता। आसीदतमासीदतेत्युपदेशः, अद्य सुत्यामिति दर्शनादिति। अस्यार्थः–विकृत्युत्पन्नत्वेऽपि क्वचित्समवेताभिधानसंभवे तत्रोहो युक्तः। यथा विकृतौ द्वादशाह उत्पन्नस्य श्वः सुत्यामिन्द्राग्निभ्यामिति प्रैषमन्त्रस्याद्य सुत्यामित्यालेखन इत्यूहदर्शनं तद्वत्प्रियेणेत्यस्याप्यूह इति ॥ ६ ॥

सू०दी०–केचित्तु प्राकृत एव हविरासादने मन्त्रमेतं विदधति तन्निरासार्थमस्य वैकृतत्वप्रदर्शनम्। तेनास्य विकृत्यर्थमुत्पन्नत्वाद्द्विबहुष्वनूहः। एकवचनं तु अयं यज्ञः समसददित्यादिवद्यज्ञादिरूपेण हविःसमुदायाभिधानं द्रष्टव्यम् ॥ ६ ॥

अपरेण स्रुचः पुरोडाशावासादयति ॥ ७ ॥

भा०वृ०–अपरेण स्रुचः पुरोडाशावासादयतीति प्रकृतत्वात् ॥ ७ ॥

सू०दी०—गतः ॥ ७ ॥

उत्तरौ दोहौ ॥ ८ ॥

भा० वृ०–उत्तरौ दोहौ पुरोडाशस्य। आग्नेयं प्रथममैन्द्राग्नमुत्तरमिति। क्वचिद्वचनात्स्रुचां केचिदपरेण स्रुचः पुरोडाशावासादयतीति

प्रकृतत्वात्। असंभवे हस्तद्वयेन कर्मणे वामिति लिङ्गादित्युक्तं दोहकुम्भ्योर्युगपदासादनासंभवे ॥ ८ ॥

सू० दी०—कस्मादुत्तरौ। स्रुग्भ्य इति ब्रूयात्, तासामेवात्रावधित्वेनाधिकारात्। पुरोडाशाभ्यां वा रौद्र उत्तर इत्यादावत्रावधिमत्तया कृतस्याप्यवधित्वदर्शनात् ॥ ८ ॥

अपि वा मध्ये वेद्याः सांनाय्यकुम्भ्यौ संदधाति पूर्वं शृतमपरं दधि। अथैने व्युदूहति दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां दधि ॥ ९ ॥

भा० वृ०—हस्ते कुम्भ्यौ धृत्वा वेदिमध्ये सकृत्संश्लिष्यानन्तरं विभज्य प्रापयति ॥ ९ ॥

सू० दी०—हस्तस्थे एव कुम्भ्यौ सकृद्वेदिमध्ये संश्लेष्य ततस्ते व्युदूहति विभज्य गमयति ॥ ९ ॥

अयं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु। स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोत्वित्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय वेद्यन्तान्परिस्तीर्य होतृषदनं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्यते ॥ १० ॥

भा० वृ०—वेदासादनमुत्तरकर्मार्थम्। तच्चाऽऽसन्नाभिमर्शने कृते भाष्यकारेणाग्नौ वैश्वानरे साकमेधे वरुणप्रघासे च तथा क्रमोपदेशात्। सामिधेन्यर्थो यः प्रैषस्तं वक्तुं प्रतिपद्यते प्रैषस्यानन्तरविधानादेवानन्तरप्रयोगसिद्धेऽपि सूत्रारम्भप्रयोजनम् पुरस्तात्सामिधेनीनां होतेत्यवस्थानानन्तरस्यास्मिन्काले प्राक्प्रैषात्प्रयोगार्थसामिधेनीभ्यः प्रतिपद्यत इति। सामिधेन्यारम्भोपदेशात्प्राक्प्रैषप्रयोगार्थः। प्रैषस्य तदारम्भकत्वात्तद्वक्तुमित्यध्याहारः ॥ १० ॥

इत्येकादशी कण्डिका ॥

---

इति तृतीयः पटलः।

---

सू०दी०—वेदिं परिस्तीर्येति यावानर्थस्तावानेव वेद्यन्तान्परिस्तीर्येति। यद्वा यत्र हवींꣳषि सादितानि तान्वेदिप्रदेशानित्यर्थः। तथा सति महावेद्यामपि परितो हवींꣳषीदं स्तरणं न परितो वेदिमिति सिद्धं भवति। सामिधेनीभ्यः प्रतिपद्यते तदर्थमिध्माधानादि प्रक्रमते॥ १०॥

इत्येकादशी कण्डिका॥

इति तृतीयः पटलः।

अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति समिध्यमानायानुब्रूहीति वा॥ १॥

भा० वृ०—तदङ्गत्वात्सामिधेनीस्वर इति तदङ्गत्वात्तस्य प्रैषस्याङ्गत्वात्सामिधेनीस्वरः क्रुष्टमन्द्रयोरन्तरः। एतेनाऽऽश्रावणादीनामपि तद्देशस्वर एवेति दर्शितम्। तथा चोक्तम्—उच्चैर्वैश्वानरस्याऽऽश्रावयतीत्यत्र॥ १॥

सू० दी०—ब्रूहीत्यूकारः प्लावयितव्यः॥ १॥

पञ्चदश सामिधेनीरन्वाह॥ २॥

भा०वृ०—पञ्चदशस्य सिद्धत्वात्पुनर्वचनाद्बहुयाजिनोऽपि पञ्चदश लभ्यन्त इत्युपदेशः। अस्यार्थः—पञ्चदश सामिधेन्यो दर्शपूर्णमासयोरिति सिद्धे पञ्चदशत्वे पञ्चदश सामिधेनीरिति पुनर्वचनाद्बहुयाजिनोऽपि पञ्चदशसंख्या लभ्यते विकल्पेनेत्युपदेशः॥२॥

सू०दी०—होतेति शेषः। परिभाषायामयं पञ्चदशकल्पः सर्वेषामविशेषेणोक्तः। पञ्चदश सामिधेन्यो दर्शपूर्णमासयोरिति। स एवात्रानूदितो वक्ष्यमाणैः कल्पैर्विकल्पार्थं तेन राजन्यवैश्यबहुयाजिकल्पैरपि स विकल्पते॥ २॥

त्रीꣳस्तृचानित्युक्तम्॥ ३॥

भा०वृ०—त्रींस्तृचानित्युक्तं ब्राह्मणे। अस्यार्थः—राजन्यस्य त्रयस्तृचाः। प्रथमः प्र वो वाजा इत्यस्य त्रिरभ्यासादेकस्तृचः।

आ याहि वीतय इति तिस्र ऋचः । अयज्ञो वा एष योऽसामेति सामसंस्तवात्त्वं वरुण इत्युत्तरा त्रिष्टुप् । अनया त्रिरभ्यस्तया परिदध्यादेवं त्रयस्तृचाः पञ्चदशानुब्रूयाद्राजन्यस्येत्यस्मिन्पक्षे त्वं वरुण इति वसिष्ठराजन्यानां परिधानीयेत्येतावान्विशेषः । प्रकृतितो राजन्यस्य कल्पद्वयं नित्यम् । आजुहोतेति गायत्र्या परिधानं नित्यं ब्रह्मवर्चसकामस्याऽऽनन्तर्यादीडे अग्निमिति गायत्री प्र वो वाजीयाया उत्तरा समिध्यमानोऽमृतस्य राजसीति जगती परिधानीयायाः परा वैश्यस्य सप्तदशानुब्रूयाद्वैश्यस्येत्यत्र प्र वो वाजीया त्रिरभ्यस्ता, ईडे अग्निं विपश्चितमिति सकृदग्न आ याहि वीतय इत्यादि समानमाजुहोतेत्यन्तम् । आजुहोता च सकृदस्याः परिधानीयायाः परया समिध्यमानोऽमृतस्य राजसीति बह्वृचपठितया परिदध्यात्त्रिरभ्यस्तया । काम्येष्वेकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईडे अग्निमिति सामन्वदुत्तरा । त्वामग्ने पुष्करादधीति त्रयस्तृचा इति, ईडे अग्निं विपश्चितमग्ने शकेम ते वयमिति द्वे समन्वानग्न आयाहि वीतय इति तृचः । उत्तरा, ईडेऽन्यो नमस्य इत्येका त्वामग्ने पुष्करादधीति त्रयस्तृचा आजुहोतेति परिधानीया वशिष्ठराजन्ययोस्त्वं वरुण इत्येकविंशतिपक्षे। उपरितनपक्षेष्वप्येते एव परिधानीये चतुर्विंशतिपक्षे पूर्वस्मादयं विशेषस्तृचेभ्य ऊर्ध्वं वृषो अग्निरित्याद्यग्निं दूतमित्यन्तमुक्त्वा, आजुहोतेत्यादिपरिधानीया व्यवस्थया । अग्निमग्न इत्येकादशाष्टाभ्य इत्येकादशसु यावदपेक्षितं निवेशयेदित्यर्थस्त्रिंशतमनुब्रूयादित्यस्मिन्पक्षे पूर्ववदग्निमग्न इत्येकादशापि प्रयोज्याः । समिध्यमानो अध्वर इति चोक्त्वा परिधानीया पृथुपाजा इत्यष्टौ समिध्यमानवत्य इति चतुश्चत्वारिंशत्पक्षे पूर्ववत्पृथुपाजा इत्यष्टावुक्त्वा दशतयीभ्य आग्नेय्यो गायत्र्यश्चतस्र आगमयितव्याः परिधानीया एतासां यथार्थमागमः स्यादित्युक्तार्थः । एतासामेव निवेशः सूत्रान्तरवचनात्सर्वाणि च्छन्दांसीति गायत्रीत्रिष्टुब्जगत्यो बहुयाजिनः सोमयाजी बहुयाजी, अपरिमितमिति बहुयाजिन एव नित्यादाधिकं प्राकृतानां चान्यतमकल्पः । ब्राह्मणानां नित्याधिकारोक्तपञ्चदशादिसंख्या स्वाधिकारप्राप्तया अधिकमपरिमितं प्राकृतसंख्यानामप्यविशेषेणोक्तत्वाद्बहुयाजिनोऽपि

प्राप्तिः। उपदेशमतेन बहुयाजिनोऽपि पञ्चदशसंख्यायाः पूर्वमुक्तत्वाच्च। केचिदष्टाचत्वारिंशतः परमपरिमितमिति पूर्ववद्युक्ष्वा हीत्येवमादीनां गायत्रीणामाग्नेयीनामागम आवपस्थान इत्याहुः। स्त्रियस्तेन यद्गायत्र्य इति सिद्धवदनुवादाद्गायत्रीणामाग्नेयीनामस्मच्छाखोक्तानां युक्ष्वा हीत्यादीनामागमः परिधानीयायाः पुरस्तात्क्षेप इत्युपदेश इति। आगन्तूनामन्ते निवेश इति पूर्वेषां क्लृप्तक्रमबाधाय परिधानीयायाश्च नियतत्वात्समिध्यमानवतीं समिद्धवतीं चेति न्याय्यो धाय्याशब्दचोदितास्वेवेत्युपदेशाभिप्रायः। अत्र बह्वृचपठितानामागमपक्षः सूत्रकारेणाप्युपदेशादितराणीत्यङ्गीकाराद्बह्वृचशेषत्वादस्मदीयहौत्रस्य ॥ ३ ॥

सू०दी०—त्रींस्तृचानित्यनुवाके नित्याः काम्या नैमित्तिकाश्च सामिधेनीकल्पा उक्ताः। तेऽपि यथाब्राह्मणमनुसंधेया इत्यर्थः ॥ ३ ॥

प्रणवे प्रणवे समिधमादधाति ॥ ४ ॥

भा० वृ०—स्पष्टार्थः ॥ ४ ॥

सू०दी०—गतः ॥ ४ ॥

सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते। प्रतिह्रसमानासु प्रकृतिवत् ॥ ५ ॥

भा० वृ०—प्रतिह्रसमानासु प्रकृतिवदिति। अस्यार्थः—एकविंशतिमिध्मदारूणि भवन्ति पञ्चदशेध्मदारूण्यभ्यादधातीति प्रकृतौ नियमात्काष्ठसंख्याऽप्यङ्गभूता। पञ्चदश सामिधेनीरन्वाहेति सामिधेनीसंख्या च विहिता। एकां सामिधेनीनां त्रिरन्वाहेत्यादौ सामिधेनीसंख्याबाधेऽपि समश इध्मं त्रेधामीति काष्ठसंख्याया अबाधितत्वाद्यावत्सामिधेनीसंख्यामाधाय परिधानीयायां शेषं काष्ठाधानं कर्तव्यम् ॥ ५ ॥

सू० दी०—वृद्धिह्रासौ पञ्चदशापेक्षया। प्रकृतिवत्प्रकृत्या पाञ्चदश्येन तुल्यमित्यर्थः। एतदुक्तं भवति त्रींस्तृचाननुब्रूयात्। एकां सामिधेनीं त्रिरन्वाहेत्यादिषु सामिधेनीह्रासे न समिधामपि

ह्रास उक्तः । किं तु ताः पञ्चदशैवं समशो विभज्याऽऽधेया इति । वक्ष्यति च पित्र्यायां समश इध्मं त्रैधं विभज्य त्रिरादधातीति । परिधानीयायामाधेयाः शिष्टा इत्यन्ये ॥ ५ ॥

**समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति परिधानीयायां वा ॥ ६ ॥**

भा० वृ०—गतार्थः ॥ ६ ॥

सू० दी०—परिधानीयोत्तमा ॥ ६ ॥

**वेदेनाग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरपरिधिसंधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि संस्पर्शयति ॥ ७ ॥**

भा० वृ०—उपवाजनं दीप्त्यर्थं तस्मान्नावभृथे । अन्ववहृत्य प्रवेश्य तेन संधिना संस्पर्शनम् । केचित्परिधिसंधिसंस्पर्शनं मनसा ध्यानं प्रजापतये स्वाहेति होमत्वात्स्वाहाकारप्राप्तेस्तद्योगाच्चतुर्थ्यन्तस्य प्रजापतेर्ध्यानम् । ज्योतिष्मत्याघारमिति ज्वलत्यग्नौ ॥७॥

सू० दी०—उपवाजनमुपवीजनम् । तच्चादृष्टार्थं न तु दीप्त्यर्थं त्रिरिति नियमात् । उदकमुपवाज्येत्यवभृथे सत्याषाढवचनाच्च । तस्मादवभृथेऽपीष्यते । परिधिसंधिमनु तेन मार्गेणावहृत्य प्रपाद्य प्रजापतिं मनसा ध्यायन्देवतात्वेन तस्मान्मनसा प्रजापतये जुह्वतीति श्रुतेः । ऋजुमवक्रम् । संततमविच्छिन्नधारम् । ज्योतिष्मति ज्वलत्यग्नौ । आघारयन्दीर्घधारां कुर्वन् ॥ ७ ॥

**आघारयोर्वदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा ॥ ८ ॥**

भा० वृ०—व्यतिषङ्गः संसर्ग इति व्यतिषक्तावव्यतिषक्तौ वेति

सूत्रे व्यतिषङ्गशब्दार्थः । प्राञ्चौ तिर्यञ्चावित्यत्र व्यतिषङ्गो विकल्पेन ॥ ८ ॥

सू० दी०—आघारयोरेतान्विकल्पान्वदति ब्राह्मणम् । के ते । ऋजू प्राञ्चावित्येकः कल्पः । तिर्यञ्चौ मिथो व्यतिषक्ताविति द्वितीयः । तावेवाव्यतिषक्तावृजू इति तृतीयः ॥ ८ ॥

**स्रुवेणाऽऽज्यस्थाल्या आज्यमादायाऽऽप्यायतां ध्रुवा घृतेनेत्यवदायावदाय ध्रुवामाप्याययतीति सार्वत्रिकम् ॥ ९ ॥**

भा० वृ०—प्रतिस्रुवमाप्यायनं वीप्सावचनात् । अवदायावदायेति सार्वत्रिकवचनाद्दर्शपूर्णमासाभ्यामन्यत्रापीति केचिदन्यत्राभिघारणमिच्छन्ति । अग्नौ दीक्षाहुतिषु भाष्यकारेणोक्तत्वात् । ध्रुवाग्रहणाद्ध्रुवामाप्याययन्ति ध्रुवाकार्येऽपि चरावभिपूरणमेव यावदर्थमित्यतो नाऽऽप्याययत इति प्रायणीयायामाज्येन चरुमभिघार्यैता देवता यजतीत्यस्मिन्पक्षे नाऽऽप्यायनम् । एवं गृहमेधीय ओदनयोर्निम्ने कृत्वेत्यत्राभिपूरणमेव सर्वत्राभिपूरणं न प्रत्यवदानमर्थलक्षणत्वात् ॥ ९ ॥

सू० दी०—प्रतिस्रुवमाप्यायनं वीप्सावचनात् । सार्वत्रिकमिति न केवलमाघारे किंतु सर्वेष्वेव कर्मसु यत्र ध्रौवाद्वद्यादित्यर्थः । मन्त्रस्तु प्रकरणादैष्टिक एवाऽऽप्यायन इत्येके ॥ ९ ॥

**अग्नीदग्नीन्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति ॥ १० ॥**

भा० वृ०—स्पष्टम् ॥ १० ॥

सू० दी०—गतः ॥ १० ॥

इति द्वादशी कण्डिका ।

---

**इध्मसंनहनैः सह स्फ्यैर्ऋते स्फ्यैर्वाऽऽग्नीध्रोऽनुपरिक्रामं परिधीन्यथापरिधितमन्वग्रं त्रिस्त्रिः संमृज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं**

वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निं प्राञ्चम् ॥ १ ॥

भा०वृ०—स्फ्योऽपि संमार्गार्थ इति न सहयोगात्स्फ्यस्य प्राधान्यम्। तस्मादवभृथे स्फ्ये न संमार्गः संनहनाभावेऽपि। अनुपरिक्रामं गत्वा तस्य तस्य समीपं नैकत्रस्थः। यथापरिधितं यथापरिधानक्रमेणान्वग्रमग्रे क्रियासमाप्तिः। अग्निमग्नीदित्यपि लभ्यते। अग्निमग्नीत्त्रिस्त्रिः संमृड्ढीति ब्राह्मणोक्तत्वात्तदपि विकल्पेन लभ्यते तदाऽग्नेः पूर्वं संमार्गः। तस्मिन्पक्षे परिधीन् संमार्ष्टीति पश्चाद्विधानात्पश्चात्परिधिसंमार्गः ॥ १ ॥

सू० दी०—अनुपरिक्रामं तं तं परिधिदेशं गत्वा। यथापरिधितं येन क्रमेण परिहितास्तेन क्रमेण। धकारश्छान्दसः। अन्वग्रं मूलादारभ्याऽऽग्रात् ॥ १ ॥

भुवनमसीत्यग्रेण ध्रुवां जुहूं वाऽञ्जलिं कृत्वा जुह्वेहीति जुहूमादत्त उपभृदेहीत्युपभृतम् ॥ २ ॥

भा०वृ०—नम इति लिङ्गान्नमस्कारार्थोऽञ्जलिरिति। आहवनीयाभिमुखमञ्जलिं कृत्वा तं नमस्कुर्यात्। अग्ने यष्टरिदं नम इति लिङ्गात्तस्मा एव नमस्करोतीति वाक्यशेषाच्च। भुवनमसीति यज्ञाभिधानं नाग्नेः। यज्ञो वै भुवनमिति वाक्यशेषात्। विप्रथस्वेति यजमानस्य प्रथनाभिधानं यजमानं प्रजया पशुभिः प्रथयस्वेति यज्ञसंबोधनम्। यज्ञ एव यजमानं प्रजया पशुभिरिति वाक्यशेषात्। विप्रथस्व प्रथयस्वेत्यर्थः। अतोऽवभृथ आपो यष्ट्रय इत्येतावानूहः। अतोऽवभृथेऽप्यविकारेणाञ्जलिकरणं यजमानस्य प्रथनाशासनपरत्वान्मन्त्रस्य। एष हि देवेभ्यो हव्यं भरतीति हविर्भरणद्वारेणाऽऽहवनीयस्य यष्टृत्वादग्निर्वै देवानां यष्टेति च वाक्यशेषाद्यज्ञकर्तृरूपाहवनीयाभिधानस्य विवक्षितत्वात्तत्स्थानापन्नास्वप्स्ववभृथ आपो यष्ट्रय इत्येतावानूहो न तूपदेशः। अग्नेर्यष्टृत्वस्य भाक्तत्वाद्यज्ञफलाशासनपरत्वान्मन्त्रस्याप्यवभृथेऽनूहेन प्रयोग इति। तुशब्दात्पूर्वपक्षव्यावृत्तिः। देवताग्नेरभिधायकोऽग्निशब्दो वरुणप्रघा-

सावभृथे दर्शितत्वात् । एष हि देवेभ्यो हव्यं वहतीति । अग्निर्देवानां यष्टेति देवतायामुपपद्यते नाधिकरणेऽग्नौ स्थलजलाद्यधिकरणेषु तत्तद्देवताभ्यश्च हूयमानं हविर्देवताग्निरेव वहति तस्मादवभृथेष्वपि तस्यैवाभिधानमिति ॥ २ ॥

सू०दी०—अञ्जलिनाऽऽहवनीयनमस्कारार्थः। मन्त्रलिङ्गात्तस्मा एव नमस्करोतीति मन्त्रविधिवाक्यशेषात् । आहवनीयायाञ्जलिं करोतीति भारद्वाजवचनाच्च । दक्षिणस्य व्यापृतत्वात्सव्येनाऽऽदानमुपभृतः । तथा सव्येनोपभृतमित्येव बौधायनः ॥ २ ॥

सुयमे मे अद्य घृताची भूयास्त्ᳬस्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति । मुखतोऽभिहृत्य मुखत उपावहरति । सर्वत्रैवमत्याधानोपावहरणे भवतः ॥ ॥ ३ ॥ ४ ॥ ५ ॥

भा०वृ०—अत्याधानोपावहरणग्रहणानि तूष्णीमन्यत्रेति । आघारादन्यत्र जुहूपभृतोर्ग्रहणमत्याधानोपावहरणं च तूष्णीमुपावहरणमन्त्राभावेऽप्यनास्थया भाष्ये निर्देशः । आघार एव मन्त्रोपदेशादन्येषां तत्प्रकृतित्वाभावात्तूष्णीं क्रियामात्रानुष्ठानम् । अथवा मुखतोऽभिहृत्य मुखत उपावहरतीति क्रियाप्रकारमात्रमुपदिश्यातिदेशात्समनन्तरवाक्यस्थस्यातिदेशो युक्त इति ॥ ३ ॥ ४ ॥ ५ ॥

सू०दी०—अत्यादधाति स्थापयति ॥ ३ ॥

सू०दी०—अत्यादधज्जुहूमुपभृति मुखेनाभिहृत्याभिमुखं हृत्वाऽत्यादधाति। तथा होमार्थमुपावहरन्मुखत एवोपावहरति अपादत्ते॥४॥

सू०दी०—अन्यत्राप्यत्याधानोपावहरणे एवमनन्तरोक्तप्रकारेण मुखतो भवतः । मन्त्रस्तु प्रकरणादाघारार्थ एवेष्टो नान्यत्र ॥ ५ ॥

न च सᳬशिञ्जयति नाभिदेशे च स्रुचौ धारयति॥६॥

भा०वृ०—न च संशिञ्जयति न च शब्दं करोति पात्रसंघट्टनेनासंशिञ्जनधारणयोः सार्वत्रिकत्वं चशब्दात्सर्वत्रैवानुषज्यते ॥६॥

सू० दी०—चशब्दादेतदपि द्वयं सार्वत्रिकम् । संशिञ्जयति शब्दाययति ॥ ६ ॥

अग्राविष्णू मा वामवक्रमिषमित्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरं दक्षिणेन पदा दक्षिणाऽतिक्रामत्युदक्सव्येन ॥ ७ ॥

भा०वृ०—स्रुचोऽग्रेण मध्यमं परिधिमपरेण प्रस्तरमनतिक्रामन्यथा भवति तथा दक्षिणतो गत्वेत्यर्थः । अनवक्राममनवक्रम्यानवक्रम्येति णमुलर्थः पौनःपुन्यं सर्वातिक्रमणाभिप्रायेण ॥ ७ ॥

सू०दी०—अनवक्रामं पदा प्रस्तरमनवक्रम्यानवक्रम्य । दक्षिणेन सव्येनेति तयोः प्राथम्यनियमः । अनवक्राममित्याभीक्ष्ण्यवचनात् । अयमपि मन्त्रवर्जं सार्वत्रिको विधिः । तथाचोत्तरत्र वक्ष्यति ॥ ७ ॥

एतद्वा विपरीतम् ॥ ८ ॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

सू०दी०—सव्येनातिक्रम्य दक्षिणेन क्रामतीत्यर्थः ॥ ८ ॥

विष्णोः स्थानमसीत्यवतिष्ठते ॥ ९ ॥

भा०वृ०—स्पष्टम् ॥ ९ ॥

सू०दी०—गतः ॥ ९ ॥

अन्तर्वेदि दक्षिणः पादो भवत्यवघ्रः सव्यः ॥ १० ॥

भा०वृ०—स्पष्टम् ॥ १० ॥

सू०दी०—दक्षिणावघ्रः सव्यः। तत्पार्ष्णिसंस्पृष्टाङ्गुलिरित्यर्थः॥१०॥

अथोर्ध्वस्तिष्ठन्दक्षिणं परिधिसंधिमन्ववहृत्य ॥ ११ ॥

भा०वृ०—स्पष्टम् ॥ ११ ॥

इति त्रयोदशी कण्डिका ।

सू० दी०—स्पष्टम् ॥ ११ ॥

इति त्रयोदशी कण्डिका ।

---

समारभ्योर्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति ॥ १ ॥

भा० वृ०—प्राञ्चमुदञ्चमिति कोणदिगभिप्रायेण ऋजुप्राञ्चावित्युक्तत्वात् । ज्योतिष्मति ज्वलति अत्राऽऽघार्यद्रव्यस्य यजमानान्वारम्भणमाघारमाघार्यमाणमनु समारभ्येति दर्शनात् ॥ १ ॥

सू० दी०—ऊर्ध्वोऽप्रह्वः । शेषस्तु व्याख्यातः पूर्वाघारे । तत्राऽऽघारे धारायां चाऽऽदिसंयोग इति न प्र(वि)स्मर्तव्यम् ॥ १ ॥

यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्येत्युक्तम् ॥ २ ॥

भा० वृ०—जिह्मं तस्येत्युक्तं ब्राह्मणे । जिह्मो वक्रः । ऊर्ध्वमृजुरिति कर्तृवादः । ऊर्ध्वमाघार्य विच्छिन्द्यादिति ऊर्ध्वता जिह्मता च कर्तृविशेषणे तथा जिह्मः, यथा चोर्ध्वः, अवक्रो भवति तथा तिष्ठञ्जुहुयादित्यध्याहृत्य जिह्ममूर्ध्वमित्यवस्थानक्रियाविशेषणत्वात् कर्मनपुंसकत्वे ॥ २ ॥

सू० दी०—प्रमायुको मरणधर्मा । जिह्मं वक्रम् । ब्राह्मणप्रदर्शनमृजुत्वादरार्थम् ॥ २ ॥

ऊर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्य ॥ ३ ॥

भा० वृ०—स्पष्टम् ॥ ३ ॥

सू० दी०—ऊर्ध्वमाघार्य नाभिदेशादूर्ध्वमुद्गृहीतया स्रुचा धारामारभ्य मध्ये विच्छिन्द्यात् ॥ ३ ॥

व्यृषणवा ॥ ४ ॥

भा० वृ०—व्यृषण्वान्विकिरन्मनसा शत्रून्ध्यात्वोर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्येत्यत्र यजमानद्वेष्यं मनसा ध्यात्वा विकिरन्प्रशिथिलमाहुतिं जुहुयात् ॥ ४ ॥

सू० दी०—इत इतो विकिरन्वा धारां विच्छिन्द्यादित्यर्थः । णकारश्छान्दसः । यजमानस्याद्वेष्यत्वान्नैवं विच्छेत्तव्यमिति भावः ॥ ४ ॥

न्यञ्चं वृष्टिकामस्य ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—न्यञ्चं नाभिदेशान्नीचैः सत्या स्रुचाऽऽघारयेदित्यर्थः ॥५॥

द्वेष्यस्येत्येके ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—नीचैराघारो द्वेष्यस्य । तस्माद्वर्जनीय इत्येक इति भावः ॥ ६ ॥

ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहुयात् ॥ ७ ॥

भा०वृ०—स्पष्टार्थः ॥ ७ ॥

सू०दी०—पूर्ववदूर्ध्वं सर्वाहुतीनां मध्ये भूयिष्ठं च स्वर्गकामस्य जुहुयात् ॥ ७ ॥

अपि वा नाऽऽघारयेत्पूर्वार्धे मध्ये
पश्चार्धे वा जुहुयात् ॥ ८ ॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

सू०दी०—नाऽऽघारयेदित्याघारगुणप्रतिषेधः । दीर्घधारादिसंयोगादयो धर्मा न भवन्तीत्यर्थः ॥ ८ ॥

हुत्वाऽभिप्राणिति ॥ ९ ॥

भा०वृ०—अभिप्राणनमुपरिप्राणनमाघारस्य ॥ ९ ॥

सू०दी०—आघारस्योपरि श्वसिति ॥ ९ ॥

बृहद्भा इति स्रुचमुद्गृह्य पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्यसꣳस्पर्शयन्स्रुचौ प्रत्याक्रामत्येते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतः ॥१०॥११॥

भा०वृ०—एते एव मन्त्रवती भवतो नान्यत् । विधिस्तु सर्वत्रासंस्पर्शनमुक्त्वैते एव मन्त्रवती भवत इति नियमान्मन्त्रवर्जितस्य

क्रियाकलापस्य सर्वत्र प्राप्तिः। तदाघारार्थं प्राण आघार इति। स्रुचोः परस्परसंस्पर्शनमाघारार्थमेव। प्राण आघारः। यत्संस्पर्शयेदिति लिङ्गात्॥ १०॥ ११॥

सू० दी०—गतः॥ १०॥

सू० दी०—इत्थमन्यत्र मन्त्रपर्युदासात्ततोऽन्येषामाक्रमणप्रत्याक्रमणधर्माणां सार्वत्रिकत्वं स्पष्टीकृतं भवति। स्रुचोरसंस्पर्शननियमनं मन्त्रश्चात्रैवेष्यते। प्राण आघारः। यत्संस्पर्शयेदिति तन्निन्दार्थवादस्याऽऽघारसंयोगात्॥ ११॥

मखस्य शिरोऽसीति जुह्वा ध्रुवां द्विस्त्रिर्वा समनक्ति॥ १२॥

भा० वृ०—ध्रुवा समञ्जनस्य ध्रुवां समनक्तीत्युक्तेऽपि ध्रौवाज्यस्य समञ्जनम्। ज्योतिषा ज्योतिरङ्क्तामितिलिङ्गादाज्यस्यैव तैजसत्वाज्ज्योतिरिति गौणवादोपपत्तेः॥ १२॥

सू० दी०—ध्रुवेति ध्रुवास्थमाज्यं लक्ष्यते ज्योतिषा ज्योतिरङ्क्तामितिलिङ्गात्॥ १२॥

उन्नीतꣳ राय इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहेति जुहूमभिघार्य जुह्वोपादाय यज्ञेन यज्ञः संतत इति ध्रुवां प्रत्यभिघार्याऽऽयतने स्रुचौ सादयित्वा॥ १३॥

भा० वृ०—जुह्वोपादायेति च्छान्दसः। न च मन्त्रः पुनरुपादाने। मन्त्रानुपदेशात्। पुनरुन्नीतमित्युपदेश इति। जुह्वोपादायेत्यस्मिन्नपि वाक्येऽवश्यं पूर्ववाक्यस्थस्रुवाज्ययोरुपस्थानात्सहचारितस्य मन्त्रमात्रस्य निवृत्तिकारणाभावात्। उन्नीतꣳ राय इत्याज्योपादानार्थतया साधारणत्वाच्च॥ १३॥

सू० दी०— स्पष्टम्॥ १३॥

चतुर्दशी कण्डिका।

---

क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णोः स्थाने तिष्ठामीतीध्मसंनहनानि स्फ्य उपसंगृह्य वेद्याश्च तृणमव्यन्तमादायोत्तरतः प्रवरायावतिष्ठेते पूर्वोऽध्वर्युरपर आग्नीध्रः ॥ १ ॥

भा० वृ०—क इदमित्यवस्थानमन्त्रास्तिष्ठामीति लिङ्गात् । इध्मसंनहनानि स्फ्ये गृहीत्वा वेद्याश्च तृणमव्यन्तमविगतान्तं मध्यवर्त्यसंबन्धं तस्य प्राच्यावनं वेद्यां तृणमपिसृजतीति लिङ्गाद्वेदिमध्यात्तृणमसंस्पृष्टमुपादाय वेद्यां तृणमपिसृजतीति प्रक्षेपविधानान्न मुच्यते वेद्या इत्युपदेशः । अपिसृजतीति हस्तविमोचनमात्र(मंत्र)तयाऽप्युपपत्तेः । वेद्या उत्तरतः प्रवरायात्रस्थानं वेद्या इति प्रकृतत्वान्न विहारमात्रस्योत्तरतः । वरुणप्रघासेषु प्रतिप्रस्थातुर्न प्रवरोऽध्वर्युणाऽनृतत्वात्प्राभ्रियमाणस्य चैकत्वात् ॥ १ ॥

सू० दी०—जुह्वो जुह्वाः । उपसंगृह्योपश्लेष्य । अव्यन्तं वेद्या अविगतमन्तं वेद्यन्तस्थूलमिति यावत् । वेद्या अविगतान्तं वा । उत्तरतो वेद्या एवोत्तरतः । तत्रोत्तरत उत्कर इति तु भारद्वाजबौधायनौ । प्रवराय प्रवरं वक्तुं तिष्ठति तल्लिङ्गत्वान्मन्त्रस्य । व्यवहितेनाप्यवतिष्ठेते इत्यनेनान्वयः ॥ १ ॥

इध्मसंनहनान्याग्नीध्रोऽन्वारभ्य क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीतिमन्त्रꣳ संनमति ॥ २ ॥

भा० वृ०—स्पष्टम् ॥ २ ॥

सू० दी०—इध्मसंनहनान्येवाऽऽग्नीध्रोऽन्वारभते न स्फ्यतृणे ॥ २ ॥

ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामीति ब्रह्माणमामन्त्र्याऽऽश्रावयो श्रावय श्रावयोमाश्रावयेति वा श्रावयति ॥ ३ ॥

भा० वृ०—आश्रावणादिषु प्रथमद्वितीययोः स्वरयोस्त्रिमात्रत्वम् ।

श्रावयेत्यत्रापि श्रावय आवह पूर्वस्येति भरद्वाजवचनात् । अस्य सूत्रस्यार्थः-वहशब्दे परतः पूर्वस्याकारस्य प्लुतिः । वयशब्दे च परतः पूर्वस्य आशब्दस्य प्लुतिः । पूर्वस्येति प्रथमस्याकारौकारादेश्च प्लुतिः । ब्रूहिप्रेष्यादीनां व्याकरणसिद्धा प्लुतिः । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरिति ॥ ३ ॥

सू०दी०—अत्र तृतीयो निगदस्त्र्यक्षरश्चतुर्थः प्रणवादिः । तेषु चाऽऽग्नयोरग्नीत्प्रेषणे परस्य चेति प्रथमद्वितीयावचौ प्लुतेते नान्यत्र । तावेवोदाहृत्यात्रैवायं प्लुत इष्यत इति नियमात् । केचित्तु चतुर्थेऽपि प्रणवादुत्तरौ प्लावयन्ति प्रथम एव निगदः प्रणवाधिक इति कृत्वा ॥ ३ ॥

**अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन्स्फ्यꣳ संमार्गाꣳश्च धारयन्प्रत्याश्रावयति ॥ ४ ॥**

भा०वृ०—इहापि प्रत्याश्रावणं दक्षिणामुखस्येति । प्रवरायात्रस्थाने पूर्वोऽध्वर्युरपर आग्नीध्र इति नियमाद्दक्षिणेन पाणिना दक्षिणमंसमध्वर्योरित्यादि होतुः स्पर्शनाज्ञनस्य थोदङ्मुखयोरवस्थानं प्राप्तमत इहापि प्रत्याश्रावणे दक्षिणामुखत्वं प्रतिपाद्यते अपरेणोत्करं दक्षिणामुखस्तिष्ठन्नित्यविशेषेण चोदितत्वात्तथावस्थितयोरेव होतुरंसस्पर्शो यथा भवति तथा कुर्यात् ॥ ४ ॥

सू०दी०—संमार्गा इध्मसंनहनानि । तेषां स्फ्यस्य च धारणं प्रवरादन्यत्रेति द्रष्टव्यं प्रवरे तेषामध्वर्युणा धृतत्वात् । श्रौषडित्यौकारं प्लावयति ॥ ४ ॥

**आग्नीध्रे सोमे ॥ ५ ॥**

भा०वृ०—अस्यार्थः-आग्नीध्रे सोमे दर्शपूर्णमासविकाराणामपि ॥ ५ ॥

सू०दी०—सोमे त्वाग्नीध्रागारे तिष्ठन् ॥ ५ ॥

**सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः ॥ ६ ॥**

भा०वृ०—यथेह प्रयुक्ते तथा सर्वत्रेति आश्रावयेत्यादिषु वैकल्पिकपक्षेष्विहानुष्ठितपक्ष एव तथा प्रत्याश्रावणप्रयोगोक्त एव सर्वत्र ॥ ६ ॥

सू०दी०—आश्रुतमाश्रावणम् ॥ ६ ॥

इति पञ्चदशी कण्डिका ।

---

इति चतुर्थः पटलः ॥

---

अनपव्याहरन्तः प्रचरन्ति ॥ १ ॥

भा०वृ०—अनपव्याहरन्त इति अन्यवचनप्रतिषेधः सयजमानानाम् । यजमानस्यापि प्रचरणकर्तृत्वात् । केचिच्चतुर्णामृत्विजामिति नान्यथाऽऽग्नीध्रः प्रत्याश्रावणादिषु ऋत्विजामेव त्रयाणां संकीर्तनाद्ब्रह्मणोऽपि सर्वकर्मसु वाग्यमनादिना कर्तृत्वाच्चतुर्णामेव । चत्वार ऋत्विज इत्यत्र संख्याग्रहणं बहुवचनचोदनासु चतुर्णामेव ग्रहणं यथा स्यादित्युक्तत्वाच्च । प्रचरणमवदानग्रहणादीज्यान्तं न कृत्स्नप्रयोगः । वपया प्रचर्य पुरोडाशेन प्रचरतीति दर्शनात् । केचित्सर्वमिति कृत्स्नप्रयोग इत्यर्थस्तद्दूषणं तेषामनर्थकमिडायां वाग्यमनविधानमिति अनपव्याहरन्त इत्यनेनैव सिद्धत्वादपव्याहारे कृते यदुक्त इति प्रायश्चित्तं प्राप्तं पुनरारम्भ एतेषु निमित्तेषु कालेषु प्रायश्चित्तान्तरविधानार्थमिति ॥ १ ॥

सू०दी०—मन्त्रादन्यस्य वचनमपव्याहारः । तमवदानाद्यामदानान्न कुर्युः सर्वे प्रचरितारः । एतदेव प्रपञ्चयति ॥ १ ॥

आश्रावयिष्यन्नान्यदाश्रावणाद्ब्रूयादाश्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात् । प्रत्याश्राविते नान्यदध्वर्युर्यजेति वचनाद्यजेत्युक्ते होता नान्यद्वषट्कारात् ॥ २ ॥

भा०वृ०—आश्रावयिष्यन्नित्याद्यारम्भो यद्यन्यद्ब्रूयादित्यादि नैमित्तिकविधानार्थं नान्यद्वषट्कारादिति याज्यया सह ॥ २ ॥

सू०दी०—गतः ॥ २ ॥

यद्यन्यद्ब्रूयात्पुनरेवाऽऽश्रावयेत् ॥ ३ ॥

भा०वृ०—सर्वमाश्रावणादि पुनः पुनरेवाऽऽश्रावयेदित्याश्रावण-

ग्रहणं प्रदर्शनार्थमाश्रावणादिवषट्कारान्तस्याऽऽश्रावणमात्रेण कार्यासिद्धेः ॥ ३ ॥

सू०दी०—यद्येतेषां कश्चिदपव्याहरेत्पुनरेवाऽऽश्रावणादि सर्वमावर्तयेत्। तत्राऽऽश्रावणमात्रवचनं तस्मिन्नुक्त इतरेषामर्थसिद्धत्वाभिप्रायम् ॥ ३ ॥

व्याहृतीर्वा जपेत् ॥ ४ ॥

भा०वृ०—व्याहृतिजपो हि प्रेषकर्तुरपव्याहरणकर्तुः ॥ ४ ॥

सू०दी०—अपव्याहृत्येति शेषः ॥ ४ ॥

ऊर्ध्वज्ञुमासीनं होतारं वृणीतेऽग्निर्देवो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः ॥ ५ ॥

त्रीन्यथार्षि मन्त्रकृतो वृणीते ॥ ६ ॥

अपि वैकं द्वौ त्रीन्पञ्च ॥ ७ ॥

न चतुरो वृणीते न पञ्चातिप्रवृणीते ॥ ८ ॥

भा०वृ०—वरणस्य पुनस्त्रित्वविधानाद्द्विपितुरपि त्रय एव व्रियन्ते न चतुरो न षट् त्रीन् वृणीत इति प्रवरपाठतः सिद्धेऽपीह पुनर्वचनात्। एक एकतो द्वावेकतः प्रविष्टकुल एको व्रियते जन्मकुले द्वाविति त्रिवरणपक्षे। यदि पञ्च द्वावेकतस्त्रय एकत इति पञ्चवरणपक्षे यथर्षीति पुनर्वचनं पञ्चानामपि प्रवरणार्थमेदं निरूपणीयमार्षेयं वृणीते बन्धोरेव नैतीति यजमानस्याऽऽर्षेयं वृणीत ऊर्ध्वज्ञुमासीनꣳ होतारं वृणीत इति। तथा त्रयो वा अग्नय इत्यारभ्य य एव देवानां तं वृणीत इति। तथाऽग्निर्देवो होतेति य एव देवानां तमवृणीतेत्यादिभिर्निर्देशैर्यजमानस्याऽऽर्षेयवरणं होतृवरणमाग्निवरणं च प्रतीयत इति विरुद्धमिव इह .तेऽतः कस्यात्र वरणमित्यत्रोच्यते—हव्यवाहनोऽग्निराहवनीय आर्षेयशब्देनोच्यते यजमानेन जनितत्वाद्धोत्राभिधानमतश्च यजमानार्षेयेणाग्नेर्वरणं प्रधानार्थमाग्नेयो वै होताऽग्निर्मे होताऽग्निर्होतेति च होतुरप्यग्निदैवतत्वादाग्निरूपेण होतुर्वरणमतो यजमानार्षेयेण

गोत्रेण होतुर्वरणमध्वर्युणा कर्तव्यं होत्रा तु यजमानार्षेयेणाग्नि-वरणमग्ने महाँ असीत्युपक्रम्याऽऽनिगदसमाप्तेरग्न्यभिधानपर त्वात्प्रवरणानिगदान्तं चाऽऽत्राह्नाङ्गत्वादाहवनीयस्य च वृणीध्वं हव्यवाहनमिति हविर्वोढृत्वेनाऽऽहवनीयाग्नेर्यजमानार्षेयत्वेन वरणं तत्संबन्धितया च होतुर्वरणम्। पञ्चानां वरणपक्षे द्वावेकत इत्यत्रोदाहरणप्रदर्शनम्। शुङ्गशैशिरिदर्शनादिति द्व्यामुष्यायणीयोदाहरणं भरद्वाजाः शुङ्गाः कताः शैशिरय इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

सू०दी०—देवहोतृरूपेण स्वरूपेण च मानुषस्य होतुर्वेज्याप्रार्थनं वरणमग्निर्देवो होतेत्यादिमन्त्रलिङ्गात्। ब्राह्मणे च य एव देवानां होता तं वृणीत इति स्तवनात्, पशुसोमयोर्दैवं च मानुषं च होतारौ वृत्वेति वचनाच्च। यथाऽऽर्षेयः, यस्य यजमानस्य यः प्रवरः प्रवरकाण्डे दर्शितस्तस्य तत्रोक्तानुपूर्वीमनुवदमुवदिति कार्त्स्न्येन्होतारं वृणीते यावन्तः स्युरिति। यथा जमदग्निवदौर्ववद्भृगुवदित्यादि ॥ ५ ॥

सू० दी०—यस्य यजमानस्य य ऋषयो गोत्रऋषित्वेनोपाख्यायन्ते मन्त्रकृतश्च तांस्त्रीन्वृणीते कीर्तयतीत्यर्थः। अत्र चाविशेषेण त्रीन्वृणीत इति वचनात्पञ्चार्षेयस्यापि त्रयाणामेव वरणम्। एकद्व्यार्षेययोस्तु त्रयाणामभावान्निवृत्तिरेवाऽऽर्षेयवरणस्याऽऽपन्ना। तत एव च हेतोः कर्मण्येवानधिकारस्तयोरित्यन्ये। यत्त्वेकं वृणीते द्वौ वृणीते त्रीन्वृणीत इति तदपि त्रित्वविधेरेवात्रयुत्यानुवादं मन्यन्ते। तथा चात्र्यार्षेयस्याहानं स्यादिति मीमांसकाः ॥ ६ ॥

सू० दी०—अपि वा यथासंभवं मन्त्रकृतो वृणीते। एकमेकार्षेयो द्वौ द्व्यार्षेयस्त्रींस्त्र्यार्षेयः पञ्च पञ्चार्षेय इति। तथा चाऽऽश्वलायनः—यजमानस्याऽऽर्षेयान्प्रवृणीते यावन्तः स्युरिति ॥ ७ ॥

सू०दी०—तत्र चतुर्ऋषिसंभवे पञ्चभ्योऽधिकर्षिसंभवे च न तेषां वरणमित्यर्थः। अथवाऽत्रैकं द्वौ त्रीन्पञ्चेति नियतविधानादेव संख्यान्तरस्याप्राप्तेर्द्व्यामुष्यायणविषयः प्रतिषेधः। तस्य हि गोत्रद्वयव-

रणाच्चतुःषडादिवरणं प्राप्नोति। यथाऽऽह सत्याषाढः— द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादिति। कथं तर्ह्यस्य वरणमिति चेत्तत्तु प्रवरे दर्शयिष्यते। अथ द्व्यामुष्यायणानां कुलानामिति। आश्वलायनश्चाऽऽह–तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतो द्वौ वेतरतस्त्रीनितरतः। नहि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणमिति ॥ ८ ॥

इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता ॥ ९ ॥

भा० वृ०—स्पष्टम् ॥ ९ ॥

सू०दी०—इतः प्रवरादारभ्यामुतः परस्तादारभ्य। तच्चोभयं प्रवरेषूदाहरिष्यति ॥ ९ ॥

पुरोहितस्य प्रवरेण राजा प्रवृणीते ॥ १० ॥

भा०वृ०—ब्राह्मणस्यापि राज्यप्राप्तस्य पुरोहितप्रवर एव पुनर्विधानात्प्रवरपाठसिद्धस्यापीह पुनर्वचनाद्राज्यकर्तृत्वमात्रनिमित्तमेव पुरोहितप्रवरेण वरणं न कुलोत्पन्नस्य गोत्रस्य ॥ १० ॥

सू०दी०—प्रवरणकाण्डपठितानामेव विधीनामिहोपदेश आदरार्थो द्रष्टव्यः ॥ १० ॥

ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति प्रवरशेषमाह ॥ ११ ॥

भा०वृ०—ब्रूयादित्यर्थः ॥ ११ ॥

सू०दी०—प्रवरशेषः—प्रवरनिगदस्य शेषः ॥ ११ ॥

अपि वा नाऽऽर्षेयं वृणीते। मनुवदित्येव ब्रूयात् ॥ १२ ॥

भा०वृ०—स्पष्टार्थः ॥ १२ ॥

सू०दी०—इदं च संनिहितराजन्यविषयम्। अपि वा यथोक्तं प्रवरं न वृणीते किंतु तत्स्थाने मनुवदित्येतावद्ब्रूयात् ॥ १२ ॥

सीदति होता ॥ १३ ॥

भा० वृ०—होतैव सीदति न मैत्रावरुणो व्रियमाणो होतृकार्यापन्नोऽपि पश्चाविति। ऊर्ध्वञ्चुमासीनं होतारं वृणीत इति प्रकृतेऽपि

होतरि सीदति होतेति पुनर्वचनाद्धोतैव सीदति न मैत्रावरुणः पशौ ॥ १३ ॥

सू० दी०—होतुरासनकालविकल्पार्थं वचनम् । आसीनं वा होतारं वृणीते वृतो वाऽत्र काले निषीदति ॥ १३ ॥

होतुरुपांशु नाम गृह्णाति मानुष इत्युच्चैः ॥ १४ ॥

भा० वृ०—स्पष्टम् ॥ १४ ॥

सू० दी०—गतः ॥ १४ ॥

वेद्यां तृणमपिसृजति ॥ १५ ॥

भा० वृ०—स्पष्टम् ॥ १५ ॥

सू० दी०—यदव्यन्तमवाचं तृणं तत्प्रत्यपिसृजति ॥ १५ ॥

इति षोडशी कण्डिका ।

---

घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽपरेणाऽऽघारसंभेदं पञ्च प्रयाजान्प्राचो यजति ॥ १ ॥

भा० वृ०—प्रयाजाङ्गं घृतवति शब्द इति पशौ वक्ष्यति । आघारयोः संगम आघारसंभेदस्तमपरेण प्राचः प्रागपवर्गान्प्रयाजान्यजतीत्यर्थः ॥ १ ॥

सू० दी०—घृतवति शब्दे घृतवदिति शब्दे । अथवा घृतशब्दवति घृतवतीमित्यस्मिञ्शब्द उक्त इत्यर्थः । यथा यद्घृतवत्पदमनूच्यत इति । सकृदतिक्रान्तो न तु प्रतिप्रयाजम् । आघारसंभेद आघारयोर्व्यतिषङ्गदेशः । प्राचः प्रागपवर्गान् ॥ १ ॥

प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये ॥ २ ॥

भा० वृ०-प्रतिदिशमपीत्यपरेणाऽऽघारसंभेदामितिदेशानियमात्प्रति-

दिशश्चक्ष उत्तमोऽप्याघारसंभेदस्य पश्चान्मध्ये यदाऽऽघारावृजू प्राञ्चौ तदा संभेदाभावेऽपि पश्चाद्भाग एव देशलक्षणत्वात्सर्वत्र ॥ २ ॥

सू० दी०—प्रतिदिशं वा यजत्यपरेणैवाऽऽघारसंभेदम् ॥ २ ॥

सर्वान्वैकध्यम् ॥ ३ ॥

भा० वृ०—ऐकध्यमित्यपरेणाऽऽघारसंभेदमेकस्मिन्देशे सर्वान्प्रयाजान्यजति ॥ ३ ॥

सू० दी०—ऐकध्यमिति ध्यमुक्तो रूपमेकधैकस्मिन्देश इत्यर्थः । अपरेणाऽऽघारसंभेदमित्येव ॥ ३ ॥

आश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं संप्रेष्यति । यज यजेतीतरान् ॥ ४ ॥

भा० वृ०—आश्रावमाश्रावमित्यस्यार्थः—आश्राव्याऽऽश्राव्येति । न पुरोनुवाक्यासंप्रैष इति सर्वत्रावद्यन्नमुष्मा अनुब्रूहीति पुरोनुवाक्यासंप्रैषस्य प्राप्तत्वादाश्रावमाश्रावमिति पुरोनुवाक्यासंप्रैषनिवृत्त्यर्थम् । प्रथमं प्रयाजं प्रति समिधो यजेति प्रथमं संप्रेष्यतीति । न प्रथमयागं प्रति प्रेष्यतीति संबन्धः, कर्मणः प्रैषाभावादतः प्रथममिति प्रथमप्रयाजं प्रतीति संबन्धः । यज यजेतीतरानित्यत्रापीतरान्प्रतीति संबन्धः ॥ ४ ॥

सू० दी०—प्रथमं संप्रेष्यति प्रथमं प्रयाजं प्रति होतारं संप्रेष्यतीत्यर्थः । इतरानित्येवमेत्र योज्यम् । ननु किंदेवत्याः प्रयाजाः । तत्राऽऽह बौधायनः—ऋतुदेवताः खलु प्रयाजा भवन्तीति । मन्त्रवर्णाश्च भवन्ति । तथा वसन्तमृतूनां प्रीणामीत्यादिब्राह्मणाच्च ॥ ४ ॥

यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं न वसीयान्न पापीयानिति समानत्र तिष्ठन् ॥ ५ ॥

भा० वृ०—अभितरं सुष्ठुतरं वसीयान्वसुमत्तरः श्रेष्ठधनवान्वा । अभिक्राममभिक्रम्याभिक्रम्याग्निसमीपं नित्ये कामोऽभिक्रा-

जुहोतीति नित्यवद्वचनान्नित्यानुष्ठानेऽपि फलकामः फलसाधनत्वं नित्याधिकारप्रयुक्तस्याप्यवतरमपकृष्टतरं पापीयान्दरिद्रो वसीयः-प्रतियोगित्वात् । किंच पुनरेवैनं वामं वसूपावर्तत इति पापीयानि-तिशब्दस्य दरिद्रवचनत्वे लिङ्गम् । यः पुरा भद्रः सन्पापीया-न्स्यादित्यादिना पापीयस्त्वपरिहारनिर्देशे वामं वसूपावर्तत इति निर्देशात्सर्वत्रैवं पापिष्ठो वा पूर्वस्मिन्पक्षे नात्यन्तनिषेधोऽस्मि-न्पक्षे प्रतिषेध एव । प्रतिक्रामं प्रतिनिवृत्याऽऽहवनीयस्य दक्षिण-पार्श्वे आराददूरं गत्वा न वसीयान्न पापीयानिति मध्यवर्तिकाम-नायां समान आहवनीयस्य दक्षिणपार्श्वे एकत्र स्थितः प्रयाजा-न्यजतीत्यर्थः ॥ ५ ॥

सू०दी०—अभितरं सुतराम् । वसीयान्पुष्टः । अभिक्रामं प्रतिप्रयाजं किंचिदन्तरमग्निमभिक्रम्याभिक्रम्य । अवतरमवकृष्टतरम् । पापी-यान्दरिद्रः । यः पुरा भद्रः सन्पापीयान्स्यात्स पुनर्वस्वोरऽग्निमा-दधीत पुनरेवैनं वामं वसूपावर्तते भद्रो भवतीति लिङ्गात् । तथा तस्माच्छ्रेयांसं पापीयान्पश्चादन्वेतीति लिङ्गाच्च । प्रतिक्राम-मग्नेः प्रतीपं क्रान्त्वा । समानत्र तिष्ठन्नुभयथाऽप्यक्रामन्नेकत्र स्थितः ॥ ५ ॥

त्रीनिष्ट्वाऽर्धमौपभृतस्य जुह्वामानीयोत्तराविष्ट्वा प्रत्या-क्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारय-त्युपभृतमन्ततः ॥ ६ ॥

भा०वृ०—समानयनं बर्हिःस्वाहाकारार्थं चतुर्थाष्टमयोरिति लिङ्गा-दिति । पशौ चतुर्थाष्टमयोः प्रतिसमानीयेत्युत्तरयोर्विकारेषु विभज्य समानयनविधानं प्रयाजाज्यशेषेणाऽऽज्यस्थाल्या अभि-घारणं नान्तर्वेदि गृहीतस्य प्रतीचीनं हरन्तीति वचनात्स्थालीगता-ज्यस्यापराग्निहोमानामपि साधनत्वादुपभृतमाज्यमन्ततः प्रयाजा-ज्यशेषेण हवींष्यभिघारयतीति प्राप्तस्याभिघारणस्योपभृतमन्तत इति क्रमविधानात् । उपदेशस्तु पशावाज्याभावेऽपि नोपभृतमिति निषेधात्केवलमपि पात्रमभिघारयत्यतो नानूयाजे प्रायणीयेऽप्यु-पभृतोऽभिघारणम् ॥ ६ ॥

सू०दी०—अत्रापि ध्रुवामुपभृतमित्याज्यलक्षणा पशौ नोपभृतमिति लिङ्गात्। हवींष्युत्पत्तिक्रमेणाभिघारयति॥ ६॥

न हवींष्यभिघारयेद्द्वेष्यस्याऽऽयतने स्रुचौ सादयति॥७॥

भा०वृ०—स्पष्टम्॥ ७॥

सू०दी०—गतौ॥ ७॥

इति सप्तदशी कण्डिका।

---

इति पञ्चमः पटलः॥

---

आग्नेयः सौम्यश्चाऽऽज्यहविषावाज्यभागौ चतुर्गृहीताभ्याम्॥ १॥

भा०वृ०—आज्यभागाविति कर्मनामधेयम्॥ १॥

सू०दी०—आज्यभागौ नामकर्मणी। तावाज्यहविष्कौ चतुर्गृहीताभ्यां चाऽऽज्याभ्यां कार्यौ॥ अथाऽऽज्यभागप्रसङ्गात्सर्वान्दर्विहोमसाधारणान्धर्मानाह॥ १॥

जमदग्नीनां तु पञ्चावत्तमप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत सर्वत्र॥ २॥

भा० वृ०—पञ्चावत्तं सर्वत्र वषट्कारप्रदानेषु प्रधानेष्विति। अप्यजामदग्न्य इत्यादि सर्वत्रैवमन्तमेकं सूत्रं विकल्पेन सर्वेषां शास्त्रान्तरसिद्धं पञ्चावत्तिनां विनाऽऽर्ष्टिषेयाणां च जामदग्न्यप्रवरयोगेन (ण) पञ्चावत्तमिति जमदग्निपुरोहितप्रवराणां राज्ञां वा सर्वत्रेति॥ २॥

सू० दी०—यत्र यत्र चतुरवत्तचोदना तत्र जमदग्निगोत्राणां पञ्चावत्तं भवति। यथा यच्चतुरवत्तं जुहोतीत्यादौ। अजामदग्न्योऽपि पञ्चावत्तमिच्छञ्जामदग्न्यमनुज्ञाप्य पञ्चावत्तं कुर्वीत। सार्वत्रिक-

मिति वक्ष्यमाणेनैव सिद्धे सर्वत्रेति वचनमसंदेहार्थम् । केचित्तु सर्वत्रेति वचनाद्दर्विहोमेष्वपि चतुर्गृहीतवत्सु पञ्चगृहीतमिच्छन्ति । तदयुक्तमदर्विहोमाधिकारात् । तथाऽऽहुतीः प्रकृत्य याज्यापुरोनुवाक्यावतीषु चतुरवत्तपञ्चावत्ते पञ्चावत्तं जमदग्नीनां चतुरवत्तमितरेषां गोत्राणामिति सत्याषाढादिभिर्व्यक्तवचनाच्च । तस्माद्दर्विहोमेषु चतुर्गृहीतचोदनायां पञ्चावत्तिनोऽपि चतुर्गृहीतमेव भवति न पञ्चगृहीतम् । अग्निहोत्रे तु वचनाद्भवति ॥ २ ॥

अवद्यन्नमुष्मा अनुब्रूहीति पुरोनुवाक्यां संप्रेष्यति । अवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्याऽऽश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकम् ॥ ३ ॥

भा० वृ०—वषट्कारप्रदानेषु प्रधानेष्वेव पुरोनुवाक्यादिसाहचर्यात्प्रधानेष्ववद्यन्नमुष्मा अनुब्रूहीतीन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति लिङ्गात्प्रधानयागे सिद्धवदनुवादादैन्द्रस्यावद्यन्नूब्रूयादिन्द्रायानुब्रूहीति श्रुतेश्च । वषट्कारप्रदानेषु प्रधानेषु विकल्प्यते । उपदेशो वषट्कारवदङ्गेषु । प्रधानेषु प्रत्यभिघारणान्तमेव कृत्वाऽनुब्रूहीति प्रत्यभिघारणकालोत्तरविधानात्प्रत्यभिघारणान्तं कृत्वाऽनुब्रूहीति प्रैषः । आप्यायनं कृत्वा प्रस्तरबर्हिःसमञ्जनं वषट्कारप्रदानप्रधानेषु न दर्विहोमेष्वाश्रुतप्रत्याश्रुतादिसंबन्धात् । उपदेशो दर्विहोमेष्वपीत्यवदायावदायेत्यविशेषवचनात् ॥ ३ ॥

सू० दी०—अवद्यन्नवदाने प्रक्रान्त इत्यर्थः । जुह्वामुपस्तीर्य सोमाय पितृमतेऽनुस्वधेति संप्रेष्यतीति लिङ्गात् । आप्याय्य ध्रुवां प्रस्तरबर्हिषी समनक्ति । याज्यां संप्रेष्यतीत्यन्वयः । तदर्थं होतारं संप्रेष्यतीत्यर्थः ॥ ३ ॥

उत्तरार्धपूर्वार्धेऽग्नये जुहोति ॥ ४ ॥

भा० वृ०—स्पष्टम् ॥ ४ ॥

सू० दी०—गतः ॥ ४ ॥

दक्षिणार्धपूर्वार्धे सोमाय समं पूर्वेण ॥ ५ ॥

भा० वृ०—स्पष्टम् ॥ ५ ॥

सू० दी०–यत्र हुतः पूर्वेणाऽऽज्यभागेन दक्षिणमिव चक्षुः सव्येन समो भवति तत्र जुहोति ॥ ५ ॥

उभे ज्योतिष्मति ॥ ६ ॥

भा० वृ०–ज्वलत्यग्नौ जुहोतीत्यर्थः ॥ ६ ॥

सू० दी०–उभे एते आहुती सार्चिष्यग्नौ जुहोति । न वक्ष्यमाणाहुतिवद्गतार्चिषीत्यर्थः ॥ ६ ॥

पूर्वमाज्यभागं प्रति स्रुचावात्ते न निदधात्या स्विष्टकृतः ॥ ७ ॥

भा० वृ०—अनाज्यभागेऽपि पशौ स्रुचौ न स्थाप्येते स्वकालोऽस्तीति स्रुग्धारणस्योपरितनकर्माङ्गत्वादाज्यभागकाले धारणमेव विवक्षितम् ॥ ७ ॥

सू० दी०—आज्यभागं प्रति तत्काले । ततश्चाऽऽत्तायामेव स्रुचि प्रकृतौ प्रधानावदानदर्शनादनाज्यभागेऽपि पशुप्रायणीयादावस्मिन्काले स्रुचावादीयेते ॥ ७ ॥

आज्यभागावन्तरेणेतरा आहुतीर्जुहोति ॥ ८ ॥

भा० वृ०—आज्यभागावन्तरेण वषट्काराहुतीः सर्वाः । आघारसंभेदेन सह विकल्पः । आघारसंभेदनाऽऽहुतीः प्रतिपादयतीत्यनेन सह विकल्पः प्रधानसंनिधौ पाठात् । व्यवस्थितोऽयं विकल्पः । आघारसंभेदाभाव आज्यभागावन्तरेण ऋजू प्राञ्चौ होतव्यावित्यादिपक्षे केचिदर्विहोमाहुतीराज्यभागावन्तरेणाऽऽघारसंभेदे वषट्काराहुतीरिति व्यवस्थया नित्यवदन्वये संभवति न विकल्पेन पाक्षिकान्वयो युक्त इति वर्णयन्ति ॥ ८ ।

सू० दी०—आज्यभागदेशयोर्मध्य एवेतरा दर्विहोमाहुतीर्जुहोति न बहिस्ताभ्याम् । अदर्विहोमाहुतीनां तु देशो वक्ष्यते ॥ ८ ॥

प्रत्याक्रम्य जुह्वामुपस्तीर्य मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् । भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिꣳसीरित्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीनमवद्यति । पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः पश्चार्धात्तृतीयं पञ्चावत्तिनः ॥ ९ ॥

भा० वृ०—अवदानानीति जात्यभिधानं मा भूत्प्रकरणोपरोध इति । अवदानानि ते यदवदानानीति बहुवचनं जात्याख्यायामेकस्मिन्बहुवचनमतोऽवदानद्वित्वेऽपि न निवर्तते प्रकृत्यर्थान्वयसंभवात्पाशमन्त्रवत्संख्यावचनस्याविवक्षा । चतुरवत्तिनामवदानैकत्वेऽपि नोह्यते पिञ्ज्यायामत एकस्मिन्सर्वावदानार्थं सकृदेव मन्त्रप्रयोगस्तिरश्चीनं दक्षिणाग्राभ्यामङ्गुलीभ्यामनूचीनं प्रागग्राभ्यां पश्चार्धात्तृतीयं प्रागग्राभ्यामेव ॥ ९ ॥

सू० दी०—अङ्गुष्ठपर्वाङ्गुष्ठस्योत्तमं काण्डम् । तिरीचीनं तिरश्चीनं तिर्यग्भिरङ्गुल्यङ्गुष्ठैरिति यावत् । अनूचीनं प्राचीनं प्रागायतैरङ्गुल्यङ्गुष्ठैर्द्वितीयं तृतीयं चेत्यर्थः । तयोस्तु नावदानमन्त्रस्याऽऽवृत्तिरपादानद्रव्याभिधायित्वात्तदेकत्वाच्च । न चावदानद्वित्वे निवर्तते जात्याख्यायां बहुवचनात् ॥ ९ ॥

असंभिन्दन्माꣳससꣳहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्यति ॥ १० ॥

भा० वृ०—असंभिन्दन्यथा द्वयोरवदानयोरसंगमोऽसंसर्गो देशयोर्यथा भवति मांससंहिताभ्यामिति मध्यमाभ्यामङ्गुलीभ्यां तयोरुभयतोऽङ्गुलिसंश्लेषात् ॥ १० ॥

सू० दी०—उत्तरे व्याख्यास्यते ॥ १० ॥

इत्यष्टादशी कण्डिका ।

---

स्रुवेणाऽऽज्यसांनाय्ययोः ॥ १ ॥

भा० वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—असंभिन्दन्नवदानदेशावसंकिरन् । द्वयोरवदानदेशयोर्मध्ये कियांश्चिद्देशः स्थाप्यत इत्यर्थः । मांससंहिताभ्यामनखसंहिताभ्यामङ्गुष्ठेन चानेन च स्रुवेणावद्यति । हस्तेनावद्यतीत्यविशेषचोदितौ स्रुवहस्तौ द्रवकाठिनयोर्हविषोः सामर्थ्यान्नियम्येते । तेन सांनाय्यविकारेऽपि वपादौ हस्त इष्यते । पुरोडाशविकारेऽपि यवाग्वादौ स्रुवः ॥ १ ॥

आनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यात् । मध्यादपरमवदाय पश्चार्धे स्रुचः ॥ २ ॥

भा०वृ०—आनुजावरोऽगुरोर्योऽनुगामी तस्य नैमित्तिकमनुजस्यावरोऽगुरुमनुजमनुगमनादिना विद्याधनादिभिरुपजीवति यो ज्येष्ठः स आनुजावरः ॥ २ ॥

सू०दी०—योऽल्पतेजस्त्वात्समानजातीयानामनुगन्ता भवति स अनुजावरः । प्रजापतिरिन्द्रमसृजताऽऽनुजावरं देवानामित्यनुवाके तथाऽवगमात् । तस्य चाग्रगमनं परीप्सतोऽयं विधिः । इन्द्रो वै देवानामानुजावर आसीदिति प्रकृत्याऽऽनुजावरस्य विधिमुक्त्वा स एवैनमग्रं समानानां परिणयतीति फलाम्नानादश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामिति प्रकृत्य तावेवैनमग्रं परिणयत इति श्रवणाच्च । तस्मात्काम्य एवायं कल्पः ॥ २ ॥

पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् ॥ ३ ॥

भा०वृ०—ज्यैष्ठिनेयो ज्येष्ठायाः पुत्रः । ज्येष्ठस्येति ज्यैष्ठिनेयस्य विशेषणम् । प्रथमज्येष्ठो न मृतज्येष्ठः ज्येष्ठशब्दस्यातिशयवचनात्कनिष्ठप्राप्तिरहितज्येष्ठवचनत्वं युक्तम् । न स्त्र्यपत्येन स बाध्यते । एकपुत्रो ज्येष्ठपुत्र एव तस्य गतश्रियश्च पूर्वार्धात्प्रथमान्यवद्येत् ॥ ३ ॥

सू०दी०—ज्येष्ठा प्रथमोढा भार्या तस्याः पुत्रो ज्यैष्ठिनेयः। तस्य प्रथमजस्य गतश्रियश्च पूर्वार्धात्प्रथमान्यवदानान्यवद्येदिति नैमित्तिको विधिः॥ २॥

अपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽनुजावरो यो वा बुभूषेत्॥ ४॥

भा०वृ०—कानिष्ठिनेयः पश्चात्परिणीतायाः पुत्रः। कनिष्ठस्येति कानिष्ठिनेयस्य विशेषणम्। अन्त्यकनिष्ठः, न मृतकनिष्ठः। न ह्यपत्येन स बाध्यते। यो वाऽनुजावर इति काम्यं यस्तस्मात्प्रच्युतिमिच्छति नैमित्तिकं पूर्वमुभे वा विकल्पेते। अनुजोपजीवित्वान्निवृत्तिमिच्छति नैमित्तिकं पूर्वमिति अनुजावरस्य पूर्वार्धात्प्रथममित्येतदनुजोपजीवित्वं निमित्तेन नैमित्तिकमुभे वा विकल्पेते नैमित्तिकत्वादुभयोः काम्यत्वेऽप्युभयोरविशेषाद्विकल्प एव॥ ४॥

सू०दी०—अत्राऽऽद्यपक्षो नैमित्तिकः—उत्तरौ काम्यौ मध्यमश्च पूर्वेणानुजावरकल्पेन विकल्पते। कानिष्ठिनेयो ज्यैष्ठिनेयेन व्याख्यातः। बुभूषेद्भवितुमिच्छेद्भूतिकाम इति यावत्॥ ४॥

अथ यदि पुरोहितः पुरोधाकामो वा यजेत पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निधाय पूर्वार्धेऽग्नेर्जुहुयात्॥ ५॥

भा०वृ०—स्पष्टम्॥ ५॥

सू०दी०—पौरोहित्यं पुरोधा, द्वितीयतृतीययोरवदानयोर्निधानदेशावचनादनियमः॥ ५॥

अवदानान्यभिघार्य यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघार्याग्नयेऽनुब्रूह्यग्निं यजेति संप्रैषौ॥ ६॥

भा०वृ०—अग्नयेऽनुब्रूहीति वचनान्मा भून्मूर्धन्वते नियुत्वते वेति याज्यानुवाक्ययोस्तद्गुणाभिधायकत्वात्तद्विशिष्टस्य देवतात्वं प्राप्नोतीति तत्परिहारार्थमुच्यते । अतो यद्देवतासंबन्धि वाक्यगतं विशेषणं तदेव देशे देश उपलक्ष्यते न मन्त्रगतमखिलं विशेषणं यत्र तु मान्त्रवर्णिकमेव तत्र सविशेषणं प्रधानमेव चोद्दिश्यते । यद्यप्यवद्यन्नमुष्मा अनुब्रूहीति वचनेन प्राथम्यादग्नेरग्नयेऽनुब्रूहीति प्राप्तं तथाऽपि पुनरन्यमान्त्रवर्णिकसगुणदेवतानिवृत्त्यर्थम् ॥ ६ ॥

सू०दी०—ब्रूयादिति शेषः । ननु सामान्यतः प्रागेव विहितस्य याज्यानुवाक्यासंप्रैषस्य पुनर्विधिः किमर्थम् । केचिदाहुः—तत्र तावदवद्यन्संप्रेष्यतीत्यवदानसमयानुवाक्यासंप्रैषविधिरङ्गविषयः प्रधानविषयस्त्वयं प्रत्यभिघारणोत्तरकालविधानार्थ इति । तदयुक्तं तत्र सार्वत्रिकमित्यनेन विरोधात् । स्विष्टकृत्यभिघारणोत्तरकालं तद्वचनविरोधादत्र च याज्यासंप्रैषोपादानवैयर्थ्यात्तस्य च क्रमार्थतायामाश्रावणप्रत्याश्रावणयोरुत्कर्षप्रसङ्गान्मन्त्रब्राह्मणसूत्रलिङ्गविरोधाच्च । पुरोडाशानामवदीयमानानामनुब्रूहीति । ऐन्द्रस्यावद्यन्ब्रूयादिन्द्रायानुब्रूहीति जुह्वामुपस्तीर्य सोमाय पितृमतेऽनुस्वधेति संप्रेष्यतीत्यादि । तथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्यन्नाहाग्नयेऽनुब्रूहीत्येव बौधायनः । तस्मान्न युक्तः पूर्वोक्तक्रमकल्पः । अन्यत्तु मतम् । याज्यानुवाक्ययोर्मूर्धलिङ्गत्वादग्नये मूर्धन्वते, अग्निं मूर्धन्वन्तमिति मा भूतां संप्रैषावित्येवमर्थमिदं वचनमिति । तदप्ययुक्तं यदाग्नेयोऽष्टाकपाल इत्युत्पत्तावश्रुतस्य गुणस्य देवताविशेषणत्वेन दुराशङ्कत्वादितरथाऽऽज्यभागयोरग्नये वृत्रघ्नेऽग्नये वृधन्वत इति लिङ्गानुगुणदेवतादेशप्रसङ्गाच्च । तस्मात्पूर्वममुष्मा अनुब्रूह्यमुं यजेति सामान्यतो निर्दिष्टस्य देवतादेशनस्य विशेषतः प्रदर्शनमात्रमेतदिति । नातीकात्र क्लेष्टव्यमायुष्मद्भिरेवमन्योऽपि यस्तत्र तत्र संप्रैषाविधिः सोऽपि क्वचिद्देवताप्रदर्शनार्थः क्वचित्संप्रैषस्वरूपविशेषप्रदर्शनार्थः क्वचित्तस्यैव विकारप्रदर्शनार्थः क्वचिद्विकल्पप्रदर्शनार्थः क्वचिद्वषट्कारप्रदानदर्शनत्वख्यापनार्थः क्वचिदसंदेहार्थ इति यथासंभवं द्रष्टव्यम् ॥ ६ ॥

आज्यं प्रश्चोत्यापिदधदिवाप्रक्षिणन्हुत्वाऽऽज्येनान्ववश्चोतयति ॥ ७ ॥

भा०वृ०—अपिदधदिव स्थगयन्निव स्रुचं न्यञ्चं कृत्वाऽप्रक्षिणन्नहिंसन्नग्निमवदानं वा न शिथिली करोति प्रश्चोतनं यागात्पूर्वं स्रुग्गताज्यक्षरणमग्नावन्ववश्चोतयति क्षारयति होमोत्तरकालं स्रुग्गतशेषम् ॥ ७ ॥

सू० दी०—स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशमपिदधदिव स्थगयन्निव स्रुचा तमप्रक्षिणन्नहिंसन्हुत्वाऽऽज्यशेषमन्ववस्रावयति ॥ ७ ॥

आघारसंभेदेनाऽऽहुतीः प्रतिपादयति ॥ ८ ॥

भा० वृ०—संभेदः संगमस्तस्मिन्प्रथमाहुतिः ॥ ८ ॥

सू० दी०—आघारव्यतिषङ्गदेशेनाऽऽहुतीः प्रतिपादयति प्रवेशयतीत्यर्थः । अथवा प्रतिपादयति प्रक्रमयति प्रथमाहुतिं तत्र जुहोतीत्यर्थः ॥ ८ ॥

स्रुच्यमाघारमभिजुहोति पूर्वां पूर्वां संहिताम् ॥ ९ ॥

भा० वृ०—उत्तराः स्रुच्याघारस्याभिहोमाः संहिता लग्नाः ॥ ९ ॥

सू० दी०—एवं प्रतिपाद्य स्रुच्याघारस्योपरि पूर्वां पूर्वामाहुतिं परस्परसंसृष्टां जुहोति । पूर्वशब्दोऽत्र पूर्वोत्तरायां दिशि गौणो द्रष्टव्यः । अत एव वाऽत्र पूर्वविप्रतिषेधाद्वैकल्पिकाविमौ विधी द्रष्टव्यौ । तथा स्रुच्यमाघारमभिजुहोति पूर्वां पूर्वां वेत्येव सत्याषाढभारद्वाजौ । बौधायनस्त्वाह स्रुच्यमाघारमभिजुहुयादित्यौपमन्यवो मध्ये प्रदक्षिणं मण्डलाकारमिति राथीतर इति ॥ ९ ॥

यं द्विष्यात्तं व्यृषन्मनसाऽऽहुतीर्जुहुयात् ॥ १० ॥

भा० वृ०—शत्रुं विकिरन्मनसा यं द्विष्यात्तं शत्रुं व्यृषन् मनसा विकिरन् प्रधानाहुतीर्जुहोति ॥ १० ॥

सू० दी०—यं द्विष्याद्यजमानस्तं मनसा व्यृषंस्तद्धिंसामभिध्यायन्नित्यर्थः ॥ १० ॥

यदा वीतार्चिर्लेलायतीव वाऽग्निरथाऽऽहुतीर्जुहोति ॥ ११ ॥

भा० वृ०—लेलायति अल्पिकार्चिपि शान्तायां ज्वालायां सत्यामाहुतीर्जुहोति ॥ ११ ॥

सू० दी०—लेलायतीति लिङ्गो यङन्ताल्लटि व्यत्ययेन परस्मैपदमीकारस्य चाऽऽकारः। यङ्लुगन्ताद्वा शब्वृद्धिश्च व्यत्ययेन च्छान्दसत्वात्। यथा पुष्करपर्णे वातो भूतोऽलेलायदिति। कण्वादिषु वा लेलेति पाठो द्रष्टव्यः। यदा शान्तार्चिरङ्गारेषु लेलीयमान इव विस्फूर्जत्यग्निस्तदा जुहोतीत्यर्थः। वक्ष्यति च यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव भातीति ॥ ११ ॥

आज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा ॥ १२ ॥

भा० वृ०—स्पष्टम् ॥ १२ ॥

सू० दी०—बौधायनादिभिरमावास्यायामप्युपांशुयाजविधानात्तन्निरासार्थः पौर्णमास्यामेवेत्येवकारः ॥ १२ ॥

प्रधानमेवोपांशु ॥ १३ ॥

भा० वृ०—प्रधानदेवताभिधानमुपांशु तदर्थत्वाद्धविषो हविरपि प्रधानं तेन तद्धर्मसिद्धेः। यागे करणत्वात्तस्मात्तदभिधानमप्युपांशूभयोर्यागकारकत्वादुपांशुत्वस्य प्रधानयागकारकत्वाभिधानविषयत्वाद्घृतस्य यजेत्यादिषु घृतादिशब्दस्योपांशुत्वसिद्धिस्तदाह सौम्ये घृतशब्दस्य वैश्वदेव्याश्चानूवन्ध्याया इत्युभयस्या उक्तदेवताया एवेत्युपदेश इति। हविषो देवतार्थतयाऽप्रधानत्वान्निरुपाधिकप्रधानदेवताभिमानस्यैवोपांशुत्वमिति॥१३॥

सू० दी०—उपांशुयाजसमाख्यानात्कृत्स्नमन्त्रोपांशुत्वे प्राप्ते वचनम्। प्रधानमेव देवताभिधान एव मन्त्रांश उपांशुरन्यो यथाप्राप्त इत्यर्थः ॥ १३ ॥

विष्णुं बुभूषन्यजेत ॥ १४ ॥

भा० वृ०—विष्णुं बुभूषन्निति नित्ययोरेव पक्षे कामः ॥ १४ ॥

सू० दी०—स्पष्टम् ॥ १४ ॥

इत्येकोनविंशी कण्डिका।

अग्नीषोमौ भ्रातृव्यवान् ॥ १ ॥

भा० वृ०—गतार्थम् ॥ १ ॥

सू० दी०—नित्ययोरेवानयोर्देवतयोः कामो वेदितव्यः । नित्यवदग्रेऽनुक्रमणादन्यथा तद्वैयर्थ्याच्च ॥ १ ॥

आग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति ॥ २ ॥

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—गतः ॥ २ ॥

समवदाय दोहाभ्याम् ॥ ३ ॥

भा०वृ०—समवदानं सहावदानम् ॥ ३ ॥

सू०दी०—समवदाय सहावदाय दोहाभ्यां प्रचरति । देशकालकर्तृदेवतैक्यादिति भावः । तत्रोपस्तरणाभिघारणे अपि विभुत्वात्तन्त्रेण भवतः ॥ ३ ॥

दध्नोऽवदाय शृतस्यावद्यत्येतद्वा विपरीतम् । सर्वाणि द्रवाणि स्रुङ्मुखेण जुहोति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—गतः ॥ ४ ॥

स्रुवेण पार्वणौ होमौ । ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहताᳪ सुवीर्यᳪ रायस्पोषᳪ सहस्रिणम् । प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याम् । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहताᳪ सुवीर्यᳪ रायस्पोषᳪ सहस्रिणम् । अपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्यायाम् ॥ ५ ॥

भा०वृ०—न विकृतौ पार्वणहोमौ समुदायेज्याङ्गत्वात्तस्य समुदायस्यान्यत्राभावात्पूर्णमासाय स्वाहा, अमावास्यायै स्वाहेति

पूर्णमासामावास्याशब्दयोः कर्मसमुदायनामत्वात्तयोरेव समुदाययोश्चतुर्थ्यन्ततया देवतात्वात्तद्देवतास्मरणार्थत्वं होममन्त्रयोस्ततश्च विकृतौ तयोः समुदाययोरतिदेशाभावाद्वैकृतदेवतानां तत्तत्कार्यापन्नत्वाभावाच्च न कर्तव्यौ। यद्यपि होमरूपत्वादारादुपकारकत्वं तथाऽपि देवतास्मरणस्य स्विष्टकृदादिवद्विवक्षितत्वाद्द्वाराभावान्निवृत्तिः, पार्वणाविति वचनाच्चेति पार्वणशब्दस्य देवतातद्धितान्तत्वात्पार्वणशब्दस्य च मन्त्रवर्णप्राप्तपौर्णमास्यमावास्यापरत्वात्तयोरन्यत्राभावाच्चेति ॥ ५ ॥

सू०दी०—पर्वशब्दोऽत्र कर्मवचनः प्रकरणात्तद्दैवतत्वाच्च होमयोः। ताभ्यां हि दर्शपूर्णमासावेव क्रियमाणाविज्येते मन्त्रलिङ्गात्तेन विकृतिषु न गच्छतः। तत्र तयोः समुदाययोरभावात्। कर्मणस्तत्प्रभृतित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादिति न्यायेन समुदायस्य चानतिदेश्यत्वात्पार्वणाविति वचनाच्च। तदुक्तं न्यायविद्भिः पार्वणयोस्त्ववप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हीति ॥ ५ ॥

नारिष्ठान्होमाञ्जुहोति दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्। यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू। एतद्वां तेन प्रीणाति तेन तृप्यतमꣳ हहौ। अहं देवानाꣳ सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति। अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयम्। अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः। मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या ॥ ६ ॥

इति विंशी कण्डिका।

---

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हवि-

षामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहेत्येतैः प्रतिमन्त्रम् ॥ १ ॥

भा०वृ०—नारिष्ठहोमेष्वादितस्त्रयाणामग्निवायू देवता । तयोर्वैश्वानरप्राणरूपतया पुरुषे नित्यं स्थितत्वान्मन्त्रे नारिष्ठशब्दानिर्देशात्तद्विशिष्टयोरेव देवतात्वम् । चतुर्थे सोममरुतः । पञ्चमे ब्रह्मा । षष्ठेऽपीति केचित्प्रकृतत्वात्षष्ठस्याग्निः । त इति संनिहितस्याग्नेः संबोधनत्वाद्बह्वृचमताच्चाव्यक्तनिर्देशेऽग्नेर्देवतात्वात्प्रजापतिर्वाऽनिरुक्तः प्रजापतिः । केचिदादेशं सं ते मनसा मन इति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टामित्यन्यप्रतीकादेशः । सं प्राणे प्राणमित्यादेस्त्रिष्टुप्छन्दस्कत्वादस्मिन्पक्षे सप्त होमाः ॥ १ ॥

सू०दी०—नारिष्ठा नामोत्तरे होमा नारिष्ठदेवतासंबन्धात्ते तु स्रुवा कार्याः । तत्र सं ते मनसा मन इत्यादिप्रदिष्टं यजुः षष्ठम् । सं प्राणे प्राणमित्यृक्चतुष्पदा सप्तमी । सं ते मनसा मन इत्यादिर्यथापठित एको मन्त्र इति केचित्तेषां त्वृगक्षरपरिमाणविरोधः कारकवैरूप्यं च स्याद्यथा मनसा मनः प्राणे प्राणमित्यादि ॥ १ ॥

एष उपहोमानां कालोऽनन्तरं वा प्रधानात्प्राग्वा समिष्टयजुषः ॥ २ ॥

भा०वृ०—दर्शपूर्णमासकर्मणि य उपहोमाश्चोद्यन्ते तानुपहोमानस्मिन्काले जुहोति प्रधानानन्तरं वा प्राक्समिष्टयजुषः ॥ २ ॥

सू०दी०—यस्मिन्कर्मण्युपहोमाश्चोद्यन्ते तत्रैते कालविकल्पाः ॥ २ ॥

जुह्वामुपस्तीर्य सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति द्विः पञ्चावत्तिनः ॥ ३ ॥

भा०वृ०—नावदानमन्त्रः स्विष्टकृति साधारणत्वाच्छेषस्यास्यार्थः ।

मा भेर्मा संविक्था इत्यादिमन्त्रस्य संबोधनविभक्तिभिर्भयचलना-
दिनिवृत्तिप्रकाशनद्वारेण हविरवयवप्रकाशकतयाऽवदानाङ्गत्वा-
दवदानमात्रप्रकाशकता । अवदानानि ते यदवदानानि त
इति चावयविसंबोधनावगतेः स्विष्टकृद्भक्षणमप्यदृष्टजनकतया
प्रधानाशिष्टद्रव्यसाध्यत्वं न प्रतिपत्तिमात्रता । भरद्वाजेन भगवता
निर्वापशेषान्वावापे भक्षणानां प्रकारायेति प्रयोजनाभिधानाद्द्र-
व्यस्य भक्षणार्थत्वावगमाच्चातो प्रधानयागशिष्टस्य स्विष्टकृदा-
दिसर्वकार्यसाधारणताप्रतिपाद्यत्वे च सर्वशेषकार्यैः प्रतिपाद्यत्वा-
त्साधारणता, अदृष्टार्थपक्षेऽपि प्रधानप्रयुक्तद्रव्योपजीविता ।
एवं च स्विष्टकृदवदाने मन्त्रप्रयोगे सर्वार्थद्रव्यप्रकाशकतया
सर्वार्थत्वप्रसङ्गान्न स्विष्टकृदेकान्तताभावादतः साधारणत्वप्रस-
ङ्गात्प्रधानावदानसंनिधौ पाठात्तत्कार्यापत्तिभावाच्च स्विष्टकृतो न
स्विष्टकृदवदाने मन्त्रः । आग्नेयोऽष्टाकपाल इति कृत्स्नस्याग्न्य-
र्थतावगतेः प्रधानयागेऽवदानमन्त्रप्रयोगेऽपि न साधारणाङ्गता
न स्विष्टकृदादिसाधारणत्वेऽपि हविष आग्नेयश्रुतिबाधस्तदङ्ग-
त्वाच्छेषकार्याणामतो न स्विष्टकृत्यवदानमन्त्रो ध्रुवावदिति यथा
ध्रुवायां सर्वयज्ञार्थत्वात्तद्द्रव्यस्योपांशुयाजार्थं नावदानमन्त्रः
प्रयुज्यते । तत्रापि द्रव्यसाधारणत्वमेव मन्त्राभावे हेतुः ॥ ३ ॥

सू० दी०—उपांशुयाजस्य त्वर्थलुप्तानि शेषकार्याणि तदर्थस्य चतुर्गृही-
तस्य शेषाभावात्सर्वार्थत्वाच्च ध्रौवस्य । सकृद्ध्रुवाज्यादवद्यतीति
बौधायनः । न चावदानमन्त्रः स्विष्टकृति प्रधानार्थत्वात् ॥ ३ ॥

दैवतसौविष्टकृतैडचातुर्धाकारणिकानामुत्तरमुत्तरं
ज्यायः ॥ ४ ॥

भा० वृ०—अवदानमित्यध्याहारः ॥ ४ ॥

सू० दी०—अवदानमिति शेषः ॥ ४ ॥

द्विरभिघार्य न हविः प्रत्यभिघारयति ॥ ५ ॥

भा० वृ०—प्रत्यभिघारयति स्विष्टकृदर्थमिति । प्रत्यभिघारणस्य
संस्काररूपत्वात्संस्कृतेन कार्ये कर्तव्येऽनन्तरमाप्तत्वात्स्विष्टकृतः
स्विष्टकृदभिघारणानन्तरं न हविः प्रत्यभिघारयतीति निषेधाच्च

केवलस्विष्टकृदर्थता । अतो न सौम्ये चरौ प्रत्यभिघारणं स्विष्टकृदभावात्पश्ववदानेषु चैकादशावदानानां प्रत्येकं हविष्ट्वात्तेभ्यश्च स्विष्टकृदवदानाभावान्न तेषु प्रत्यभिघारणं त्र्यङ्गेभ्यः स्विष्टकृदिति तेषु प्रत्यभिघारणं प्रधानावदानाभावेऽपि । यद्यपि विलोमाकार्षं तच्च आप्यायतां पुनरित्यवत्तशेषसंस्कारार्थत्वं तथाऽपि पशुचोदनया समुदायस्य हविष्ट्वेऽवगते तदेकदेशावदाने तच्छेषत्वेन मन्त्राभिधानोपपत्तेस्त्र्यङ्गेष्वविरोधः । अभिघारणार्थत्वान्मन्त्रस्य कथंचिदभिधानोपपत्तेः । उपदेशस्तु नावदानाभिघारणमन्त्र इति लिङ्गाविरोधादेव गुरुकाण्डे तूभयं भवत्येव ॥ ५ ॥

सू० दी०—अत एव प्रतिषेधाज्ज्ञायते प्रत्यभिघारणं स्विष्टकृदर्थमिति । तेन पश्ववदानेषु सौम्ये च चरौ निवर्तते ॥ ५ ॥

अग्नये स्विष्टकृतेऽनुब्रूहीति स्विष्टकृतं यजेति संप्रैषौ । उत्तरार्धपूर्वार्धे जुहोत्यसंसक्तामितराभिराहुतिभिः ॥ ६ ॥

भा० वृ०—स्पष्टम् ॥ ६ ॥

सू० दी०-संप्रैषविधिः प्रागेव व्याख्यातः ॥ ६ ॥

प्रत्याक्रम्य जुहामप आनीय वैश्वानरे हविरिदं जुहोमि सहस्रमुत्सꣳ शतधारमेतम् । स नः पितरं पितामहं प्रपितामहं स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहेत्यन्तःपरिधि निनयति निनयति ॥ ७ ॥

भा० वृ०—वैश्वानरे हविरिति प्राचीनावीतीति हिरण्यकेशिमताद्यद्यपि स नः पितरमिति वैश्वानरप्रधानता तथाऽपि पितरं पितामहं पिन्वमान इति तत्प्रीत्यर्थत्वात्पितृप्रधानतया प्राचीनावीति हिरण्यकेशिनोक्तमिति । स्वमतेन त्वग्निवैश्वानराभिधानान्न प्राचीनावीतमित्यर्थः ॥ ७ ॥

आ. भा. वृ. प. प. ६ । २ । २१ ॥

इति द्वितीयः प्रश्नः ।

सू० दी०—प्रत्याक्रमणवचनं प्रत्याक्रम्यैव यथा निनयेन्न तु दक्षिणतः स्थित इति । केचित्तु पितृलिङ्गत्वान्मन्त्रस्य निनयने प्राचीनावीतमिच्छन्ति ॥ ७ ॥

इत्येकत्रिंशी कण्डिका ।

---

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः ।

इति द्वितीयः प्रश्नः ।

---

**इडामेके पूर्वं समामनन्ति प्राशित्रमेके ॥ १ ॥**

भा० वृ०—यद्येडा प्रथमं तदाऽभिघार्येडां प्राशित्रमवद्यति । इडादेवता वृष्टिः, वृष्टिर्वा इडेतिवचनात्तदर्थत्वाद्‌द्रव्यमपीडा । प्रकृष्टैर्मन्त्रैः प्राश्यत इति प्राशित्रम् । होत्रे प्रदानप्रभृत्यनुत्सर्जनाविधानादुपहवोत्तरकालं च प्राशित्रपरिहरणविधानादिडावदानाङ्गभूताभिघारणानन्तरमेव प्राशित्रावदानम् ॥ १ ॥

सू० दी०—इडाशब्दो देवतावचनस्तत्संबन्धाद्‌द्रव्ये कर्मणि च प्रयुज्यते । प्राशित्रशब्दो द्रव्यवचनस्तत्संबन्धात्कर्मणि । तदिह सामर्थ्यात् कर्मपरौ वेदितव्यौ । तत्र प्राशित्रपूर्वकल्पः सूत्रकृतैवानुक्रमिष्यते । यदा त्वितरस्तदाऽवदानेषु प्राशने चेडा पूर्वा भवति । यथाऽभिघार्येडां प्राशित्रमवद्यति प्राश्येडां मार्जयित्वा प्राशित्रं प्राश्नातीति ॥ १ ॥

**आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मारुरुपाम यज्ञस्य शुद्ध स्विष्टमिद हविरिति ॥ २ ॥**

भा०वृ०—विरोजनं भञ्जनमाग्नेयग्रहणात्तस्यैव विरोजनं तथा चतुर्धाकरणमुप समीपे मध्यमाया या सोपमध्यमा । पिप्पलं फलं भारद्वाजमतात् । सुपिप्पला ओषधीः कृधीति दर्शनाच्च । अज्याय इति यवमात्र एवाऽऽख्यानविशेषेण लिङ्गविरोधाद्व्रीहीणां मेध इतिवदाख्यानविशेषेणेति यवमात्राभिधानेन यवेन संमितमिति यद्यवादधिकं न भवति तत्प्रमाणं प्राशित्रमिति तस्माद्यवमात्रमवद्येदित्युक्तेऽप्यज्याय इति निषेधाद्यवमात्रान्मन्त्रलिङ्गाच्चाधिकनिवृत्तिमात्रपरत्वम् । यवमात्रादर्वागपि लभ्यते परिमाणमतस्तत्राप्यनिवृत्तिर्मन्त्रस्य न पिप्पलमात्रे मन्त्रः ॥ २ ॥

सू०दी०—विरुज्य मस्तकं भङ्क्त्वा । उपमध्यमयाऽनामिकया व्यूह्याभ्यन्तरमङ्गुली गमयित्वा । मध्यात्पुरोडाशोदरात् । पिप्पलमात्रं व्रीहिप्रमाणमित्यर्थः । तथा चाऽऽह भारद्वाजः—प्राशित्रं पिप्पलमात्रमिति व्रीहिमात्रं स्यादिति ॥ २ ॥

एवमुत्तरस्यावद्यति ॥ ३ ॥

भा०वृ०—पुरोडाशस्येति शेषो न सांनाय्यात्प्राशित्रं सर्वेभ्यो हविर्भ्य इतीडायामुक्तत्वात् ॥ ३ ॥

सू०दी०—एवं विरोजनादिना विधिनाऽवद्यति । तत्राविरुज्योत्तरस्मादिति तु सत्याषाढभारद्वाजौ । तथा चरोर्न प्राशित्रमिति भारद्वाजः । न सांनाय्यात्प्राशित्रं पुरोडाशाधिकारात्सर्वेभ्यो हविर्भ्य इतीडायां विशेषवचनाच्च ॥ ३ ॥

उपस्तीर्य नाभिघारयत्येतद्वा विपरीतम् । अपि वोपस्तृणात्यभि च घारयति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—अन्यतरत्तत्र कर्तव्यमुभयं वेत्यर्थः ॥ ४ ॥

अत्रैवास्य परिहरणप्राशनमेके समामनन्ति ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—यदेडा पूर्वा यदा प्राशित्रं तयोरुभयोरपि कल्पयोरवदानानन्तरमेव वा प्राशित्रस्य परिहरणप्राशने भवत इत्यर्थः ॥ ५ ॥

इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडां समवद्यति चतुरवत्तां पञ्चावत्तां वा ॥ ६ ॥

भा०वृ०—पञ्चावत्तां चतुरवत्तिनोऽपि तथा चतुरवत्तां पञ्चावत्तिनोऽपि पुनरुपदेशात् ॥ ६ ॥

सू०दी०—चतुरवत्तां पञ्चावत्तां वेत्यविशेषवचनेऽपि न पञ्चावत्तिनश्चतुरवत्तमिष्यते तस्य पञ्चावत्तं सर्वत्रेति नियमात् । द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गाच्च । विनिवेशविकल्पो वा प्रागुक्तव्यवस्थानुरोधेनाऽऽस्थेयः ॥ ६ ॥

मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखामित्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति ॥ ७ ॥

भा०वृ०—स्पष्टम् ॥ ७ ॥

सू०दी०—गतः ॥ ७ ॥

संभेदाद्द्वितीयम् ॥ ८ ॥

भा० वृ०—संभेदाद्दक्षिणार्ध एवेति दक्षिणार्धस्य प्रकृतत्वात् ॥ ८ ॥

सू० दी०—योऽवदानदेशयोर्मध्ये स्थितो हविरंशः स संभेदस्ततो द्वितीयमवद्यति ॥ ८ ॥

पूर्वार्धाच्च यजमानभागमणुमिव दीर्घम् ॥ ९ ॥

भा० वृ०—पूर्वावदानसंसृष्टदेशे यस्मात्पूर्वं गृहीतं तस्मादेव तृतीयमणुमिव तनुमिव ॥ ९ ॥

सू० दी०—अवद्यतीति संबन्धः । इव ईषदर्थे ॥ ९ ॥

तमाज्येन संतर्प्य ध्रुवाया उपोहति ॥ १० ॥

भा० वृ०—तमेकीभूतमिति तं तमाज्येनेति वीप्साया अवचनात्सर्वपुरोडाशेभ्योऽवत्तं यजमानभागमेकीकृत्याणुमिव दीर्घं

कृत्वाऽऽज्येन संतर्पणं सर्वतोऽञ्जनं सांनाय्ययजमानभागस्यापि संतर्पणं प्राशनमन्त्रभेदात्पृथग्धारणात् ॥ १० ॥

सू० दी०—संतर्प्य समज्य ध्रुवाया उपोहति ध्रुवासमीपं गमयति। तत्राग्रेण ध्रुवामिति भारद्वाजबौधायनौ ॥ १० ॥

अपि वा दक्षिणार्धादवदाय यजमानभागमथ संभेदात् ॥ ११ ॥

भा० वृ०—दक्षिणार्धादवदायेडां यजमानभागमवद्यति तत इडासंभेदात्पूर्वावदानसंगतदेशाद्द्रव्यैकत्वान्न पुनर्मन्त्रः। इडारूपद्रव्यस्यैकत्वात्तदवदानार्थत्वान्मन्त्रस्य सकृत्प्रयोग एवं मा भेरित्यस्यापि यजमानभागव्यवायेऽपि सकृदेव मन्त्रो द्वितीयपक्षे। संपत्नीयादिव्यवायेऽपि पत्नीसंयाजोपरिपतितहुतानुमन्त्रणवत्। यजमानभागव्यवायादावृत्तिः। पुरोनुवाक्यामनोतस्याऽऽवृत्तिर्भिन्नकालेष्विति वचनात्कृष्णग्रीवयोः सौम्यव्यवाय आवाहनावृत्तिवदुत्तमयोः पत्नीसंयाजयोर्हुतानुमन्त्रणस्यैकत्वेन पाठात्सकृत्प्रयोगः ॥ ११ ॥

सू० दी०—दक्षिणार्धात्प्रथममिडावदानमवदाय ततो यजमानभागमवद्यति। ततः संभेदाद्द्वितीयमिडावदानमित्यर्थः ॥ ११ ॥

एवमुत्तरस्यावद्यति ॥ १२ ॥

भा० वृ०—सर्वेभ्य इत्यधिकारात्सर्वहविषामवद्यति मनुना दृष्टामित्यादिविधिना ॥ १२ ॥

सू० दी०—एवं मनुना दृष्टामित्यादिना विधिनोत्तरस्य हविषः पुरोडाशस्य सांनाय्यस्य चावद्यति सर्वेभ्यो हविर्भ्य इत्यधिकारात् ॥ १२ ॥

इति प्रथमा कण्डिका ॥ १ ॥

---

अभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमतिक्रामत्यनुत्सृजन् ॥ १ ॥

भा० वृ०—अनुत्सृजन्निडां दक्षिणाऽतिक्रामत्यध्वर्युर्दक्षिणेन होतारमतिक्रामत्यनुत्सृजन्निति सूत्रच्छेदः। इडां होत्रे प्रदायेति प्रकृतत्वादिडामनुत्सृजन्निति संबन्धः ॥ १ ॥

सू० दी०—पञ्चावत्तायां त्विडायां द्विरभिघारणेन संख्यासंपत्तिः, द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गात्। पञ्चार्धात्तृतीयं पञ्चावत्तायामिति तु सत्याषाढः। होत्रे प्रदायेडां तामनुत्सृजन्नेवातिक्रामति होतुः पश्चाद्गच्छति तदङ्गुल्यञ्जने प्राङ्मुखत्वार्थम्। तथा च सत्याषाढभारद्वाजौ दक्षिणाऽतिक्रम्य पश्चात्प्राङासीनो होतुरङ्गुलिपर्वणी अनक्तीति ॥ १ ॥

होतेडयाऽध्वर्युं परिगृह्णाति ॥ २ ॥

भा० वृ०—होतेडां दक्षिणेन नयत्यध्वर्योः प्रदक्षिणकरेण यथोत्तरा भवतीडाऽध्वर्योरनुत्सृजत एव ॥ २ ॥

सू० दी०—होता त्विडामादाय तयाऽध्वर्युमतिक्रामन्तं परिगृह्णाति दक्षिणतो हृत्वेडामन्तराऽध्वर्युमात्मानं च करोतीत्यर्थः ॥ २ ॥

अपि वा प्राचीमिडामपोह्य दक्षिणत आसीनः स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति ॥ ३ ॥

भा० वृ०—अपि वा प्राचीमिडामपोह्य दक्षिणत आसीनो न दक्षिणेनातिक्रमणं परिहरणं च। होत्र इडामप्रदाय प्राचीमपोह्य दक्षिणतो होतुरासीनोऽध्वर्युः पर्वाञ्जनादि करोति। संधिः पर्व। प्रदेशिन्याः पर्वाञ्जनादि पक्षद्वयेऽपि ॥ ३ ॥

सू० दी०—अपि वाऽध्वर्युर्होत्र इडामदत्त्वा प्राचीनमपोह्य स्वयं च पश्चाद्गत्वा होतुर्दक्षिणत उदङ्मुख आसीनस्तदङ्गुलिपर्वणी अनक्ति तत इडां ददातीत्यर्थः। पर्वणी प्रदेशिन्या उत्तमे इत्याश्वलायनः ॥ ३ ॥

अपरमङ्क्त्वा पूर्वमेतद्वा विपरीतम् ॥ ४ ॥

भा० वृ०—स्पष्टम् ॥ ४ ॥

सू० दी०— गतः ॥ ४ ॥

उपसृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्याति ॥ ५ ॥

भा० वृ०—इदमपि स्पष्टम् ॥ ५ ॥

सू० दी०—उपसृष्टोदकस्य होतुर्हस्त इडातोऽवान्तरेडामिडैकदेशमवद्यातीत्यर्थः ॥ ५ ॥

अध्वर्युः प्रथममवदानमवद्यति स्वयं होतोत्तरमेतद्वा विपरीतम् ॥ ६ ॥

भा० वृ०—स्वयं होतेतिवचनान्न मैत्रावरुणस्यावान्तरेडा । होतेत्येतावति वक्तव्ये स्वयं वचनाद्धोतृकार्यापन्नस्यापि मैत्रावरुणस्य नावान्तरेडा ॥ ६ ॥

सू० दी०—गतः ॥ ६ ॥

लेपादुपस्तरणाभिघारणे भवतः ॥ ७ ॥

भा० वृ०—इडासंबन्ध्याज्यलेपात् ॥ ७ ॥

सू० दी०—लेपात्—इडागताज्यलेपात् ॥ ७ ॥

द्विरभिघारयेत्पञ्चावत्तिनः । उपहूयमानामन्वारभेते अध्वर्युर्यजमानश्च । दैव्या अध्वर्यव उपहूता इत्यभिज्ञायोपहूतः पशुमानसानीत्यध्वर्युर्जपति उपहूतोऽयं यजमान इत्यभिज्ञायैतमेव मन्त्रं यजमानः॥८॥

भा० वृ०—प्रतिप्रस्थातुरप्यन्वारम्भो वरुणप्रघासेष्विडाया उपहूत इति जपश्च विहारद्वय इडोपाह्वानस्य तन्त्रत्वाद्धविषां कर्तृभेदात्स्वकीयं कर्त्रा तद्धविरन्वारम्भणीयमिति प्रतिप्रस्थातुरन्वारम्भो जपश्च ॥ ८ ॥

सू० दी०—गताः ॥ ८ ॥

उपहूतायामग्रेणाऽऽहवनीयं ब्रह्मणे प्राशित्रं परिहरति ॥ ९ ॥

भा० वृ०—अग्रेणाऽऽहवनीयमिति नियमादन्यत्रान्तराऽग्नी नीयत इति केचिदिति नान्तराऽग्नी संचरतीत्यन्तराऽग्नीनयननिषेधेऽप्यग्रेणाऽऽहवनीयं परिहरतीति प्राशित्रनियमादन्यत्रांतरानयनेऽपि न दोष इति प्रदर्शनार्थं वा प्राशित्रवचनं शामित्राग्निनयनादीनामग्रेण परिहरतीत्यग्रदेशस्य तीर्थत्वेन निर्देशात्सर्वेषां स एव मार्ग इति ॥ ९ ॥

सू० दी०—ब्रह्मणे परिहरति तत्सकाशं नीत्वा प्रयच्छतीत्यर्थः ।

प्रदर्शनमिदमन्यस्यापि प्रस्तरादेर्यज्ञाङ्गस्य। तत्रान्तरानयनेऽप्यदोष इत्येके॥ ९॥

तस्मिन्प्राशिते होताऽवान्तरेडां प्राश्नाति वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा हुतं प्राश्नामीति॥ १०॥

भा० वृ०-स्पष्टम्॥ १०॥

सू० दी०-गतः॥ १०॥

प्राशितायामिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः। तस्यास्ते भक्षिवाणः स्याम सर्वात्मनः सर्वगणा इति यजमानपञ्चमा इडां प्राश्य॥ ११॥

भा० वृ०—स्पष्टम्॥ ११॥

सू० दी०—गतः॥ ११॥

इति द्वितीया कण्डिका॥ २॥

---

वाग्यता आसत आ मार्जनात्॥ १॥

भा० वृ०-स्पष्टम्॥ १॥

सू० दी०-वाग्यता आसते। वाग्यता भवन्तीत्यर्थः॥ १॥

मनो ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वाऽऽग्नेयं पुरोडाशं चतुर्धाकृत्वा बर्हिषदं करोति बर्हिषदं वा कृत्वा चतुर्धाकरोति॥ २॥

भा० वृ०—शिरस्यपामानयनं मार्जनं प्रस्तरादप आदायेति। अन्तर्वेदि प्रस्तरे मार्जयित्वेत्यन्तर्वेद्यवस्थिते प्रस्तरे जलमासिच्य तस्याधस्ताद्धस्तेन जलं गृहीत्वा शिरस्यानयति मन्त्रावृत्तिश्च प्रतिपुरुषम्। मार्जयित्वा चतुर्धा कृत्वा बर्हिषदं करोतीति चतुर्धाकरणसमानकर्तृकत्वान्मार्जनस्याध्वर्योरेव मन्त्रेण मार्जनं मा भूदिति मन्त्रावृत्तिरुच्यते भक्षणाङ्गत्वान्मार्जनस्य भक्षयितॄणां मार्जनमिति। केचित्प्रस्तरादपामादाने शिरस्यानयने च मन्त्रा-

बृत्तिरिति वर्णयन्ति । अपरे त्वन्तर्वेदि स्थित्वा मार्जनमित्याहुः । अन्नादाः स्थेति मार्जनवदिति । अभिघारणचतुर्धाकरणे आग्नेयविकाराणां चरुपुरोडाशानां न मुख्यधर्म इति । आग्नेयं पुरोडाशं चतुर्धा कृत्वेत्यत्र पुरोडाशशब्दस्य हविरुपलक्षणत्वात्तद्वदाग्नेयशब्दस्यापि प्रथमदेवतापरत्वशङ्कायामिदमुच्यते न मुख्यधर्म इति । आग्नेयमुद्देश्यसमर्पकतयाऽविवक्षितत्वादभिघारणे चाऽऽग्नेयमभिघारयति तूष्णीमुत्तरमित्याग्नेय एव मन्त्रेणाभिघारणस्योक्तत्वात्तत्साधर्म्यं चतुर्धाकरणस्योच्यते पुरोडाशग्रहणाच्चवनाग्नेयस्या प्याग्नेयकार्यापन्नस्योभयमित्यग्नीषोमीयेषु प्रधानेषु । अस्यार्थः—उभयत्राऽऽग्नेयमित्येतावता नियमे सिद्धेऽपि पुरोडाशग्रहणादग्नीषोमीयाणि प्रधानानीत्यत्राऽऽग्नेयस्थानापन्नस्याग्नीषोमीयस्योभयोः प्राप्तिरधिकग्रहणप्रयोजनम् । पुरोडाशग्रहणान्नोभयं चरावित्युपदेश इति । पुरोडाशग्रहणं हविरन्तरनिवर्तकमिति ॥ २ ॥

सू० दी०—मनो ज्योतिरिति बृहस्पतिवत्यां मार्जनं तस्याः प्रकरणपाठात् । अन्तर्वेदीतिवचनं वेदिस्थ एव प्रस्तरे मार्जनं यथा स्यान्मा भूत्प्रस्तरमादाय बहिरिति । मार्जनमिति च हस्तेऽपामासेचनमुच्यते तदेव शिरस्यानयनसहितमिति केचित् । तदयुक्तम् । अग्निहोत्रान्ते मार्जयते शिरस्यप आनयत इति पृथग्विधानात् । तथाऽञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनमित्येवाऽऽश्वलायनः । बर्हिषदं स्तीर्णे बर्हिषि सन्नम् । चतुर्धाकरणमाग्नेयस्यैवेष्यते नान्यस्य । एवमुत्तरमित्यवचनात् । तेनोत्तरविकाराणामपि न भवति । तत्र चतुर्धाकरणं चरौ न विद्यत इति भारद्वाजः ॥ २ ॥

**तं यजमानो व्यादिशतीदं ब्रह्मण इद ँ होतुरिदमध्वर्योरिदमग्नीध इति ॥ ३ ॥**

भा० वृ०—कृते व्यूहन आग्नीध्रभागस्यापि व्यादेशः संस्पृशता तमभिमृशेदिति । अस्यार्थः—नेहाब्राह्मणस्यास्तीत्यन्तेन व्यूहने प्रतिदिशं कृते तं यजमानो व्यादिशतीदं ब्रह्मण इत्यादिना प्रतिदिशमवस्थितानामेव हविर्भागाणां हस्तेन स्पृष्ट्वा व्यादेशनं तदभिमृशेदिदं ब्रह्मण इत्यादिश्रुतेर्न बर्हिःस्थापनानन्तरं व्यादेश-

स्तानेव तद्भागिनः करोतीत्यादिना दिक्ष्वेव प्रतितिष्ठतीति दिक्षुप्रतिष्ठापनादुत्तरकालं व्यादेशस्तदाह—इदं ब्रह्मण इत्येवमादि-नानाभूतानामादेशो व्यादेश इति शंयुवन्तादिसंस्थापक्षेऽपि चतुर्धाकरणं ब्रह्मणः प्राशनाभावेऽपि प्रतिदिशं व्यूहति दिक्ष्वेव प्रतितिष्ठतीति पृथक्संस्कारत्वावगमात् । आशापालेभ्यश्चतुर्भ्योऽमृतेभ्य इदमिति मन्त्रवर्णाच्च दिक्पालनिबन्धाच्चतुर्धाकरणस्येदं ब्रह्मण इति तु निर्देशो लुप्यते। अथवा खण्डसंस्थास्वपि संस्थिते कर्मणि भक्षः सर्वथा चतुर्धाकरणानिवृत्तिः ॥ ३ ॥

सू० दी०—तं चतुर्धाकृतं व्यादिशति विविधमादिशतीदं ब्रह्मण इदं होतुरिति ॥ ३ ॥

अग्नीत्प्रथमान्होतृप्रथमान्वा ॥ ४ ॥

भा०वृ०—गतार्थः ॥ ४ ॥

सू०दी०—इदमग्नीध इदं ब्रह्मण इत्यग्नीत्प्रथमानृत्विजो भागित्वेनाऽऽदिशतीत्यर्थः। तथा होतृप्रथमानिति ॥ ४ ॥

इदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य स्थविष्ठमग्नीधे षडवत्तꣳ संपादयति ॥ ५ ॥

भा०वृ०—परिहरणमाग्नीध्रभागस्यापि पात्रेण षडवत्ते संपन्ने कथं संपादनमित्याह ॥ ५ ॥

सू०दी०—स्थविष्ठो भागो यथाऽऽग्नीधः स्यात्तथा पूर्वमेव व्यादिश्य तमग्नीधे प्रथमाय प्रयच्छन्षडवत्तं संपादयति । कथमिव संपादयति ॥ ५ ॥

सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयति ॥ ६ ॥

भा०वृ०—कस्मिंश्चित्पात्रे सकृदुपस्तीर्याऽऽग्नीध्रभागं द्वेधा कृत्वैकं भागं पात्रेऽवधाय पुनरुपस्तीर्यापरमवधाय द्विरभिघारणं कृत्वा प्रयच्छति पात्रमग्नीधे पात्राभ्यामितरयोरिति व्यपदेशात् ॥ ६ ॥

सू०दी०—आग्नीध्रहस्ते प्रथमं सकृदुपस्तीर्य ततस्तद्भागं द्वेधा कृत्वैकमवधाय पुनरुपस्तीर्यापरमवधाय द्विरभिघारयतीत्यर्थः ॥ ६ ॥

अपि वा द्विरुपस्तृणाति द्विरा-
दधाति द्विरभिघारयति ॥ ७ ॥

भा०वृ०—स्पष्टम् ॥ ७ ॥

सू०दी०—अथवा प्रथममेव द्विरुपस्तीर्य ततो द्विराधाय द्विरभिघारयति ॥ ७ ॥

अग्नेराग्नीध्रमस्यग्नेः शा।मित्रमासि नमस्ते अस्तु
मा मा हिꣳसीरित्याग्नीध्रो भक्षयति ॥ ८ ॥

भा०वृ०—इदमपि स्फुटार्थम् ॥ ८ ॥

सू०दी०—गतः ॥ ८ ॥

वेदेन ब्रह्मयजमानभागौ परिहरति ॥ ९ ॥

भा०वृ०—आसीनाभ्यां ब्रह्मयजमानाभ्यां वेदेनाऽऽहृत्य ब्रह्मयजमानभागौ प्रयच्छति ॥ ९ ॥

सू०दी०—वेदेन हृत्वा यथास्थानमासीनाभ्यां प्रयच्छति ॥ ९ ॥

पृथक्पात्राभ्यामितरयोः ॥ १० ॥

भा०वृ०—भागौ परिहरतीति संबन्धः ॥ १० ॥

सू०दी०—भागौ परिहरतीति शेषः । वेदादन्येन पात्रेण होतुर्भागं ततोऽन्येन चाऽऽत्मन इत्यर्थः ॥ १० ॥

पृथिव्यै भागोऽसीति होता भक्षयत्यन्तरिक्षस्य
भागोऽसीत्यध्वर्युर्दिवो भागोऽसीति ब्रह्मा ॥ ११ ॥

भा० वृ०—ब्रह्मणोऽपि स्वकाले भक्षणमिति ज्ञेयम् ॥ ११ ॥

सू० दी०—ब्रह्मणः स्वकाल एव भक्षणम् ॥ ११ ॥

दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति ॥ १२ ॥

भा० वृ०—अन्वाहार्यो नाम दक्षिणार्थमोदनस्तं महान्तमृत्विग्भ्यः पर्याप्तं पचेत् ॥ १२ ॥

सू० दी०—अन्वाहार्यो दक्षिणार्थ ओदनः, तं महान्तं पचति यथ-र्त्विग्भ्यः पर्याप्तो भवति । तत्रापरिमितमिति प्रस्थादिना तण्डुल-परिमाणप्रतिषेधः ॥ १२ ॥

क्षीरे भवतीत्येके ॥ १३ ॥

भा० वृ०—गतार्थः ॥ १३ ॥

सू० दी०—गतः ॥ १३ ॥

तमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासादय ॥ १४ ॥

भा० वृ०—गतार्थः ॥ १४ ॥

सू० दी०—गतः ॥ १४ ॥

इति तृतीया कण्डिका ।

दक्षिणसद्भ्य उपहर्तवा इति संप्रेष्यति ॥ १ ॥

भा० वृ०—अध्वर्योः परिहरणकर्तृत्वात्तद्व्यतिरिक्तद्वयावगतेः । इतरे दक्षिणतो गच्छन्ति ब्रह्मा तु गत एव तस्मा अपि दीयते ॥ १ ॥

सू० दी०—यजमानं संप्रेष्यति दक्षिणतः स्थितेभ्य ऋत्विग्भ्यो दक्षिणा त्वयोपहर्तव्येति ॥ १ ॥

ये ब्राह्मणा उत्तरतस्तान्यजमान आह दक्षिणत एतेति ॥ २ ॥

भा० वृ०—स्पष्टार्थः ॥ २ ॥

सू० दी०—येऽध्वर्य्वादय उत्तरतः स्थितास्तानाह । स्थित एव तु ब्रह्मा दक्षिणत इति ॥ २ ॥

तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति ॥ ३ ॥

भा० वृ०—तेभ्योऽन्वाहार्यं ददातीति [उदगवस्थितानां दक्षिणतो गतानामेवान्वाहार्यदानं तेभ्य इति निर्देशादित्याशङ्क्याऽऽह तस्यापि दीयत इति । अन्वाहार्यो दक्षिणा यतोऽतो ब्राह्मण ओद-नमिति मन्त्रः । प्रतिग्रहणं च दक्षिणहस्तेन सर्वदक्षिणानां ता-

स्वायैव हस्ताय दक्षिणायाऽऽनयदिति लिङ्गात् । व्यावृत्य प्रतिगृह्णीयादिति लिङ्गादिति पृथक्कृत्याऽऽत्मानं प्रतिग्रहीतारं च देवतारूपमिति प्रतिगृहीतत्वादात्मानमन्यत्वेन ध्यात्वा प्रतिग्रहणं हस्तेनोपादानम् ॥ ३ ॥

सू० दी०—तेभ्यश्चतुर्भ्यो दक्षिणरुद्भ्यो ददाति ॥ ३ ॥

प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति ॥ ४ ॥

भा० वृ०—उत्तरतः परीतेति याजमानं बहुवचनान्तत्वादित्याध्वर्यवे तु प्रैषे द्विवचनं स्यादाग्नीध्रहोत्रोः प्रैष्यत्वात्तेन चोक्तत्वाद्दक्षिणत एतेति यजमानेनोक्तत्वात् । उपदेशस्त्वाध्वर्यवमिति उक्तः संप्रैष इत्यैकवचनात् । उक्तः संप्रैष इत्यैकस्य प्रैषस्य वचनाद्याजमानत्वादाध्वर्यवकाण्डत्वाद्द्वितीयस्याऽऽध्वर्यवत्वमेव प्रथमस्य तु दानार्थत्वाद्याजमानार्थत्वम् । पूर्वव्याख्यान उक्तः संप्रैष इति जात्यभिप्रायमेकवचनम् । यथाप्राप्तानुवादत्वादुत्तरस्मिन्व्याख्यान उत्तरतः परीतेति बहुवचनं जात्यभिप्रायेणाविवक्षया वा । अविदहन्तः श्रपयतेतिवत् ॥ ४ ॥

सू० दी०—तैर्दक्षिणां प्रतिग्रहीष्यन्नित्यादिविधिना प्रतिगृहीत ओदन उत्तरत आगतान्संप्रेष्यति यजमान इति शेषः । परीतेति वचनात् ॥ ४ ॥

हविःशेषानुद्वास्यापिसृज्योल्मुके ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ॥ ५ ॥

अनुज्ञातो ब्रह्मणाऽऽग्नीध्रः समिधमादधात्येषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहेति ॥ ६ ॥

भा० वृ०—अपिसृज्योल्मुके इति अनूयाजार्थे प्राची उल्मुके उदूहतीत्यस्मिन्पक्षे । अनुज्ञातो ब्रह्मणाऽऽग्नीध्रो यदाऽध्वर्यु-

स्तदा समिधमादधातीत्यस्यार्थः । अनुज्ञात आग्नीध्रः समिधमादधातीति नैवं समन्वयः । ब्रह्मन्प्रस्थास्याम इत्यध्वर्युणा प्रार्थितत्वात्तस्यैवानुज्ञानं ब्रह्मणा कृतमतस्तथा योज्यं न च प्रस्थास्याम इति बहुवचनात्सर्वार्थप्रार्थनं प्रतिष्ठेत्येकवचनेनानुज्ञानात् ॥५॥६॥

सू०दी०—ये पूर्वमुल्मुके उदूढे ते प्रत्यूह्य संप्रेष्यति । ब्रह्मन्प्रस्थास्याम इत्यनूयाजार्थं प्रतिपद्यामहे तदर्थं प्रसुहीति । अग्नीत्त्वमपि समिधमाधाय संमृड्ढीति ॥ ५ ॥

सू०दी०——नन्वामन्त्रायेताऽध्वर्युरेव ब्रह्मणाऽप्यनुज्ञातव्य ओं प्रतिष्ठेति तत्कथमुच्यते—अनुज्ञातो ब्रह्मणाऽऽग्नीध्र इति । श्रूयतामध्वर्युणा तावत्प्रस्थास्याम इति बहुवचनात् । सर्वर्त्विगर्थमामन्त्रणमुक्तं ब्रह्मणाऽप्यों प्रतिष्ठेति । बहुवचनार्थेनैकवचनेन सर्वार्थ एव प्रसवः कृतस्तेनाऽऽग्नीध्रस्यापि अनुज्ञातत्वात् । युक्तमेव तथा वक्तुम् । अथवाऽनूयाजप्रक्रमार्थमों प्रतिष्ठेत्याग्नीध्रस्यैवानुज्ञा । यथाऽऽहाऽऽश्वलायनः—ओं प्रतिष्ठेति समिधमनुजानीयादिति ॥६॥

पूर्ववत्परिधीन्सकृत्सकृत्संमृज्याग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजं जिगिवाꣳसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति सकृदग्निं प्राञ्चम् ॥ ७ ॥

भा०वृ०—स्पष्टम् ॥ ७ ॥

सू०दी०—गतः ॥ ७ ॥

इध्मसंनहनान्याद्भिः संस्पर्श्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहेत्यग्नौ प्रहरत्युत्करे वा न्यस्यति शालायां बलजायां परोगोष्ठे परोगव्यूतौ वा ॥ ८ ॥

भा०वृ०—अध्वर्योरिध्मसंनहनाधानमिति संमार्गान्तस्य प्रेषितत्वात्तद्व्यतिरिक्तानामाध्वर्यवात्तापामुपस्पर्शनम् । यत्र रुद्रो देवतेति

केचिन्केवलरुद्र इति तदानीमपामुपस्पर्शनं स्वमतेन तु मान्त्रवर्णिकविशेषणविशिष्टस्तदा नोपस्पर्शनम् । बलजा तृणराशिर्धान्यराशिर्वा वंशेषु भवः संपुटको वा । परोगोष्ठे गोष्ठात्परतः । उपरि गोष्ठ इत्युपदेशः । गोष्ठ एवोपरीति । गव्यूतिर्गोमार्गः परोगव्यूतिः परतो गोमार्गात् ॥ ८ ॥४ । ३ । १ ।

सू०दी०—शालाऽग्निशाला । बलजा धान्यराशिर्वंशबन्धनार्था रज्जुरित्येके । परोगोष्ठाद्यो देशः स परोगोष्ठः । परोक्षशब्दवत्समासः । परशब्दस्य च परोभावो द्रष्टव्यः । एवं परोगव्यूतिरिति गव्यूतिर्गोमार्गः । गोस्थानाद्गोमार्गाद्वाऽन्यत्र यत्र क्वचिन्न्यस्यतीत्यर्थः । तथा च ब्राह्मणम्—यद्येनानि पशवोऽभितिष्ठेयुर्न तत्पशुभ्यः कमिति । मन्त्रवर्णश्च भवति पशूनस्माकं मा हिंसीरिति ॥ ८ ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

**औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाऽऽघारसंभेदं प्रतीचस्त्रीननूयाजान्यजत्याश्रावमाश्राव्य प्रत्याश्राविते देवान्यजेति प्रथमं संप्रेष्यति यज यजेतीतरौ ॥ १ ॥**

भा० वृ०—देवान्यजेति सर्वार्थो बहुवचनात् । प्रथमं संप्रेष्यतीति न प्रथमयागार्थमेव । सर्वार्थत्वेऽपि प्रथमस्योपरितनसंप्रैषापेक्षया प्रथमप्रयोगमात्रत्वमत उत्तरावनूयाजौ द्विर्यजौ । दभ्रिकाऽनूयाजसमिदग्रेणाऽऽघारसंभेदाद्यावद्दभ्रिका ह्रस्वाऽऽघारसंभेदस्य पूर्वमात्रपर्यवसिता द्विः प्रादेशैध्मायामापेक्षार्थमिदमुच्यते । पक्षान्तरे सर्वसमिधां प्रादेशमात्रत्वादग्रेणाऽऽघारसंभेदं प्रतीचस्त्रीनित्युक्तत्वात् ॥ १ ॥

सू० दी०—व्याख्यातोऽयं प्रयाजग्रन्थेन । अत्र तु देवान्यजेति सर्वा-

नूयाजार्थः प्रथमः संभेषः प्रातिस्विकौ त्वितरौ । तेनोत्तरयोर्द्विः-यजत्वं बोद्धव्यम् । प्रयोजनं च पशौ दर्शयिष्यामः ॥ १ ॥

**पूर्वार्धे प्रथमꣳ समिधि जुहोति मध्ये द्वितीयं प्राञ्च-मुत्तमꣳ सꣳस्थापयन्नितरावनुसंभिद्य ॥ २ ॥**

भा० वृ०—पूर्वार्धे प्रथमं मध्ये द्वितीयं प्राञ्चमुत्तममितरावनुसंभिद्येति निर्देशाद्दभ्रिका तदाह तस्या मध्ये मध्यम उत्तमस्तस्यापरेण मध्यमस्यापरेण सोऽप्यग्रेणाऽऽघारसंभेदम् । प्राक्संस्थ इति । आघारसंभेदसमीपादारभ्य प्राक्संस्थः, संभेदाभावेऽपि तद्देशा-दारभ्य देशलक्षणत्वादितरौ तेन संभिद्येते संसृज्येते ॥ २ ॥

सू० दी०—अग्रेणाऽऽघारसंभेदं यो देशस्तस्य पूर्वभागे प्रथममनुयाजं समिधि जुहोति मध्यदेशे द्वितीयम् । ततः पश्चादुत्तममारभ्य प्राञ्चमपवर्जयन्पूर्वहुतावनुयाजौ संसृज्य जुहोति । अत्राऽऽह बौधायनः किंदेवत्याः खल्वनुयाजा भवन्तीति । आग्नेया इत्येव ब्रूयात् । विज्ञायते तं देवा आहुतीभिरनुयाजेष्वित्यादि ॥ २ ॥

**प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति ॥ ३ ॥**

भा० वृ०—वाजवतीभ्यामिति परिज्ञानार्थमुत्तरौ विधिरिति । वाजव-तीत्वमृग्द्वित्वं च ज्ञेयं यद्यपि बहुमन्त्रत्वं तथाऽपि ॥ ३ ॥

सू० दी०—वाजवतीभ्यां वक्ष्यमाणाभ्यां व्यूहति विविधं गमयति स्रुचौ । तत्र द्वितीयस्या वाजवतीत्वोपचारः प्राणभृद्वत्प्रथमसाह-चर्याद्द्रष्टव्यः । तदेवं वाजवतीभ्यां व्यूहतीति कर्मविधिब्राह्मण-मुदाहृतं तदेव व्याचष्टे ॥ ३ ॥

**वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूमुद्यच्छति । अथा सपत्नानिति सव्ये-नोपभृतं नियच्छति ॥ ४ ॥**

भा० वृ०—वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनेत्यादि व्यूहनवि-धानादेव सिद्धे पुनर्वचनं ध्यानार्थमेव नियच्छति पीडयति ॥ ४॥

सू० दी०—नियच्छति निगृह्णाति ॥ ४ ॥

उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति ॥ ५ ॥

भा० वृ०—स्पष्टार्थः ॥ ५ ॥

सू० दी०—अत्रोभयं दक्षिणेन हस्तेन सव्याग्रहणादुपरि पुनः सव्यग्रहणाच्च ॥ ५ ॥

ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूं प्रोहति ॥ ६ ॥

भा० वृ०—दक्षिणेन हस्तेन जुहूं प्रोहति प्रागग्रं गमयति ॥ ६ ॥

सू० दी०—गतः ॥ ६ ॥

अथा सपत्नानिति सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरसित्वा प्रोक्ष्येनामभ्युदाहृत्य जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरम् ॥ ७ ॥

भा० वृ०—प्रतीचीं बहिर्वेदि निरसित्वेति प्रत्यगग्रामञ्जनमेकदेशस्याञ्जनमक्तस्यासंभवात् । अल्पत्वादाज्यस्य परिधीनामधोभागाञ्जनाशक्तेश्च परिध्येकदेशस्याञ्जनमक्तस्येति वचनात् ॥ ७ ॥

सू० दी०—जुह्वाज्यलेपेन । सर्वाञ्जनासंभवात्परिध्येकदेशानामञ्जनम् ॥ ७ ॥

न प्रस्तरे जुहूꣳ सादयति ॥ ८ ॥

भा० वृ०—स्पष्टम् ॥ ८ ॥

सू० दी०—वेद्यामेव बहिः प्रस्तरात्सादयति ॥ ८ ॥

संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवतामिति विधृतिभ्यां प्रस्तरमपादाय बर्हिषि विधृती अभिसृज्य स्रुक्षु प्रस्तरमनक्ति ॥ ९ ॥

भा० वृ०—स्पष्टम् ॥ ९ ॥

सू० दी०—गतः ॥ ९ ॥

इति पञ्चमी कण्डिका ।

अक्तꣳ रिहाणा इति जुह्वामग्रं प्रजां योनिमित्युपभृति मध्यम् । आप्यायन्तामाप ओषधय इति ध्रुवायां मूलम् । एवं त्रिः ॥ १ ॥

भा० वृ०—स्पष्टम् ॥ १ ॥

सू० दी०—एवं त्रिरिति वचनात्समन्त्रकस्याऽऽवृत्तिः ॥ १ ॥

अपि वा दिव्यङ्क्ष्वेति जुह्वामग्रम् । अन्तरिक्षेऽङ्क्ष्वेत्युपभृति मध्यम् । पृथिव्यामङ्क्ष्वेति ध्रुवायां मूलम् ॥ २ ॥

भा० वृ० स्पष्टम् ॥ २ ॥

सू० दी०—मन्त्रमात्रे विकल्पः ॥ २ ॥

एवं पुनः ॥ ३ ॥

भा० वृ०—स्पष्टम् ॥ ३ ॥

सू० दी०—एवं त्रिरित्यर्थः ॥ ३ ॥

अथापरम् । पृथिव्यै त्वेति ध्रुवायां मूलमन्तरिक्षाय त्वेत्युपभृति मध्यं दिवे त्वेति जुह्वामग्रम् ॥ ४ ॥

भा० वृ०—स्पष्टम् ॥ ४ ॥

सू० दी०—गतः ॥ ४ ॥

आयुषे त्वेत्यक्तस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीन आश्राव्य प्रत्याश्राविते संप्रेष्यती-

षिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति ॥ ५ ॥

भा० वृ०—वेदतृणस्याप्यपादीयत एकदेशः । अक्तस्य तृणमपादायेत्येकदेशाभिप्रायत्वात्षष्ठीनिर्देशस्य तृणमपादायेत्यत्राप्येकदेशापादानं दक्षिणोत्तराभ्यां दक्षिण उपरि हस्तः सव्योऽधस्तात् । आसीनस्याऽऽश्रवणं तिष्ठतोऽवचनादिति । अस्यार्थः—आसीनः संप्रेष्यतीति नैव संबन्धो यद्यपि क्रियापदसंबन्धः शब्दानां मुख्यस्तथाऽपि तिष्ठतः प्रैषनियमाभावेन प्रयोजनाभावात्तिष्ठन्स्रुचं वायव्यं चमसं वाऽन्वारभ्याऽऽश्रावयेदिति सर्वत्र नियमादत्राऽऽसीनविधानं प्रयोजनवदिति तेन संबध्यते । प्रत्याश्रावणलोपार्थमिति । यद्यप्यासीन आश्राव्य संप्रेष्यतीत्येतावद्ब्रूयादाश्रवणोत्तरकालं प्राप्तस्य प्रत्याश्रवणस्य लोपः स्यात् । आश्रवणोत्तरकालमेव प्रैषप्रतीतेः ॥ ५ ॥

सू० दी०—अक्तस्य तृणमक्तस्य प्रस्तरस्य संबन्धि तृणम् । दक्षिणोत्तराभ्यां दक्षिण उत्तरः सव्यादुपरि ययोस्तौ तथोक्तौ । पाणीभ्यामिति दीर्घपाठः प्रामादिकः ॥ ५ ॥

अनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति ॥ ६ ॥

भा० वृ०—सह शाखयेति सपवित्रा प्रह्रियते त्रिवृत्पवित्रेण सह तस्यापि कृतप्रयोजनतया प्रतिपाद्यत्वात्कालमात्रं चास्याः शाखाया अतः सवनीयेषु सूक्तवाको नोच्यते न तस्याः प्रस्तरेण सह यागद्रव्यता सूक्तवाकेन प्रस्तरमिति तस्यैव यागान्वयादतोऽत्र सवनीयानां शाखाप्रहरणमित्यस्मिन्पक्षे शाखार्थं सूक्तवाको नोच्यते । प्रस्तर आहुतिः सूक्तवाको याज्येति श्रुतेर्न शाखाप्रहरणाङ्गता सूक्तवाकस्याऽऽहुतियाज्यानिर्देशाद्देवतोद्देशेन द्रव्यत्यागे कृते प्रक्षेपात्मकं प्रहरणं तस्मादग्निहोत्रेणेदं हविरजुषतेत्यादेः पश्चाद्दक्षिणेन पाणिना सह शाखया प्रस्तरमाहवनीये, प्रहरति नोभाभ्यां न्यञ्चं हस्तं पर्यावर्तयन्निति विमोकवचनमेकस्यैव

दर्शनात् । प्रस्तराभावे चाग्नौ वैश्वानरादिषु न सूक्तवाक- । मन्त्रेण च प्रहरणं मरुतां पृषतयः स्थेति ॥ ६ ॥

सू० दी०--सूक्तवाको नामेष्टदेवतानुकीर्तनार्थं इदं द्यावापृथिवी इत्यनुवाकस्तदनुवचनकाले प्रस्तरं प्रहरति । शाखा चेदस्ति साऽपि तेन सह प्रहर्तव्येत्यर्थः । सा त्वपविद्धा प्रह्रियते ॥ ६ ॥

## न स्वाहा करोति ॥ ७ ॥

भा० वृ०--तत्र प्राप्तस्य स्वाहाकारस्य प्रतिषेधाद्वषट्कारप्रदानेष्वपि मन्त्रवत्सु वपाहोमादिषु स्वाहाकारः कर्तव्य इति ज्ञापयति । यद्यपि वषट्कारस्वाहाकारयोः प्रदानार्थतया विकल्पस्तथाऽपि वपादिषु आध्वर्यवस्यापि करणमन्त्रत्वात्स्वाहाकारप्राप्तिः सूक्तवाकस्य याज्यार्थत्वेऽपि वषट्कारविधानाभावात्प्रहरणसाधनतया विधिबलेन यागस्य कल्प्यत्वाद्वषट्कारनिवृत्तिः । अत एवात्राऽऽध्वर्यवमन्त्रे स्वाहाकारप्रतिषेधादप्रतिषिद्धे स्वाहाकारः प्रयोक्तव्य इति ज्ञापितम् । केचित्तु स्वाहाकारप्रतिषेधाद्वषट्कारप्रदानेष्वपि यद्यदग्नौ क्षिप्यते समिदादि तत्र तत्र स्वाहाकारं कुर्वन्ति देवताप्रकाशनमन्त्रयोगादप्याहुतय इति ॥ ७ ॥

सू० दी०--मरुतां पृषतयः स्थेति मन्त्रे स्वाहाकारं न करोति नन्वजुहोतित्वादेवाप्राप्ते स्वाहाकारे किं प्रतिषेधेन । सत्यं न प्राप्तस्तथाऽपि परमतेनाऽऽशङ्कितः प्रतिषिध्यते । एतद्धि मतं जैमिनीयानामस्ति यागविधिः सूक्तवाकेन प्रस्तरं प्रहरतीति तत्र याज्यास्थानीयः सूक्तवाकः प्रस्तरो द्रव्यं मान्त्रवर्णिक्यो देवताः प्रहरतिश्च यजत्यर्थ इति । प्रस्तरप्रतिपत्तेस्तु कालविधिरिति सूत्रकृतोऽभिप्रायः । अत एवोक्तमनूच्यमाने सूक्तवाक इति । तस्माद्युक्तः प्रतिषेधः ॥ ७ ॥

## न विधूनोति नावधूनोति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि नोदञ्चं प्रहरेत् ॥ ८ ॥

भा० वृ०--विधूननं कम्पनमवाचीनं कम्पनमवधूननं विक्षेपो विचालनं दक्षिणत उत्तरतो वा न प्रमार्ष्टीत्यादि पूर्वमेव व्याख्यातम् । नोदगग्रस्य प्रहरणम् ॥ ८ ॥

सू० दी०—जुह्वां प्रस्तरं प्रहरन्न विधूनोति न चालयति । नावधूनोति नावाचीनं कम्पयति । इतरेषां चतुर्णां पूर्ववद्व्याख्या । नोदञ्चं नोदगग्रम् ॥ ८ ॥

तिर्यञ्चं हस्तं धारयन्कर्षन्निवाऽऽहवनीये प्रहरति ॥ ९ ॥

भा० वृ०—तिर्यञ्चमधस्ताद्धारयन्निति दक्षिणहस्तमुपरिस्थमधस्ताद्दक्षिणाग्रमुत्तानं प्रतिशरणमङ्गारेषु कुट्टनं कर्षन्निवेति वचनात् । प्रतिशरणस्याङ्गारेषु गूहनप्राप्तौ सत्याम् ॥ ९ ॥

सू० दी०—दक्षिणं हस्तं तिर्यञ्चमधस्तादुत्तानोदङ्मुखाङ्गुलिकं जिह्मं धारयन्मुष्टिनैव सह कर्षन्निव शनैः शनैः प्रहरति । तथा जिह्ममिव हस्तं धारयन्नित्येव सत्याषाढभारद्वाजौ । स्वयं च वक्ष्यति न्यञ्चं हस्तं पर्यावर्तयन्निति ॥ ९ ॥

न प्रतिशृणातीत्युक्तम् ॥ १० ॥

भा० वृ०—न प्रतिशृणातीति ब्राह्मणे निषेधः । अत्यग्रमतिगताग्रमग्नेर्नात्यग्रं प्रहरेदित्यग्नेः पुरस्तादग्राणि यथा न भवन्ति तथा प्रहरेन्न पुरस्तात्प्रत्यस्येदित्याहवनीयस्य पुरस्तात्प्रक्षेपो न कर्तव्यः ॥ १० ॥

सू० दी०—न प्रतिशृणातीत्यादिब्राह्मणे यदुक्तं नियमजातं तदप्यनुसंधातव्यमित्यर्थः । न प्रतिशृणाति यथा प्रस्तरप्रमर्दिता अङ्गाराः प्रतिशीर्णा न भवन्ति तथा प्रहरतीत्यर्थः । तथोपरीव प्रहरतीति नियच्छति नात्यग्रं प्रहरेदित्यादि द्रष्टव्यम् । नात्यग्रमिति यथाऽग्निमतीत्याग्रं गतं न भवति तथेत्यर्थः ॥ १० ॥

प्रथयित्वा प्रहरेद्यं कामयेत प्रथस्य जायेतेति ॥ ११ ॥

भा० वृ०—प्रथयित्वा प्रहरेद्यं कामयेत प्रथस्य जायेतेत्येकं सूत्रम् ॥ ११ ॥

सू० दी०—न प्रथयितव्य इति भावः ॥ ११ ॥

आशीः प्रति प्रस्तरमवसृजाति ॥ १२ ॥

भा० वृ०—अवसृजाति विमुञ्चति आयुराशास्त इत्यादिषूच्यमानेषु प्रस्तरमवसृजाति। दक्षिणं हस्तं पर्यावर्तयन् ॥ १२ ॥

इति षष्ठी कण्डिका।

सू०दी०—उत्तरे व्याख्यास्यते ॥ १२ ॥

इति षष्ठी कण्डिका।

न्यञ्चं हस्तं पर्यावर्तयन् ॥ १ ॥

भा०वृ०—गतार्थः ॥ १ ॥

सू०दी०—आशीः प्रति आशिषः प्रति होतुराशीर्वचनकाल इत्यर्थः। अवसृजति विसृजति। कथम्। यथोक्तप्रकारधृतं हस्तं दक्षिणं प्रसार्य प्रस्तरस्योपरि न्यञ्चं पर्यावर्तयन् ॥ १ ॥

अग्नीद्गमयेति संप्रेष्यति ॥ २ ॥

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—प्रस्तरमाग्निं गमयेति संप्रैषार्थः ॥ २ ॥

त्रिरञ्जलिनाऽऽग्नीध्रोऽविष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रम् ॥ ३ ॥

भा० वृ०—अविष्वञ्चं सर्वतोऽग्रं संघटिताग्रमूर्ध्वमुत्क्षिप्य प्रहरेत् ॥ ३ ॥

सू०दी०—अविष्वञ्चं सर्वतोऽयं प्रस्तरमूर्ध्वमुद्यौति। यथोन्नतः सर्वोऽग्निं गमितः स्यात्तथोद्यम्य प्रहरतीत्यर्थः। यदेतैः प्रस्तरं प्रहरतीति श्रुतेः। स्वयं च वक्ष्यत्यग्नीधा प्रस्तरं प्रह्नियमाणमिति ॥ ३ ॥

अथैनमाहाऽऽग्नीध्रोऽनुप्रहरेति ॥ ४ ॥ यत्प्रस्तरात्तृणमपात्तं तदनुप्रहरति स्वगा तनुभ्य इति ॥ ५ ॥ एतदेतदिति त्रिरङ्गुल्या निर्दिश्याग्निमभिमन्त्रयत

आयुष्पा अग्नेऽस्याऽऽयुर्मे पाहीति ॥ ६ ॥ ध्रुवाऽसीत्यन्तर्वेदि पृथिवीमाभिमृशति ॥ ७ ॥ अथैनमाहाऽऽग्नीध्रः संवदस्वेति ॥ ८ ॥ अगानग्नीदित्यध्वर्युराह । अगन्नित्याग्नीध्रः श्रावयेत्यध्वर्युः श्रौषडित्याग्नीध्रः ॥ ९ ॥

भा०वृ०—एतदित्येतावता संवादः प्रहृतमेतदिति । अस्यार्थः अनुप्रहरेत्याग्नीध्रेणोक्तोऽध्वर्युः स्वगा तनुभ्य इति प्रहृत्याऽऽग्नीध्रेण संवादं करोतीत्येतत्प्रहृतमिति । एतदित्येतावान्मन्त्रस्तस्याभ्यस्तप्रयोगार्थं पुनर्वचनमङ्गुल्या निर्देशः संवादाङ्गभूतः प्रत्यक्षक्रियोपहितसंवादद्योतनायागानग्नीदित्यादि च संवादोऽगानग्नीदिति किमग्निमगमत्प्रस्तर इत्यर्थः। स केवलं मिथोभाषणात्मकः पूर्वस्य समन्त्रकक्रियारूपसंवादत्वादुत्तरस्य च संभाषणरूपत्वात्तत्र संवदस्वेति संप्रैषः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

सू०दी०—अनुप्रहरेति कोऽर्थस्तमेव व्यनक्ति ॥ ४ ॥

अध्वर्युरिति शेषः ॥ ५ ॥

एतदित्यङ्गुल्या तदेव तृणं निर्दिश्य दर्शयित्वा ॥ ६ ॥

गतः ॥ ७ ॥

कोऽयं संवादो नाम । तदेव दर्शयति ॥ ८ ॥

अग्नीत्प्रस्तरः किमग्निमगानिति प्रश्नः । तथाऽगन्नित्युत्तरम् ॥ ९ ॥

मध्यमं परिधिमन्वारभ्य संप्रेष्यति स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति ॥ १० ॥

भा० वृ०—स्पष्टार्थः ॥ १० ॥

सू० दी०—गतः ॥ १० ॥

अनूच्यमाने शंयुवाक आहवनीये परिधीन्प्रहरति ॥ ११ ॥

भा० वृ०—न परिधिप्रहरणार्थः शंयुवाक इति। अनूच्यमाने शंयुवाक इति निर्देशात्परिधिप्रहरणार्थता यद्यपि प्राप्ता तथाऽपि प्रस्तर आहुतिः सूक्तवाको याज्येतिवद्वचनाभावान्न परिधिप्रहरणार्थः शंयुवाकः। अनूच्यमान इति प्रहरणस्य कालमात्रमतो गार्हपत्ये भवतीति परिधिप्रहरणाभावेऽपि शंयुवन्तं गार्हपत्य इत्यस्मिन्पक्षे ॥ ११ ॥

सू० दी०—अनूच्यमान इति पूर्ववत् ॥ ११ ॥

**यं परिधिं पर्यधत्था इति मध्यमं यज्ञस्य पाथ उपसमितमितीतरौ ॥ १२ ॥**

भा० वृ०—स्पष्टम् ॥ १२ ॥

सू० दी०—युगपदितरयोः प्रहरणं समितमिति लिङ्गात् ॥ १२ ॥

**उत्तरार्धस्याग्रमङ्गारेषूपोहति ॥ १३ ॥**

भा० वृ०—इदमपि स्पष्टम् ॥ १३ ॥

सू० दी०—उपोहति उपगूहति ॥ १३ ॥

**यजमानं प्रथतेति परिधीनभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय सꣳस्रावभागा इति सꣳस्रावेणाभिजुहोति ॥ १४ ॥**

भा० वृ०—संस्रावाभिहोमः परिध्यङ्गमतो न गार्हपत्ये। परिधीन्प्रहरतीत्युक्तत्वात् स्रुचौ संस्रावयतीति विधाय यदेव तत्र क्रूरं तत्तेन शमयतीति निर्देशात्प्रहरणनिमित्तदोषपरिहारावगतेस्तथा परिधीन्प्रहृत्य संस्रावान्तं कृत्वेति विधानात्। केचिद्वसवो वै रुद्रा आदित्याः संस्रावभागा इति देवतार्थत्वाद्विनापि परिधिभिर्गार्हपत्ये कुर्वन्तीति पश्चाच्छंयुवन्तपक्षे। देवतार्थत्वेनाऽऽरादुपकारकत्वात्परिधीन्प्रहृत्य सꣳस्रावान्तं कृत्वेति च पृथगुपादानं परिधिप्रहरणाङ्गत्वे संगच्छते। अतः परिधिषु प्रहृतेष्वेता हारियोजनमित्यत्र संस्रावात्पूर्वमपि हारियोजनग्रहणं भक्षमान्तं वाजिनप्रचारः संस्रावान्तं कृत्वेति विधानादुत्तरकाल एव ॥ १४ ॥

सु० दी०—संस्रावहोमः परिध्यङ्गं तदभिहोमत्वात् प्रहृत्य परिधी-ञ्जुहोतीति वाजिनब्राह्मणस्य परिधीन्प्रहृत्य सꣳस्रावमन्तं कृत्वेति व्याकरणाच्च । अतोऽसौ न निवर्तते प्रायणीयायाम् ॥ १४ ॥

अत्रैवर्त्विजो हविःशेषान्भक्षयन्ति ॥ १५ ॥

भा०वृ०—अत्रैवेति हविःशेषेऽवधारणात्कृत्वा हविःशेषभक्षणं हारि-योजनेन प्रचरन्ति अत्रैवेत्यवधारणात्परिधिप्रहरणानन्तर्यं विधी-यतेऽतः परिधिषु प्रहृतेष्विति विधाने सꣳस्रावस्य परिधिप्रहरणा-ङ्गत्वपक्ष एव हविःशेषभक्षणोत्तरकालमेव हारियोजनवाजिनप्र-चारभक्षणे हविःशेषभक्षणात्पूर्वमेवास्मिन्पक्षे संस्रावान्तं कृत्वेति विशेषविधानादि । तच्च चातुर्मास्येषु वक्ष्यत्यत्रैव भक्षयन्ति तुरायणे न भक्षयन्तीति केचिदिति संस्रावस्य परिधिप्रहरणाङ्गत्वपक्ष एव प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यादिति न्यायेन हारियोजनात्प्रा-गेव हविःशेषभक्षणं प्राप्तमेवेति मत्वाऽवधारणस्य प्रयोजनान्तर-मुच्यते । तुरायणे हविरुच्छिष्टव्रतो भवतीति विधानाद्यजमान-स्यर्त्विजां हविःशेषभक्षापनय इति दर्शयितुमवधारणमिति । तथा च सोमे सोमान्हविःशेषानिति सुत्येऽहनि भक्षयन्तीति विधाना-दतोऽत्रैवर्त्विजो भक्षयन्ति । नत्वत्र यजमानेन सहर्त्विज इति सूत्रार्थः । अतः परिध्यनङ्गं यदा संस्रावस्तदा भक्षणमकृत्वा हारियोजनप्रचारः । प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यादिति न्यायेन हविःशेषभक्षणान्त एव वाजिनप्रचर्या ॥ १५ ॥

इ० द्वि० प० स० खं० ।

सु०दी०—अस्मिन्काले भक्षयन्ति नातः पुरस्तात्परस्ताद्वा ॥ १५ ॥

इति सप्तमी कण्डिका ।

---

इति द्वितीयः पटलः ।

---

आज्यलेपान्प्रक्षाल्य सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदꣳ होता स्फ्यमाज्यस्थालीमुदकमण्डलुं चाऽऽ-ग्नीध्रः ॥ १ ॥

भा०वृ०—जुहूपभृतोर्विमोकार्थं नयनं हिरण्यकेशिनोक्तमिति यज्ञयोगेन विहारैर्युक्तानां पात्राणां विमोकार्थं पश्चान्नयनं न पत्नीसंयाजाङ्गमतोऽपत्नीसंयाजायामपि पित्र्यायां क्रियते ॥ १ ॥

सू०दी०—गताः ॥ १ ॥

**आग्नीध्रप्रथमाः पत्नीः संयाजयिष्यन्तः प्रत्यञ्चो यन्ति ॥ २ ॥**

भा०वृ०—पत्नीग्रहणेन सोमादयो गृह्यन्ते देवानां पत्नीर्यजतीति पत्नीभिः साहचर्यात्पत्नीस्तु न संयाजयेदिति वचनाच्च सोमादयः पत्नीशब्दगृहीतास्तासां सह याग इति पत्नीसंयाजाः ॥ २ ॥

सू०दी०—पत्नीः संयाजयिष्यन्तो नान्यथाऽतः पित्र्यायामपत्नीसंयाजायां न गच्छन्ति । गच्छत्येवाध्वर्युः कर्मान्तरार्थम् ॥ २ ॥

**अग्रेण गार्हपत्यं दक्षिणेनाध्वर्युः प्रतिपद्यत उत्तरेणेतरौ ॥ ३ ॥**

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—प्रतिपद्यते गच्छति ॥ ३ ॥

**अश्रेर्वामपन्नगृहस्य सदसि सादयामीति कस्तम्भ्यां स्रुचौ सादयित्वा धुरि धुर्यौ पातमिति युगधुरोः प्रोहति ॥ ४ ॥**

भा०वृ०—कस्तम्भ्यां सादनं प्रोहणं च स्रुवाभ्यां यागपक्षेऽपि । कस्तम्भी, उपस्तम्भनार्था शकटस्य ॥ ४ ॥

सू० दी०—कं शकटं तद्यत्र स्तभ्यते सा कस्तम्भी । पश्चादौ तु स्रुग्बहुत्वे वा स्रुग्निनी धत्तं पातमित्येषां बहुवदूहः । न धुर्यावित्यस्य दंपत्यभिधानात् । तथा च ब्राह्मणं धुरि धुर्यौ पातमित्याह जायापत्योर्गोपीथायेति । मन्त्रश्च भवति यज्ञस्य युक्तौ धुर्यावभूतामिति ॥ ४ ॥

यदि पात्र्यां निर्वपेदेताभ्यामेव यजुर्भ्यां स्फ्ये स्रुचौ सादयेत् ॥ ५ ॥

भा०वृ०—यदि स्फ्ये सादने कृते पुनरुपादीयेते प्रत्याश्रावणार्थम् ॥ ५ ॥

सू० दी०—यदि पात्रीतो निर्वापस्तदा द्वाभ्यामपि यजुर्भ्यां स्फ्ये स्रुचावासादयेत्। यदाऽपि स्रुवाभ्यां पत्नीः संयाजयिष्यन्ति तदाऽपि नियतं स्रुचोर्नयनं सादनं च नित्यवदेव विधानात्। अत एवापत्नीसंयाजार्थत्वमप्यनयोः सूचितं भवति। तेन पितृयायामपि क्रियते ॥ ५ ॥

स्रुग्भ्यां स्रुवाभ्यां वा पत्नीः संयाजयन्ति ॥ ६ ॥

भा०वृ०—स्रुवाभ्यामेकस्मिन्गृह्णते महतीति। एक उपभृदर्थो ग्रहणे चेत्युपस्तरणाभिघारणे चतुर्गृहीतं वषट्कारश्चादर्विहोमानामिति पत्नीसंयाजेष्वपि चतुर्ग्रहणस्य प्राप्तत्वात्स्रुवाभ्यां यागेऽप्येकस्मिन्महति स्रुवेऽन्येन चतुर्गृह्णते स्रुवेण चेति ॥ ६ ॥

सू०दी०—ताभ्यामेव स्रुग्भ्यां यजन्तीत्येकः कल्पः। तत्स्थानीयाभ्यामागन्तुकाभ्यां स्रुवाभ्यामिति द्वितीयः। ग्रहणार्थस्तु स्रुवः सर्वत्र नित्यः। तत्र जुहूस्थानीयः स्रुवः पृथुबिलः सामर्थ्यात् ॥ ६ ॥

वेदमुपभृतं कृत्वा जुह्वा स्रुवेण चेत्येके ॥ ७ ॥

भा०वृ०—वेदमुपभृतं कृत्वा जुह्वा स्रुवेण वेति जुहूसहायो होमेऽपि स्रुवो वेदो वोपभृता विकल्प्यते ॥ ७ ॥

सू०दी०—स्रुवेणेति ग्रहणार्थस्यैव स्रुवस्यानुवादः। वेदमुपभृतः स्थाने कृत्वा यथापूर्वं जुह्वा स्रुवेण चेत्यर्थः। स्रुवोऽपि कश्चिदागन्तुर्जुह्वा सह धार्यत इत्यन्ये ॥ ७ ॥

अपरेण गार्हपत्यमूर्ध्वज्ञव आसीना ध्वानेनोपांशु वा पत्नीः संयाजयन्ति ॥ ८ ॥

भा० वृ०—अक्षरव्यञ्जनानामुपलब्धिर्ध्वानः । करणवदशब्दममनःप्रयोग उपांशु । होतुरप्येष स्वर आश्रवणादीनामपि न क्रुष्टेन स्वरेण पत्नीसंयाजानामाश्रुतादीनि क्रुष्टेन शेष इति स्विष्टकृत्प्रभृतिक्रुष्टविधानेऽपि शंयुवाकादूर्ध्वं मन्द्रस्वरः प्राप्तस्तस्माद्राध्यलिङ्गादाश्रवणादीनामपि तद्देशस्वर एव युक्तो बह्वृचानामूर्ध्वं चाऽऽशंयुवाकादितिवचनाद्ध्वानादेर्मन्द्रस्य च विकल्पः ॥ ८ ॥

सू० दी०—अत्र स्वरव्यञ्जनयोः पृथगुपलब्धिः सध्वनिर्ध्वानः । मुखप्रयत्नवाननभिव्यक्तशब्दप्रयोग उपांशुः । अनयोश्च क्रुष्टेन शेष इति क्रुष्टस्वरापवादार्थं वचनम् । पत्नीरिति वक्ष्यमाणा देवताः समाचष्टे देवपत्नीसंबन्धात् ॥ ८ ॥

दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्ये होता ॥ ९ ॥

भा० वृ०—गार्हपत्यस्यापरभागे दक्षिणतोऽध्वर्युस्थानं मध्ये होतुः स्थानं तस्योत्तरत आग्नीध्रस्थानम् ॥ ९ ॥

सू० दी०—गतः ॥ ९ ॥

आज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्त्याज्यस्य वा यथागृहीतेन ॥ १० ॥

भा० वृ०—जाघन्या एव चतुरवत्तमुपस्तरणाभिघारणविधानाभावात्प्रधानविकारत्वाभावाच्च भक्षस्य भक्ष्यस्य च पशोर्देवपत्नीनामेव प्रयोगः । आज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्तीति सोमत्वष्ट्रोरुपरि विधानात्पत्नीसंयाजशब्दस्य चालक्षितार्थपरिग्रहे चतुर्णामपि प्रसङ्गाद्द्वयोरुपरि श्रूयमाणस्य मुख्यार्थमेवेत्यतोऽग्निर्गृहपतिराज्येनैव । केचित्पशुवदिडावर्जनमित्यपरयोर्होमयोर्जाघनी तया पत्नीः संयाजयन्तीति विधानेऽपि पशावपरयोर्होमयोर्जाघनीदर्शनादत्रापि तथेति सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीरित्येतावति वक्तव्य आज्यग्रहणाच्च पत्नीसंयाजशब्दः साधारण इति च गम्यते । जाघनी क्लृप्ता भवति स्वधितिनाऽवदानमाज्येद्धा त्वाज्येनैवोत्तानायै होत्र इडामितिवदत्र जाघनीविधानाभावादाज्यस्य वा यथागृहीतेनेति । पूर्णो वा स्रुवोऽपूर्णो वा स्रुव आज्यग्रहणे यथागृहीतेनेति न चतुर्ग्रहणप्रापकं वषट्कारत्वादेव सिद्धेः ॥ १० ॥

सू० दी०—यज्ञियस्य पशोर्जाघन्या पुच्छेन लौकिकेन देवानां पत्नीः संयाजयन्ति। आज्यस्यैव वा यथागृहीतेन यथा यस्य ग्रहणमुक्तं तथा चतुरवत्तेन पञ्चावत्तेन वेत्यर्थः ॥ १० ॥

सोमायानुब्रूहि सोमं यजेति संप्रैषावुत्तरार्धे जुहोति॥ ११॥

भा० वृ०—वाजिलिङ्गत्वादृचः सोमायानुब्रूहीत्युच्यते मा भूत्सोमाय वाजिन इति वाजस्य संगथे समुयन्तु वाजा इति च वाजलिङ्गत्वाद्याज्यानुवाक्ययोस्तद्विशिष्टस्य च देवतात्वे प्राप्तेऽपि सोमं यजेत्युत्पत्तौ केवलसोमश्रवणात्सोमायानुब्रूहीत्येव प्रैषः, अग्नयेऽनुब्रूहीतिवत्। सर्वे पत्नीसंयाजा उत्तरार्धे जुहोत्येवमितरानिलिवचनात् ॥ ११ ॥

सू० दी०—व्याख्यातः प्राक् ॥ ११ ॥

एवमितरांस्त्वष्टारम् ॥ १२ ॥

भा० वृ०—गतार्थः ॥ १२ ॥

इत्यष्टमी कण्डिका।

---

सू० दी०—स्पष्टम् ॥ १२ ॥

इत्यष्टमी कण्डिका।

---

देवानां पत्नीरग्निं गृहपतिमिति ॥ १ ॥

भा० वृ०—स्पष्टम् ॥ १ ॥

सू० दी०—एतानप्येवं याज्यानुवाक्याप्रैषैरुत्तरार्धे यजतीत्यर्थः ॥ १ ॥

दक्षिणतस्त्वष्टारमुत्तरतो वा मध्येऽग्निं गृहपतिम् ॥ २ ॥

भा० वृ०—दक्षिणतः सोमस्योत्तरतो वा त्वष्टारं दक्षिणतस्त्वष्टारमुत्तरतो वेत्युत्तरार्ध एव सोमस्य दक्षिणत उत्तरतो वा त्वष्टा तयोर्मध्ये गृहपतिः। सोमत्वष्ट्रोर्मध्ये। केचिदग्नेर्दक्षिणतस्त्वष्टा मध्ये च गृहपतिरित्युत्तरार्धेन विकल्प इति वर्णयन्ति ॥ २ ॥

सू० दी०—दक्षिणतः सोमस्योत्तरतो वा त्वष्टारं यजत्युत्तरार्ध एव। तयोर्मध्येऽग्निं गृहपतिमित्यर्थः ॥ २ ॥

आहवनीयतः परिश्रिते देवानां पत्नीरपरिश्रिते वा ॥ ३ ॥

भा० वृ०—आहवनीयाग्निं यथा न पश्यति तथा च्छादयति ॥ ३ ॥

सू० दी०—यथाऽऽहवनीयो न दृश्यते तथा परिश्रिते प्रच्छादिते गार्हपत्य इत्यर्थः ॥ ३ ॥

राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ॥ ४ ॥

भा० वृ०—पत्नीसंयाजमध्ये पठिता एता देवताः काम्या न पत्नीसंयाजाः कुतश्चत्वारः पत्नीसंयाजा इति श्रुतेः ॥ ४ ॥

सू० दी०—नामानि त्रीण्येतानि न पत्नीसंयाजाः किंतु तत्कालभावीनि काम्यानि यागान्तराणि । कुतः । पूर्वत्र सोमादीनां परिगणनाच्चत्वारः पत्नीसंयाजा इति श्रुतेश्च । तेनैषां नोत्तरार्धादिनियमः ॥ ४ ॥

नित्यवदेके समामनन्ति ॥ ५ ॥

भा० वृ०—राकादयस्तिस्रो देवता नित्या इत्येके शाखिनः पठन्ति ॥ ५ ॥

सू० दी०—नित्यवद्यथा नित्यं तथा कामोपबन्धरहितमित्यर्थः । नित्यपक्षे विकृतावपि गच्छन्ति ॥ ५ ॥

पुरस्ताद्देवपत्नीभ्य एता एके समामनन्ति । उपरिष्टाद्वा ॥ ६ ॥

भा० वृ०—देवपत्नीभ्यः पुरस्तादुपरिष्टाद्वैतासां यागकालः सूचितः ॥ ६ ॥

सू० दी०—द्वावेतौ यागकालौ राकादीनामुभयथाऽप्याम्नानात् ॥ ६ ॥

पूर्ववद्धोतुरङ्गुलिपर्वणी अङ्क्त्वोपस्पृष्टोदकाय होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्याति षडग्नीधः ॥ ७ ॥

भा० वृ०—उपस्पृष्टोदकायेत्यत्र षष्ठ्यर्थे चतुर्थी । आर्षत्वात् । आग्नीध्रहस्ते षडाज्यबिन्दून् ॥ ७ ॥

सू०दी०—उपस्पृष्टोदकायेति पूर्ववत् ॥ ७ ॥

उपहूयमानामन्वारभन्तेऽध्वर्युराग्नीध्रः पत्नी च ॥ ८ ॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

सू०दी०—गतः ॥ ८ ॥

उपहूतां प्राश्नीतो होताऽऽग्नीध्रश्च ॥ ९ ॥

भा०वृ०—स्पष्टम् ॥ ९ ॥

सू०दी०—उभौ स्वां स्वां हस्त्यां प्राश्नीतः ॥ ९ ॥

अत्र स्रुवेण संपत्नीयं जुहोति पत्न्यामन्वारब्धायां सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताꣳ स्वाहेति ॥ १० ॥

भा०वृ०—पत्न्यभावेऽपि न निवर्तते संपत्नीयहोमः । प्रसवन्त्या अपि पत्न्याः फलं विद्यत एवेति । पत्न्याश्चानालम्भुकायाः कर्तृत्वान्वयाभावेऽप्यपूर्वाधिकारान्वयस्य विद्यमानत्वाच्च । न च पत्नीसंयाजाङ्गं संपत्नीयहोमः ॥ १० ॥

सू०दी०—अत्रास्मिन्काले । संपत्नीति मन्त्राक्षरसंबन्धात्संपत्नीय इति होमनाम । अन्वारब्धायामिति कर्तरि निष्ठा । न चानालम्भुकायां होमनिवृत्तिः, अङ्गनिवृत्त्या प्रधानस्यानिवृत्तेः ॥ १० ॥

पुरस्ताद्देवपत्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम् ॥ ११ ॥

भा० वृ०—यद्यपि पुरस्ताद्देवपत्नीभ्य इत्यादि निर्दिश्यते तथाऽप्युपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्यामिति । पत्नीसंयाजासंबन्धित्वात्फलार्थित्वाच्च सं पत्नी पत्या सुकृतेन गच्छतामित्यतः पिष्ट्यायामपत्नीसंयाजायामपि भवत्युपरिष्टात्काले पिष्टलेपफलीकरणहोमाभ्यामस्य होमस्य दिवि ज्योतिरादित्यो देवता हृदयान्तरपुरुषो वा परमात्मेत्यर्थः ॥ ११ ॥

सू० दी०—त्रयोऽमी कालविकल्पाः पूर्वेण सह चत्वारः। तत्र पत्नीसंयाजानामपि पिष्टलेपफलीकरणहोमवत्कालोपलक्षणमात्रत्वान्न तदङ्गमयं होमः। तेन पिन्ड्यायामपि क्रियते ॥ ११ ॥

दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति ॥ १२ ॥

भा० वृ०—पिष्टलेपः कृष्णाजिनाद्दृषदश्चोपलादेर्लेपः। पिष्टलेपफलीकरणाभावे तयोर्निवृत्तिर्होमयोस्तन्नामधेयत्वात्। अस्यार्थः—प्रधानयागार्थहविरनुनिष्पन्नयोः पिष्टलेपफलीकरणयोः प्रतिपत्तित्वाच्चतुर्गृहीताज्ये फलीकरणानोऽप्येत्वाज्यस्य तदर्थतावगतेस्तयोः प्रतिपत्तित्वेन प्रवृत्तिनिमित्ततया होमयोर्नामधेयत्वात्तयोः प्रतिपत्तिस्थानयोरभावे होमयोर्निवृत्तिः ॥ १२ ॥

इति नवमी कण्डिका।

---

सू० दी०—पिष्टलेपसंयुक्तो होमः पिष्टलेपहोमः। तथा फलीकरणहोमः। तौ चाऽऽज्यामिक्षादितन्त्रेष्वर्थलोपान्निवर्तेते पिष्टलेपफलीकरणप्रतिपत्त्यर्थत्वात्। पिष्टलेपहोमस्तु न केवलं तत्प्रतिपत्त्यर्थः किंतु विप्रुड्ढोमादिवदुलूखलादिश्लिष्टपिष्टावयवादिप्रतिपादनार्थं मन्त्रलिङ्गात्। तेन पश्वादिषु पिष्टलेपाभावेऽपि आज्येन केवलेन कार्यः। तथा चतुर्गृहीतं प्रकृत्याऽऽह बौधायनः—अन्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसल इति। भारद्वाजश्चाऽऽह—आज्येनैव पिष्टलेपं जुहोतीति। तत्र चाऽऽशिश्लेष यच्चराविति मन्त्रमूहति ॥ १२ ॥

इति नवमी कण्डिका।

---

फलीकरणहोमं पूर्वमेतद्वा विपरीतम्। चतुर्गृहीत आज्ये फलीकरणानोऽप्याग्नेऽदब्धायोऽशीततनो इति जुहोति। एवं पिष्टलेपानुलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले। अवप्रुषो विप्रुषः संय-

जामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति ॥ १ ॥

भा०वृ०—गतः ॥ १ ॥

सू०दी०—गतः ॥ १ ॥

या सरस्वती विशोभगीना तस्यै स्वाहा । या सरस्वती वेशभगीना तस्यै स्वाहेन्द्रोऽपानस्येकेहमनसो वेशान्कुरु सुमनसः सजातान्स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति ॥ २ ॥

भा०वृ०—उत्तरास्तिस्रो हूयन्त एव ॥ २ ॥

सू०दी०—पुनर्दक्षिणाग्निग्रहणं विस्पष्टार्थम् ॥ २ ॥

वेदोऽसीति वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति ॥ ३ ॥

भा०वृ०—निरसनव्यवायाद्वेदप्रासनमन्त्रावृत्तिर्वेदस्य च प्रासनं पत्नीसंस्कार इत्यतः प्रतिपत्तिर्न भवति । कृतप्रयोजनस्य वेदस्य प्रासनं पत्नीसंस्कारः । मिथुनमेव तेन करोति विन्दते प्रजामिति लिङ्गात् । वरुणप्रघासेषु च द्वयोर्वेदयोः प्रासनमुभयसंस्कारत्वात् । केचित्तु पत्नीसंस्कारं वर्णयन्ति विन्दते प्रजामिति लिङ्गात्तदा त्वेकस्य प्रासनं वेदसंस्कारत्वे प्रमाणाभावात् ॥ ३ ॥

सू०दी०—हौत्रस्यात्रोपदेशो ब्राह्मणानुसारात् । उपस्थोऽङ्कः । प्रास्यति क्षिपति । प्रतिप्रासनं मन्त्रस्याऽऽवृत्तिः क्रियते क्रियान्तरेण व्यवायात् । पत्नीसंस्कारश्चायं विन्दते प्रजामिति लिङ्गात् । तेन प्रतिपत्तिर्न प्रास्यति ॥ ३ ॥

निर्द्विषन्तं निररातिं नुदेतीतरा प्रास्तं प्रास्तं प्रतिनिरस्यति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०-प्रतिनिरस्यति प्रतिक्षिपति ॥ ४ ॥

**तन्तुं तन्वन्निति वेदं होता गार्हपत्यात्प्रक्रम्य संततमाहवनीयात्स्तृणात्या वा वेदेः ॥ ५ ॥**

भा०वृ०—स्तरणं भेदेन वेदिभेदादिति । स्तरणस्य वेदवेद्योः संस्कारत्वाद्वरुणप्रघासेषु वेदिभेदात्स्वेन स्वेन वेदेन तत्तद्वेद्याः स्तरणम् । मर्यादा, आ वेदेरिति । आ वा वेदेरित्यभिविधिपक्षे संततमाहवनीयात्स्तृणातीत्यनेन समानार्थत्वादा वा वेदेरिति विकल्पनिर्देशानुपपत्तेर्मर्यादा । यावद्वेदिदेशप्राप्तिस्तावत्स्तरणमिति ॥ ५ ॥

सू०दी०—आङुभयत्र मर्यादायाम् । वेदं विस्रस्य स्तृणाति ॥ ५ ॥

**इमं विष्यामीति पत्नीयोक्त्रपाशं विमुञ्चते ॥ ६ ॥**

भा०वृ०—होता चेद्योक्त्रं विमुञ्चति न तदा पत्नीति बह्वृचहौत्रप्रयोगपक्षे । अस्मदीयहौत्रपक्षे तु प्रासनानन्तरं वेदस्तरणमेव होतुर्योक्त्रविमोकस्तु पत्नीकर्तृकः पत्नीमन्त्रकाण्डे पाठात्तथा विनियोगादत्र होता चेद्योक्त्रमिति पाक्षिकनिर्देशादस्मदीयस्य बह्वृचोक्तस्य च विकल्पो भाष्यकारेणानुज्ञातः । तत्रायमभिप्रायः—ऋग्वेदेन होता करोतीत्युक्तत्वादस्मदीयहौत्रकाण्डेऽपि ब्राह्मणे यद्ब्रूयाद्योऽग्निं होतारमवृथा इत्यस्माकमनुक्तस्य बह्वृचोक्तस्य प्राप्तिमङ्गीकृत्यानूद्य निन्दावचनाच्च बह्वृचोक्तानुज्ञानादस्माकमपि प्रकृतौ समग्रोपदेशादुपदेशादितराणीति च सूत्रकारेण तदनुज्ञानादुभयोर्विकल्पो नास्मदीयमेव । कर्तृभेदाद्वा समुच्चय इति । यथा ब्रह्मवरणमध्वर्युयजमानयोः समुच्चीयते तद्वदस्मिन्पक्षे होता ग्रन्थिं विस्रंसयति पत्नी विमुञ्चति ॥ ६ ॥

सू०दी०—गतः ॥ ६ ॥

**तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयति ॥ ७ ॥**

भा०वृ०—प्रतिपत्तिं पूर्णपात्रनिनयनमित्यञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधातीति पत्नीसंस्कारत्वात्पूर्णपात्रनिनयनस्य ॥ ७ ॥

सू०दी०-पात्रपूर्णमुदकं पूर्णपात्रम् । तत्तूष्णीमानयति । पत्न्यनेकत्वे चाऽऽवृत्तिः पूर्ववत् ॥ ७ ॥

**समायुषा सं प्रजयेत्यानीयमाने जपति ॥ ८ ॥**

भा०वृ०-स्पष्टम् ॥ ८ ॥

सू०दी०—मन्त्रलिङ्गादयं पत्नीमन्त्रः ॥ ८ ॥

**निनीय मुखं विमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासमिति ॥ ९ ॥**

भा०वृ०—निनीयोदकलिप्तेन हस्तेन मुखविमार्गोत्थानमन्त्रः पुष्टिमतीति न मुखनिमार्जनमन्त्रः, निनीय मुखं विमृज्योत्तिष्ठतीत्युत्थानस्य प्रधानत्वात् ॥ ९ ॥

इति दशमी कण्डिका।

---

सू०दी०—तदुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन मुखं विमृज्य मन्त्रेणोत्तिष्ठति ॥ ९ ॥

इति दशमी कण्डिका।

---

इति तृतीयः पटलः ॥

---

**यथेतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति ॥ १ ॥**

भा०वृ०—अविज्ञातदोषनिर्घातार्थानि सर्वप्रायश्चित्तानि निमित्तविशेषसंयोगाभावान्नैमित्तिकविशेषसंयुक्तविशेषनिमित्तसंपातप्रज्ञाने तदेव तन्निमित्तकं भवति । ज्ञाते निमित्ते नैमित्तिकविशेषानुपदेशेऽनाज्ञातत्रयं निमित्ताज्ञान एतानि सर्वप्रायश्चित्तानि । सर्वत्राऽऽप्यायनमनेकार्थत्वादिति प्रत्यवदानं ध्रुवाया एकः परिहारः कर्तव्यो यस्माद्ध्रुवाया एव होमोऽतस्तदाऽऽप्यायनं

प्रतिहोमं यत्र नास्त्यर्थस्तत्र न क्रियत आप्यायनं यथेडास्विष्टकृति परिसमाप्यते नारिष्टान्ते स्विष्टकृदुपस्तरणाभिघारणेषु च ध्रौवसमाप्तिस्तत उत्तरमर्थाभावात् । उपदेशस्तु त्रिर्न करोत्याप्यायनं प्रायश्चित्तान्त एकः स्रुवः समिष्टयजुष इति उत्तरत्र पूरणकार्याभावाद्ध्रुवायां चतुर्गृहीतस्य विद्यमानत्वाद्दर्विहोमत्वाच्च समिष्टयजुषः ॥ १ ॥

सू०दी०—यथेतं येन मार्गेण पश्चाद्गतस्तेन प्रत्यागत्य दर्शपूर्णमासयोरविज्ञातदोषनिर्घातार्थानि प्रायश्चित्तानि जुहोत्याज्यस्थाल्या आज्येन दर्विहोमत्वात् । तच्च दर्शितमेव प्राक् । तथाऽऽज्यस्थाल्याः सर्वप्रायश्चित्तानीत्येव कल्पान्तरकाराः ॥ १ ॥

ब्रह्म प्रतिष्ठा मनस इत्येषा । आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन । ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृप्णुत भुवः । उद्वयं तमसस्पर्युदु त्यं चित्रमिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्यया सन्मनसा हितः । अयासन्हव्यमूहिषेऽया नो धेहि भेषजम् । प्रजापत इत्येषा । इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा । भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा । दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा । ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा । अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया

असि। अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजम्। यदस्मिन्कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा। अन्याऽऽहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन ॥ २ ॥

भा०वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—गतः ॥ २ ॥

इत्येकादशी कण्डिका।

---

आज्ञातमनाज्ञातममतं च मतं च यत्। जातवेदः संधेहि त्वꣳ हि वेत्थ यथातथम्। यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳस्विष्टꣳसुहुतं करोतु। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳस्विष्टꣳसुहुतं करोतु। यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि। स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः। आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम। अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम्। पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम्। यत्पाकत्रा मनसा दीनदक्षा न

यज्ञस्य मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्वि-
जानन्यजिष्ठो देवाꣳ ऋतुशो यजाति। यद्विद्वाꣳसो
यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः। अग्निर्मा तस्मा-
देनसः श्रद्धा देवी च मुञ्चताम् ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—गतार्थः ॥ १ ॥

इति द्वादशी कण्डिका।

---

अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मान्निषद्य। सन्व-
त्सनिꣳ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जात-
वेदो यच्च भद्रम्। ये ते शतं वरुण ये सहस्रं यज्ञियाः
पाशा वितता पुरुत्रा। तेभ्यो न इन्द्रः सवितोत
विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या। यो
भूतानामुद्बुध्यस्वाग्न उदुत्तममिति व्याहृतिभिर्विहृ-
ताभिः समस्ताभिश्च हुत्वा ॥ १ ॥

भा०वृ०—पुनः कृण्वꣳस्त्वेति यस्याः सोद्बुध्यस्वेति ऋक्। इतरस्याः शाखान्तरीयत्वात्कृत्स्नपाठप्रसङ्गात्। उदुत्तममिति परिच्छेदाद्द्वौ गणाविति उदुत्तममितीतिकरणं गणभेदार्थं तेन समवदाय होमपक्ष उदुत्तमान्तानां सहग्रहणं व्यावृत्त्यर्थं पुनर्गृह्यते चतुर्णां सह आज्यस्थाल्याः सर्वप्रायश्चित्तानि ध्रौवादकृत्स्नसंस्थास्विति भारद्वाजमतिः। अत्र प्रायश्चित्तेष्वादितश्चतुर्णां मन्त्राणां ब्रह्मा यज्ञो मरुतो देवा ऋभवश्च देवताः। ततस्त्रयाणां सूर्यस्ततो द्वयोर्वरुणो द्वयोरग्नीवरुणावुत्तरस्याग्निस्ततः प्रजापतिस्ततोऽष्टानां मन्त्रोक्ताश्चतुर्थ्यन्ता देवतास्ततोऽग्निस्ततो देवास्ततोऽग्निर्जातवेदा द्वयोरग्निः स्विष्टकृदुत्तरस्येन्द्रो वृत्रहा ततो हरिवाननाज्ञातमिति त्रिकस्याग्निरुत्तरस्याग्निः श्रद्धा च ततोऽग्निर्जातवेदा उत्तरस्य वरुणेन्द्रसवितृविष्णुविश्वेदेवमरुत उत्तरस्य रुद्रो

मान्त्रवर्णिको वा ततोऽग्निस्ततो वरुणो व्याहृतीनामग्निर्वायुः सूर्यः प्रजापतिरिति सर्वत्र चतुर्थ्यन्ता देवताः ॥ १ ॥

सू०दी०—अत्रोद्बुध्यस्वाग्न इति संहित्यैव गृह्यते नाग्निहोत्रे वक्ष्यमाणा, आदिप्रदिष्टत्वात् ॥ १ ॥

**पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तवैयूर्ध्वस्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति ॥ २ ॥**

भा०वृ०—पूर्ववदाप्यायनं वचनकृतमित्यवदाननिमित्तैकपरिहारे प्रागेव प्राप्तिः पुनराप्यायनं वाचनिकं समिष्टयजुरित्येकवचनादन्त एव होमः स्वाहाकारेण । न प्रतिस्वाहाकारं मन्त्रभेदः कृत्स्नमन्त्रान्ते स्वाहाकारं कृत्वा होमः। यद्यन्तेन क्रियते मध्यमो न स्यादिति मध्यमे स्वाहाकार इति निर्देशादन्ते स्वाहाकारेण होमोऽन्तर्वर्तिनामप्रदानार्थत्वं पुरस्तादन्ते वा स्वाहाकारः प्रदानार्थः पुरस्तात्स्वाहाकारा इति पुरस्तात्स्वाहाकारा वा अन्ये देवा इत्यादिना पुरस्तादन्ते वा स्वाहाकारः प्रदानार्थः ॥ २ ॥

सू०दी०—अत्रापूर्वाप्यायनविधानादेवाप्राप्तो मन्त्र इति कृत्वा पूर्ववदिति मन्त्रातिदेशः। मन्त्रान्त एव होमो न पूर्वयोः स्वाहाकारयोः समिष्टयजुरित्येकवचनात् । पशावनेन रुहान्ये च द्वे उक्त्वा त्रीणि समिष्टयजूंषि जुहोतीति वचनाच्च ॥ २ ॥

**मध्यमे स्वाहाकारे बर्हिरनुप्रहरति ॥ ३ ॥**

भा०वृ०—न मध्यवर्तिनः प्रदानार्थत्वं बर्हिःप्रहरणस्य कालमात्रं न समिष्टयजुरङ्गं बर्हिःप्रहरणं बर्हिषः प्रतिपत्त्यर्थत्वादन्यार्थत्वायोगात्तत्कालमात्रं मध्यमे स्वाहाकार इति । तस्मात्पिण्ड्यायां प्रह्रियतेऽभावेऽपि समिष्टयजुषः। समिष्टयजुषो देवा गातुविदः प्रकृता ब्रह्मा चेत्येके ॥ ३ ॥

सू०दी०—मन्त्रान्ते पारिभाषिकस्वाहाकारापेक्षया द्वितीयस्यात्र मध्यमत्वमभिप्रेतम् । अत एव च लिङ्गादवगच्छामो मन्त्रान्तगत एव स्वाहाकारः प्रदानार्थो न मध्यगत इति । आदिगतस्यापि क्वचित्प्रदानार्थत्वं परिवप्ये दर्शयिष्यामः। मध्यमे स्वाहा-

कार इति कोऽर्थः । वाचि स्वाहेत्यस्मिन्नित्यर्थः । तेन पशुसोमयोः समिष्टयजुर्विंवृद्धावपि तस्मिन्नेव बर्हिःप्रहारः । प्राकृतस्यैव मध्यमस्य तत्रापि विद्यमानत्वाद्बर्हिः सर्वमनुप्रहरति । बर्हिर्मुष्टिं वेति तु सत्याषाढभारद्वाजौ ॥ ३ ॥

यदि यजमानः प्रवसेत्प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् ॥ ४ ॥

भा०वृ०—स्पष्टार्थः ॥ ४ ॥

सू०दी०—दधामीति लिङ्गादवधाने मन्त्रः ॥ ४ ॥

अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्न इति होतृषदनैर्वेदिमभिस्तीर्य को वोऽयोक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि प्रणीता आसाद्य विमुञ्चति ॥ ५ ॥

भा०वृ—हरितत्वं होतृषदनानां लिङ्गादिति । होतृषदना हरिताः सुवर्णा इति समवेताभिधानसंभवात् । विमोकार्थो मन्त्रः प्रणीतानां नाऽऽसादनार्थो विमुञ्चत्विति लिङ्गात् । विमोचनं च यज्ञसंबन्धविच्छेदबुद्ध्याऽन्तर्वेद्यासादनम् ॥ ५ ॥

सू०दी०—प्रणीतानां विमोचने मन्त्रस्तल्लिङ्गत्वात् । कर्माङ्गत्वनिवर्तनार्थतया मन्त्रोच्चारणेनैव विमोकः ॥ ५ ॥

यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुत्कर उपवेषꣳ स्थविमत उपगूहति ॥ ६ ॥

भा०वृ०—अग्रं स्थविमत्स्थूलं मूलं तनूपवेषस्येति । पुरस्तात्प्रत्यञ्चमुत्कर उपवेषं स्थविमत उपगूहतीति वचनादुपवेषस्याग्रमवतष्टम् ॥ ६ ॥

सू०दी०—स्थविमतः स्थूलमूलप्रदेशादारभ्योत्करपांसुषु पुरस्ताद्भागेन प्रत्यगुपगूहति ॥ ६ ॥

इति त्रयोदशी कण्डिका ॥ १३ ॥

---

अथाभिचरेद्योपवेष शुक् साऽमुमृच्छतु यं द्विष्म इत्यथास्मै नाम गृह्य प्रहरति ॥ १ ॥

निरमुं नुद ओकसः सपत्नो यः पृतन्यति । निर्बाध्येन हविषेन्द्र एणं पराशरीत् । इहि तिस्रः परावत इहि पञ्चजनाꣳ अति । इहि तिस्रोऽति रोचना यावत्सूर्यो असद्दिवि । परमां त्वा परावतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायसि शश्वतीभ्यः समाभ्य इति हतोऽसाववधिष्मामुमित्येताभिः पञ्चभिर्निरस्येन्निखनेद्वा ॥ २ ॥

भा०वृ०—योपवेष इत्युत्करे प्रहरणमुपवेषोपगूहनप्रत्याम्नायोऽभिचारनिमित्तप्रतिपत्त्यन्तरविधानान्नित्यस्याविकारो न तु समुच्चयः । प्रहरणं निरसनमत्रैव मन्त्रे नामग्रहणं शत्रोः । योपवेषे शुक् साऽमुमृच्छत्वित्यत्रामुमिति शत्रोर्नाम द्वितीयान्तं गृह्यते निरमुं नुदेति तिसृभिर्ऋग्भिर्यजुर्भ्यां च निरसनमुपवेषस्य योपवेष इति प्रथमं यजुर्द्विष्मान्तं निरमुं नुद इति तिस्र ऋचः । हतोऽसाववधिष्मामुमिति पञ्चमं यजुर्नात्रामुमित्यस्य स्थाने शत्रोर्नामोच्चारणम् । ब्राह्मणे, अथास्मै नाम गृह्य प्रहरतीति नामग्रहणमुक्त्वा तत उत्तरं निरमुं नुदेत्यादिविनियोगाद्धतोऽसाववधिष्मामुमित्यत्र तु शत्रोर्ध्यानं न तु नामनिर्देशः । यं द्विष्यात्तं ध्यायेदिति विधानादेताभिरितिस्त्रीलिङ्गमृग्बहुत्वात् ॥ १ ॥ २ ॥

सू०दी०—यद्यभिचरितुमिच्छेदथास्मै नाम गृह्णास्याभिचर्यमाणस्य नाम योपवेषे शुक् सा देवदत्तमृच्छत्विति गृहीत्वोत्कर एव प्रहरति वज्रवत्तद्धिंसार्थतया क्षिपतीत्यर्थः । अथवाऽस्मा एनमुद्दिश्य तस्यैव नाम गृहीत्वा प्रहरतीत्यर्थः ॥ १ ॥

यजुष्ट्वेऽप्यन्त्ययोर्ऋग्बाहुल्यादेताभिरिति स्त्रीलिङ्गनिर्देशः । तत्र च ऋग्यजुर्विवेचनार्थः प्रथम इतिकरणः । शत्रुनामग्रहणार्थो मन्त्रेष्वदःशब्दः । निरस्येन्निणुदेदुत्करे । निखनेन्निहन्याच्छङ्कुवत् ॥ २ ॥

**अवसृष्टः परापत शरो ब्रह्मसꣳशितः । गच्छामित्रान्प्रविश मैषां कंचनोच्छिष इति वा ॥ ३ ॥**

भा०वृ०—अवसृष्ट इति वा पञ्चभिर्विकल्प्यते । केचित्तु योपवेष इत्युपगृह्य शत्रोर्नाम गृहीत्वोत्करे प्रहरन्तीत्युपवेषमस्यार्थः—स्थविमत उपगूहतीत्युपगूहनं विधाय यद्यभिचरेद्योपवेष इत्यारभ्य द्विष्म इतीतिकरणादथास्मै नाम गृह्य प्रहरतीत्युत्तरत्र प्रहरणोपदेशादभिचरतः प्रथमो मन्त्र उपगूहनार्थः । उपगूढं पुनरुपादाय शत्रोर्नाम गृहीत्वा निरमुं नुद इत्यादिभिश्चतुर्भिः प्रहरेदुपवेषेणोत्करे पीडयेत् ॥ ३ ॥

सू०दी०—अनन्तरविधावेवायं मन्त्रविकल्पः ॥ ३ ॥

**यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य संख्यायोद्वासयति ॥ ४ ॥**

भा०वृ०—चतुष्पदयेति ज्ञानार्थं कृत्वा विमोकं गणनाप्रथितानां समूहनं विमोकः । क्रमेण सर्वकपालयोगाद्विमुच्यानन्तरं संख्यायोद्वासनमुभयोः पृथक्पदार्थत्वात् ॥ ४ ॥

सू०दी०—चतुष्पदयर्चेति ब्राह्मणानुकरणम् । अत्रापि विमोकः पूर्ववत् । संख्यावचनमप्रमादार्थं यद्येकं कपालं नश्येदिति प्रणाशे प्रत्यवायप्रायश्चित्तयोः श्रवणात् ॥ ४ ॥

संतिष्ठते दर्शपूर्णमासयोः ॥ ५ ॥

भा०वृ०--ततः संतिष्ठते समाप्तिराध्वर्यवस्यात्र ब्रह्मभागप्राशनादिनिष्क्रमणान्तम् ॥ ५ ॥

संतिष्ठेते दर्शपूर्णमासौ ॥ ५ ॥

सू०दी०---एवमन्तावाध्वर्यवेण संतिष्ठेते याजमानशेषस्तु वक्ष्यते । सन्ति हेडासूक्तवाकशंयुवाका नाम होतृनिगदसंयुक्तास्त्रयः कर्मविशेषास्तेष्विडा तावद्द्रव्यभेदेनोभयोरप्याहवनीयगार्हपत्ययोर्नियता । हविरिडाऽऽहवनीय आज्येडा गार्हपत्य इति । तथा सूक्तवाकशंयुवाकावपि सूत्रान्तरकारैर्नियमविकल्पाभ्यामुभयत्रेष्येते । सूत्रकारस्तु तावन्यतरत्रैवेच्छन्हविरिडानन्तरमाहवनीये पूर्वमभिहितवानिदानीं त्वाज्येडानन्तरं गार्हपत्ये स्यातां नाऽऽहवनीय इत्याह ॥ ५ ॥

शंय्वन्तं वाऽऽहवनीये संस्थापयेदाज्येडान्तं गार्हपत्य इडान्तं वाऽऽहवनीये शंय्वन्तं गार्हपत्ये ॥ ६ ॥ यदि शंय्वन्तं पश्चात्स्याद्वेदात्तृणमपादाय जुह्वामग्रमज्यात्स्रुवे मध्यमुपभृति वाऽऽज्यस्थाल्यां मूलं तस्य प्रस्तरवत्कल्पः सूक्तवाकाद्या शंयुवाकात् ॥ ७ ॥

भा०वृ०—उभयाग्निसंयुक्ते उत्तरे द्वे संस्थे । अग्निग्रहणं पूर्वापरदेशलक्षणार्थमाज्येडान्तं गार्हपत्य इडान्तं वाऽऽहवनीय इतीडयोरग्निसंबन्धाभावादग्निसमीपदेशलक्षणायां तद्वर्तिनां कर्मणां तत्तदन्ते विरमणम् । न च कल्पचतुष्टयं वाशब्दस्य द्विरेव पाठादस्मिन्पक्ष इडायाः प्राक्प्राशित्रं संपत्नीहोमश्च संभवतां परित्यागायोगाच्छंय्वन्तं संस्रावान्तमाहवनीये कर्मेति शंयुवाकमध्ये परिधिप्रहरणात्प्रहरणाङ्गत्वाच्च संस्रावस्य तदन्तता संस्रावस्यानङ्गत्वे परिधिप्रहरणान्तं हविःशेषभक्षणनिवृत्तिर्ध्रौवस्य च समाप्तिः पूर्वमेव नारिष्ठान्ते स्विष्टकृति च नोपवेषप्रणीताविसर्गौ प्रणीताविमोके पूर्वमुपादातव्ये व्युत्क्रमेणोपादानमुपवेषादेः पदार्थस्यात्यन्तनिवृत्तिः । प्रणीतानां तु विमोकस्यान्तर्वेद्यासादनपर्यन्तत्वात्तस्य चानि-

वृत्तेर्निषेधस्य स्तोकविषयत्वात्प्रणीताविमोकादेः प्रतिषेधात्संस्थायाः प्राक् सर्वप्रायश्चित्तानि हूयन्ते जुह्वा स्रुवेण वा जुहोति एतावति वक्तव्ये सर्वप्रायश्चित्तानीति वचनादासु संस्थासु चाविदितानां दोषाणां संभावितत्वाद्व्युत्क्रमविशेषोपदेशादेतानि न हूयन्ते । साधारणोपदेशोपदिष्टान्नीष्टेभ्य इत्यष्टावाहुतयः सर्वसाधारणानि प्रायश्चित्तानि तान्येव खण्डसंस्थासु हूयन्ते । दार्शपूर्णमासिकैः सर्वप्रायश्चित्तैर्विकल्पेरन्निति तत्साध्यदोषनिर्घातैः साधनैः सह विकल्पन्ते न तेषां क्रमेण विकल्पस्तथा हि प्रायश्चित्तप्रश्नोपदेशः फलवान्भवतीतरथाऽत्रैव समृद्ध्यै स्वाहेता एवेति वक्ष्यन्तीति न समिष्टयजुर्ध्रौवसमाप्तेर्न बर्हिष्प्रहारः कालाभावान्न होतृषदनस्तरणं स्तीर्णत्वाद्वेदेर्यजमानपत्नीकर्मणामनिवृत्तिराध्वर्यवसमाप्त्युपदेशानन्तरं संस्थान्तरोपदेशादाध्वर्यवसमाप्तिरेव । ब्रह्मणोऽपि प्राशनोपस्थानादि भवत्येवान्यो वा वृतो होता ब्रह्माऽऽग्नीध्रो वाऽन्तर्वेद्यासाद्य विमोकं कृत्वा प्रणीतानां धारां स्रावयत्यनेन माध्यलिङ्गेनेडान्तायां चतुर्धा कृत्वा बर्हिषदं करोत्यन्योऽन्वाहार्यस्तु गृह्यते प्राग्देशत्वाभावात्पूर्णपात्रनिनयनं च कुर्यात्पत्न्यास्तदर्थत्वादित्यस्यार्थः—आज्येडान्तं गार्हपत्य इत्यस्मिन्पक्षे गार्हपत्यसंनिधौ पूर्णपात्रनिनयनं च कर्तव्यं संपत्नी पत्याऽहं गच्छ इति लिङ्गात्पत्न्यर्थत्वाच्छंयुवाकान्तं गार्हपत्य इत्यस्मिन्पक्षे न परिधिप्रहरणं न संस्रावः शंयुवाकानङ्गत्वादाज्येडां भक्षयित्वा समाप्तिः ॥

न जुहोति संपत्नीयं यद्यहुतो यदि पत्नीसंयाजमध्ये न हुतः । यदीति प्रमादे दोषाभावः । प्राशित्रमप्येवम् । हूयन्ते दक्षिणाग्निहोमा अग्निनियमान्निवृत्तिर्वा याजमानस्यापि यत्राध्वर्युरुपस्मत्याहवनीयसमीपस्थस्य प्रणीताविसर्गस्य गार्हपत्यसमीपस्थस्य योक्त्रविमोकादेः संस्थापयेदित्यविशेषवचनादितरथेडान्तनियमोऽनर्थकः स्यात् । यदि मिश्राणि चतुर्धाकरणादीनि क्रियेरंश्चतुर्धाकरणादीनामृत्विग्यजमानमिश्राणां याजमाननिवृत्त्या यद्यनुष्ठानं स्यात्तर्हीडान्तनियमोऽनर्थकः स्यादतोऽध्वर्युरेतानि कर्माणि करोतीति ब्रूयाद्यद्यन्येन मिश्राणि क्रियेरन्नध्वर्योरपनय-

नमात्रं स्यादतोऽन्येन सर्वं क्रियतेऽतोऽध्वर्युमात्रपरत्वादिडान्तनियमोऽनर्थकः स्यादतो निवृत्तिर्यजमानस्यापि। केचित्पृथगेताः संस्थाः कल्पयन्ति तेषामाहवनीयग्रहणमनर्थकं शंय्वन्तं वाऽऽहवनीय इति वाशब्दचतुष्टयाभावाच्च। ततः कल्पद्वयमेवेडान्ते दक्षिणाचतुर्धाकरणादेर्निवृत्तिर्यजमानस्यापि निवृत्तिपक्ष आज्येडां भक्षयित्वा वेदतृणमपादाय तस्यैवावयवमायुषे त्वेति निधायाविकृतः सूक्तवाक इति शंय्वन्तं गार्हपत्य इत्यस्मिन्पक्षे प्रयोगविधिः। अग्निशब्दस्य गार्हपत्येऽपि संभवादविकृतः सूक्तवाक आहवनीये परिधयो न क्षिप्यन्ते शाखा तु वेदतृणेन सह प्रह्रियते न च संस्रावः क्रियते शंयुवाकानङ्गत्वात्ततो दक्षिणाग्निहोमाः सर्वत्र समानं सर्वसंस्थासु हूयन्ते विष्णुक्रमादि याजमानं यजमानपत्नीकर्मणां निवृत्तिरित्यस्मिन्पक्षेऽपि विष्णुक्रमादिकर्तव्यमानीयमानायां जपतीत्यादिवच्चतुर्धाकरणादीनां निवृत्तावपि विष्णुक्रमाद्यनिवृत्तिर्ऋत्विग्व्यापारानपेक्षत्वादात्मसंस्कारत्वाच्च ॥६ ॥७॥

सू०दी०—तत्र तावद्द्वाभ्यां वाशब्दाभ्यां द्वावेव कल्पौ विकल्पेते न चत्वारः। आहवनीयगार्हपत्यशब्दाभ्यां च गार्हपत्यात्पूर्वापरदेशौ लक्ष्येते अनाग्निसंयोगित्वादिडायाः। यदि शंय्वन्तं पश्चात्स्यादीति लिङ्गाच्च। तदयमर्थः—यत्पूर्वदेशसंयुक्तमिडादि कर्म तद्यथाप्रसिद्धमेव शंयुवाकान्तं कुर्यादपरदेशसंयुक्तमप्याज्येडान्तमिति प्रथमः कल्पः। स च पूर्वोक्त एव कल्प उत्तरविकल्पार्थमनूदितो वेदितव्यः। यथा चैत्रो भोजनीय इत्युक्त्वा चैत्रो वा भोज्यतां मैत्रो वेति। द्वितीयः कल्पस्त्विडान्तमेव संस्थापयेत्पूर्वदेशे न तु सूक्तवाकशंयुवाकौ तत्र भवतः। तौ त्वपरदेशे भवत इति। यदा त्वपरदेशे भवतस्तदैवं प्रयोग इत्याह ॥ ६ ॥

यदि शंयुवाकान्तं कर्म पश्चाद्देशे स्यात्तदाऽऽज्येडानन्तरं प्रस्तरस्थाने वेदतृणमङ्क्त्वा तद्वदेव प्रहरति। तत्र सूक्तवाकाद्यविकृतमा शंयुवाकादित्यर्थः। प्रस्तरप्रहारस्तु निवर्तते प्रत्याम्नानात्। परिधिप्रहारस्तु भवत्येव स्वकाले प्राप्तत्वादप्रत्याम्नातत्वाच्च। न चैषां गार्हपत्ये प्रहारः शंयुवाकानङ्गत्वादाहवनीयसंयोगित्वाच्च। तथाऽन्येषामपि तद्देशसंयोगिनां तत्र तत्र यथाकालं प्रयोगोऽवग-

न्तव्यः । केचित्तु संस्थापनशब्दौचित्याद्दर्शपूर्णमासयोरेवेमौ खण्डसंस्थाविकल्पौ व्याचक्षते तत्र तत्र यत्तन्त्रं तच्छंयुवाकाद्य-न्तमेव संस्थापयेदिति । तत्र गुणागुणयोः स्थापने प्रमाणं सूत्र-विद इत्यलं निर्बन्धेन । सन्तीह दर्शपूर्णमासयोरधिकारवाक्याणि स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत सर्वेभ्यः कामेभ्यो दर्शपूर्ण-मासौ यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यादीनि । तानीदानीं व्याचष्टे ॥ ७ ॥

**स्वर्गकामो दर्शपूर्णमासौ ॥ ८ ॥ एककामः सर्वका-मो वा ॥ ९ ॥ युगपत्कामयेताऽऽहारपृथक्त्वे वा ॥ १० ॥**

भा० वृ०—यदैककामस्तदा स्वर्ग एवाऽऽद्ये कामयितव्य इति । स्वर्ग-कामो दर्शपूर्णमासावेककाम इत्येकं सूत्रमितरथाएककामइत्यस्या-नन्वयात् । सर्वकामरहितपक्षे स्वर्गकामस्यैव दर्शपूर्णमासौ न पश्वा-देरन्यतरकामस्य प्रथमं सर्वकामो वाऽधिकारी । तत्र युगपत्कामो मन्दफलः । आहारपृथक्त्वे वा स्वर्गादीन्वाऽयुगपत्पूर्णमास एकैककामः ॥ ८ ॥ ९ ॥ १० ॥

सू० दी०—कुर्यादिति शेषः । नित्यौ दर्शपूर्णमासावफलार्थिनामप्य-नुष्ठेयाविति स्थास्यति । तथाऽप्येतौ स्वर्गं कामयमानस्य तमपि साधयत इत्यर्थः ॥ ८ ॥

एककाम इत्यनन्तरोक्तस्यैव स्वर्गकामस्योत्तरविकल्पार्थोऽनु-वादः । स्वर्गकामश्रुतेश्च स्वर्गकामो वा तौ कुर्यात्सर्वेभ्यः कामेभ्य इति श्रुतेः । सर्वकामो वेत्यर्थः । यदा तु सर्वकामस्तदा ॥ ९ ॥

दर्शपूर्णमासयोरारम्भदशायामेव सर्वप्रयोगार्थं सर्वान्कामान्युगप-त्कामयेत । आहार आहारे वा पृथगेकैककामित्यर्थः ॥ १० ॥

**ताभ्यां यावज्जीवं यजेत ॥ ११ ॥ त्रिंशतं वा वर्षाणि ॥ १२ ॥ जीर्णो वा विरमेत् ॥ १३ ॥**

भा० वृ०—यावज्जीवादिसंकल्प इति । यावज्जीवत्रिंशद्वर्षजीर्णाविर-

मणपक्षाणामन्यतमसंकल्पः प्रथमपौर्णमास्यां तेष्वाहारपृथक्त्वपक्षः प्रथमं स्वर्गकामाधिकारेऽपि द्वितीयपौर्णमास्यादौ यावज्जीवादिसंकल्पाविरोधो मीमांसकमतेन । यावज्जीवनतयाऽधिकारस्य प्रतिप्रयोगभेदादिति दर्शपूर्णमासयोरुपरमे तद्विकाराणामप्युपरमस्तत्प्रकृतित्वात्तद्विकाराणामाग्रयणादीनामप्ययमभिप्रायः।अन्वारम्भणीयासंस्कृतो दर्शपूर्णमासविकारेष्वप्यधिकारी । तथा हि—अन्वारम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वादित्यस्मिन्पक्षे दर्शपूर्णमासप्रयुक्तान्वारम्भणीयार्जितसंस्कारोपजीवित्वं विकृतीनामतस्तयोरुपरमे तदर्थतया प्रयुक्तसंस्कारस्यापि विनाशात्तदुपजीविनां विकृतीनामप्यननुष्ठानम् । स्याद्वा कालस्याशेषभूतत्वादित्यस्मिन्पक्षेऽन्वारम्भणीयासंस्कृतस्यैव विकृतौ साङ्गे प्रधानेऽधिकार इति । प्रधानप्रयुक्ताधिकारोपजीवित्वादङ्गानां प्रधानाधिकारोपरमेऽङ्गेष्वधिकाराभावात्तदङ्गवद्विकृतिष्वनधिकारात्प्रकृत्युपरमे तद्विकृतीनामप्यननुष्ठानम् । यथा विकृतिप्रयोगेऽसंनयतः सांनाय्यविकारा अपि न भवन्तीत्युक्तम् । दर्विहोमाग्रयणं क्रियते दर्शपूर्णमासोपरमेऽपि नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वेत्येवंरूपाग्रयणं क्रियते । अनाहिताग्नेरपि नवाशनार्थं दर्शपूर्णमासाग्रयणेऽधिकृतत्वात्तत्रापि तस्य दर्शपूर्णमासविकृतित्वाभावेनाननुष्ठानसंभवाच्च । विच्छिन्नाग्निसंधानं शिवाजपान्तं तावतैवाग्निसिद्धेः । इष्टीनां चानियतत्वार्थत्वादाधानस्येष्टिसान्वारम्भणीयमपवृज्येति दर्शनात्पूर्णाहुत्यन्तमग्न्याधेयं यदि त्विष्टयस्तनुयुरिति बह्वृचवचनाच्च संसर्गेष्ट्यादीनां च पूर्णाहुतयः, दर्विहोमसोमानामपि निवृत्तिः केवलमग्निहोत्रमित्युपदेश इति । ताभ्यां यावज्जीवं यजेत त्रिंशतं वा वर्षाणीति नित्यकर्ममात्रोपलक्षणं दर्विहोमसोमानामपि नित्यानां निवृत्तिरस्मिन्पक्षे सोमोपादानात्पूर्वस्मिन्पक्षे सोमोऽनुष्ठीयते । आधानानन्तरमेव सोमाविकारदर्शनादन्वारम्भणीयानपेक्षितत्वाच्च । अतः सोमाङ्गानां दर्शपूर्णमासविकाराणामप्यनुष्ठानम् । दर्विहोमनिवृत्तावप्यग्निहोत्रं हूयते । चतूरात्रमहूयमानोऽग्निर्लौकिको भवतीति श्रुतेरग्निगुप्त्यर्थत्वादग्निहोत्रमेव हूयत इति कात्यायनमतिश्च ॥ ११ ॥ १२ ॥ १३ ॥

सू०दी०—आधानप्रभृति यावन्तं कालं जीवति तावद्यजेत न कदाचिद्विच्छिन्द्यात् । यदि विच्छिन्द्यात्प्रत्यवेयादित्यर्थः । प्रव्रजि-

तस्य तु दीक्षितवत्प्रतिषेधादेव निवृत्तिरनग्नित्ववचनसाम-र्थ्याच्च ॥ ११ ॥

त्रिंशतमेव वर्षाणि यजेत ततो विरमेत् ॥ १२ ॥

यावज्जरसाऽभिभूतोऽसमर्थः कर्मणि स्यात्तावदिष्ट्वा विरमेत्त-द्विरमादेव निवृत्तिस्तद्विकाराणाम् । न तु विरमेदग्निहोत्रादिति । यथोक्तं कात्यायनेन—अग्निहोत्रमेव जुहुयादिति ॥ १३ ॥

**द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेत-र्ध्नुयामित्युक्त्वा ह्येकामेव यजेतेति ॥ १४ ॥**

भा०वृ०—प्रतिपद्द्वितीययोरिज्या, ऋद्धिकामस्येति यमवेजानमिति लिङ्गादिति । यस्मिन्नहनि प्रथमामावास्यायां यागसमाप्तिस्त-स्मिन्नहनि चन्द्रमसः पश्चात्प्रकाशनं प्रतीयते । पश्चाचन्द्रमा अभ्युदेतीत्यनेनातः प्रथमस्य पञ्चदश्यामारभ्य प्रतिपदीज्या द्वितीयस्य तु प्रथमायामारभ्य द्वितीयायामिज्या । पौर्णमासीप्र-तिपदोरित्युपदेश इति द्वे पौर्णमास्याविति वचनाच्चतुर्दश्यामारभ्य पञ्चदश्यां यागः पञ्चदश्यामारभ्य प्रतिपदि याग इत्युपदेशः साकमेधेषु विरोधादिति साकमेधेषु पञ्चदशीप्रतिपदोरेव पौर्ण-मासीत्वं प्रतीयते साकमेधैरित्युक्त्वाऽत्र पौर्णमास्येष्टेति चतुर्द-श्यामारभ्य पञ्चदश्यां साकमेधं समाप्य प्रतिपदि पौर्णमासीवि-धानादत्रापि द्वे पौर्णमास्याविति पञ्चदश्यां प्रतिपदि यागः । एकाऽप्यृद्धिकामस्य लभ्यते, एकामेव यजेतेति योऽप्येककामस्त-स्याप्यृद्धिकामो लभ्यत इति पुनरारम्भः । एककामस्य स्वर्ग एवाऽऽदौ कामयितव्य इत्युक्तमृद्धिमात्रकामस्याऽऽहारपृथक्त्वप-क्षेण सिद्धत्वेऽप्येकामेव यजेतेति पुनर्विधानादेककामस्याप्यृद्धि-कामना भवत्येव न स्वर्ग एवेति ॥ १४ ॥

इति चतुर्थः पटलः ।

---

द०दी०—अथानयोः कर्मणोर्ऋद्धिकामप्रयोगे विशेषः प्रदर्श्यते । यः कामयेतर्ध्नुयामिति पौर्णमासीममावास्यां च स्वे स्वे काले द्वे द्वे यजेत । किमुक्तं भवति । एकस्मिन्नेव पर्वणि पौर्णमासी-

मभ्यस्येत्पञ्चदश्यामेकां प्रतिपदीतराम् । तथा स्वकालेऽमावास्यामित्यर्थः । तत्र प्रथमेतिशब्दानन्तरमिति तत्रोपात्तं द्रष्टव्यम् । इत्युक्त्वाऽऽह—एवमभ्यासमुक्त्वा पुनर्ब्राह्मणमाह—एकामेव यजेतेति । उभयीमप्येकामनभ्यस्तामेव यजेत न तु द्वे द्वे इत्यर्थः । वैकल्पिकोऽभ्यास इत्युक्तं भवति ॥ १४ ॥

इति चतुर्दशी कण्डिका ।

---

इति चतुर्थः पटलः ।

---

संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ॥ १ ॥

भा०वृ०—पौर्णमास्या इष्टेः समाप्त्यनन्तरमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपत्यग्न्यन्वाधानप्रभृत्या समाप्तेरस्या इष्टेरामावास्यतन्त्रमैन्द्राग्नविकारत्वात् ॥ १ ॥

सू०दी०—अथोत्तरेण पटलेन दर्शपूर्णमासयोर्नित्यान्काम्यांश्चानुनिर्वाप्यान्गुणविकारांश्चोपदिशति पौर्णमासीमनुनिर्वपतीति वचनात् । समुदायाङ्गं वैमृधस्तेन पौर्णमासविकारेषु न भवति । आमावास्यं त्वस्य तन्त्रमैन्द्राग्नविकारत्वात् ॥ १ ॥

समानतन्त्रमेके समामनन्ति ॥ २ ॥

भा०वृ० समानतन्त्रे वैमृधे सोमयाजिनो नानाबीजधर्मः प्रकृतावूहविरोधादिति । सोमयाजिनोऽग्नीषोमीयस्यापि विद्यमानत्वात्पुरोडाशबहुत्वाद्यथाभागं व्यावर्तेथामित्यस्य बहुवचनेनोहः प्राप्नोति स चायुक्तः प्रकृतावतः समानतन्त्रत्वे वैमृधस्य नानाबीजधर्म ऐन्द्राग्नविकारश्चात आमावास्यं तन्त्रमिति तद्भिन्नतन्त्रत्वपक्ष उपदेशो यथाभागमिति समानतन्त्रेऽपि भवत्यूहो विकृत्याश्रयणादिति विकृत्या समानतन्त्रत्वे विकृतेरागन्तुकत्वात्प्रकृतेश्च सगुणविगुणसाध्यत्वाद्विकृतेरपि सगुणत्वाद्यथातन्त्रानुष्ठा-

नस्य युक्तत्वादूहो युक्त इत्ययं पक्षो भाष्यकारेणाऽऽग्रयणान्वा-न्वारत्यपक्षे मीमांसकमतेनोक्तः ॥ २ ॥

सू० दी०—गतः ॥ २ ॥

## तस्य याथाकामी प्रक्रमे प्रक्रमात्तु नियम्यते ॥ ३ ॥

भा० वृ०—अनित्यश्चास्याऽऽरम्भ इति यद्यग्रे निरुप्य नानुनिर्वपे-दिति श्रुतौ यदिशब्दश्रवणाद्यस्याऽऽरब्धस्तस्य नियतो याथा-कामी प्रक्रम इति यथाऽस्य काम इच्छा तथा प्रयुङ्क्त इति याथा-कामी । आरम्भे याथाकामित्वं समानतन्त्रे नानातन्त्रे च याथा-कामीत्युपदेश इति समानतन्त्रमेक इत्युक्त्वा तस्य याथाकामी प्र-क्रम इत्युपदेशात्समानतन्त्रत्वनानातन्त्रत्वयोर्यथोपक्रम इति प्रक्रमे प्रारम्भेऽसमानतन्त्रपक्षो यदि ग्राह्यः कदाचित्समानतन्त्रं न कुर्या-द्यदि समानतन्त्रो भवति वैमृधस्तु कदाचिन्न त्यज्यते ॥ ३ ॥

सू० दी०—तस्य वैमृधस्य प्रक्रमे याथाकाम्यं दर्शपूर्णमासप्रारम्भ-दशायामेवाऽऽरभ्यते न वा । अयं तु विशेषः—प्रक्रमान्नियम्यत इति । किमुक्तं भवति । यदाऽऽरभ्यते न कदाचित्त्यज्यते यदि नाऽऽरभ्यते न कदाचिद्भवत इत्यर्थः । तथा च वैमृधं प्रकृत्याऽऽह कात्यायनः—तं यदा निर्वपेन्न तत ऊर्ध्वं विरमेदिति । भारद्वाज-श्चाऽऽह–नित्यवदेके समामनन्ति काम्यवदेक इति ॥ ३ ॥

## सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः ॥ ४ ॥

भा० वृ०—समानतन्त्रेऽपि केचिद्दक्षिणामिच्छन्त्यविशेषेण चोदि-तत्वात्प्रकृतिदक्षिणया विरोधाभावाच्च दर्शपूर्णमासविकारेषु ब्राह्मणे गामिति कस्मान्न भवति गामिति प्रदर्शनं द्रव्यान्तराभि-धानानामप्यूहः कस्मान्न भवतीति परिहरति दर्शपूर्णमासार्थत्वा-त्सर्वप्रतिग्रहमन्त्राणां तत्रानर्थकत्वात्तद्विकारेषु पौष्णाद्यनुमन्त्रण-वद्वैमृधे सर्वप्रतिग्रहमन्त्राणां प्राप्तिर्यथाश्रद्धदक्षिणत्वादनारभ्या-धीतानां सर्वदक्षिणाप्रतिग्रहमन्त्राणां प्रकृतिभूतदर्शपूर्णमासार्थत्वा-त्तत्रानर्थकत्वादित्यतश्च विकृतिषु यथाद्रव्यं प्रतिग्रहमन्त्राणामुप-दिष्टत्वान्न प्राकृतस्योहः पौर्णमासविकारेषु न वैमृधः समुदाया-

ङ्गत्वात्संस्थाप्य पौर्णमासीमिति पौर्णमासीशब्दवाच्यकर्मसमुदायाङ्गत्वाद्विकृतिषु च तेषामभावाद्वैकृतकर्मणां तत्कार्यापन्नत्वाभावाच्च विकृतिषु द्वारकार्यत्वाभावाच्च पार्वणहोमवद्वैमृधस्याप्राप्तिः। चतुर्होत्रा पौर्णमासीमभिमृशेदिति तु हविःसंस्कारत्वाच्च कर्मसमुदायाङ्गम् ॥ ४ ॥

सू०दी०—वैमृध इति शेषः। समानतन्त्रत्वेऽपि केचिद्दक्षिणायाः समुच्चयमिच्छन्ति ॥ ४ ॥

शर्धवत्यौ संयाज्ये। अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु। सं जास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि। वातोपधूत इषितो वशाꣳ अनु तृषु यदन्ना वेविषद्वितिष्ठसे। आ ते यतन्ते रथ्यो यथा पृथक्शर्धाꣳस्यग्ने अजराणि धक्ष्यस इति ॥ ५ ॥

भा०वृ०—संयाज्ये इति वचनात्सौविष्टकृत्याविति शेषः स्विष्टकृद्याज्यानुवाक्ययोः प्रत्याम्नायः ॥ ५ ॥

सू० दी०—संयाज्ये इति सौविष्टकृतयोर्याज्यानुवाक्ययोः समाख्या ॥ ५ ॥

अग्नीषोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपेत्यादित्यं घृते चरुꣳ सारस्वतं चरुममावास्यायां पौष्णं चैन्द्रमेकादशकपालममावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा ॥ ६ ॥

भा०वृ०—अग्नीषोमीयादीनि त्रीणि वैमृधं कृत्वा भ्रातृव्यवतः पौर्णमास्यामनुनिर्वपतीति साङ्गपौर्णमासीं कृत्वाऽनुनिर्वपणश्रवणाद्विमृधोत्तरकालमेव पौर्णमास्याममावास्यायां तु ब्राह्मणतर्पणान्ते भ्रातृव्यवत इति नैमित्तिकम्। भ्रातृव्यो मा बाधतामिति फलार्थमभिचरतः शत्रुमारणे प्रवृत्तस्यादितिर्देवता, अस्येत्या-

दित्यः । नाऽऽदित्यदेवता । आदित्यं चरुमिति तद्धितदर्शनात्तथा सारस्वतादीन्यमावास्यायामैन्द्रेण सह बहुवचनमुभयत्राग्नीषोमीयस्य याज्यानुवाक्ये प्राकृते । अदितिर्न उ रुष्यतु महीमूषु मातरमित्यादित्यस्य । इन्द्रं वो विश्वतस्परीन्द्रं नर इत्यैन्द्रस्य । प्र णो देव्या नो दिव इति सरस्वत्याः । पूषा गा अन्वेतु नः शुक्रं ते अन्यदिति पौष्णस्य । सर्वत्रास्य पेषणं चरोस्तस्मात्पूषा प्रपिष्टभाग इत्यविशेषवचनात्तस्मात्पूषा प्रपिष्टभाग इति प्राशित्रवाक्यशेषे पूष्णः स्वरूपमात्रसंबन्धित्वेन सिद्धवत्पेषणानुवादाददन्तकत्वहेतुनिर्देशात्पौष्णकर्मविशेषसंबन्ध्यभावाच्च पेषणं सर्वत्र पौष्णस्य चरोरादित्यं प्रणीताघृतेन श्रपयति संयवनार्थत्वात्प्रणीतानां प्रणयनकाले घृतं प्रणीय संघृतमद्भिरग्मतेति तण्डुलेष्ववनयेत् । यजुरुत्पूतेन वा स्थालीगतेन चरूणां पाकः । पवित्रवत्याज्ये कणानावपतीति लिङ्गादिति सोदकं घृतं स्थाल्यामानीय यजुषोत्पूयाधिश्रयणकाले तण्डुलानावपतीति सर्वचरूणां यजुरुत्पूतप्रणीतयोर्विकल्पः । भारद्वाजमतात्तु पात्रान्तरे यजुषोत्पूय स्थाल्यां पवित्रवत्यां मन्त्रेणाऽऽनीय श्रपणमुपधानकाले सोदकस्थाल्युपधानं केचित् । सर्वत्रैन्द्राग्नविकाराणामूहेनाभिमर्शनं सर्वत्रेति समानतन्त्रेऽपि वैमृध एकहविःसंस्कारत्वात् । प्राकृतवैकृतहविःसाधारणनिर्देशाभावादूहाविरोधो न तूपदेश इति ॥ ६ ॥

सू०दी०—भ्रातृव्यादात्मानं रिरक्षिषस्तं जिघांसतो वा द्वे इमे इष्टी द्वयोः पर्वणोरनुनिर्वपति । तत्र पौर्णमास्यां संस्थाप्य वैमृधमग्नीषोमीयादित्यौ निर्वाप्यौ सारस्वतपौष्णावमावास्यायाम् । ऐन्द्रस्तूभयत्र । तृतीयस्तेषु च पौष्णः पिष्टैश्चरुः । तस्मात्पूषा प्रपिष्टभाग इत्यविशेषेण श्रवणात् । पिष्टानां पौष्णं श्रपयतीति प्रदर्शनाच्च ॥ ६ ॥

**इन्द्राय त्रात्रे चरुं द्वितीयं वैमृधस्य कुर्याद्यो मृत्योर्जा(ज्या)न्या वा बिभीयात् । मुष्करो दक्षिणा ॥ ७॥**

भा०वृ०—इन्द्रत्रात्रादीनां गुणमात्रविकृतप्रकृतिदेवतात्वादनूहः । अन्यत्र प्रकृतिदेवताभ्यो यथैन्द्रः पुरोडाश इति प्रकृतिमत्यभि-

ज्ञानादनूहः। आश्विनमारुतादिषूह एव पौर्णमाससमानतन्त्रेऽपि वैमृधे प्रकृतिमन्त्रोपजीवित्वाच्च नोह इत्युपदेशः। द्वितीयं वैमृधस्येति वैमृधेन समानतन्त्रो यस्य मरणाज्ज्यानेर्वा भयम्। मुष्करो वृषणवान्बलीवर्दः। इन्द्राय त्रात्र इति चतुर्थी निर्वापप्रोक्षणाधिवापसंवापानुब्रूहीत्येतेषु यत्र चाऽऽग्नेयविकारस्तत्र चाभिघारणचतुर्धाकरणे आदित्यादिषु चरौ विकल्पेनेन्द्र त्रातर्हव्यमित्यामन्त्रणेनोपसादनं निरुप्तदेवतोपलक्षणपक्ष इन्द्रं त्रातारमिति द्वितीयाऽऽवाहने स्वाहाकारे यजेत्येतेषु। इन्द्रस्य त्रातुरिति षष्ठी हुतानुमन्त्रणेऽयाट्करण उज्जितौ चेन्द्रस्त्राता भुवनान्नुदतामित्यभिमर्शन इन्द्रस्त्राता, इदं हविरजुषतेति च सर्वेष्टिदेवतानामेवं विभक्तिनिर्देशव्यवस्था। त्रातारमिन्द्रं मा ते अस्यामिति याज्यानुवाक्ये ॥ ७ ॥

सू०दी०—द्वितीयं वैमृधस्येति वैमृधेन समानतन्त्रमित्यर्थः। वैमृधः पौर्णमाससमानतन्त्रेऽपि सद्वितीयो निरूप्यते। ज्यानिर्व्याधिपीडा। मुष्कोऽण्डस्तद्वान्बलीवर्दो मुष्करः सेचनसमर्थ इति यावत् ॥ ७॥

इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत्प्रजाकामः पशुकामः सजातकामः ॥ ८ ॥

भा०वृ०—सजातकामो ग्रामकामः। प्रजाकामादयो विकल्पेन। इन्द्रायेन्द्रियावते। इन्द्र, इन्द्रियावन्, इन्द्रस्येन्द्रियावतः, इन्द्रमिन्द्रियावन्तं, इन्द्र, इन्द्रियावान्, इन्द्रियाणि शतक्रतोऽनु तेऽदायीति याज्यानुवाक्ये ॥ ८ ॥

सू०दी०—सजाताः सग्रामाः। तत्कामस्तैः सह ग्रामकाम इति यावत् ॥ ८ ॥

एतं वाऽनुनिर्वाप्यं कुर्वीत ॥ ९ ॥

भा०वृ०—एतमिन्द्रियावन्तं वाऽनुनिर्वाप्यं वैमृधेन विकल्पः। इन्द्रस्येन्द्रियावतो नित्याङ्गत्वेनास्यापि समानतन्त्रता विकल्पेन प्रक्रमान्नियम्यते ॥ ९ ॥

सू०दी०—एतमिन्द्रियावन्तमेव वा वैमृधस्य स्थाने नित्यमनुनिर्वाप्यं कुर्वीत ॥ ९ ॥

इतरौ वा ॥ १० ॥

भा०वृ०— इतरौ वैमृधत्रातारावकाम्यौ त्रातुरपि मृत्योऽर्यान्या वेति न भवति नित्यभूतेन वैमृधेन विकल्पोपदेशात् ॥ १० ॥

सू०दी०—अनन्तरोक्तौ वा वैमृधत्रातारौ सहितावित्यर्थः ॥ १० ॥

यमभीव सꣳशयीत ॥ ११ ॥

भा० वृ०—उत्तरत्र व्याख्यास्यते ॥ ११ ॥

सू० दी०—उत्तरत्रैव व्याख्यास्यते ॥ ११ ॥

इति पञ्चदशी कण्डिका ।

---

स इन्द्राय वैमृधायानुनिर्वपेत् ॥ १ ॥

भा० वृ०—अभीव संशयीत कंचिदर्थं यथा मरणं मे स्यान्न वेति । द्वितीयोऽत्र वैमृधः । यमभीव संशयीतेति यमर्थं मरणादिकं संशयीत संदिग्धं स इन्द्राय वैमृधाय द्वितीयं वैमृधं नानातन्त्रं कुर्यात् । प्रथमं तु यथोक्तं कृत्वैव ॥ १ ॥

सू० दी०—यं प्रति रोगाभिभवाद्दुर्निमित्तादिना वा संशयीतेव लोको जीवेदयं न वेति स द्वितीयं वैमृधं निर्वपेत् ॥ १ ॥

यो नेव घोषेन्नेव शृणुयात्स इन्द्रायाꣳहोमुचे ॥ २ ॥

भा० वृ०—नेव घोषेद्यस्य शब्दो न निर्गच्छति स वैमृधं कृत्वेन्द्रायांहोमुचे, इन्द्र, अंहोमुक्, इन्द्रमंहोमुचम्, इन्द्रस्यांहोमुचः, इन्द्रोऽहोमुक्, अंहोमुचे विवेषयन्मेति याज्यानुवाक्ये ॥ २ ॥

सू० दी०—पुरोडाशमेकादशकपालमनुनिर्वपेदिति प्राकृतेनान्वयः । यो नेव घोषेत्, यो रोगवशान्न घोषेदिव न व्यक्तं भाषितुं क्षमेत न च शृणुयादिवाव्यक्तं शृणुयादित्यर्थः ॥ २ ॥

योे भ्रातृव्यवान्स्यात्स इन्द्राय वृत्रतुरे ॥ ३ ॥

भा० वृ०—इन्द्राय वृत्रतुरे, इन्द्र वृत्रतुर्हव्यम्, इन्द्रं वृत्रतुरं, इन्द्रस्य वृत्रतुरः, इन्द्रो वृत्रतूः, इन्द्रो यज्ञं वर्धयन्निमं यज्ञं वर्धयन्निति याज्यानुवाक्ये ॥ ३ ॥

सू० दी०—पूर्ववदेवान्वयः ॥ ३ ॥

अथ यं न कुतश्चनाऽऽतपेत्स इन्द्रायैव ॥ ४ ॥

भा० वृ०—अनुनिर्वपेदिति शेषः । नाऽऽतपेद्भ्रंशो मा भूदिति यस्य कामोऽग्निसूर्यादिभ्यस्तपननिमित्तो भ्रंशो यं नाभिभवेदिति स वैमृधं नित्यं कृत्वेन्द्रायानुनिर्वपेदिन्द्राय वैमृधायेत्यादीनि नित्यं वैमृधं कृत्वाऽधिकानि ॥ ४ ॥

सू० दी०—यं रोगोपहतकायेन्द्रियं कुतश्चिदपि प्रकारादुष्णं वस्तु नाऽऽतपेत्स इन्द्राय निरुपपदाय निर्वपेदित्यर्थः ॥ ४ ॥

यो भ्रातृव्यवान्स्यात्स पौर्णमासं सꣳस्थाप्यैतामिष्टि-मनुनिर्वपेदाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुꣳ सरस्वते चरुम् ॥ ५ ॥

भा० वृ०—स पौर्णमासं संस्थाप्येति यस्याप्रवृत्तो वैमृध इति यो भ्रातव्यवान्स्यात्स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेदिति पौर्णमास्यनन्तरमाग्नावैष्णवेष्टिः प्राप्ता यस्याप्रवृत्तो वैमृधस्तस्य याथाकामी प्रक्रम इति पाक्षिकत्वादारम्भस्य । यस्य तु प्रवृत्तस्तस्य वैमृधं कृत्वाऽऽग्नावैष्णवादीनि त्रीणि तस्याङ्गत्वादेतच्च व्याख्यानं भिन्नतन्त्रपक्षे, समानतन्त्रपक्षे तु संस्थाप्यस्याविरोधः । अग्नाविष्णुभ्यां सरस्वत्यै सरस्वते अग्नाविष्णू सरस्वति सरस्वन्, अग्नाविष्णू सरस्वतीं सरस्वन्तम्, अग्नाविष्णवोः सरस्वत्याः सरस्वतः, अग्नाविष्णू सरस्वती सरस्वान्, अग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवः पीपिवांसं सरस्वतो यस्य व्रतमिति एवं सर्वत्र याज्यानुवाक्याः । अन्यत्र परिपाठाद्याज्यानुवाक्याकाण्डतयोभावामिन्द्राग्नी इत्यादिप्रश्नान्त्ययाज्यानुवाक्या यद्ग्रहीतव्या इति विकृतीनां सर्वासां याज्यानुवाक्याकाण्डपठितेभ्यो यथादैवतं

याज्यानुवाक्या ग्रहीतव्या अन्यत्र परिपाठात्, यथाऽन्वारम्भणीयाया त्वद्विश्वासुभग सौभगानीत्याद्यस्माकं याज्यानुवाक्याकाण्डतयोभा वामिन्द्राग्नी इत्यादिप्रश्नान्त्यानुवाकाः सूत्रकारेण चाऽऽम्नानाद्या-यानुवाक्यालिङ्गैर्नियम्यन्त इति विनियुक्ता अतः सूत्रकारेण पठितयाज्यानुवाक्यानां कर्मणां तेभ्य एवोपादानम् ॥ ५ ॥

सू० दी०—पौर्णमासं संस्थाप्येति ब्राह्मणानुकरणार्थम् । प्रक्रान्तवैमृधस्य तु तदनुभाविन्येवेष्यते ॥ ५ ॥

## पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम् ॥ ६ ॥

भा० वृ०—संक्रामोऽकरणं पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामित्यमावास्याया अकरणं संक्रामः ॥ ६ ॥

सू० दी०—किं तर्हि कृत्यममावास्यायाम् । न किंचिदन्यत्पिण्डपितृयज्ञादित्याह ॥ ६ ॥

## पितृयज्ञमेवामावास्यायां कुरुते ॥ ७ ॥

भा० वृ०—अमावास्यायां यागनिषेधेऽपि पितृयज्ञस्तु क्रियत एव पिण्डपितृयज्ञः स्वकालविधानादनङ्गं स्यादिति न्यायात् ॥ ७ ॥

सू० दी०—नन्वमावास्यानिषेधादेव निवर्तिष्यते पितृयज्ञश्चानङ्गत्वात्प्रवर्तिष्यते किमर्थोऽयमारम्भः । सत्यं पौर्णमास्या एवामावास्यायामपि प्रवृत्तिसंदेहनिरासार्थमिति ब्रूयात् । कः प्रसङ्गः । अस्ति प्रसङ्गः । पौर्णमासीमेव यजेतेति ब्राह्मणार्थस्य विशयित्वात् । तथा च बौधायनः—उभयत्र पौर्णमासहविर्भिर्यजेतेति बौधायन इति ॥ ७ ॥

## संक्रामे संक्रामे वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते ॥ ८ ॥

भा० वृ०—गतार्थः ॥ ८ ॥

सू० दी०—संक्रामोऽतिक्रमः । दर्शस्यातिक्रमेऽतिक्रमे वज्रं शत्रवे प्रहरति स एवातिक्रमो वज्री भूत्वा तं हन्तीत्यर्थः ॥ ८ ॥

ऽयवराध्यममावास्यायाꣳ संक्रामति ॥ ९ ॥

भा० सू०—गतार्थः ॥ ९ ॥

सू० दी०—ऽयवरान्दर्शनातिक्रामत एव कामावाप्तिर्निर्वीर्गित्यर्थः ॥ ९ ॥

अथ दर्शपूर्णमासयोर्गुणविकारानुपदिशति—

अग्नीषोमीयाणि प्रधानानि स्युरमावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा ॥ १० ॥

भा०सू०—प्रधानान्यग्नीषोमीयाणि न वैमृधः पौर्णमास्यां तस्याङ्गत्वात्पृथक्पृथक्प्रदानमनयोरुपांशुयाजव्यवायादित्यनयोः प्रथमतृतीययोरेकदेवतात्वेऽपि न सांनाय्यवत्सहप्रदानमुपांशुयाजस्थानापन्नस्याग्नीषोमीयस्योपांशुयाजधर्मकत्वादितरयोरतद्धर्मकत्वात्सहप्रदानासंभवात्तद्व्यवधानादितरयोरपि पृथक्प्रयोगोऽदेवतार्थत्वात् । यो यस्य प्रधानस्य धर्मो हुतानुमन्त्रणं चतुर्धाकरणादि स तस्यैव भवति तस्मात्प्रथमस्याऽऽग्नेयधर्मो द्वितीयस्योपांशुयाजधर्मः केवलं देवतापनयस्तस्मादग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासमित्यनुमन्त्रणमेवमन्यानि धर्माण्याग्नेयस्य प्रकृतिवदुत्तरे हुतानुमन्त्रणे दब्धिरसीत्यादि । तन्त्रेणामावास्यायां प्रधानविभवादविपन्नदेवतत्वाद्भिन्नधर्मकव्यवधानाभावाच्च । आशिषः समुच्चयः, हुतानुमन्त्रणे तन्त्रेण देवतानिर्देशः । आग्नेयसांनाय्यफलयोः समुच्चयः समुच्चीय हुतानुमन्त्रणे भारद्वाजोक्तत्वादग्नीषोमयोरहं देवयज्ययाऽन्नादो जेमानं महिमानं भूयासमिति अग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासं जेमानं महिमानं गमेयमित्युपदेशः सूत्रकारेणाग्निसमुच्चयवचनान्मुख्यानुमन्त्रणं सर्वस्य मुख्ये साधर्म्यमिति दर्शनादन्नादो भूयासमित्येव मुख्ये साधर्म्यं भवति संसृष्टहविषि दर्शनात् । अग्नीषोमीये तु याज्यानुवाक्ये देवतासंस्कारत्वाद्देवताप्रकाशकतया तत्संस्कारत्वात् ॥ १० ॥

सू०दी०—यानि प्रधानानि दर्शपूर्णमासयोर्हवींषि तान्यग्नीषोमीयाणि स्युरग्नीषोमदेवताकत्वेन गुणेन विकृतानि स्युः । तस्य तस्य धर्मेषु ये देवतानिगमास्तेषु तद्देवतापनयेनाग्नीषोमोपलक्षणं

स्यादिति यावत् । यथाऽऽग्नेयस्याग्नीषोमाभ्यां जुष्टं निर्वपामि, अग्नीषोमाभ्यां जुष्टमभिघारयामि, अग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासमित्यादि । एवमेव सांनाय्ये, आप्यायध्वमघ्निया अग्नीषोमाभ्यां देवभागमित्यादि द्रष्टव्यम् । याज्यानुवाक्ये त्वग्नीषोमीये एव देवतानुसारित्वात्, तन्त्रेण चामावास्यायां प्रधानविभवात्तस्य प्रातर्दोहेन समवदायेति लिङ्गाच्च । समुच्चयस्त्वाशिषां द्रष्टव्यभेदात् । पृथक्प्रचार एव पौर्णमास्यां नानाधर्मेणोपांशुयाजेन व्यवायात् ॥ १० ॥

साकंप्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते ॥ ११ ॥

भा०वृ०--अमावास्या विक्रियत इत्यस्यार्थः साकंप्रस्थायीयस्यामावास्याविकारत्वे हेतुरुच्यते । अमावास्यायां संक्राममुक्त्वा प्रधानानां चाग्नीषोमीयदेवताकत्वमुक्त्वा तदनन्तरं शाखान्तरे साकंप्रस्थायीयमनुविदधे ब्राह्मणेऽपि तदनन्तरं विहित इति साकंप्रस्थायीयेन यजेत पशुकाम इति अमावास्या विक्रियत इति शाखान्तरेऽमावास्यासंक्रामोक्त्यनन्तरं दर्शपूर्णमासप्रधानानामग्नीषोमीयदेवताकत्वमुक्त्वा तदनन्तरं साकंप्रस्थायीय उक्तः । अस्मच्छाखायामपि पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति संक्राममुक्त्वा तदनन्तरं साकंप्रस्थायीय उक्तोऽतः साकंप्रस्थायीयस्य दोहविशिष्टद्रव्यात्मकत्वादमावास्याप्रकृतित्वाच्च सूत्रकारोऽमावास्या विक्रियत इत्याह साकमिति सहत्ववाची सह प्रस्थानमत्र कृत्स्नैरिति साकंप्रस्थायीयः कृत्स्नैर्दोहैर्यागार्थमपरेणाऽऽहवनीयं कुम्भीभिः सह दक्षिणातिक्रमणं साकंप्रस्थायीयनामधेयप्रवृत्तिनिमित्तमिति तेन यजेत पशुकामस्तस्य प्रयोगं कुर्वीतेत्येष श्रुत्यर्थ इति साकंप्रस्थायीयेन यजेतेति न कर्मान्तरचोदना, अमावास्याविकारत्वादतोऽत्र यजेतेति न विधिः प्रकृतदर्शयागप्रयोगमेवं विकृतं फलार्थं कुर्वीतेति विध्यर्थोऽभ्युदयेष्टिवत् । प्रकृतस्यैव दर्शस्य प्रयोगान्तरं फलाय चोद्यते तां श्रुतिं सूत्रकार इतिशब्देन निर्दिशति सैषा संज्ञा वि-

कारनिमित्तोभयोर्दर्शपूर्णमासयोर्विकारोऽन्यतरस्य वेति प्राप्त आह–अमावास्या विक्रियत इत्युभयोर्दर्शपूर्णमासयोः शाखान्तरे प्रधानानामग्नीषोमीयदेवताविधानानन्तरमुक्तत्वादुभयोर्विकारोऽन्यतरस्य वेति संशये प्राप्त आह–अमावास्या विक्रियत इति। एतच्च पूर्वमुक्तमपि दार्ढ्यार्थं पुनरुच्यते सह वसनाद्देवैरिन्द्रस्य स कालोऽमावास्येति। अमावास्या विक्रियत इत्यमावास्याशब्दस्य व्याख्यानमिन्द्रो वृत्रं हत्वा परां परावतमित्युपक्रम्य सोऽमावास्यां प्रत्यागच्छदित्युक्त्वाऽऽह—अमा वै नोऽद्य वसु वसतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वमिति चेन्द्रस्य सह वसनादेव कालोऽमावास्या तत्कालप्रयोगात्प्रधानसमुदायोऽप्यमावास्या तत्कालवर्तिप्रधानसमुदायोऽप्यमावास्याशब्दो लक्षणया युक्तः सा विकारमेति न पौर्णमासी। अमावास्याशब्देन कर्मसमुदायस्य प्रतिपादनात्सेति स्त्रीलिङ्गनिर्देशेन चैतत्कर्मान्तरं चोद्यते तस्यैव समुदायस्य दोहचतुष्टयविकृतस्य संज्ञैषा यथैकस्यैव पुरुषस्य संज्ञा दण्डी शिखीति। अत एव सांनाय्यप्रयोगविकाररूपत्वात्संनयत एव नैन्द्राग्नयाजिनः साकंप्रस्थायीयः। अतश्च गुणविकारेष्वग्नीषोमीयादिषु दाक्षायणयज्ञान्तेषु पुनः पुनः प्रयोगो नित्यस्य फलस्यानिवृत्तिर्नित्यप्रयोगस्यैव फलार्थतया विकारोपदेशान्न नित्यापूर्वसिद्ध्यर्थं पुनः प्रयोगो नित्यादृष्टस्यापि सिद्धत्वात्तत्स्वर्गादेरप्यनिवृत्तिः। पार्वणयोर्वैमृधस्य च पौर्णमासगुणविकारेषु प्रवृत्तिः स एव प्रधानसमुदायो गुणविकारेष्वपीति। एवं सोमादावभ्यासे पश्वादिफलेभ्य उक्थ्याद्यनुष्ठाने न पुनर्नित्यार्थं प्रयोगः॥ ११॥

सू०दी०—साकंप्रस्थायीयेन यजेत पशुकाम इति ब्राह्मणे। साकंप्रस्थायीयो नामामावास्याया गुणविकारमात्रं न तु संज्ञया कर्मान्तरं न चोभयोर्विकार इत्यर्थः। यत्राध्वर्युः सार्कं बहुभिर्वेदैः प्रस्थाय यजति स साकंप्रस्थायीयः। तत्र च गुणफलं पशवस्तेन नित्यफलस्याविरोधः॥ ११॥

द्वौ सायंदोहावेवं प्रातः॥ १२॥

भा०वृ०—पूर्वोक्तेन दोहविधिना सायंदोहविधानकार्याभ्यास इति।

द्वौ सायंदोहाविति वचनादेवं प्रातर्दोहः कार्यः ॥ १२ ॥

सू०दी०—यथोक्तेन दोहविधिना दोहयोर्द्वयोरभ्यासः कार्यः । तत्र सर्वेष्वपि दोहधर्मेषु विभवतां तन्त्रत्वमविभूनां चाऽऽवृत्तिर्यथायथमनुसंधातव्य ॥ १२ ॥

**सायꣳ सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम् ॥ १३ ॥ सर्वैर्वा प्रातः ॥ १४ ॥**

भा०वृ०—तत्र यथा सायंदोहाभ्यां पृथक्प्रचरणं तथा विचारयामः । किं तावत्सायंदोहापकर्षात् साधारणस्य तन्त्रस्य पाणिप्रक्षालनादेरपकर्षः स्वकाले वा प्रयोग इति । स्वकाले प्रयोगमेक आहुः । आग्नेयस्य मुख्यत्वादाग्नेयप्रातर्दोहानां भूयस्त्वाच्च दर्शात्मकत्वात्साकंप्रस्थायीयस्य, दर्शे चाऽऽग्नेयस्य मुख्यत्वात्तस्य च प्रातर्दोहसहप्रयोगे भूयस्त्वाच्चोत्तरेद्युः स्वकाल एव तन्त्रमिति तदनुपपन्नम् । सायंदोहयोः पूर्वप्रयोगादाग्नेयस्य मुख्यत्वानिवृत्तिरस्मिन्कर्मणि रात्रावेव प्रयोगात्तयोरेव मुख्यत्वादाग्नेयस्य मुख्यत्वनिवृत्तिः । सायंदोहावेव मुख्यौ भवतः । अथ च सायंदोहधर्माः पूर्वमेव प्रवर्तन्ते तस्मान्मुख्यत्वं प्रवृत्तिकारणं भूयस्तत्वैककारणस्य ताभ्यां बाधितत्वादपकर्ष एव न्याय्यः प्रजापतिर्यज्ञमसृजत तस्योखे,अस्रꣳसेतामित्यादिदोहधर्माः प्रणीताप्रणयनाद्याग्नेयधर्मेभ्यः प्रागेव प्रवृत्तास्तस्मान्मुख्यत्वं प्रवृत्तिकारणं दोहयोरेव भूयस्त्वस्यैककारणस्य ताभ्यां बाधितत्वादपकर्ष एव न्याय्यः । अपि च भूयस्त्वान्मुख्यत्वमेव बलीयः । आग्रयण आमावास्यतन्त्रनियमादैन्द्राग्नस्यैकस्य मुख्यत्वेऽपि तदनुगुणतन्त्रनियमात् । ननु तन्त्रमध्यपातात्पशुपुरोडाशवद्दोहयोस्तन्त्रं प्रति दौर्बल्यमिति । अयमभिप्रायः—क्रमवदुत्पन्नत्वात्प्रधानानां प्रथमभूताग्नेयप्रयुक्ततन्त्रोपजीवित्वाद्दोहयोः पशुपुरोडाशवत्प्रासङ्गिकत्वं युक्तमिति तदसत् । न हि दोहयोस्तन्त्रमध्ये पातः साकंप्रस्थायीयेनेति समुदायस्य चोदितत्वात् । अस्यार्थः—क्रमवदुत्पन्नत्वेऽपि प्रधानानामेककार्यसाधनभूतानां तन्त्रानुष्ठानात्सर्वेषां तुल्यवत्तन्त्रप्रयोजकत्वं पशोस्तु वाक्यान्तरचोदितस्य

वाक्यान्तरेण पशुपुरोडाशश्चोद्यतेऽङ्गत्वेन पशुमालभ्य पुरोडाशमि-त्यतः पशुतन्त्रस्य मध्यपातात्प्रासङ्गिकत्वं पशुपुरोडाशस्य । तस्मा-दिह सहप्रवृत्तेस्तन्त्रस्य दोहयोरपकर्षे तन्त्रस्यापकर्षः । न चान्यस्तन्त्रभेदः । तन्त्रभेदकोऽन्यो नास्ति देशकालाधिकारभे-दादिः सायंदोहाभ्यामित्येतदपि समानतन्त्रेष्वेव द्वयोः प्रतिक-र्षविधानम् । न च प्रयुक्तस्य प्रधानस्य पूर्वकालदृष्टैरुत्तरेद्युः प्रयोज्यमानैरङ्गैराघारादिभिः संबन्धः स्यात्प्रधानात्पूर्वमेवानुष्ठे-यानां प्रधानप्रतिकर्षे सति प्रतिकर्षस्य प्रयुक्तत्वादुत्कर्षवचना-भावे सति पश्चादनुष्ठितानामनुपकारकत्वात्तस्मात्प्रधानानां सर्वेषां साधारणानामङ्गानामपकर्ष इत्यत उत्तरेद्युराग्नेयस्य प्रातर्दोहयोश्च वैशेषिकं प्रणीताप्रणयनादि प्रयुज्य पार्वणहोमादि क्रियते । दोहास्तु सर्वहुता एव न तेभ्यः शेषकार्याणि स्विष्टकृदादीन्यु-त्तरेद्युरपि न कर्तव्यानि वत्सापाकरणे कुम्भीपराध्यां इति सूत्रान्तरवचनाङ्गीकारात्प्राकृतेभ्यो बहूनामुपकरणं कुम्भीविवृद्धेः सायंकाले सायंदोहप्रचारपक्षे प्रयोगः । आसादने द्वे कुम्भ्यौ शाखापवित्रेण सह द्वे अपिधाने दोहनेन सह तन्त्रमितराणि पा-त्राणि शाखापवित्रादीनि कुम्भीभेदेऽप्यभेदस्तेषां प्रोक्षणनिष्टपनो-पवेषादानाङ्गारनिरूहणानि तन्त्रम् । कुम्भ्यधिश्रयणपर्यूहणे पर्या-येण युगपद्दक्षिणहस्तेनाशक्तेर्हस्तावनेजनस्य सायं परिस्तरणोत्तर-कालभावित्वादशक्तावदक्षिणस्य कर्मानर्हत्वान्मन्त्रस्य चैकाभि-धायिन ऊहाभावाच्च मातरिश्वनो घर्मोऽसीत्यादेः प्रकृतावूहाभा-वाच्च शाखापवित्रात्याधानादिसंक्षालननिनयनान्तमेकस्यां कृत्वा तथोत्तरस्यां कुम्भ्यां दोहनक्रियैकत्वात् पवित्रस्य चासंभवाच्छा-खापवित्रस्यैकस्य युगपदुभयत्रात्याधानासंभवाच्च तदुत्तरेषामपि तन्त्रानुष्ठानम् । संक्षालननिनयनसंसर्गानर्हत्वाच्च तदन्तमेकस्यां कुम्भ्यां कुर्यादुद्वासनादि पर्यायेणाऽऽतञ्चनार्थानि सर्वाण्येकस्यां प्रक्षिप्याथापरस्यामातञ्चनक्रियैकत्वादातञ्चनद्रव्यभेदेऽपि दध्यु-त्पत्तिफलावच्छिन्नक्रियैकत्वमोदनावच्छिन्नपाकादिवत् । उच्छे-षणपर्णवल्कौ विभज्योभयत्र निधातव्यौ । अमृन्मयामिति चैकव-चनान्मन्त्रावृत्तिर्द्रव्याभिधानस्य प्रकृतत्वाद्देवपात्रमित्येकद्र-व्याभिधानात्संनिहितत्वाच्च द्रव्ययोरिदमभिहितमिति विज्ञानादि-

त्येकद्रव्याभिधायिशब्देन संनिहितद्रव्ययोरन्यतरदभिहितमिति विशेषज्ञानासंभवाद्द्वितीयाभिधानार्थमावृत्तिः। असंनिहिताः पत्न्यः प्रैषकाल इत्यस्यार्थः—अनेकपत्नीकस्यापि पत्नीꣳसंनह्येत्यस्याविकारप्रयोगादमृन्मयमित्यस्यापि तत्तुल्यताशङ्कापरिहारार्थं विशेष उच्यते पत्नीꣳ संनह्येति । प्रैषकाले पत्न्यो न संनिहिताः संनहनप्रभृति संनिधानात्तस्मादेकवचनमन्त्रेणास्याभिधानमिति विशेषज्ञानाशक्तेरसमवेताभिधानान्न च तासां संस्कारो जात्यभिधानवन्न च तासां संस्कारार्थः प्रैषः, किंत्वाग्नीध्रसंस्कारस्तस्य प्रैषत्वादत एव प्रैषकाले पत्नीनामसंनिहितत्वाज्जात्यभिधानद्वारेणापि पाशमन्त्रवत्प्रकृत्यर्थान्वयसंभवमात्रेणापि न तासां संस्कारः, जात्यभिधानवदिति यथा वचनार्थाभावेऽपि जात्यभिधानेन संस्कारस्तथेह न संभवतीति। इमौ पर्णमिति तन्त्रेणैकत्वाच्छाखायाः पृथक्पृथगुपलक्षितानां वत्सानामपाकरणं दोहार्थमुपलक्षितानां तथा गवां सायंदोहार्थानां तथा गवामपि पृथग्लक्षणानि कृत्वा सायंदोहार्थानां प्रातर्वत्सापाकरणकाले षड्वराध्या वत्सा अपाक्रियन्ते। उभयत्र वत्सापाकरणकाले प्रतिकुम्भिपृथक्कृतचिह्नानां वत्सानां मातृभ्योऽपाकरणमिति यावत्संस्कारस्तन्त्रेण भवतीति गोप्रस्थापनादिसंस्कारः पृथक्पृथक्तिस्रस्तिस्र आतञ्चनार्था द्व्यहे पुरस्ताद्दोह्यास्तिस्र इति प्रदर्शनार्थमेकस्या द्वयोस्तिसृणां वा पृथक्पृथक्, तथा द्व्यह इति प्रदर्शनमेकाहे द्व्यह इत्यादेरातञ्चने कृते तत्क्षणादेव दधि यथा स्यात्तथोपाय आस्थेयो रजतनिधानादिः। परिस्तरणान्ते कृत आरण्याशनान्ते वाऽनन्तरमेव पाणिप्रक्षालनादिपरिस्तरणोत्तरं दोहप्रचारपक्षे प्रचारानन्तरं त्रिरमणे कृत आरण्याशनम् ॥ १३ ॥ १४ ॥

सू०दी०—सायं पूर्वेद्यू रात्रौ सायंदोहाभ्यां प्रचरन्ति प्रातरपरेद्युर्यथाकालं प्रातर्दोहाभ्यामित्येकीयः पक्षः ॥ १३ ॥

पक्षान्तरमाह—पूर्वस्मिन्पक्षे कतिपयप्रधानप्रतिकर्षेण नानाकालत्वात्प्रधानानां तन्त्रस्य प्रतिकर्षोत्कर्षाभ्यामावृत्त्यादिबहुन्यायविप्रतिषेधात्तमुपेक्ष्यायमेव पक्षः सूत्रकृताऽङ्गीकृत इति ज्ञायते तत्रैव प्रयोगविधानात् ॥ १४ ॥

**पात्रसंसादनकाले चत्वार्यौदुम्बराणि पात्राणि प्रयुनक्ति ॥ १५ ॥ तेषां जुहूवत्कल्पः ॥ १६ ॥**

भा०वृ०—स्फ्याग्निहोत्रहवण्यौ चापरतः । पुरतः पात्रीप्राशित्रान्वाहार्यस्थालीडापात्राश्मोपवेषमदन्तीवर्जानि । भक्षणाभावादौदुम्बरयोर्जुह्वा सह प्रयोगः । न प्रणीताः पुरोडाशश्रपणार्थत्वाददृष्टार्थत्वादित्येके । "आपो वै रक्षोघ्नीः । रक्षसामपहत्यै" इति प्रणीतानां रक्षोहननार्थतयाऽदृष्टार्थत्वात् । यजमान वाचं यच्छेत्युक्त्वा वाग्यतः पात्राणीत्येवमादि । पशुवद्वाचं यमित्वा यज्ञयोगः । न कुर्वीतेत्युपदेश औषधार्थ इति निरुप्यमाणहविरभिमन्त्रणेऽग्निं होतारमिति प्रकृत्य तदुदित्वा वाचं यच्छत्यथ यज्ञं युनक्तीत्यौपधकाण्डमध्यवर्तित्वादौषधार्थ एवेति । पर्यग्निकरणम् । प्रोक्षणीरासादयेत्यविकृतः संप्रैषः स्रुक्संमार्गे पात्रयोः सहाऽऽदानादिं जुहूं संमृज्य ततः पात्रेऽविकृतेन जुहूमन्त्रेण लिङ्गमविवक्षितं सामान्याभिधानादिति । वाजिनीं त्वा सपत्नसाहीं संमार्ज्मीति । वाजित्वसामान्याभिधानपरत्वात्पात्राणीति नपुंसकलिङ्गत्वे सति स्त्रीलिङ्गाविवक्षया पात्रेऽप्यविकारः । तथा किं सामान्यं वाजित्वं यथा पत्नीषु पत्नीत्वमिति तथा पत्नीं संनह्येति पत्नीत्वमात्राभिधाने वचनाविवक्षया कथं स्त्रीत्वं स्त्रीसामान्यवचनं भवतीति । केचित्सामान्याभिधेये कथं वाजिनीमिति स्त्रीत्वं नपुंसकत्वमेव स्याद्, परिहरति पुंस्त्ववचनमिति दृष्टान्तं विवृणोति पुंलिङ्गं संख्या च सामान्यतन्त्रं यथा पुंशब्दः, एवं स्त्रीशब्दोऽपि मण्डूकेन विकर्षति । मण्डूकिताभिरागहीति । मण्डूकेनेति पुंलिङ्गं विनियोगे मण्डूकिताभिरागहीति स्त्रीलिङ्गमन्त्रदर्शनादेवंविधानां सामान्यमात्रवचनतया लिङ्गसंख्यादीनामविवक्षया प्रकरणे च समानकार्याणां मा भूत्संस्कारहानिरिति सामान्याभिधानमाश्रयत इति । एकप्रकरणवर्तिनां समानकार्याणां तुल्यवत्संस्कार्यत्वात्सामान्याभिधानमाश्रीयत एष एव न्यायो वचनविरोधेऽपि संख्याविरोध इदं देवानामित्याग्नेये केवले निरुप्ताभिमर्शनं बहुवचनान्तमेव । अवदानमन्त्रे चावदानानि ते प्रत्यवदास्यामीत्यवदानजात्यभिधानाद्बहुवचनान्त एवावदानद्वि-

त्वेऽपि प्रयुज्यते। ऊहमेक आहुः। गुणविकारेषु काम्यनैमित्तिकेषु संस्थाधिकरणन्यायात्कर्मैकत्वेऽप्यधिकारभेदाद्विकृतित्वादूह इत्येके। तथा वाजित्वेऽपि भवति वाचं प्राणमित्यारभ्य वाजि त्वा सपत्नसाहामिति वेदाग्राणां विभागः। प्रातर्दोहपात्रार्थं तयोरपि प्रधानत्वाद्वेदाग्राणि प्रतिविभज्येत्येष पक्षोऽत्र नित्यः। प्रतिपात्रं च विभागः प्रतिविभज्येति वचनात्। न पवित्रापिसर्गः। आज्यान्यभिमन्त्र्य दोहयोः सादनं करोति पञ्चहोत्राभिमर्शनम् ॥ १५ ॥ १६ ॥

सू०दी०—चत्वारि होमार्थानि पात्राणि जुह्वा सहैकीकृत्य प्रयुनक्ति प्रागुक्तन्यायात् ॥ १५ ॥

तेषां संमार्जनादिसंस्कारो जुहूवत्कार्यः। तत्र वाचं प्राणमिति मन्त्रो वाजि त्वा सपत्नसाहमित्यूह्यते गुणविकृतित्वात् ॥ १६ ॥

आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यजेति संप्रैषौ ॥ १७ ॥

भा०वृ०—आज्यभागान्ते कुम्भ्यावादायातिक्रामन्नाहेन्द्रायानुब्रूहीतीन्द्रयाजिनः। महेन्द्रयाजिनो महेन्द्रायानुब्रूहीति द्वौ ब्राह्मणौ पात्राभ्यामनुजुहुतः। अग्निमावहाग्निं होत्रायेति नैतावावाहयतीति अग्निस्विष्टकृतोरभावादन्यदविकृतम्। दोहौ सर्वहुतौ हुत्वा रात्रौ विरमेयुः। दोहाभ्यां प्रचरन्तीति यागमात्रोपदेशाच्छ्लोभूते स्तीर्णेषु दर्भेष्वप्रयुक्तान्यपराणि प्रयुज्याप्रयुक्तानि पूर्वाणि प्रयुनक्ति। रात्रौ न कृतं पुनः क्रियते प्रणीताप्रणयनादि सर्वं क्रियत आप्यलेपनिनयनान्तं बर्हिष्येव निनयनं सकृदेव। लेपानामभावात्। केचित्प्राचीः कुर्वन्ति प्राक्त्वस्य संभवात्। हविःपा(विष्पा)त्रप्रोक्षणे सर्वासां प्रोक्षणीनामुपयोगोऽतः प्रोक्षणीरासादयेति न प्रैषः। प्राशित्रे प्राशित्रहरणं चाऽऽदाय तूष्णीमघृताक्तत्वादतो घृताचीरिति मन्त्राभावः, प्रतितपनादि संमार्गप्रहरणान्तमविकृतम्। स्तीर्ण एव प्रस्तरे पवित्रे अपिसृज्य

कपालवत्पुरोडाशादङ्गारानित्येवमादि प्रतिपद्यते । दोहयोरभिघारणं यस्त आत्मेति भेदेन हवींष्यासाद्याऽऽसन्नाभिमर्शनम् । उपोत्थाय होताऽऽवह देवान्यजमानायाग्निमग्न आवहेत्युक्त्वा दोहदेवतामिन्द्रं महेन्द्रं वाऽऽवाह्य ततोऽग्निं होत्रायाऽऽवहेत्यादि जातवेद इत्येवमन्तमुक्त्वोपविशेत् । नाऽऽर्षेयं वृणीते न निगदः । अग्नेः संस्कृतत्वादाग्नेयस्य हविराहुतिप्रभृत्येवाध्वर्युः प्रतिपद्यते शेषः समानो दोहप्रचारपार्वणहोमादिः । केचित्साधारणानामुत्कर्षं मन्यन्ते । उत्कर्षेदित्यपरमिति वक्ष्यमाणन्यायात् । द्वे बर्हिषी रात्रावपि हविरासादनार्थं बर्हिर्न प्रथमे प्रस्तर इति । अयं प्रस्तर उभयस्य वर्तेति प्रयाजानुयाजधारणार्थत्वात्प्रस्तरस्य प्रयाजानुयाजादीनामुत्कर्षे वक्ष्यमाणत्वाद्रात्रिप्रयोगे न प्रस्तरः । द्वाविध्मावुभयत्र हविष्प्रक्षेप इध्माङ्गारेषु कर्तव्योऽदृष्टार्थत्वायेति । पञ्चदश दारूणि परिधयश्च प्रथम इध्म इति आघारानुयाजानामभावात्समिधां निवृत्तिः, न संभरणमन्त्रौ प्रथम इति । यत्कृष्णो रूपं त्रीन्परिधीनित्यनयोः संख्याविरोधान्निवृत्तिः । संभरणमन्त्रः प्रयोक्तव्य एव यज्ञाभिधानात् । नोलपराजीस्तरणं यज्ञस्य संततिरसीति यज्ञाभिधानाद्यज्ञस्य साधारणत्वादुत्कर्षो द्रव्यस्य संस्कारत्वात्स्फ्याग्निहोत्रहवण्यौदुम्बरवेदानां प्रयोगः । स्फ्यस्य वेद्यग्निसंस्कारत्वात्प्रयोगोऽग्निहोत्रहवण्याः पात्रप्रोक्षणार्थत्वादौदुम्बरपात्रस्य होमार्थत्वाद्वेदस्य चोपवाजनार्थत्वात् । ब्रह्मवरणं यजमान वाचं यच्छेत्येवमादि पशुवत् । असंप्रैषो न संनहनमन्वासनार्थं तत्संस्कार इति पत्नीसंस्कार इत्युत्कर्षोऽतः संनद्धाया एवान्वासनम् । न चाग्रे संनहनं न दृष्टः प्रधानोपकार इति संनहने प्रधानोपकारो न दृष्ट इत्यग्रे प्रथमप्रयोगे दृष्टोपकाराभावाच्च संनहनमतः श्वोभूते संनहनं न चायं पत्नीसंस्कार इति प्रथमप्रयोगे क्रियमाणस्य संनहनस्य क्रियान्तरापकर्षात्संस्कारस्तु तत्संस्कृतायाः क्रियान्तराकरणात् । न च प्रथमप्रयोगे कृतं संनहनमुत्तरेद्युरुपस्थानादेरुपकरोतीति न संनहनम् । पात्रयोः संमार्गं औदुम्बरयोर्नान्येषां प्रयोजनाभावात् । न प्रोक्षण्युत्पवनादिसंस्कारः । न पवित्रापिसर्गः, श्वोभूते प्रोक्षण्युत्पवनार्थं स्थाप्यत्वात्तत्र स्तरणं बर्हिषः परिधिपरिधानमाहवनीया-

भिमन्त्रणमग्निकल्पनं नाऽऽघारसमिधौ न विधृती दोहासादनं वेदस्य चाऽऽसादनमयं वेद इति सामिधेन्य उपवाजनं नाऽऽघारौ च आहुतयो नास्ति प्रवरो न स्रुगादापनं होतुः प्रयाजाभावात् । प्रचर्य दोहाभ्यां नान्वाहार्यः । ऋत्विजामनतिबाहुल्ये सत्यपि चोदिते दक्षिणादानस्य चोत्कर्षात्ततः परिधिप्रहरणं पात्राभ्यामौदुम्बराभ्यां संस्रावणं स्रुक्स्रावभागा इति तूष्णीं बर्हिष्प्रहरणं न वेदिस्तरणमुत्तरत्र कार्यसंभवात् । ब्रह्मा निष्क्रामति । न यजमानभागः सर्वहुतत्वात् । न युनक्ति न च विमुञ्चति यज्ञं विष्णुक्रमादि याजमानं प्रधानसंस्कारत्वात्प्रधानकर्तृसंस्कारत्वाच्छ्वोभूते सर्वं यथाप्रकृत्येवमन्तः केषांचित्पक्षः । उपदेशो नेध्माबर्हिषी तयोरपि सर्वकरणार्थतया साधारणत्वात्साधारणानामुत्कर्षपक्षे रात्रौ तयोर्निवृत्तिः, केवलमौदुम्बरपात्रासादनं ब्रह्मवरणं पवित्रे कृत्वाऽभिमर्शनं पात्राणां प्रोक्षणं संमार्गं कृत्वा पात्रयोर्दोहासादनं ततो यागं कृत्वोपरमः । श्वोभूते पुनः सर्वमित्यधिकं कुर्वन्नाग्नेयादिप्रयोगं दर्शयति प्रथमपक्षे रात्रौ कृतादधिकं श्वोभूते कर्तव्यमुपदिशन्नाग्नेयेन च पुरोडाशेनेत्याग्नेयादीनां प्रयोगं दर्शयतीत्येतदेवं विवृणोतीति आज्यभागाभ्यां प्रचर्य रात्रौ प्रचारः । आग्नेयेन प्रचर्य श्वोभूते । अयमभिप्रायः—आज्यभागाभ्यां प्रचर्येत्येतत्सूत्रमपकर्षपक्षे रात्रौ चाऽऽज्यभागान्ते दोहयोः प्रचारः । श्वोभूत आग्नेयेन प्रचर्य दोहयोः प्रचार इतरथाऽऽज्यभागाभ्यामित्येतदनर्थकमिहाऽऽश्रावयेत्येव लभ्यत इति केचित् । आश्रावयेन्द्रं यजेति पाठात् । पूर्वगता ब्राह्मणा नापरेणाऽऽहवनीयं गच्छन्तीत्युपदेशः । अपरेणाऽऽहवनीयमाक्रमणस्य विधानादाहवनीयमग्रेण दक्षिणतः प्रविष्टानामाश्रवणोत्तरकालमुत्थापनमात्रमित्युपदेशः । स्वपक्षस्त्वध्वर्युकार्यकरत्वात्तद्वदतिक्रमणमिति । उपवीतविधिः श्रौतप्रायश्चित्तार्थः । यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोतीति प्राप्तस्य पुनर्वचनादिविधानाभावे नियमातिक्रमे चान्यस्मिन्नित्यादिस्मार्तप्रायश्चित्तं भवति ॥ १७ ॥

इति षोडशी कण्डिका ।

---

सू०दी०—आश्रावणवद्विस्पष्टार्थमाज्यभागवचनम् । सायंदोहयोः सायंप्रचारपक्षार्थमिति केचित् । तदयुक्तम्—कुम्भीभिरिति बहुवचनेन विरोधात् । आग्नेयेन च पुरोडाशेनेति समुच्चयवचनविरोधाच्च । आग्नेयप्रचारानुवादस्तत्रैव विशेषविवक्षया वेदितव्यः । यथाऽऽग्नेयेन प्रचर्यानन्तरमग्नीधे स्रुचौ दत्त्वा कुम्भीरादाय दक्षिणाऽतिक्रामन्पुरोनुवाक्यां संप्रेष्यतीति । इन्द्रग्रहणं महेन्द्रस्याप्युपलक्षणं प्राकृतदेवतानुवादत्वात् ॥ १७ ॥

इति षोडशी कण्डिका ।

---

**यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरध्वर्युं जुह्वतमनुजुह्वति ॥ १ ॥**

भा०वृ०—॥ १ ॥ *

सू०दी०—यावत्यः कुम्भ्य इति विशेषणमसमासार्थं ब्राह्मणानां ते चर्त्विजोऽभिप्रेता अधिकारात्, अध्वर्युं जुह्वतमिति लिङ्गाच्च । दक्षिणत उपवीतिन इति यज्ञोपवीतिन इत्यर्थः । यथा दक्षिणत उपवीयोपविश्याजिनं वासो वा दक्षिणत उपवीयेत्यादौ । अथवोपवीतिनो दक्षिणत उपोत्थाय न त्वपरेणाऽऽहवनीयमतिक्रम्येत्यर्थः । उपवीतवचनमुत्तरीयनियमार्थं मा भूत्सूत्रविकल्पोऽपि वा सूत्रमेवोपवीतार्थं इति । कर्मार्थं वा द्वितीयमुपवीतं विधीयते । तथा कर्मार्थं यज्ञोपवीतविधिं प्रकृत्य बौधायनः—अजिनं वासः सूत्रं वा द्वितीयं यस्य यज्ञवति तेन स उपव्ययत इति ॥ १ ॥

**स्विष्टकृद्भक्षाश्च न विद्यन्ते ॥ २ ॥**

भा०वृ०—विद्यन्ते स्विष्टकृद्भक्षा आग्नेयस्य । दोहाश्च सर्वहुताः ॥२॥

सू०दी०—दोहानामिति शेषः । तेन दोहाः सर्वहुता इत्युक्तं भवति ॥ २ ॥

---

* भाष्यवृत्तावेतत्सूत्रव्याख्या पूर्वसूत्रव्याख्यया सहैवोक्ता ।

**समानमत ऊर्ध्वꣳ संतिष्ठते साकंप्रस्थायीयः ॥ ३ ॥**

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—गतौ ॥ ३ ॥

**दाक्षायणयज्ञेन सुवर्गकामः ॥ ४ ॥**

भा०वृ०—यजेतेत्यनुषङ्गः ॥ ४ ॥

सू०दी०—यजेतेति शेषः । दाक्षायणेन दृष्टो यज्ञो दाक्षायणयज्ञः । कर्मधारय इति केचित् । तन्न शोभते दाक्षायणत्वनाम्नो विशेषणस्याप्रसिद्धेः । यज्ञो दाक्षायणस्येति मानववचनात्, सार्वसेनियज्ञो वशिष्ठयज्ञः शौनकयज्ञ इत्यादिभिर्वैरूप्यायोगाच्च । सोऽपि दर्शपूर्णमासयोरेव गुणविकारः । कर्मान्तरमित्येके । तथा चाऽऽह कात्यायनः—नामफलगुणयोगात्कर्मान्तरं गुणविधानं वा संनिधिसंपद्वचनाभ्यामिति ॥ ४ ॥

**द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ॥ ५ ॥**

भा०वृ०—व्याख्यातः ॥ ५ ॥

सू० दी०—व्याख्यातोऽयमृद्धिकामप्रयोगे ॥ ५ ॥

**आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्याम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् ॥ ६ ॥**

भा०वृ०—दाक्षायणयज्ञेनोपांशुयाजः । आग्नेयादीनामनुक्रमणादसोमयाजिनोऽप्यग्नीषोमीयः पुनर्विधानाद्दाक्षायणयज्ञे । तथा, एवमुत्तरं यथादेवतमित्युक्त्वाऽग्नीषामाभ्यामिति पौर्णमास्यामिति पुनर्विधानाच्च दध्येव द्वितीयम् । तच्च स्थानादेकदेवतात्वाच्चोपांशुयाजविकारः । द्वे पौर्णमास्याविति पौर्णमासकर्मणोऽभ्यासविधानादैन्द्रं दधीति सांनाय्यप्रत्यभिज्ञानेऽपि पौर्णमास्यां द्वितीयस्यो-

पांशुयाजकर्मणोऽभ्युदयेष्टिवद्द्रव्यदेवतान्तरविधानम् । द्वितीयदेवतात्वाच्च । प्रकरणात्तु दधिधर्माणां प्राप्तिर्दर्शपूर्णमासप्रकरणे दधिधर्माणामुपदेशादविशेषेण सर्वप्रकरणार्थत्वं प्राप्तम् । अनुपकाराणां निवृत्तिः । अस्यार्थः—अङ्गानामकिंचित्कराणामङ्गत्वानुपपत्तेः प्रधानापूर्वीयद्वारेषूपकारं जनयित्वैवाङ्गत्वनिर्वाहाद्दधिधर्माणामुपांशुयाजे कार्याभावात्ते तत्र निवृत्ताः । इदानीमुपांशुयाजात्मकत्वादैन्द्रयागस्य च दधिसाध्यत्वाद्दधिधर्मा उपकुर्वन्ति । द्वारं जातमिति । अत्रायमभिप्रायः—साकंप्रस्थाय्यीयदाक्षायणयज्ञादीनां दर्शपूर्णमासगुणमात्रविकारत्वान्नात्यन्तविकृतत्वमिति सूत्रकारभाष्ययोरभिप्रायः । तूष्णीं कंसं मृन्मयं चेति वचनादितरथा कंसमृन्मययोरूहमेवोपदिशेत्तथाऽग्निष्टोमस्य गुणविकारा इत्यत्र भाष्यकारेणास्य स्पष्टमुक्तम् । एषामग्निचित्यादयो वैकृता धर्मा न भवन्तीत्यतः खण्डसंस्थादिवत्प्रयोगविकारमात्रत्वमेव । तस्मादैन्द्रे दधनि दध्युत्पत्तिधर्माः कर्तव्याः । आतञ्चनार्थं यवागूर्होमश्च । एतच्च प्रायश्चित्तप्रकरणे भाष्यकारेण स्पष्टमुक्तम् । वायव्ययवाग्वाः सांनाय्यत्वात्पूर्वनिर्वापादयस्त्वर्थलोपान्निवृत्ताः, इह तस्यौषधगुणत्वात्क्रियन्त एवेति । उपांश्विज्याहुतानुमन्त्रणादीनामद्रव्यद्वारत्वादुपांशुयाजधर्मा एव क्रियन्ते । पूर्णमासे संनयेदिति वचनात्सांनाय्यप्रधानस्योभयत्र भावः । अस्मच्छाखोक्तपक्ष उच्यते—सांनाय्ययागयोः कालद्वये विभज्य विधानं न स्थानादुपांशुयाजस्य विकृतप्रयोगविधिराग्नेयवच्चथोभयत्राऽऽग्नेयविधिरत्र दध्येव नियम्यते पूर्णमासे महेन्द्रयाजिनोऽप्यैन्द्र एव समाम्नानाच्छाखान्तरे । न च तस्याऽऽमावास्यत्वं सांनाय्यत्वेऽप्यैन्द्रसांनाय्यस्य पौर्णमासीकरणत्वेन विधानाद्यथा पौर्णमास्यामाग्नेयस्येत्यमावास्यासंबन्धिनोऽप्याग्नेयस्य पौर्णमास्यन्वयेऽपि यथा नाऽऽमावास्यत्वमयमेवोपदेश इत्यस्मच्छाखोक्तोऽयमेवोपदेशपक्षः । अस्मिन्पक्षे नोपांशुयाजधर्मा हुतानुमन्त्रणादयः । संनयतोऽपि भवत्यैन्द्राग्नः । उभयविकाराऽऽमिक्षेयं द्वितीयेति वचनात्सांनाय्यविकारामिक्षा न वैश्वदेव्याः सांनाय्यस्य स्वधर्मयुक्तस्य कथंचिद्द्रव्यदेवता विकृतस्योपदेशादतो न वैश्वदेव्यामिक्षाधर्माः प्रसूमयाद्यः । वाजसनेयिवचनात्तु वाजिनेज्या भवति । वैश्वदेव्या-

मिक्षाधर्मत्वाभावेऽपि। अत्र पूर्वस्यामुत्तरस्यामिति पञ्चदशी-प्रतिपदोर्विधिः॥ ६॥

सू०दी०- अत्र पुनर्विधानादसोमयाजिनोऽपि ब्राह्मणस्याग्नीषोमीयः पुरोडाशो भवति संनयतोऽप्यैन्द्राग्नः सांनाय्यं च। नित्यमैन्द्रं च तत्सर्वेषाम्। तथा शृतं चोपांशुयाजश्च न भवतः। सर्वहविषां पुनरनुक्रमणात्। आमिक्षामाग्रयणे व्याख्यास्यति॥ ६॥

व्यावृत्काम इत्युक्तम्॥ ७॥

भा०वृ०—व्यावृत्कामः पाप्मना पृथक्त्वमिच्छन्। क्षुरपविः क्षुर-धारा पापपृथक्करणं सुशकं करोतीति क्षुरस्येव धारा क्षुरधारा। ताजकृतस्मिन्नेव काले पुण्यो भवति पापनिवृत्तेः। भवाभीयते क्षुर-तुल्यत्वात्तत्संपर्कं गच्छेद्वा मरणापत्तेः सर्वसुरवन्यस्याभिलषितं मरणं तस्य भवति। पल्पूलनं संमर्दनं शोधनद्रव्येणोपाधिना पौर्ण-मास्याममावास्यायां वा प्रधानानि यानि तानि पुनः पुनः, दाक्षायण इत्ययनशब्देनाभ्यासावगतेः। अनृतवचनप्रतिषेधः क्रत्वङ्गं तस्यातिक्रमेऽन्तरितप्रायश्चित्तं व्रातपत्यादि। आहिताग्निकालस्यो-पनयनकालस्य त्रिरात्रमक्षारादि तेषां समुच्चयः पुरुपापराधे श्रौतस्मार्तसमुच्चयात्। केचिदुत्तरमेव पूर्वस्य निवृत्तिः। अक्षार-लवणभोजनम्। स्मार्तप्रायश्चित्तमेव न पूर्वावस्थागतम्। उत्तरा-श्रमिणः पूर्वाश्रमधर्मनिवृत्तिवत्। दधि यजमानभागस्यार्धमास-पानं केचित्स एतमर्धमासमिति लिङ्गादिति। स एतमर्धमासꣳ सधमादं देवैः सोमं पिबतीति देवैः सहार्धमासं सोमसंस्तुतसांनाय्य-पाननिर्देशादैन्द्रे दधनि यजमानभागं प्रभूतमवशिष्य भक्षयेत्। यावदमावास्याकर्मसांनाय्ये च सोमशब्दो निर्दिश्यते। सोमः खलु वै सांनाय्यमिति॥ ७॥

सू०दी०—व्यावृत्काम एतेन यज्ञेन यजेतेत्यादि ब्राह्मणे यदुक्त-मान्तादनुवाकस्य तदप्यनुसंधातव्यमित्यर्थः। तत्र व्यावृत्कामः समानेभ्य आत्मनो व्यावृत्तिमीप्सुः। क्षुरपविरसिधारा। ताजक्-सद्यः। पल्पूलनमश्मादिभिर्विना हस्तादिभिर्मर्दनेन शोधनम्॥ ७॥

ऋत्वे वा जायामुपेयात् ॥ ८ ॥

भा०वृ०—ऋत्वमार्तवं तत्र सवर्णायामुपगमनमिति व्यावृत्काम इत्युक्तमिति निर्दिष्टब्राह्मणे न स्त्रियमुपेयादिति निषेधस्य विकल्प ऋतुकाले विधीयते । यस्यामधिकृतो जायते सा जाया सवर्णा । तथा हि जायायास्तद्धि जायात्वं यदस्यां जायते पतिरिति । आत्मोत्पत्तिनिमित्तानिन्द्यविवाहप्राप्तपत्नीवचनत्वाज्जायाशब्दस्य सवर्णवचनता । अतश्चासुर्यः शूद्र इति वचनादासुरविवाहोढायां जातस्य शूद्रस्य तस्यापि यज्ञान्वयो निषिध्यते । अधिकारश्च जायाया एव । सवर्णापूर्वशास्त्रविहितायामिति स्मरणादितरासां कामतः प्राप्तत्वात् ॥ ८ ॥

सू०दी०—यदुक्तं ब्राह्मणे न स्त्रियमुपेयादिति तत्र ऋतावुपेयाद्वा । महिषीमित्यर्थः । अत्र दर्शपूर्णमासव्रतवत्कर्मकालान्येतानि व्रतानीत्युक्त्वा पुनराह भारद्वाजस्तेन मन्यामहेऽन्तरालकालव्रतानि यथा चातुर्मास्येष्विति ॥ ८ ॥

सोऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत ॥ ९ ॥

भा०वृ०—प्रक्रम आरम्भस्तेनैवान्तो नेयः, उपक्रान्तेन यावद्विरमणं कर्तव्यं पुनः पुनः प्रक्रमात्तु नियम्यत इति वचनाद्यत्रैतद्वचनं तत्रैव प्रक्रमनियमः । अतोऽग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यपशुसोमानामारप्स्यमानानां यद्द्रव्यदेवतादिगुणसंस्थाकालविशिष्टः प्रयोग आरब्धः स एवाऽऽदर्तव्यः प्रयोगे प्रयोगे । कल्पान्तराण्यप्यनुष्ठेयानि ॥ ९ ॥

सू०दी०—अयमपि यज्ञो वैमृधवत्प्रक्रम एव दर्शपूर्णमासाभ्यां विकल्पते । आदित एव प्रक्रम्यानेन यजेत ताभ्यां वा । न तु प्रक्रान्तस्य त्यागोऽप्रक्रान्तस्य वा ग्रहणमिति ॥ ९ ॥

तेन पञ्चदश वर्षाणीष्ट्वा विरमेद्यजेत वा ॥ १० ॥

भा०वृ०—तेन दाक्षायणयज्ञेन पञ्चदशवर्षपर्यन्तमिष्ट्वा विरमेत्त्यजेद्यजेत वेत्यस्मिन्पक्षे यावज्जीवं यजेत ॥ १० ॥

सू०दी०—पञ्चदशवर्षताऽस्य दर्शपूर्णमासयोस्त्रिंशद्वर्षतया संमिता वेदितव्या प्रयोगतो द्वैगुण्यात् । यजेत वा यावज्जीवमिति शेषः ॥ १० ॥

**संतिष्ठते दाक्षायणयज्ञः ॥ ११ ॥**

भा०वृ०—दक्षस्यायनं दाक्षायणमावृत्तं कर्म दाक्षायणश्च यज्ञश्च दाक्षायणयज्ञः ॥ ११ ॥

सू०दी०—गतः ॥ ११ ॥

**एतेनैडादधः सार्वसेनियज्ञो वासिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः ॥ १२ ॥**

भा०वृ०—इडादधेन दृष्ट ऐडादधः । सर्वसेनादिभिर्दृष्टा यज्ञाः सार्वसेन्यादयो यज्ञाः । नामधेये प्रयोजनम् । ऐडादधेन यक्ष्ये । ऐडादधꣳ हविरिदमेषां मयीत्येवं यथानामोत्तरेषु तेषां दाक्षायणयज्ञवत्प्रयोगः ॥ १२ ॥

इति सप्तदशी कण्डिका ।

---

इति पञ्चमः पटलः ।

---

सू०दी०—इडादधेन दृष्ट ऐडादधः । एवमुत्तरेऽपि द्रष्टव्यास्ते च दाक्षायणयज्ञेन व्याख्याताः । तत्समानप्रयोगास्तत्समानफलाश्चेत्यर्थः । नामधेयप्रयोजनमैडादधीयꣳ हविरिदमेषां मयीत्यादि द्रष्टव्यम् ॥ १२ ॥

इति सप्तदशी कण्डिका ।

---

इति पञ्चमः पटलः ।

---

**ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः ॥ १ ॥**

भा०वृ०—ब्रह्मिष्ठो ब्रह्माधिकः, वेदवेदार्थपारगो ब्रह्मनिष्ठश्च ॥ १ ॥

सू०दी०—दार्शपौर्णमासिकमिदानीं ब्रह्मत्वमुपदिश्यते । यो ब्रह्मिष्ठो ब्राह्मणगुणेन प्रकृष्टः स ब्रह्मा भवति ॥ १ ॥

तं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति ॥ २ ॥

भा०वृ०—ब्रह्मवरणमध्वर्युणाऽपि कर्तव्यमुभयत्र विधानादत्र याजमाने च ॥ २ ॥

सू०दी०—यजमान इति शेषः । तथा याजमानेऽनुवादात् । यथा चैतदेवं तथा तत्रैव वक्ष्यते ॥ २ ॥

वृतो जपति ॥ ३ ॥

भा०वृ०—वृतो जपतीति वचनात्सत्र वरणं नास्ति सोमेष्टिषु तत्र जपस्यापि लोपः ॥ ३ ॥

सू०दी०— यदैवं वृतस्तदोत्तरं मन्त्रं जपतीत्यर्थः । वृत इति वचनात्प्रायणीयादौ निवर्तते ॥ ३ ॥

अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणां बृहस्पते यज्ञं गोपायेत्युक्त्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य निरस्तः पराग्वसुः सह पाप्मनेति ब्रह्मसदनात्तृणं निरस्येदमहमर्वाग्वसोः सदने सीदामि प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि तदग्नये

प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या इत्युपविशति ॥ ४ ॥

आहवनीयमभ्यावृत्याऽऽस्ते ॥ ५ ॥

भा०वृ०—उपविशत्याहवनीयाभिमुख इति । तत्पृथिव्या इत्युपविशत्याहवनीयमभ्यावृत्येत्येकं सूत्रमास्ते च तत्रैवाऽऽ समाप्तेरित्यर्थान्तरविधिः । केचित्प्राङ्मुख उपविश्य पश्चात्परिवर्तेत इत्याहुस्तत्पृथिव्या उपविशतीति विधायाऽऽहवनीयमभ्यावृत्याऽऽस्त इति पुनर्विधानात् ॥ ४ ॥ ५ ॥

सू०दी०—उत्तरतो वेदेस्तिष्ठन्नेतं जपमुक्त्वा ततो दक्षिणाऽतिक्रम्योपविशति ॥ ४ ॥

उपविश्यावृत्याऽऽहवनीयाभिमुख आस्ते ॥ ५ ॥

कर्मणि कर्मणि वाचं यच्छति ॥ ६ ॥

भा०वृ०—ऋत्विग्यजमानकर्मणि ॥ ६ ॥

सू०दी०—कर्मणि कर्मणि सर्वेष्वेव कर्मसु ॥ ६ ॥

मन्त्रवत्सु वा कर्मसु याथाकामी तूष्णीकेषु ॥ ७ ॥

भा०वृ०—मन्त्रवत्सु कर्मसु अमन्त्रवत्यपि वेद्यन्तपरिस्तरणादौ तूष्णीकेष्वर्थकृत्येष्वपि पात्रप्रक्षालनादिषु मानसानि वा तूष्णीकानि स प्रजापतिस्तूष्णीमाघारमाघारयतीति दर्शनाद्यत्तूष्णीं तत्प्राजापत्यमिति तूष्णीकस्य प्राजापत्यत्वदर्शनात्तस्मान्मनसा प्रजापतये जुह्वतीति प्राजापत्यस्य मानसत्वावगमान्मानसानां तूष्णीकत्वादस्मिन्पक्षे मन्त्ररहितेष्वप्यमानसेषु नित्यं वाग्यमनम् । यथेच्छा तथा प्रयुङ्क्त इति याथाकामी ॥ ७ ॥

सू०दी०—अथवा मन्त्रवत्स्वेव कर्मसु वाग्यमननियमस्तूष्णीकेषु त्वनियम इत्यर्थः ॥ ७ ॥

**यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् ॥ ८ ॥**

भा०वृ०—प्रमत्तः प्रमादेन व्याहरेदुल्लापयेत् ॥ ८ ॥

सू०दी०—प्रमादे प्रायश्चित्तं तत् ॥ ८ ॥

**ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने ॥ ९ ॥**

भा०वृ०—उत्तरत्र स्पष्टं भविष्यति ॥ ९ ॥

इत्यष्टादशी कण्डिका ।

---

सू०दी०—व्याख्यास्यत उत्तरत्र ॥ ९ ॥

इत्यष्टादशी कण्डिका ।

---

**प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योँ प्रणयेति प्रसौति ॥ १ ॥**

भा०वृ०—उच्यमान इति वर्तमानसामीप्ये, उक्त उत्यर्थः । नासमाप्ते प्रैषे समाम्नायां प्रार्थनायामनुज्ञानं युक्तं प्रणवाद्युच्चैर्याजुर्वेदिकत्वात्प्रणवात्पूर्वमुपांशु परप्रत्ययनार्थत्वात्प्रणवादिः प्रसव उच्चैः । ओमिति ब्रह्मा प्रसौतीत्युक्तेऽपि न केवलं प्रणवमात्रं प्रसवः । ओमित्युक्थ्यानि शंसतीत्यादिवत्प्रसवावयवत्वात्प्रणवस्य । यज्ञेषु चैतदादयः प्रसवा इति स्मरणात्प्रसवोऽनुज्ञानम् ॥ १ ॥

सू०दी०—उच्यमान इत्यत्र न वर्तमानकालो विवक्षितः । आमन्त्रणमध्येऽनुज्ञानुपपत्तेः । प्रसौति अनुजानाति । उपांशुजपमुक्त्वोच्चैः प्रसवः स च प्रणवादिः । यज्ञेषु चैतदादयः प्रसवा इति वचनात् । ओमिति ब्रह्मा प्रसौतीति श्रुतेश्च ॥ १ ॥

सर्वेष्वामन्त्रणेष्वेवं प्रसवस्तेन कर्मणा यस्मिन्नामन्त्रयते ॥ २ ॥

भा०वृ०—यस्मिन्कर्मण्यामन्त्रयतेऽध्वर्युः प्रणेष्यामि प्रोक्षिष्यामि परिग्रहीष्याम्येतेषु प्रतिवचनं प्रणय प्रोक्ष परिगृहाणानुब्रूह्याश्रावय प्रणवादीन्येतानि सर्वाणि ओमिति ब्रह्मा प्रसौतीत्युक्तत्वात् ॥ २ ॥

सू०दी०—यत्र यत्र कर्मण्येनमध्वर्युरामन्त्रयते ब्रह्मन्प्रोक्षिष्यामीत्यादिभिर्निगदैस्तत्र तत्राऽऽमन्त्रितेनैव तेन तेनाऽऽमन्त्रणविषयेण प्रोक्षणादिना कर्मणा विशिष्टः प्रसवः कार्यः। यथा—ओं प्रोक्ष, ओं परिगृहाणेत्यादि ॥ २ ॥

प्रोक्ष यज्ञमिति हविष इध्माबर्हिषश्च प्रोक्षे। बृहस्पते परिगृहाण वेदिꣳ स्वगा वो देवाः सदनानि सन्तु। तस्यां बर्हिः प्रथताꣳ साध्वन्तरहिꣳस्रा नः पृथिवी देव्यस्त्वित्युत्तरस्मिन्परिग्राहे। प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम्। वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येष्विति प्रवरे ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—एतेषु कर्मस्वामन्त्रित एतान्मन्त्राञ्जपित्वा प्रसौति। सामिधेनीरनुवक्ष्यन्तमिति होतारमिति शेषः। स यत्र ब्रूयाद्ब्रह्मन्सामिधेनीरनुवक्ष्यामीति तदा प्रजापतेऽनुब्रूहीति प्रसौति ॥ ३ ॥

देवता वर्धय त्वामिति सर्वत्रानुषजति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—गतः ॥ ४ ॥

मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीयमानं प्रेक्षते ॥ ५ ॥

भा०वृ०—अवदीयमानस्य प्रेक्षणं प्राशित्रस्यैं बहुष्वपि सकृदेव मन्त्रः कालभेदात्प्राजापत्येषु मनोतावदकरणत्वादिति । यथा प्राजापत्यादिपशुगणेष्वभ्यावर्तते मनोता तन्त्रं वेति क्रियमाणानुवादित्वात्कालभेदाभावात्तन्त्रत्वमुक्तं तद्वदस्यापि क्रियमाणानुवादित्वात्कालभेदात्तन्त्रता । केचिदावृत्तिर्विशेषवचनात्प्रतिद्रव्यमवदानकालभेदात्तदानीमेव वक्तव्यमिति विशेषवचनात् ॥ ५ ॥

सू०दी०—प्रेक्षणे सकृदेव मन्त्रो हविर्गणेऽप्यकरणत्वादव्यवायाच्च यथा पशुगणे मनोता ॥ ५ ॥

ऋतस्य पथा पर्येहीति परिह्रियमाणं सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् ॥ ६ ॥

भा०वृ०—परिह्रियमाणमग्रेणाऽऽहवनीयमाह्रियमाणमात्मसमीपम् ॥ ६ ॥

सू०दी०—परिह्रियमाणमग्रेणाऽऽहवनीयमाह्रियमाणमासन्नं ह्रियमाणम् । प्रतीक्षत इति शेषः ॥ ६ ॥

सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयामीतीडायाः पद इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डं सादयित्वाऽदब्धेन त्वा चक्षुषाऽवेक्ष इत्यवेक्ष्य सावित्रेणाङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदायाग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीत्यसंम्लेन्त्याऽपिगिरति ॥ ७ ॥

भा०वृ०—सावित्रः प्रतिगृह्णाम्यन्तः, आददे, इति द्वितीयः, एवम-

न्तयोस्तयोरन्यत्रापि पाठात् । असंम्लेन्त्य, असंस्पर्शयन्दन्तोष्ठाभ्याम् ॥ ७ ॥

इत्येकोनविंशी कण्डिका ।

---

सू०दी०—सावित्रः प्रतिगृह्णामीत्यन्तः प्रतिग्रहे तथैव ब्राह्मणे पाठात् । आदाने त्वाऽऽदद इत्यन्तः, तथादर्शितत्वात् । उपमध्यमाऽनामिका । असंम्लेन्त्य प्राशित्रं दन्तैरनभिमृद्य । अपिगिरति निगिरति ॥ ७ ॥

इत्येकोनविंशी कण्डिका ।

---

या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहेत्यद्भिरभ्यवनीयाऽऽचम्य घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति ॥ १ ॥

भा०वृ०—अभ्यवनयनमन्तर्निनयनं प्राशित्रस्याद्भिर्हृदयदेशे । उच्छिष्टेनैव मन्त्रोच्चारणमुत्तरत्राऽऽचमनविधानात् ॥ १ ॥

सू०दी०—उच्छिष्ट एवाद्भिः प्राशित्रमभ्यवनीयान्तं नीत्वा तत आचामति ॥ १ ॥

वाङ्म आसन्निति यथालिङ्गमङ्गानि ॥ २ ॥

भा०वृ०—मन्त्रे यल्लिङ्गं वर्तते तल्लिङ्गेन मन्त्रेणाङ्गानि संमृशति॥२॥

सू०दी०—तत्तल्लिङ्गेन मन्त्रेण तत्तदङ्गमभिमृशति ॥ २ ॥

अरिष्टा विश्वानीत्यवशिष्टानि ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू० दी०—विश्वशब्दोऽत्र सामर्थ्यादवशिष्टविश्वाङ्गाभिधायीति भावः ॥ ३ ॥

प्रक्षाल्य प्राशित्रं पूरयित्वा दिशो जिन्वेति पराचीनं निनयति ॥ ४ ॥

भा०वृ०—पराचीनमनिवर्तयन्मुखेन पुरस्तान्निनयति ॥ ४ ॥
सू०दी०—पराचीनमेकप्रयत्नेन निनयति ॥ ४ ॥

मां जिन्वेत्यभ्यात्मम् ॥ ५ ॥

भा०वृ०-मां जिन्वेति पुनर्गृहीत्वा शेषमित्यवचनादभ्यात्ममात्मन उपरि हृदयदेशाभिमुखम् ॥ ५ ॥

सू०दी०—पुनरपो गृहीत्वाऽभ्यात्ममात्मन उपरि निनयति शेषमित्यवचनादपरं पूरयित्वेति कल्पान्तरवचनाच्च ॥ ५ ॥

यत्रास्मै ब्रह्मभागमाहरति तं प्रतिगृह्य नासꣳस्थिते भक्षयति ॥ ६ ॥

भा०वृ०—संस्थिते भक्षणमाध्वर्यवे खण्डसंस्थास्वपि न ब्राह्मणतर्पणान्ते संस्थिते संतिष्ठेते दर्शपूर्णमासाविति तंत्रोक्तत्वादाध्वर्यवसमाप्तावुक्तत्वात्तेन सह विकल्पनात्, संस्थान्तराणां च तस्य च ऋत्विङ्मात्रव्यापारसमाप्तिपरत्वान्निष्क्रमणात्पूर्वं प्राशनम् । वचनात् ॥ ६ ॥

सू०दी०—नासंस्थिते न कपालविमोचनात्पूर्वमित्यर्थः । तत्र संस्थावचनात् ॥ ६ ॥

ब्रह्मन्ब्रह्माऽसि ब्रह्मणे त्वा हुताद मा मा हिꣳसीरहुतो मह्यꣳ शिवो भवेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति॥७॥

भा०वृ०—अभिमृष्टेऽन्वाहार्ये ब्रह्मणा यजमानेन च । प्रैषोऽध्वर्युणोच्यते ॥ ७ ॥

सू०दी—विकृतिषु दक्षिणानेकत्वे ब्रह्माणो ब्रह्माणः स्थ इत्यादि यथार्थमूहो द्रष्टव्यः ॥ ७ ॥

ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवितरेतत्ते प्राह

तत्सं च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति ॥८॥

भा०वृ०—स्पष्टम् ॥ ८ ॥

सू०दी—ननु सर्वेष्वामन्त्रणेष्वेवं प्रसव इत्यनेनैव सिद्धस्य प्रसवस्येह पुनर्वचनं ततोऽपकृष्येहापूर्वजपविधानं च किमर्थम् । ब्रह्मन्प्रस्थास्याम इति बहुवचनेनाऽऽमन्त्रयतः प्रतिष्ठेत्येकवचनेन प्रसवः पूर्वजपस्य देवता वर्धय त्वमित्यनुषङ्गलोपश्च यथा स्यातामित्येवमर्थम् । अन्यथा हि विपरीतः प्रयोगो भवेत् । प्रतिष्ठेत्येकवचनं त्वनुज्ञातो ब्रह्मणाऽऽग्नीध्र इत्यत्रैव व्याख्यातम् ॥ ८ ॥

भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति यत्किंच यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ॥ ९ ॥

भा०वृ०—मृन्मये भिन्नेऽभिमन्त्रणं समुच्चीयते मन्त्रैक्येऽप्युभाभ्यां प्रयोक्तव्यं मृन्मयं भिन्नं ब्रह्मणाऽभिमन्त्रितं भूमिर्भूमिमित्यनेन मन्त्रेणाध्वर्युरप्सु प्रहरेत् ॥ ९ ॥

सू०दी०—अनेनाभिमन्त्रितमनेनैवापोऽभ्यवहरत्यध्वर्युः ॥ ९ ॥

ब्रह्मभागं प्राश्यायाडग्निर्जातवेदाः प्र णो यक्ष्यभिवस्यो अस्मान्त्संनः सृज सुमत्या वाजवत्येत्याहवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामति ॥ १० ॥

भा०वृ०—अयाडग्निर्जातवेदा इत्यृक् । प्र णो यक्ष्यभिवस्य इति यजुः । वरुणप्रघासेषु तन्त्रेणोपस्थानम् । संभवाद्विहारद्वयाहवनीययोरनूहेनाऽऽहवनीयाभेदात् ॥ १० ॥

सू०दी०—कपालविमोचनान्ते दिवो भागोऽसीति ब्रह्मभागं प्राश्याऽऽचम्यायाडग्निरित्यृचा प्र णो यक्षीति यजुषा चोपस्थाय येन मार्गेण प्रविष्टस्तेन प्रतिनिष्क्रामति ॥ १० ॥

एवंविहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम् ॥ ११ ॥

भा०वृ०—इष्टिपशुबन्धानामन्यत्रापि यदुक्तं ब्रह्मत्वं यथा सव्यावृत्तौ ब्रह्मयजमानाविति आश्वलायनेन यदुक्तं तस्याकरणेऽपि न दोषः, एवंविहितमिति वचनात्तन्नियमावगतेः। यत्त्वाध्वर्यवकाण्ड उपदिष्टमिष्टिपशुबन्धेषु तस्याप्यकरणनियमः प्रयोजनम्। केचिदाहुरिष्टिपशुबन्धानां तु यदधिकमपेक्षितं तत्रैवंविहितमित्यस्यार्थः—इष्टिपशुबन्धानां दर्शपूर्णमासप्रकृतित्वादेव सिद्ध एवंविहितमिष्टिपशुबन्धानां ब्रह्मत्वमित्यधिकं वचनं त्वाऽऽदेशपरसूत्रव्यावृत्त्याऽधिकोक्तसमुच्चयार्थमिति ब्रह्मत्वं प्रकरण इत्युपदेश इति ब्रह्मिष्ठो ब्रह्मेत्येतावति वक्तव्ये ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोरिति वचनाद्दर्शपूर्णमासप्रकरणे ब्रह्मपटलस्याऽऽम्नानं हौत्रप्रवरादिवत्परिभाषायामतः सर्वसाधारण्यप्राप्ताविष्टिपशुबन्धानां विहितमित्युच्यत इत्युपदेशः ॥ ११ ॥

इति विंशी कण्डिका ॥

इति षः पटलः।

---

इति तृतीयः प्रश्नः।

---

सू०दी०—यदेवं विहितं दर्शपूर्णमासयोर्ब्रह्मत्वमिदमेव सर्वेष्टीनां पशुबन्धानां च ब्रह्मत्वमित्यर्थः ॥ ११ ॥

इति विंशी कण्डिका ॥

---

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः।

---

इति तृतीयः प्रश्नः।

---

## याजमानं व्याख्यास्यामः ॥ १ ॥

भा०वृ०—यजमानस्य कर्म याजमानं व्याख्यास्यामः प्रतिपादयिष्यामः ॥ १ ॥

सू०दी०-दर्शपूर्णमासयोरिदानीं यजमानकर्म व्याख्यायते। तत्प्रसङ्गात्कचित्पत्नीकर्मापि यथा जायापती अश्नीत इत्यादि। यजमानयोर्वा कर्म याजमानमुपहूतोऽयं यजमान इत्यादौ पत्न्यामपि यजमानव्यपदेशोपलम्भात् ॥ १ ॥

## यजमानस्य ब्रह्मचर्यं दक्षिणादानं द्रव्यप्रकल्पनं कामानां कामनम् ॥ २ ॥

भा०वृ०—पुनर्यजमानग्रहणादयजतो मा भूवन्निमे धर्मा इति यजमानस्य ब्रह्मचर्यमिति पुनर्यजमानग्रहणात्प्रक्रान्तयामस्यैते ब्रह्मचर्यादयो धर्मा इति। यजमानाया वाऽवचनादथ पत्न्या यावदुक्तधर्मत्वाद्ब्रह्मचर्यादीनामविधानात्तन्निवृत्तत्वात्पुरुषस्यैव नियमा इत्येवमर्थं पुनर्वचनम्। ननु यजमानस्य ब्रह्मचर्ये कथं पत्न्यास्तदभावो व्रत्येऽहनि स्त्रीगमननिमित्ता व्रातपती यजमानस्यैव यथा स्यादिति चेन्न तस्या अपि सहाधिकारादविशेष उच्यते यदा त्वनपत्या, ऋतुस्नाता पत्नी तदा देवरेण तन्निमित्ता व्रातपतीति। मा भूवन्नियमा ब्रह्मचर्यादय इत्येतस्मिन्प्रकरण उच्यन्ते ते यजमानस्यैव भवन्ति यद्यप्याध्वर्यवो वेद इति समाख्यानादध्वर्योः प्राप्तास्तथाऽपि यजमानस्यैव भवन्तीति नाध्वर्योरेवमर्थं वा पुनर्वचनम्। लोके फलसंयुक्तस्यैवोपवासादीनीति फलार्थिनः फलसिद्धियोग्यत्वाय ब्रह्मचर्यादयो नियमाः। अन्यस्मिन्नपि वेदे नियमा यजमानस्यैव ऋक्सामवेदयोरप्युक्ताः। फलार्थित्वादेतावुपेयादेव यस्य व्रत्येऽहन्निति प्रकृत्य यदा त्रिरात्रीणा स्यादथैनामुपह्वयेतेति तस्मिन्नेव काले विधानात्। वचनादृत्विजामपि योऽस्याग्निमाधास्यन्स्यादित्यादिनियमाः। तथा दक्षिणादानादीनि फलसंयुक्तानि। सुवर्गाय वा एतानि लोकाय हूयन्त इत्यादिना दक्षिणादानस्य फलसंयोगश्रवणात्तथा च यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोती-

त्यादिना फलसंयोगश्रवणाच्च । किंच स्वस्यागरूपत्वाच्च यज-मानस्यैव वचनादृत्विजामपि भवन्ति यथाऽनड्वान्होत्रा देय इति । द्रव्यप्रकल्पनम् । यज्ञसाधनद्रव्याणीध्माबर्हिरादीनि: तेषा-मुपकल्पनं विहारदेशे स्थापनम् । कामानां कामनं यजमानस्य वचनादृत्विजां यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेय-मिति च ॥ २ ॥

सू०दी०—ब्रह्मचर्यं ब्रह्मचर्या मैथुनवर्जनादि । दक्षिणादानमृत्विक्प-रिक्रयः । द्रव्यप्रकल्पनं यज्ञसाधनद्रव्याणामुपस्थापनम् । काम्यन्त इति कामाः क्रतुफलान्यङ्गफलानि च । याजमानाधिकारे पुन-र्यजमानग्रहणं सार्वत्रिकत्वार्थम् । तदयमर्थः । ब्रह्मचर्यादिचतु-ष्टयमविशेषेण चोदितमपि सर्वत्र यजमानस्यैव भवति नर्त्वि-जाम् । कुतः । कर्मणस्तदर्थत्वात् । वचनादृत्विजामपि भवति यथा योऽस्याग्निमाधास्यन्स्यात्स एतां रात्रिं व्रतं चरति अनड्वा-न्होत्रा देयो यदि कामयेताध्वर्युरात्मानमित्यादि । तथा च याव-दुक्तमेव कर्म पत्न्याः सर्वत्रेति न्यायविदः । सत्याषाढश्चाऽऽह—याव-दुक्तं पत्न्याः कर्माणि ब्रह्मचर्यं जपाश्चेति । भारद्वाजेन तूक्तमा-त्मसंस्कारा वापनवर्जं पत्न्या इति ॥ २ ॥

प्रत्यगाशिषो मन्त्राञ्जपत्यकरणानु-
पतिष्ठतेऽनुमन्त्रयते ॥ ३ ॥

भा०वृ०—प्रत्यगाशिष आत्मगामिनोऽस्मदर्थवाचिन उत्तमपुरुषवा-चिनश्च तेषामाशीर्वतामन्तरेणापि वचनं याजमानत्वं फलाशा-सनस्य यजमानार्थत्वाद्यथा धृष्ट्यादीनामभिमन्त्रणम् । गर्ग-त्रिरात्रे त्वमग्ने सहस्रमानय इत्यादिना जपोपस्थानानुमन्त्रणानुवी-क्षणादयो ये दूरस्थाः क्रियायास्तेऽकरणा इति प्रत्यगाशिषो मन्त्राञ्जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयत इति सूत्रस्यायमर्थः । प्रत्यगाशिषो मन्त्राञ्जपतीत्यकरणान्प्रत्यगाशिषो जपति अना-देशे उपतिष्ठतेऽनुमन्त्रयते वा दूरस्थाः क्रियाया इति क्रियानभिधा-यिनः, अकारकाभिधायिनश्च तेषां मन्त्राणां याजमानत्वं प्रत्य-गाशिषां ये संनिपत्योपकुर्वन्ति ते प्रत्यगाशिषोऽप्याध्वर्यवा एव

करणमन्त्राणां क्रियाकत्रैव प्रयोज्यत्वाद्यथा ह्युपसमिन्धनमन्वाधाने ममाग्ने वर्च इत्येवमादीनां। यत्र सप्तम्या निर्देशस्तत्र जपो यथा होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाण इति । यत्र तु द्वितीयया तत्रोपस्थानमनुमन्त्रणं वा पुनर्वचनं नियमार्थं यथाऽग्निपावमानीभ्यां गार्हपत्यमुपातिष्ठत इति तत्रोपस्थानमेव नानुमन्त्रणमिति नियमार्थः पुनरुपदेशः ॥ ३ ॥

सू०दी०—वेदस्याऽऽध्वर्यवसमाख्यया सर्वेषां मन्त्राणामाध्वर्यवत्वे प्राप्त उच्यते । य आत्माशीरभिवादिन आध्वर्यवे कर्माणि करणतया चाविनियुक्ता मन्त्रास्तान्जपति तैरुपतिष्ठते तैरनुमन्त्रयते वा यजमानो न त्वध्वर्युः । कुतः । आशासितृगामिफलत्वादात्माशिषां स्वाम्यर्थत्वाच्च सर्वकर्मफलानाम् । अतः सामर्थ्येन समाख्या बाध्यत इति भावः । तदुक्तं जैमिनिनाऽपि—मन्त्राश्चाकर्मकरणास्तद्वदिति । ये तु करणमन्त्रास्ते प्रत्यगाशिषोऽपि विनियोगबलादाध्वर्यवा एव यथा ममाग्ने वर्च इत्यादयः । तेष्वप्याशिषो यजमानार्था एवेष्यन्ते भाक्तस्त्वस्मच्छब्दो भविष्यति । जपादीनां तु विषयविभागं स्वयमेव तत्र तत्र दर्शयिष्यति यथाऽन्वाधीयमाने जपति अथाऽऽदित्यमुपतिष्ठते प्रणीताः प्रणीयमाना अनुमन्त्रयत इत्यादि । यत्र तु न दर्शयिष्याति योग्यतयैव तत्र व्यवस्थाऽनुसंधेया यथा प्रवरे प्रव्रियमाण इत्यादौ जपः स्व आयतने मनीषयेति गार्हपत्यमित्यादावुपस्थानमनुमन्त्रणं वा वेदिं संमृज्यमानामित्यादावनुमन्त्रणमिति । प्रायिकं चैतज्जपादि द्रष्टव्यं क्रियान्तराणामपि क्वचित्प्रदर्शनात् । यथा पुरोडाशमभिमृशतीत्यादि ॥ ३ ॥

## पर्वणि च केशश्मश्रु वापयते ॥ ४ ॥

भा०वृ०—अर्थप्राप्तत्वाद्वपनस्य यदि विद्यते ततोऽस्मिन्काले नियम्यते पर्वणि च केशश्मश्रु वापयत इत्यर्थतः प्रवृत्तस्य वपनस्य कालविधिपरत्वाद्वचनस्यार्थान्तराभावादिच्छाप्राप्तस्य वपनस्य कालमात्रनियमविधिः । उत्तरत्राप्यल्पशः इति वचनाद्यदि वर्धिष्णवः केशा विद्यन्त इच्छा च विद्यते ततोऽस्मिन्काले नियमः । नैमित्तिकभेदेन च्छेदनभेदनादिना प्रयुक्तानां सोमयागादीनां तत्तन्निमित्त-

प्रयुक्तकर्माङ्गत्ववदिच्छायां केशभूयस्त्वे च क्रियमाणस्य कादाचित्काङ्गतेच्छायां सत्यां नैमित्तिकत्वादवश्यं कर्तव्यमेवानिच्छायां च केशभूयस्त्वे नियतम् । मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति पुरुषसंस्कारद्वारेणाङ्गत्वात् । मृता वा एषा त्वगिति लिङ्गान्नखवत्त्वग्भागोद्गमरोम्णां भूयस्त्वम् । अत इष्टिबहुत्वे पुनः पुनर्न क्रियते चशब्देनान्यत्राप्यप्रतिषेधोऽनुमीयते । अपर्वकाले च कर्मण्यप्रवृत्तेऽपीच्छायां सत्यां कुर्यादिति केचित्प्रकरणादेव कर्माङ्गत्वे पर्वग्रहणात्कर्मणोऽनङ्गमिति । अन्ये त्वपर्वकालेऽपि दर्शपूर्णमासप्रवृत्तौ कर्तव्यमित्याहुर्यज्ञियो भूत्वा मेधमुपैतीति लिङ्गात् । केशवस्वामिमते तु लोमनखवापनप्राप्त्यर्थश्चकार इति स्वमते केशश्मश्रुग्रहणं समानदेशस्य नखस्यापि प्रदर्शनम् ॥ ४ ॥

सू०दी०—ऐच्छिकत्वाद्वापनस्य पर्वणि पाक्षिकं सन्नियम्यते वापयत एव पर्वणीति । तेनापर्वण्यनियमः । तच्च पितृयज्ञवदनङ्गं स्वकालविधानात् । तेनाकरणेऽपि दर्शपूर्णमासयोः कार्यं यथा संवत्सरमग्निहोत्रं हुत्वाऽथ दर्शपूर्णमासावारभते त्रिंशतं वा वर्षाणि जीर्णो वा विरमेदित्यादिकल्पेषु । कर्माङ्गं वा वपनं प्रकरणात्, मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति लिङ्गाच्च तदाऽपि पर्वग्रहणात् । पथिकृन्मुखायां प्रकृतौ विकृतिषु चापर्वकालासु नेष्यते यथा नैमित्तिकेष्टिषु केशश्मश्रुग्रहणाल्लोमवपनमैच्छिकं वेदितव्यम् । वाजसनेयिमतात्तु तदेवाऽऽहृतमित्याह ॥ ४ ॥

अप्यल्पशो लोमानि वापयत इति वाजसनेयकम् ॥ ५ ॥

भा०वृ०—अप्यल्पशोऽल्पान्यपि लोमानि असमर्थान्यपि श्मश्रूणि लोमग्रहणं प्रदर्शनार्थमल्पशः केशान्वापयतेऽल्पशो लोमानि वापयेत् । अपिशब्दः श्मश्रुग्रहणार्थ इति सूत्रयोजनेति । अस्मिन्नपि पक्षे प्रतिपौर्णमासमेव वपनं न दर्शे, अधिकारिसंस्कारत्वादेकत्वाच्चाधिकारस्य ॥ ५ ॥

सू०दी०--लोमानि तनूरुहाणि तान्यल्पान्यपि वापयितव्यानि । केशश्मश्रु त्वल्पं सदुपक्षतामिति भावः । प्रकृतमेव वा श्मश्रुलोमशब्देन विवक्षितं लोमविशेषत्वाच्छ्मश्रुणः, यथाऽऽहुर्नैघण्टुकाः- तनूरुहं रोमलोम तद्वृद्धौ श्मश्रु पुंमुख इति । तदयमर्थः । केशश्मश्रु च मध्ये श्मश्रु त्वल्पमपि वापयत एव केशास्त्वल्पाः सन्तो नोप्येरन्निति बौधायनस्त्वाह यदि केवलं श्मश्रु वापयिष्यमाणः स्यादिति ॥ ५ ॥

विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति यक्ष्यमाणोऽप उपस्पृशति ॥ ६ ॥

भा०वृ०---यक्ष्य इत्युक्त्वा कामो वपनं काम इत्यधिकारः संकल्पप्रदर्शनार्थः स्नात्वाऽपामुपस्पर्शनं वपनोत्तरकालमुपस्पर्शनविधानाद्यदा संकल्पात्प्रागेवापामुपस्पर्शनं ततः पूर्वमेव वपनं यक्ष्यमाण इति वचनाद्यक्ष्य इति संकल्पाव्यवधाननियमावगतेरतोऽमावास्यायामपि पुनः कालभेदात्प्रयोगभेदात्प्रयोगार्थमपामुपस्पर्शनमावर्तते ॥ ६ ॥

सू०दी०---यक्ष्यमाणो यष्टुं कृतसंकल्पः । संकल्पश्च मनसोऽसाधारणव्यापारत्वान्मानसः । यथाऽऽहुः सांख्याः-मनःसंकल्पमिति । वाचिकोऽपीत्यपरम् । यो यक्ष्य इत्युक्त्वा न यजत इति लिङ्गात् । मनसा त्रिः संकल्पयति वाचा त्रिरुच्चैरिति बौधायनवचनाच्च । तत्र क्रतुकामोऽपि कामयितव्यो यथा वक्ष्यति क्रत्वादौ क्रतुकामं कामयते यज्ञाङ्गादौ यज्ञकाममिति । तत्प्रकारश्चोक्तो बौधायनेन यथा सर्वकामोऽग्नीनाधास्य इत्यग्न्याधेये स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे स्वर्गकामः सोमेन यक्ष्य इति सोमे सर्वकामोऽग्निं चेष्य इत्यग्निचयन इति । तत्र त्वेवं कामशब्दोऽसति कामे लुप्यते सत्यपि वा वर्जनम् । श्रेयस्तद्धि परमं परदेवताप्रीणनं परमनिःश्रेयसायेति सर्वशास्त्राणां मर्यादा । यथोक्तं भगवद्गीतासु---

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ इति ।

सूत्रकारश्चाऽऽह—नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेदिति तथा धर्मं चर्यमाणमर्था अनूत्पद्यन्त इति च । श्रुतिश्च कामानुपहतस्याऽऽनन्दानुपदिशति—श्रोत्रियस्य चाकामहतस्येति । तस्मादग्नीनाधास्ये दर्शेन यक्ष्य इत्येतावानेव युक्तः संकल्पः ॥ ६ ॥

तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ॥ ७ ॥

भा० वृ०—एवमिष्टिविकारेष्वपि भवति पश्वादिषु यदा संकल्पादूर्ध्वमुपस्पर्शनं तदा यक्ष्यमाणशब्दस्य प्रथमपदार्थारिप्सुपरत्वात्प्रणयनस्य प्रथमपदार्थत्वात्पश्चादाहवनीयप्रणयनात्पूर्वमुपस्पर्शनं सर्वयज्ञाद्दर्विहोमैः सह यक्ष्यमाणोऽप उपस्पृशतीति विधाय तदिदं सर्वयज्ञेष्विति पुनर्वचनादुपदेशो यज्ञक्रतुष्वेव प्रयोगेषु ब्राह्मणे तथा वचनात् । अथो आहुः—सर्वेषु यज्ञक्रतुष्विति न त्वेवाग्निहोत्र आरम्भे दर्विहोमेषु प्राप्तिपक्षेऽपि तत्र होमे पुनर्विधानाद्धोष्यन्नप उपस्पृश्य पालाशीं समिधं हुत्वाऽप उपस्पृश्यान्तर्वेद्युत्कर्षापकर्षविधानाच्चोपक्रमोपसंहारयोः । अत एवाग्निहोत्रेऽपि तयोर्याजमानत्वं यज्ञक्रतुषु यक्ष्यमाणो वेष्ट्वा वेति पुरस्तात्प्रणयनस्येष्टिविकारेष्वपामुपस्पर्शनमस्यार्थः संकल्पोत्तरकालमपामुपस्पर्शनपक्षे साङ्गं प्रधानं प्रति यक्ष्यमाणत्वापाये केवलं प्रधानं प्रति यक्ष्यमाणत्वस्याऽऽश्रयितव्यत्वादवदानात्प्रागुपस्पर्शने प्राप्ते प्रणयनात्पूर्वं कर्तव्यमित्युपस्पर्शनोत्तरकालमग्न्याधानजपविधानात्स्पर्शनोत्तरकालमेव प्रणयनं सोमेष्टिषु सोमार्थस्य प्रसङ्गः ॥ ७ ॥

सू० दी०—तदिदमपामुपस्पर्शनं न केवलं दर्शपूर्णमासयोः किं तु सर्वेष्वेव यजतिचोदितेष्विष्टिपशुसोमेषु भवति यक्ष्यमाणो वेष्ट्वा वेति श्रुतेः । अतश्च दर्विहोमेषु न भवति ॥ ७ ॥

अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमꣳ श्वो यज्ञाय रमतां देवताभ्यः । वसून्रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने

मनीषया। इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः। अग्निर्हव्यवाडिह तानावहतु पौर्णमासꣳ हविरिदमेषां मय्यामावास्यꣳ हविरिदमेषां मयीति यथालिङ्गमाहवनीयेऽन्वाधीयमाने जपति॥८॥
अन्तराग्नी पशवो देवसꣳसदमागमन्। तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराग्नी तिष्ठञ्जपति॥९॥

इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया। इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेति गार्हपत्यम्॥१०॥

इति प्रथमा कण्डिका।

---

भा०वृ०—सद्यस्कालायां पौर्णमास्यामग्निं गृह्णामीत्यृचो लोपः। श्वो यज्ञाय रमतामिति यज्ञस्य स्वकालसंबन्धस्य सद्यस्कालायामभावात्प्रकृतौ चोहानुपपत्तेर्लोप एव प्रधानशब्दस्य लोपसंबन्धाच्च। न पत्नीं संनह्येतिवत्प्रकृतिप्रयोगद्वयसाधारणत्वाद्विवक्षा तत्र प्रातिपदिकार्थसंभवाद्वचनाविवक्षा, इह तु व्रीहीणां मेध सुमनस्यमान इतिवद्द्व्यहकालप्रयोगे प्रकृत्यन्वयसंभवात्समवेतार्थाभिधायित्वात्सद्यस्कालायां लोप एव। यवप्रयोगे व्रीहिमन्त्रवत्। यदि तु परिपाठः कर्तव्यः स्यादद्य यज्ञायेत्युच्येत। ऊहेनाद्य सुत्यामितिवद्विकृतौ सद्यस्कालायामूह एवास्मिन्नाहानि प्रयुज्यते तस्योपलक्षणमन्वाधानकालतिथेः। इमामूर्जं पञ्चदशीमिति वक्ष्यमाणदेवतापरिग्रहार्थत्वात्कालपरत्वाभावान्न पञ्चदशीविवक्षा। अतोऽप्यन्वाधानतिथ्युपलक्षणं यथेमामूर्जमेकादशीमिति पर्वणि सुत्यायामेकादी-

क्षापक्षे दीक्षणीयायाम् । गुणविकृतीनां प्रकृतीनां पूर्वस्यां पौर्णमास्यां पूर्वस्याममावास्यायामिति चतुर्दश्यां प्रवृत्तौ पञ्चदशीशब्दस्य लोपः पथिकृन्मुखे च । नामधेयविकारश्च यासामस्ति तासां तेनैवोपलक्षणं यथा चैत्रं हविरिति चित्रायामिष्टौ गुणमात्रविकृतासु प्रकृतिष्वप्यूहो दाक्षायणयज्ञादौ । नामधेयोपदेशस्य प्रयोजनाभावादनामधेयासु सामान्यनामधेयेनैष्टं हविरिति समुदायनाम्ना समुदायेन ता इष्ट्य इत्याचक्षते परोक्षेणेति लिङ्गात्पञ्चदश्याः परतः प्रथमां द्वितीयामिति न षोडशीं न सप्तदशीमिति त्रिंशिनो मासाः पञ्चदशिनोऽर्धमासा इति दर्शनात् त्रिंशद्गणनायां षोडश्याद्युपलक्षणमपि प्राप्तमिति प्रतिषिध्यतेऽमावास्यायां च पञ्चदशीमित्येत्र प्रकृतौ निवेशादर्धमासे देवा इज्यन्ते त्वया होता संतनोत्यर्धमासानिति दर्शनाच्चार्धमासावयवमात्रोपलक्षणस्य कर्तव्यता । अन्तराऽग्नी गार्हपत्याहवनीययोर्नान्तराऽग्नी संचरति यदि पूर्वोऽनुमतः संचर्यमिति सूत्रकारेण निर्देशात्तयोः प्राधान्याच्च । अन्वाधानाङ्गमन्वाहितजपोऽन्वाधानानन्तरोपदेशादेव प्राप्तोऽन्वाहितेषु जपतीति पुनरुपदेशादतः सोमेष्टिषु न भवति प्रायणीयादिष्वन्वाधानाभावादुत्तरेण विहारमुपविश्य चातुःस्वर्ग्येण मामूर्जमिति विकृतिषु लोपमेक इति पौर्णमासं हविरामावास्यं हविरिति पर्वद्वयसंबन्धिकर्मनिर्देशात्पार्वणहोमवत्समुदायविवक्षया विकृतिषु लोपो यासां समुदायनाम तासां समुदायेनैवोपलक्षणं दिवःश्येन्यपाद्यादीनां यथा दैवश्येनिकं हविः, आपाद्यं हविरिति उपदेशस्त्विदमहमित्येवमन्तमन्वाधानयाजमानं न विकृतौ तस्य समुदायस्याभावादन्वाधानमन्त्रगण एकस्य समुदायद्वयाभिधायिनो मन्त्रस्य विकृतिष्वसंभवादन्यस्य श्वःकालसंबन्धनियमाद्यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वोभूते यजत इति दर्शनाद्वसून्रुद्रानित्यस्यापि श्वोयक्ष्यमाणदेवतापरिग्रहार्थत्वादन्तराऽग्नी इत्यादीनामप्यनेन समानार्थत्वात्सर्वेषां लोपः ॥ ८ । ९ । १० ॥

इति प्रथमा कण्डिका ।

---

सू०दी०—सद्यस्कालायां पौर्णमास्यमाद्या लुप्यते श्वो यज्ञायेति लिङ्गविरोधात् । तथा तृतीया पञ्चदशीमिति लिङ्गविरोधात् । यदा त्वल्पाऽपि पञ्चदशी स्यात्तदा न लोपः । तृतीयस्या विकृतिषु तु यथार्थमूहः सर्वत्र यथा—अद्य यज्ञाय—इमामूर्जं प्रथमामित्यादि । तथा नामवतीष्विष्टिषु तेन तेन नाम्नोपलक्षणं कर्मणो यथा चैत्रं हविः—आग्रयणीयं हविरित्यादि । अनामिकास्तु सामान्यनाम्नोपलक्षणीया यथेष्टं हविरिति ॥ ८ ॥

अग्नी गार्हपत्याहवनीयौ ॥ ९ ॥

रूपष्टम् ॥ १० ॥

इति प्रथमा कण्डिका ।

---

अयं पितृणामग्निरवाड्ढव्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदिति दक्षिणाग्निम् । अजस्रं त्वा सभापाला विजयभागꣳ समिन्धताम् । अग्ने दीदाय मे सभ्य विजित्यै शरदः शतमिति सभ्यम् । अन्नमावसथीयमभिहराणि शरदः शतम् । आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छात्वित्यावसथ्यम् ॥ १ ॥

इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्यन्वाहितेषु जपति ॥ २ ॥

भा०वृ०—॥ १ ॥ २ ॥ *

सू०दी०—सर्वत्रान्वाधीयमानमुपतिष्ठत इति शेषोऽनुमन्त्रयत इति वा ॥ १ ॥

---

* भाष्यवृत्तिकारेण तन्सूत्रव्याख्यया पूर्वसूत्रव्याख्यया गतार्थता ।

अत्रान्वाधीयमान इति प्रक्रम्य पश्चानामग्नीनां याजमानान्युक्त्वा तेष्वन्वाहितेष्वित्युपसंहारात् । सभ्यावसथ्ययोराध्वर्यवेऽनुक्तमप्यस्ति तूष्णीकमन्वाधानमित्यवगन्तव्यम् । मन्त्रवर्णश्च भवति विजयभागः समिन्धतामिति ॥ २ ॥

पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः । पुरा वत्सानामपाकर्तोरमावास्यायाम् ॥ ३ ॥

भा० वृ०—पुरा पूर्वं परिस्तरणानामाहरणादशनं पौर्णमास्यामपीति पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासा इति नियमात्पूर्वेद्युर्बर्हिषामभावात्पुरा बर्हिष आहर्तोरिति बर्हिःशब्दः कालोपलक्षणत्वात्परिस्तरणात्पुरोऽशनस्य नित्यकर्तव्यत्वान्नास्मिन्पक्षे निषेधोऽपि वा पूर्वेद्युरिध्माबर्हिः करोतीत्यनेन विधानेन सह पुरा बर्हिष आहर्तोरितिनिर्देश उपपद्यते पक्षान्तरेऽशनमग्न्यन्वाधानमित्यादयः कल्पाः । कृत्वा शाखाछेदनमशनं ततो वत्सापाकरणं बह्वर्थत्वाच्छाखायाः केवलवत्सापाकरणाङ्गत्वाभावाच्च प्राक् छेदनादशनं पौर्णमास्यां तु, उत्तरेण गार्हपत्यमित्यस्मात्पूर्वमेव पुरा बर्हिराहरणस्यैवाङ्गत्वादुपदेशोऽशनं ततः शाखाछेदनं वत्सापाकरणमिति च्छेदनस्यापृथग्ग्रहणादित्यग्न्यन्वाधानं वत्सापाकरणमिति पदार्थगणनायां छेदनस्य पृथग्ग्रहणाभावाद्वत्सापाकरणाङ्गच्छेदनमुत्तरकार्याणां तदर्थं छिन्नशाखोपजीवित्वा दर्भादिभिरपाकरणेऽप्यपाकरणात्प्रागेव शाखाछेदनं शाखयैव गोप्रस्थापनं न दर्भैरित्यतश्छेदनात्पुरस्तादशनम् । प्रथमग्रासे मन्त्र इत्यस्यार्थः—पयस्वतीरोषधय इत्यश्नीत इतिवचनात्करणमन्त्रत्वात्तस्यान्तेन कर्मादेः संनिपत्यत्वात्प्रथमग्रासस्याऽऽदिरिति तत्र मन्त्रः । ननु परिभाषयैव सिद्धत्वान्न वक्तव्यम्, सत्यं द्वात्रिंशतं गृहस्थस्येति ग्रासबहुत्वे सत्यागन्तूनामन्ते निवेश इति न्यायेन मन्त्रवतां च ग्रासानामन्ते षष्ठग्रासेऽस्य मन्त्रस्य निवेशप्राप्तौ तन्निवृत्त्यर्थमिदं भाष्यम् । तर्हि तन्निवृत्तौ को हेतुरुच्यते । एष भोजनस्य ग्राससमुदायनिर्वर्ति-

तस्य मन्त्रो भोजनावयवस्य करणमन्त्राः प्राणादय इत्यसमानविष-यत्वादत एव प्रथममन्त्रेण समुच्चयः । अथवा प्रथममन्त्रस्य निवृत्तिस्थानापन्न-वादस्योभयोरन्तेन संनिपाताद्योगेनान्यतरस्य कर्मणा संबन्धाच्चाथवा द्वितीयादिषु प्राकृता मन्त्रा यथा प्रकृता-वाग्नेयधर्माः प्रथमप्रयुक्ता अपि हविरन्तरेण तत्स्थानेऽपहृते द्विती-यादिस्थानापन्नेष्वाग्नेयादिषु क्रियन्ते स्थानमन्त्रापायेऽप्यङ्गालो-पायाथवा सर्वेषां प्रत्याम्नायोऽयं मन्त्रो मन्त्रकार्ये विधानाद-मावास्यायामसंनयतः पुरा बर्हिराहरणादशनं पुरा बर्हिष इत्यवि-शेषवचनात् ॥ ३ ॥

सू०दी०—आहर्तोराहरणात्तथाऽपाकर्तोरिति । काललक्षणा चेयम् । तेन यदा पौर्णमास्यामन्वाधानपरिस्तरणोपवासा एव क्रियन्ते यदा चामावास्यायां न संनयते तयोः कालयोरश्नीतः प्राक् परिस्तरणानां बर्हिषो वाऽऽहरणात् । प्रथमग्रासे चोभयोर्मन्त्रः । अयं चास्मिन्नहन्यर्थप्राप्तस्याशनस्य कालनियमस्तेन सद्यस्का-लास्वसत्यां क्षुधि नेष्यते ॥ ३ ॥

पौर्णमासायोपवत्स्यन्तौ नातिसुहितौ भवतः ॥ ४ ॥

भा०वृ०—अतिसौहित्यमतितृप्तिरशनं क्षुत्प्रतिघातार्थं तस्यास्मि-न्काले नियमः सत्यामिच्छायां क्षुधि च न सौम्यिकव्रतवन्नित्यता तस्याग्निहोत्राविच्छेदायेति नित्यत्वादतोऽशनस्य रागप्राप्तत्वा-न्नाऽऽवर्तेत इष्टिबहुत्वे, एतत्कालोत्तरं क्षुधि, इच्छायां च नाश-नम् ॥ ४ ॥

सू०दी०—उपवासः प्रागेव व्याख्यातः । तं रात्रौ करिष्यन्तावहरपि नातिसुहितौ नातितृप्तौ भवतः । तृप्तिश्चान्नस्येत्यस्यापवादः ॥४॥

अमाषममांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा ॥ ५ ॥

भा०वृ०—आज्येन व्यञ्जननिवृत्तिर्मधुवन्मध्वश्नाति मध्वशनः स्यादि-त्येकम् । व्यञ्जनार्थमित्यपरमिति दर्शनादाज्यमश्नातीत्यवचनान्ना-ऽऽज्यमात्रस्याशनं किंत्वितिकर्तव्यताभूतत्वेन निर्देशात्तुल्यकार्य-व्यञ्जननिवृत्तिर्माषमांसप्रतिषेधोऽभ्यवहार्यस्य व्यञ्जनार्थस्य प्रति-

षिद्धत्वादित्याज्येन व्यञ्जननिवृत्तिरुक्तेति । केचित्स्नेहानां तैलादीनां निवृत्तिस्तुल्यत्वादिति तुल्यकार्यत्वादाज्येनास्मिन्पक्षेऽन्येषां व्यञ्जनानां निवृत्तिर्माषमांसप्रतिषेधो व्यञ्जनार्थस्याशनार्थस्य च, " अमेध्या वै माषा " इति दर्शनादमेध्यस्य च व्यञ्जनार्थेऽप्यभोज्यत्वाद्व्रत्येऽहनि मांसं नाश्नातीति मांसस्य च यथाकथंचित्प्राशनमात्रे प्रायश्चित्तविधानात् ॥ ५ ॥

सू०दी०—माषमांसयोः व्यञ्जनार्थयोः प्रतिषेधः । आज्यादीनि तूपसेके नियम्यन्ते । माषशब्दो मुद्गादेरपि कोशीधान्यस्य प्रदर्शनार्थे आ प्राशातिकादिति लिङ्गात् । बौधायनश्चाऽऽह—सर्वमेतदहः कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यस्तस्य ब्राह्मणं प्रतिपाद्याश्नीयादिति तथा पत्न्या एवैतदहरुच्छिष्टं दद्यादिति च ॥ ५ ॥

बर्हिषा पूर्णमासे व्रतमुपैति । वत्सेष्वपाकृतेष्वमावास्यायाम् ॥ ६ ॥

भा०वृ०—बर्हिषा बर्हिष्याह्रियमाणे ॥ ६ ॥

सू०दी०—अत्रापि बर्हिर्वत्सशब्दाभ्यां पूर्ववत्काललक्षणा । बर्हिषाऽऽह्रियमाणेन सहेति शेषः ॥ ६ ॥

प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविष्षु व्रतमुपैतीत्युभयत्र साधारणम् ॥ ७ ॥

भा०वृ०—व्रतमुपैतीत्युभयत्र साधारणमिति प्रणीताप्रणयनहविरासादनोत्तरकालता पौर्णमास्यामपि नानन्तरोक्तामावास्यायामेव ॥ ७ ॥

सू०दी०—उभयत्रोभयोः पौर्णमास्यमावास्ययोः साधारणमिदं कालद्वयमित्यर्थः ॥ ७ ॥

अशनमग्न्यन्वाधानं व्रतोपायनमित्येके । व्रतोपायनमशनमग्न्यन्वाधानमित्येके । अग्न्यन्वाधानं व्रतोपायनमशनमित्येके ॥ ८ ॥

भा०वृ०—यदाऽपि पूर्वमशनव्रतोपायने तदाऽप्यग्निं प्रणीयैवाशनमग्न्यन्वाधानं व्रतोपायनं व्रतोपायनमशनमग्न्यन्वाधानमित्यनयोः पक्षयोरग्निं प्रणीयाशनव्रतोपायने ततोऽन्वाधानम् । अन्वाधाने न क्रमनियमात्प्रणयनस्य च तदर्थत्वाभावात्प्रागेव प्रणयनं प्रथमद्वितीययोः पक्षयोर्बर्हिषा पूर्णमास इत्यादिकाले व्रतोपायनं मध्यमे व्रतोपायनमात्रप्रतिकर्षस्तृतीयपक्षे कुम्भ्यालेपनान्तेऽशनं पौर्णमास्यां परिस्तरणाऽऽहरणान्तेऽशनमेवाग्न्यन्वाधानं व्रतोपायनमशनमिति यदा विधिक्रमात्प्राप्तः क्रमोऽशनमग्न्यन्वाधानमित्युत्तरे त्रयः पक्षाः क्रमविधिप्राप्तास्ते पूर्वोक्तक्रमेण विकल्पन्ते न तन्मध्यवर्तिनां तदन्तानामुत्कर्षमपकर्षमेतेषां त्रयाणामेव नैरन्तर्येणानुष्ठानं वा विदधीतेत्युत्तरयोः पक्षयोर्व्रतोपायनस्य प्रणीताप्रणयनादिकालविधिर्न प्राप्नोति कालवचनार्थकालात् ॥ ८ ॥

सू०दी०—त्रय एते क्रमविकल्पास्त्रयाणामेषां कर्मणां यथोक्तेन मुख्येन सह चत्वारस्तत्र यदाऽप्यशनं पूर्वं तदाऽपि प्रणयनात्परमेवेति वेदितव्यम् ॥ ८ ॥

पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा ॥ ९ ॥

भा०वृ०—आचामति भक्षयति पश्चाच्छौचार्थमाचमनम् ॥ ९ ॥

सू०दी०—आचामति भक्षयति ॥ ९ ॥

अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रामति ॥ १० ॥

भा०वृ०—स्पष्टम् ॥ १० ॥

सू०दी०— गतः ॥ १० ॥

एष एवात ऊर्ध्वं यजमानस्य संचरो भवति ॥ ११ ॥

भा०वृ०—स्पष्टम् ॥ ११ ॥

सू०दी०—शास्त्रीययोर्निर्गमनप्रवेशयोरेष एव पन्थाः ॥ ११ ॥

इति द्वितीया कण्डिका ।

---

दक्षिणेनाऽऽहवनीयमवस्थाय व्रतमुपै-
ष्यन्समुद्रं मनसा ध्यायति ॥ १ ॥

भा०वृ०—व्रतं समुद्रस्तदुपैष्यामीति ध्यानं व्रतमुपैष्यन्मनसा ध्यायतीत्यस्य सूत्रस्य समुद्रमेव व्रतमुपैष्यन्मनसा तदेव ध्यायतीत्यर्थ इति । ध्यायतीत्येव सिद्धे मनोग्रहणादुधुत्वा ध्यायेद्यत्कामः स्यादित्येवमादौ साभिलाषोऽत्र तु मनसैव ॥ १ ॥

सू० दी०-व्रतमुपनयामीति कल्पान्तरकारमतनिराकरणार्थमुक्तं व्रतमुपैष्यन्निति ॥ १ ॥

अथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणः ।
वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते
व्रतं चरिष्यामीति राजन्यवैश्यौ ॥ २ ॥

भा०वृ०—अग्न्यादीन्देवानभिसंधायाग्ने व्रतपत इति जपः । प्रथममन्त्र आहवनीयाग्नेर्ध्यानम् । वरुणप्रघासेषु भाष्यकारेणोभावग्नी अभिसंधायेति निर्देशादतोऽन्वाहिताग्न्यनुगमो व्रतोपायने कृते चेत्प्रथममन्त्रस्य जपः । कृते व्रतोपायनेऽन्वाहितेऽनुगते तन्निमित्तकस्यास्य मन्त्रस्य जपः । अकृते न जपः । यस्मिन्यागस्तस्यैवाऽऽहवनीयत्वाद्वायोर्द्वितीयस्तृतीय आदित्यस्य चतुर्थोऽग्नेरेव त्वमग्ने व्रतपा असीति लिङ्गात् । अथशब्दोऽर्थकृत्यप्रतिषेधार्थः । अर्थकृत्यस्य चोदितस्याऽऽचमनादेः समुद्रध्यानानन्तरं प्रतिषेधो वायो व्रतपत इत्यादित्रयं राजन्यवैश्ययोरेकैकस्यासमानसंख्यत्वाल्लिङ्गविशेषाभावाच्च ॥ २ ॥

सू० दी०—राजन्यवैश्ययोरेकैकस्य त्रयोऽपि मन्त्राः ॥ २ ॥

सर्वान्वा ब्राह्मणः ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—गतः ॥ ३ ॥

अथाऽऽदित्यमुपतिष्ठते सम्राडसि व्रतपा असि व्रतप-

तिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्या-
समिति ॥ ४ ॥

भा०वृ०—पयस्वतीरित्याद्यादित्योपस्थानान्तं व्रतोपायनाङ्गं बर्हिषा पूर्णमासे व्रतमुपैतीति प्रकृत्याऽऽम्नानादादित्योपस्थाने व्रतलिङ्गात्तस्य सोमेष्टिषु निवृत्तिः प्रायणीयादिषु। सत्यवाद्यत इति वाजसनेयिनां व्रतस्वरूपनिर्णयोऽत ऊर्ध्वं सत्यवादी भवामीति संकल्पपूर्वकं सत्यवादिता व्रतशब्दार्थः। सा च क्रत्वङ्गत्वेनोपपद्यते। आहिताग्निव्रत एवासत्यवचनप्रतिषेधान्मयि दक्षक्रतू इति वचनं च व्रतोपायनप्रकार इति वाजसनेयिमतम्। प्राणापानावेवाऽऽत्मन्धत्त इत्यात्मनि प्राणापानधारणसंकल्पश्च व्रतम्। स्वपक्षस्तु व्रत्येऽहनि मांसं वाऽश्नाति स्त्रियं वोपैतीति दर्शनात्तयोर्निवृत्तसंकल्पो व्रतमसत्यवदनप्रायश्चित्तं त्विहान्तरेणापि वचनं भवति। असत्यप्रतिषेधे स्मृतिसिद्धेऽपि पुनराहिताग्निप्रकरणे निषेधात्पूर्वमपि मैथुनप्रतिषेधो व्रतचारी त्वेव स्यादित्येवकारकरणादारम्भप्रभृति मैथुनप्रतिषेधः। मयि दक्षक्रतू इति वचनं मैथुननिवृत्तिश्च व्रतप्रकार इत्यपकृष्य व्याख्यानम् ॥ ४ ॥

सू०दी०—अत्राऽऽह बौधायनः—उपनिष्क्रम्याग्न्यागारादादित्यमुपतिष्ठत इति बौधायनोऽत्रैव तिष्ठन्निति शालीकिरिति ॥ ४ ॥

यद्यस्तमिते व्रतमुपेयादाहवनीयमुपतिष्ठन्नेतद्यजुर्जपेत् ॥५॥

भा०वृ०—यद्याहवनीयमुपतिष्ठन्नादित्यमभिसंधाय जपेत्तद्व्रतोपायनम्। व्रतपा असीति तच्छकेयमिति मन्त्रलिङ्गात्तत्रानुप्रवेशादादित्यस्य। अग्निं वावाऽऽदित्यः सायं प्रविशतीति लिङ्गात् ॥५॥

सू०दी०—गृहमेधीयाद्यर्थं वचनम् ॥ ५ ॥

उभावग्नी उपस्तृणते देवता उपवसन्तु मे। अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनिति सायं परिस्तीर्यमाणेषु जपति ॥ ६ ॥

भा०वृ०—एतत्सर्वेषां गार्हपत्याहवनीययोरेव वा परिस्तरणे। उपस्तीर्यः पूर्वश्चाग्निरपरश्चेति बहुष्वपि परिस्तीर्यमाणेषु याजमाननिवृत्तिरुभावग्नी इति—नत्वपरिस्तरणपक्षे ग्राम्यानुपवसामीति

लिङ्गविरोधात्तयोरेवाऽन्योः संस्कारादिति बहूनां परिस्तरणेऽपि मन्त्रस्योभयप्रकाशकतया तत्संस्कारार्थं प्रयोगसंभवात्। अथवा यस्य चोभावनुगतावित्यादौ द्वयोरेव प्रधानप्रयोजकत्वात्प्रधानत्वम्। सभ्यावसथ्यसंस्कारवद्दक्षिणाग्निसंस्कारस्यापि तयोरुपकारकत्वात्प्रधानप्रकाशनसंभवादनिवृत्तिः। सायं परिस्तीर्यमाणेषु जपतीतिवचनादसायं परिस्तीर्यमाणेषु न भवति जपः ॥६॥

सू०दी०—उभाविति लिङ्गाद्ब्राह्मणोक्ताग्निद्वयपरिस्तरणविषय एवायं मन्त्र इति केचित्। तदयुक्तम्। परिस्तीर्यमाणेष्विति बहुवचनात्प्राधान्यान्वयादुभयाभिधानोपपत्तेश्च। यथा बहुष्वागतेषु वसिष्ठवामदेवावागताविति ॥ ६ ॥

## आरण्यं सायमाशेऽश्नात्यमाषममांसम् ॥ ७ ॥

भा०वृ०—आरण्यस्य माषमांसस्य प्रतिषेधः। आरण्यान्नधान्यविशेषत्वादिह पर्युदासस्य ॥ ७ ॥

सू०दी०—अरण्ये भवमन्नमारण्यं नैवारादि तत्सायमाशस्थानेऽश्नाति। माषमांसयोः पूर्ववद्व्यञ्जनार्थयोः प्रतिषेधः। अन्यथा ग्राम्यत्वादेव माषस्याप्राप्तेर्माषशब्दोऽत्रापि पूर्ववद्व्याख्येयः। अश्नातीत्येकवचनादारण्याशनं पत्न्या नेष्यते। भारद्वाजेन त्विष्ट एवाऽऽत्मसंस्कारास्तस्याः ॥ ७ ॥

## अपि वा काममा मार्गादा मधुन आ प्राशातिकात् ॥ ८ ॥

भा०वृ—काममिच्छात आ मार्गात् परतो मार्गाद्यानि वानप्रस्थानां मांसान्याम्नातान्युपदिष्टानि तानि भक्षयत्या मार्गादित्यभिविधिनिर्देशात्क्रमवतां पठितानामुपादाने वानप्रस्थानां भक्ष्यमांसकाण्डोपदिष्टान्मृगमांसात्परतस्तनानां न भक्षणम्। ये च परतो रसा आ मधुनो यानि चान्नानि आ प्राशातिकादन्यानि पराणि तेषामप्यभक्षणम्। प्राशातिकं प्रशातनलभ्यं फलादि यत्रवचोक्तनं तस्येच्छातः प्राशनम्। अस्यार्थः—आरण्यं सायमाशेऽश्नात्यमाषममांसमिति पर्युदस्तेषु प्रतिप्रसवार्थमपि वा काममा मार्गादित्युपादानं वानप्रस्थानां भक्ष्यकाण्डेषु मृगमांसपर्यन्तानां रसेषु च मधुपर्य-

न्तानां फलेषु प्राशातिकपर्यन्तानां भक्षणे याथाकामित्वमेभ्योऽव-धिभ्यः परेषामभक्षणमेवाऽऽमार्गादित्यादिभाष्यग्रन्थेष्ववधिभ्यः पूर्वेषां कामतो भक्षणविधानादुपरितनानां निवृत्तिमर्थप्राप्तां प्रति-पादयति ॥ ८ ॥

सू०दी०—मार्गं मृगविकारं मांसम्। प्राशातिकं कोशीधान्यं यस्मा-त्प्रशातनेनोद्भ्रियते। तदयमर्थः—यदेव किंचिद्व्यञ्जनमीप्सितं तदेव काममश्नीयान्न मार्गमिष्यमाणं भोक्तव्यमिति। मधुनस्त्व-प्रतिषिद्धस्याप्यव्रत्यसामान्यादेव प्रायो निवृत्तिः स्यादिति प्रति-प्रसवः ॥ ८ ॥

अपो वा न वा किंचित् ॥ ९ ॥

भा०वृ०—अपो वाऽश्नीयान्न वा किंचिदश्नीयाद्यदनाश्वानुपवसति वर्जेणैव साक्षादित्यनुवादस्वरूपविधानात्संसर्गहविष्यपो नाश्नाति। अपोऽश्नाति तन्नेवाशितं नेवानशितं न क्षोधुको भवतीति पाक्षिकम् ॥ ९ ॥

सू०दी०—गतः ॥ ९ ॥

न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यात्॥ १०॥

भा० वृ०—न तस्य सायमश्नीयादिति निषेधाद्दधि मधु घृतमापो धाना भवन्तीति संसर्गहवींषि प्रातर्यक्ष्यमाणद्रव्याशननिषे-धात् ॥ १० ॥

सू०दी०—यज्जातीयेन हविषा श्वो यष्टा तज्जातीयं द्रव्यं नाश्नी-यात्। ततश्चाऽऽज्येनानुपसेच्यः पौर्णमास्यां सायमाशो भवति दधिपयोभ्यां च दर्शे। तथाऽनुपवसथ्येष्वपीष्टिपशुषु श्वोभाविषु तत्साधनद्रव्याशननिवृत्तिः। येन प्रातर्यक्ष्यमाण इति सामान्यतो निर्देशात्पुनः सायंग्रहणाच्च ॥ १० ॥

आरण्यायोपवत्स्यन्नपोऽश्नाति न वा ॥ ११ ॥

भा०वृ०—आरण्येन नीवारादिना यागे ग्राम्याशनप्रवृत्तौ वचनमा-रण्यायोपवत्स्यन्नान्यमारण्यमप्यश्नाति न ग्राम्यं किंत्वप एवा-श्नाति न वेति सूत्रार्थः। अतो ग्राम्येण केनापि यागेऽन्येषामपि

ग्राम्याणामनशनमारण्यायोपवत्स्यन्निति वचनाद्विकृतेरपि द्व्यहकालत्वमस्ति । आरण्यद्रव्यस्य विकृत्यर्थतयोपवासदर्शनादतश्च यदीष्ट्यादिवाक्यविहितसद्यस्कालत्वेन द्व्यहकालत्वं विकल्प्यते । उपदेशस्तु व्रीहियवालाभे सामान्यान्नीवारे प्रतिनिहितस्य मुख्यद्रव्यधर्मत्वेन ग्राम्योपवासस्यैव प्राप्तावुभयार्थत्वमिति न सद्यस्कालायामारण्याशनं सायमाशेऽश्नातीति वचनात् ॥ ११ ॥

सू०दी०—आरण्येनैव हविषा श्वो यष्टा यस्तस्य नास्त्यारण्याशनं तदा त्विमावेव कल्पौ व्यवतिष्ठेते इत्यर्थः । वानप्रस्थार्थमिदं वचनमितरेषां व्रीहियवविधानात्तस्यारण्यनियमाच्च यथा तस्याऽऽरण्येनैवात ऊर्ध्वं होम इति । विकृत्यर्थं वा वचनं यत्राऽऽरण्यं हविर्यथा गार्मुतं चरुं निर्वपेदित्यादौ । तदा त्विदमेव वचनं ज्ञापकं भविष्यति सोपवसथा अपि विकृतयो लभ्यन्त इति । बौधायनश्चाऽऽह—इष्टिपशुबन्धाः सोपवसथाः सद्योयज्ञा वेति ॥ ११ ॥

जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति ॥ १२ ॥

भा०वृ०—जञ्जभ्यमानो जृम्भमाणः ॥ १२ ॥

सू०दी०—कर्ममध्ये यदा जञ्जभ्यते जम्भते तदा प्रायश्चित्तार्थमेतद्यजुर्जपेत् ॥ १२ ॥

अमावास्यां रात्रिं जागर्ति ॥ १३ ॥

भा०वृ०—स्पष्टम् ॥ १३ ॥

सू०दी०—गतः ॥ १३ ॥

अपि वा सुप्यादुपरि त्वेव न शयीत ॥ १४ ॥

भा०वृ०—जागरणाशक्तावुपरिशयनं वर्ज्यम् ॥ १४ ॥

सू०दी०—जागरणाशक्तौ सुप्यादुपरि शयनमेव तु वर्जयेत् ॥ १४ ॥

अपि वोपरि शयीत ब्रह्मचारी[1] त्वेव स्यात् ॥ १५ ॥

भा०वृ०—व्रतोपायनादूर्ध्वं मैथुनप्रतिषेधः । व्रतचारी त्वेव स्यादिति व्रतशब्दो मैथुनप्रतिषेधपर इति । अथवा ब्रह्मचर्यविधानात्संक-

१ "व्रत चारी" इति पाठान्तरम् ।

त्प्रभृतिमैथुनप्रतिषेधे सिद्धे पुनर्वचनं व्रतोपायनादूर्ध्वं प्रायश्चित्तगौरवार्थम् ॥ १५ ॥

सू०दी०--उपरि वा शयीत सर्वथाऽपि तावद्ब्रह्मचर्यं परिपालयेदित्यर्थः ॥ १५ ॥

उभयत्र जागरणमेके समामनन्ति ॥ १६ ॥

भा०वृ०-उभयत्र जागरणमिति पौर्णमास्याममावास्यायां च ॥१६॥

सू०दी०—उभयत्रामावास्यायां पौर्णमास्यां च ॥ १६ ॥

आहवनीयागारे गार्हपत्यागारे वा शेते ॥ १७ ॥

भा०वृ०--स्पष्टम् ॥ १७ ॥

इति तृतीया कण्डिका।

---

सू०दी०--अन्यदाहवनीयागारमन्यद्गार्हपत्यस्येति वक्ष्यति। तयोरन्यतरत्रैव शेते ॥ १७ ॥

इति तृतीया कण्डिका।

---

देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह माऽवत इदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मने। इदं करिष्ये भेषजमिदं मे विश्वभेषजा अश्विना प्रावतं युवमिति जपित्वा श्वोभूते ब्रह्माणं वृणीते ॥ १ ॥

भा०वृ०—देवा देवेष्विति रात्रौ परिस्तरणानन्तरमन्येषामुक्तमिति। अन्येषां शाखिनां परिस्तरणानन्तरमुक्तत्वान्न चास्य सद्यस्कालायां लोपो लिङ्गविरोधात्। आत्मा करोत्वात्मन इति। उभावग्नी इति जपः सायंपरिस्तरणाङ्गं परिस्तरणानन्तरं देवानां यजमानसमीपे वासो दृश्यते। उपास्मिञ्छ्रो यक्ष्यमाणे देवता

वसन्तीति । देवा देवेष्वत्रापि मन्त्रे त्रिरेकादशा इह माऽवतेतीहशब्देन समीपे वसतां देवानां रक्षकत्वेनाऽऽशासनाद्रात्रिपरिस्तरणपक्ष एवास्य मन्त्रस्य जप इति शङ्कायां सद्यस्कालायामपि कर्तव्यत्वे लिङ्गमिदमिदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मन इति चिकीर्षितकर्मशक्त्याशासनात्सद्यस्कालायामपि कर्मणः कर्तव्यत्वादलोप आत्मा करोत्वात्मन इति । विज्ञानमन्त्रलिङ्गेनेत्यात्मने ब्रह्मण आत्मा करोत्विति विज्ञानमपि कर्तव्यम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ इति स्मृतेश्च ॥

कथमात्मने ब्रह्मण इतीत्युच्यते य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति । यस्याऽऽत्मा शरीरं स आत्मेति जीवे शारीरकेऽन्तर्यामिण्यात्मशब्दप्रयोगात्तस्य च परमात्मत्वात्परमात्मनो ब्रह्मत्वेन सर्वशाखाप्रसिद्धत्वात् । नारायणः परं ब्रह्म आत्मा नारायणः पर इति नारायणपरब्रह्मपरमात्मशब्दानां सामानाधिकरण्यान्नारायणं महाज्ञेयामिति सर्वदा ज्ञेयत्वाद्यदेव विद्यया करोति तदेव वीर्यवत्तरमिति श्रुतेश्च । कथमन्याभ्यो देवताभ्यः क्रियमाणं कर्म ब्रह्मेति ध्यायेत् । यो देवानां नामधा एक एव स ब्रह्म स शिवः । चतुर्होतारो यत्र संपदं गच्छन्ति देवैः । सर्वे वेदा यत्रैकं भवन्तीत्यादिश्रुतौ सर्वदेवानां नामधेयैकत्वेन सर्वदेवस्वरूपत्वेन सर्वयज्ञैरिज्यत्वेन सर्वविधिवाक्यैर्विधेयत्वेन चावगमाच्चतुर्होतृशब्देन सर्वयज्ञा उच्यन्ते । स एतांश्चतुर्होतॄनात्मस्मरणानपश्यदिति वेदशब्दो मन्त्रब्राह्मणयोर्मन्त्रब्राह्मणयोर्वेदनामधेयमिति वचनादहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्तीत्यादिस्मृतेश्च ॥ १ ॥

सू०दी०—उक्तं ब्रह्मत्वविधावेव ब्रह्मवरणं तस्यानेन काल उच्यते । श्वोभूते प्रक्रान्ते तन्त्रे क्लृप्ते च ब्रह्मासने देवा देवेष्विति जपित्वा ततो ब्रह्माणं वृणीते । न चायं जपो ब्रह्मवरणशेषः कर्मशक्ति-

प्रार्थनार्थत्वात् । अतः प्रायणीयादावपि परिस्तरणोत्तरकाले भवति । केचित्तु जपित्वेत्यन्तं पूर्वग्रन्थेन योजयन्ति जपित्वा शेत इति ॥ १ ॥

भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इत्युक्त्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योपविशति ॥ २ ॥

पूर्वो ब्रह्माऽपरो यजमानः ॥ ३ ॥

भा०वृ०—यजमानस्यापि ब्रह्मवरणमुभयत्र विधानादपरो यजमान इति पूर्वं प्रविष्टोऽपि पश्चादुपविशत्यासनप्रकल्पने देशानियमात्कालार्थं वचनमिति वृणीमह इत्युक्त्वाऽपरेणाऽऽहवनीयं यजमानस्यापि वरणानन्तरमतिक्रमणविधानाद्ब्रह्मणश्च जपोत्तरकालमतिक्रमणविधानात्पूर्वं स्वस्थानं प्राप्तो यजमानोऽपरो यजमान इति वचनादुपवेशनं पश्चादपरदेशस्य तु पूर्वं ब्रह्मणोऽपरं यजमानस्येति सिद्धत्वात् ॥ २ ॥ ३ ॥

सू०दी०—योऽयं ब्रह्मवरणार्थो मन्त्रस्तमुक्त्वाऽनन्तरमेव तेन सहातिक्रम्य यजमान उपविशति ॥ २ ॥

पूर्वापरत्वं देशतः कालतश्च ॥ ३ ॥

भूश्च कश्च वाक्चक्चर्च गौश्च वट् च खं च धूश्च नूश्च पूश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्मपूताः स्थ । को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै । याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः । ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ इति प्रणीताः प्रणीयमाना अनुमन्त्रयते । यजमान हविर्निर्वप्स्यामीत्युच्यमान ओं निर्वपेत्युच्चैरनुजानाति ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—गतौ ॥ ४ ॥

अग्निꣳ होतारमिह तꣳ हुव इति हविर्निरुप्यमाणमभिमन्त्रयते ॥ ५ ॥

भा०वृ०—अग्निꣳ होतारमिति वर्तमानक्रियाविशेषोऽपि सकृत्क्रियान्तरेणाव्यवायात् । यद्यपि हविषां पृथक् पृथक् निरुप्यमाणत्वमस्तीति निरुप्यमाणावस्थायामभिमन्त्रणं तथाऽपि यावदन्त्यहविरन्वावापनं तावन्निरुप्यमाणत्वात्क्रियान्तराव्यवायात्सकृदेव हविषोऽवदीयमानस्योच्यमाना मनोता यथातन्त्रमव्यवाये पशूनाम् । केचिदावृत्तिरिति प्रतिहविर्निरुप्यमाणकालभेदादभ्यावर्तते मनोतावदेव ॥ ५ ॥

सू०दी०—प्रतिहविरभिमन्त्रणावृत्तिः । हविषो मे अस्येत्येकवचनान्निरुप्यमाणमिति वर्तमाननिर्देशाच्च ॥ ५ ॥

हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते ॥ ६ ॥

भा०वृ०—अभिमर्शनमा निर्वपणाद्यावन्निर्वापं पात्रमभिमृशेदित्यर्थः । केचिद्धविर्निर्वपणस्यैवाभिमन्त्रणं पात्रस्याग्निꣳ होतारमिति मन्त्रेण ॥ ६ ॥

सू०दी०—निरुप्यते यस्मिन्पात्रे तद्धविर्निर्वपणम् । तस्याऽऽदौ सकृदभिमर्शनमाभिमन्त्रणं वा पात्रसंस्कारत्वात् ॥ ६ ॥

तदुदित्वा वाचं यच्छति ॥ ७ ॥

भा०वृ०—यजमान वाचं यच्छेत्युक्तस्तत्रैव वाग्यमनं करोति तस्मिन्नेव काले प्रणीताप्रणयने, अग्निꣳ होतारमिति चोक्त्वा वाग्यमनम् । तदुदित्वा वाचं यच्छतीत्यस्य विवक्षाभेदान्निरुप्यमाणाभिमन्त्रणार्थमेवोक्त्वा वाग्यमनमित्येकोऽर्थः । वाग्यमनार्थमग्निं होतारमिति पुनश्च वक्तव्यमित्येकोऽर्थः । तदुदित्वेति यजुर्वेदपाठादग्निꣳ होतारमित्यृचोऽपि नपुंसकेन निर्देशः ॥ ७ ॥

सू०दी०—पूर्वं ह्यध्वर्युयजमानयोः शाखान्तरीयो वाग्यमनकाल उक्तः प्रणीयमानासु वाच यच्छत इति । तेनेदानीं स्वशाखास्थः कालो

विकल्पते यजमानस्य। तदिति च वाक्यादिसामान्यरूपविवक्षयाऽपि नपुंसके निर्देशः ॥ ७ ॥

**अथ यज्ञं युनक्ति ॥ ८ ॥ कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते ॥ ९ ॥**

भा०वृ०—यज्ञयोगः सर्वप्रधानार्थः पुनरथशब्दप्रयोगात्। औषधार्थत्वपक्षेऽथशब्दोऽनर्थकः। अदृष्टप्रधानोपकारकत्वाच्चेत्यौषधकाण्डोपकारकत्वाभावाददृष्टार्थत्वात्सर्वप्रधानार्थत्वमतः सांनाय्यतन्त्रास्वाज्यतन्त्रास्वपि पशौ च क्रियते पात्राभिमर्शनोत्तरकालम्। न च पुनः पशुपुरोडाश इति पश्वर्थं कृतत्वात्। औषधार्थमित्युपदेशः। औषधकाण्डे पाठान्मन्त्रस्य। अस्मिन्पक्षेऽथशब्दोऽर्थकृत्यप्रतिषेधार्थः। कथं पूर्वत्राथशब्दानर्थक्यपरिहाराय सर्वप्रधानार्थत्वमुक्तमुच्यत आनन्तर्यमेवाथशब्दस्य मुख्योऽर्थो नार्थकृत्यप्रतिषेधार्थः। क्रमोपदेशादेवाऽऽनन्तर्ये सिद्धे मङ्गलार्थान्तरासंभवादानर्थक्ये प्राप्ते तत्परिहारार्थमगत्याऽऽश्रीयते क्रमनियमलक्षितोऽर्थकृत्यप्रतिषेधः। ननु प्राप्तस्य पुनर्वचनं नियमार्थमिति क्रमनियम एवाथशब्दस्य मुख्योऽर्थः संभवति न क्रमनियम एव सूत्रकारेण क्रियतेऽङ्गानां युगपदनुष्ठानासंभवादेवानियतः क्रमप्राप्त एव सूत्रकारानुक्रमणस्य नियमार्थत्वाभावे च त्वं नो अग्न इति क्रमलोपप्रायश्चित्तं न कार्यं स्यादतो मुख्यार्थसंभवे न लक्षणेत्यथशब्दस्याऽऽरम्भार्थत्वेन पूर्वप्रकरणविच्छेदात्सर्वार्थत्वम्। उपदेशपक्षस्तु सूत्रकारशीलानुविधानेन क्वचिदपि प्रकरणभेदार्थं सूत्रकारो न प्रयुक्तवान्पुनः पुनरर्थकृत्यप्रतिषेधे प्रयुक्तवांश्चेत्यौषधकाण्डेऽध्ययनं चानुग्रहीष्यत इति। सपात्रस्य विहारस्यावेक्षणं योग इति विहारमनुवीक्षत इत्येव सिद्धे सर्वशब्दः पात्रप्राप्त्यर्थोऽतः पात्राणामपि योगः ॥ ८ ॥ ९ ॥

सू०दी०—अथशब्दः कर्मान्तरत्वद्योतनार्थः। तेनानौषधतन्त्रास्वप्यु

पसदादिषु यज्ञयोगः कार्यः ॥ ८ ॥

कोऽयं यज्ञयोगो नाम । तं दर्शयति ॥

गतः ॥ ९ ॥

इति चतुर्थी कण्डिका ।

---

इति प्रथमः पटलः ।

---

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामानिति वेदिꣳ संमृज्यमानाम् ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०-अनुमन्त्रयत इति शेषः ॥ १ ॥

यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मीति स्तम्बयजुर्ह्रियमाणम् ॥ २ ॥

भा०वृ०—स्तम्बयजुषस्तूष्णीं हरणेऽपि याजमानम् । स्तम्बयजुर्हरतीत्युक्त्वा तूष्णीं चतुर्थमिति वचनात्तस्यापि स्तम्बयजुःशब्दवाच्यत्वाच्च स्तम्बयजुर्ह्रियमाणमित्यविशेषवचनाच्छिनद्मीति लिङ्गात्तस्यापि च्छेदनम् ॥ २ ॥

सू०दी०—तत्र स्तम्बयजुषां पृथक्त्वान्मन्त्रावृत्तिः । चतुर्थस्य तु हरणस्य तूष्णीकत्वान्न भवत्यनुमन्त्रणम् ॥ २ ॥

इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्वित्युत्करमभिगृह्यमाणम् ॥ ३ ॥

भा०वृ०—उत्करभिग्रहणं सकृद्धरणप्रथासेषु तृणपांसुभेदेऽप्युभयोन्र्युप्तयोस्तन्त्रेणाभिग्रहणमभिगृह्यमाणाभिमन्त्रणं च तन्त्रेणोत्करस्यैकत्वात् ॥ ३ ॥

सू०दी०—अभिग्रहणस्य तु चतुर्थस्याप्यतूष्णीकत्वाद्भवत्येवानुमन्त्रणम् ॥ ३ ॥

यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं परिगृह्यमाणाम् ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—उभयोः परिग्रहयोरनुमन्त्रयतेऽविशेषात्पूर्वश्चेति भारद्वाजवचनाच्च ॥ ४ ॥

यदुद्घ्नन्तो जिहिꣳसिम पृथिवीमोषधीरपः । अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् । यदुद्घ्नन्तो जिहिꣳसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः । मा तेन हेड उपगाम भूम्याः शिवो नो विश्वैर्भुवनेभिरस्त्वित्युद्धन्यमानाम् । भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयाꣳसि । यज्ञिया यज्ञं विचयन्ति शं चौषधीराप इह शक्करीश्चेति क्रियमाणाम् । इडेऽन्यक्रतूरहमपो देवीरुपब्रुवे । दिवा नक्तं च सस्रुषीरपः स्वरीरिति प्रोक्षणीरासाद्यमानाः । ऊर्णाम्रदुप्रथमानꣳ स्योनं देवेभ्यो जुष्टꣳ सदनाय बर्हिः । सुवर्गे लोके यजमानꣳ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्निति बर्हिरासाद्यमानम् ॥ ५ ॥

भा०वृ०-क्रियमाणां दक्षिणतो वर्षीयसीमिति क्रियमाणाम् ॥ ५ ॥

सू०दी०—गतः ॥ ५ ॥

अद्भिराज्यमाज्येनापः सम्यक् पुनीत सवितुः पवित्रैः । ता देवीः शक्करीः शाक्करेणेमं यज्ञमवत संविदाना इत्याज्यं प्रोक्षणीश्चोत्पूयमानाः ॥ ६ ॥

भा०वृ०—आज्यं चोत्पूतं प्रोक्षणीश्चोत्पूयमानाः उभयोरुत्पवनस्य युगपदसंभवादुत्पूतशब्दाध्याहारेण योजना ॥ ६ ॥

सू०दी०—आज्यमुत्पूतं प्रोक्षणीश्चोत्पूयमाना इत्यर्थः ॥ ६ ॥

उभावाज्यग्रहाञ्जपतः ॥ ७ ॥

भा०वृ०—अध्वर्योरपि चातुःस्वर्यमाज्यग्रहणेषूभावाज्यग्रहाञ्जपत इत्यध्वर्योरपि चातुःस्वर्यप्राप्त्यर्थत्वाद्वचनस्य ॥ ७ ॥

सू०दी०—उभाविति वचनमध्वर्युणा सह प्रयोगार्थं याजमानाध्वर्यवकाण्डयोः संकीर्णत्वात् । अमीषामित्यभिप्रायः ॥ ७ ॥

इति पञ्चमी कण्डिका ।

---

अशिश्रेन बर्हिरन्तः पृथिव्याः सꣳ रोहयन्त ओषधीर्विवृक्णाः । यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु । सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा अद्रुधा इत्यन्तर्वेदि बर्हिरासन्नम् ॥ १ ॥

भा०वृ०—स्पष्टार्थः ॥ १ ॥

सू०दी०—गतः ॥ १ ॥

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । साऽऽस्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा

चैधि स्योना च मे सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि। इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वाऽऽयुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्वेति स्तीर्यमाणाम् ॥ २ ॥

भा० वृ०—स्पष्टम् ॥ २ ॥

सू० दी०—नात्र धातौ धातौ मन्त्रावृत्तिः स्तीर्यमाणाया वेदेरेकत्वात्तदभिधानत्वाच्च मन्त्रस्य ॥ २ ॥

ध्रुवोऽसीत्येतैः प्रतिमन्त्रं परिधीन्परिधीयमानान्। अस्मिन्यज्ञ उपभूय इन्नु मेऽविक्षोभाय परिधीन्दधामि। धर्ता धरुणो धरीयानग्निर्द्वेषाꣳसि निरितो नुदाता इति च ॥ ३ ॥

भा० वृ०—अस्मिन्यज्ञ इति सकृद्बहुवचनत्वात्परिधीन्दधामीति सर्वपरिध्यङ्गम्। शनैश्चोत्तरपरिधिः साद्यत इति चशब्दादस्मिन्यज्ञ इत्येतदपि परिधीयमानावस्थायामेव तस्मादभिभूरस्यस्मिन्यज्ञ इत्युभयोः परिधीयमानावस्थायामेव प्रयोगसंभवार्थं शनैरुत्तरपरिधिसादनमध्वर्युणा कर्तव्यमतः परिधीयमानानित्युपपद्यते। केचित्परिधौ परिधावावर्तयन्तीत्यस्मिन्यज्ञ इत्यस्य सर्वपरिध्यङ्गत्वात्सर्वेषां परिधीयमानावस्थायामेव प्रयोगसंभवार्थमावर्तत इति ॥ ३ ॥

सू० दी०—अस्मिन्यज्ञ इत्यनया सकृदन्तेऽनुमन्त्रणं परिधीन्दधामीति लिङ्गादस्मिन्यज्ञ इति सर्वानिति भारद्वाजवचनाच्च ॥ ३ ॥

युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहवनीयम्। तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने। ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभन्यज्ञहनः पिशाचा इति च ॥ ४ ॥

भा०वृ०—युनज्मीत्याहवनीययोग उपस्थ इत्येवमन्तोऽनुमन्त्रणमुपस्थानं वा । एष वाऽग्नेर्योगस्तेनैवैनं युनक्तीति लिङ्गात्सुप्रजस इत्यादिफलस्य तेन हन्मीत्यादेश्चेति युङ्क्त्वाऽऽहवनीयात्प्राप्त्यर्थतयाऽऽशासनाद्यन्म इत्यादेरन्यत्र चाविनियोगादुभाभ्यामग्नियोगः । व्याहृतीनामग्निहोत्रोपसादनादिषु विनियोगो याजमानकाण्ड आहवनीययोगार्थमन्त्रद्वयानन्तरपठितानां व्याहृतीनामग्निहोत्रमेताभिरित्यादिना वचनेनाऽऽध्वर्यवादिकर्माङ्गत्वेन विनियोगादाहवनीययोगो मन्त्रद्वयेन ॥ ४ ॥

सू०दी०—अनुमन्त्रयत इति शेषः । उपतिष्ठत इति वा । युनज्मीति प्रतीकेन द्व्यृचस्यैव ग्रहणं न व्याहृतीनामपि तासामग्निहोत्रोपसादनादौ विनियोगाद्व्यक्तवचनाच्च कल्पान्तरेषु । परिध्यङ्गमिदमनुमन्त्रणं तत्संनिधावाम्नानात् । स्यादेतत् । युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनेति श्रुतेः पृथक्कर्मैवेदमग्नियोगो नामेति । तन्मन्दं परिधियोगस्यैव तत्राग्नियोगत्वेनाभिप्रेतत्वात्तथा तद्विमोकस्यैवाग्निविमोकत्वेन । तदुक्तं ब्राह्मणे—वि ते मुञ्चामि रशना विरश्मीनित्याहैष वा अग्नेर्विमोक इति । व्याख्यास्यति च तथा सूत्रकारः—वि ते मुञ्चामीति परिधिषु विमुच्यमानेष्विति । व्यक्तोक्तं च तत्सत्याषाढेन यथा युनज्मि त्वा यन्मे अग्न इति द्वाभ्यामग्निं परिधीयमानं तेजिष्ठा त इति परिधितमिति । तस्मादुपसदवभृथगृहमेधीयादिषु परिध्यभावादनुमन्त्रणस्य लोपः ॥ ४ ॥

विच्छिनद्मि विधृतीभ्याꣳ सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनानहꣳ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम् । सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणान्मयि धारयतं प्रजां मयि धारयतं पशून्मयि धारयतमिति विधृती आसादयमाने ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

इति षष्ठी कण्डिका ।

सू०दी०—गतः ॥ ५ ॥

इति षष्ठी कण्डिका ।

अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपास्तस्मिन्त्स्रुचो अध्यासादयामीति प्रस्तरमासाद्यमानम् ॥ १ ॥

भा०वृ०—जुहूसादनपक्षेऽयं प्रस्तर इत्यादि नास्त्युतानूयाजानामिति लिङ्गविरोधात् । प्रस्तरे जुह्वासादनपक्षेऽयं प्रस्तर इति नास्ति कुतः बहुवचनत्वात् । सर्वस्रुक्सादन एवायं प्रस्तरमन्त्रस्तस्मिन्त्स्रुचोऽध्यासादयामीति बहुवचनादतः प्रस्तरसादनात्प्रागेव सर्वसादनजुहूसादनयोरन्यतरपक्षः कल्प्यस्तस्मादिडान्तयोर्दर्शपूर्णमासयोरयं प्रस्तर इत्यस्य लोपः प्रायणीयायामननूयाजपक्ष आतिथ्यायां चान्यतरस्य धर्तेत्यूह उदयनीये चाप्रयाजपक्ष ऊहो विकल्पेन । प्रस्तरजात्येकत्वात्कालान्तरे वर्तमानस्य संस्तव इत्यनिवृत्तिर्वाऽऽसाद्यमानमिति पुनर्वचनाच्चेति प्रस्तराभिधानपरत्वात्प्रयाजानुयाजकर्मणां धारणाभावेऽपि लक्षणयाऽऽज्यधारणानुवादत्वात्सर्वसादनकाले प्राप्तत्वेन स्तुत्यनुवादत्वोपपत्तेरुभयत्र प्रस्तरजात्येकत्वादलोपः । किं च विधृती आसाद्यमाने इति प्रकृतत्वात्प्रस्तरमित्येतावता सिद्धेऽपि प्रस्तरमासाद्यमानमिति पुनर्वचनाच्च प्रस्तरमात्रं प्रधानतया विधेयमिति केवलजुहूसादनेऽप्यनिवृत्तिरिति । अस्मिन्पक्षे प्रायणीयादिष्वप्यनूहः, उपसत्सु च प्रवृत्तिः ॥ १ ॥

सू०दी०—अपि वा जुहूमेव प्रस्तर इत्यस्मिन्कल्पे लुप्यते मन्त्र उतानूयाजानामिति स्रुच इति च लिङ्गविरोधात् । तथा प्राय-

णीयेऽद्यनीययोरनूयाजप्रयाजयोर्यथार्थमूहोऽन्यतरस्य धर्ता धर्ता प्रयाजानां स दाधारेत्यादि ॥ १ ॥

आरोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाजिरा संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः । जुहूरसि घृताची गायत्रीयाम्नी कविभिर्जुषाणा ॥ अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानाग्नेयेन शर्मणा दैव्येनेति जुहूम् । अवाहं बाध उपभृता सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । दोहै यज्ञꣳ सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः । सुभृदस्युपभृद्घृताची त्रैष्टुभेन च्छन्दसा विश्ववेदाः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानैन्द्रेण शर्मणा दैव्येनेत्युपभृतम् । यो मा वाचा मनसा दुर्मरायुर्हृदारातीयादभिदासदग्ने । इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः । ध्रुवाऽसि धरणी धनस्य पूर्णा जागतेन च्छन्दसा विश्ववेदाः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवान्वैश्वदेवेन शर्मणा दैव्येनेति ध्रुवाम् । स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके । दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः । अयꣳ स्रुवो अभिजिहर्ति होमाञ्छतक्षरश्छन्दसाऽऽनुष्टुभेन सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्येनेति स्रुवम् । इयꣳ स्थाली घृतस्य पूर्णाऽच्छि-

न्नपथाः शतधार उत्सः। मारुतेन शर्मणा दैव्येने-
त्याज्यस्थालीम् ॥ २ ॥

भा०वृ०—जुह्वादीनामासाद्यमानानामुपस्थानमनुमन्त्रणं वाऽधिका-
रादिति । अकरणादुपतिष्ठतेऽनुमन्त्रयत इत्यधिकारादुपस्थान-
पक्ष उत्थाय ॥ २ ॥

इति सप्तमी कण्डिका ।

---

सू०दी०—सर्वत्र साद्यमानमनुमन्त्रयत इति शेषः ॥ २ ॥

इति सप्तमी कण्डिका ।

---

तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन
तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण तृप्ति-
रसि जागतं छन्दस्तर्पय मा प्रजया पशुभिरिति
पुरोडाशानज्यमानान् ॥ १ ॥

यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्र-
यताꣳ शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता
इरावतीः पशुमतीः प्रजापतिरसि सर्वतः श्रितः
सर्वतो मां भूतं भविष्यच्छ्रयताꣳ शतं मे सन्त्वाशिषः
सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीरित्याग्नेयं
पुरोडाशमासन्नमभिमृशति सर्वाणि वा हवीꣳषि॥ २ ॥

इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवोऽचिकि-
त्सन् । तेन देवा अवतोप मामिहेषमूर्जं यशः सह
ओजः सनेयꣳ शृतं मयि श्रयतामिति प्रातर्दो-
हम् । यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे
प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरि-

ष्टादधिनोन्महेन्द्रं दधि मां धिनोत्विति दधि ॥३॥
अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देव-
ताभिः। तेन लोकान्सूर्यवतो जयेमेन्द्रस्य सख्यममृत-
त्वमश्यामिति सर्वाणि हवीᳬंषि ॥ ४ ॥

भा०वृ०—तृप्तिरसि यज्ञोऽसीत्येवंविधानामेकवचनत्वादसंनिपाति-नामप्यावृत्तिः प्रधानानुरोधेन वचनानुग्रहाच्च। अस्यार्थः-तृप्तिरसि यज्ञोऽस्ययं यज्ञ इदमिन्द्रियं यत्पृथिवीमित्येवंविधानामसंनिपाति-नामक्रियाभिधायिनामावृत्तिरेकवचनानुग्रहाय प्रतिप्रधानं गुणा-वृत्तेन्र्याय्यत्वाच्चासंभवतामभिमर्शने मन्त्रावृत्तिः। मयाग्र इत्ये-वमादीनां तन्त्रेण प्रयुज्यमानानामप्यभिमर्शनावृत्तावावृत्तिः सर्वेषां मन्त्रवदभिमर्शनेन संस्कार्यत्वादुपदेशस्त्वयं यज्ञ इति तन्त्रेणायं यज्ञः समसदद्धविष्मानिति हविर्युक्तयज्ञाभि-धानाच्चेनेज्यमानहविषामभिमर्शनम्। हविष्मानितिपदे संख्याव-शेषानुपलब्धेश्चाऽऽज्यानां च साज्यस्थालीकानामभिमर्शनं सर्वाणि हवीᳬंषीतिवचनाद्ध्रौवाज्यमात्रेण सहेति केचित्प्रधानधर्मत्वात्। तस्यापि नेति केचित्। सर्वेषाᳬं हविषामुत्तरार्धात्सर्वेभ्यो हविर्भ्य इडाᳬं समवद्यतीति निर्देश आज्यव्यतिरिक्तानामेवोपादा-नात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

सू०दी०—प्रतिहविरावृत्तिर्मन्त्रस्य तृप्तिरसीत्येकवचनात्। अज्यमा-नानितिवर्तमाननिर्देशाच्च ॥ १ ॥

यदा सर्वाणि तदाऽऽवृत्तिर्मन्त्रस्य यज्ञोऽसीति पुरोडाशाभि-धानादेकवचनाच्च। सर्वाणि हवीᳬंषीति च येषामासादनमुक्तमा-ध्वर्यवे चतुर्होत्रा पौर्णमास्यामित्यादिना तेषामेव ग्रहणं न त्वा-ज्यानामपि। कुतः। स्थानादासन्नान्यभिमृशतीति वचनात्सर्वेषां हविषामुत्तरार्धात्सर्वेभ्यो हविर्भ्य इडामित्यादौ तथा दर्शनाच्च। तेनोपसदादावभिमर्शननिवृत्तिराज्यस्य ॥ २ ॥

आसन्नमभिमृशतीत्यन्वयः ॥ ३ ॥

हविष्मानयं यज्ञ इति यज्ञाभिधानान्नाऽऽवृत्तिर्मन्त्रस्य

भारद्वाजः-सर्वाणि समस्तान्यभिमृशति ममाग्ने वर्चो विहवेष्वित्यनुवाकेनायं यज्ञः समसदद्धविष्मानिति चेति ॥ ४ ॥

योनः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम्। अप तमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेयेत्यैन्द्राग्नम् ॥ ५ ॥

भा० वृ०—ऐन्द्राग्नविकाराणामूहेनामभिमर्शनं समवेतदेवताभिधायित्वात्समुच्चयेनाभिमर्शनं सर्वेषां मन्त्राणामुक्तत्वादभिमर्शनावृत्तिश्च न च विकल्पः ॥ ५ ॥

सू० दी०—ऊहेनाभिमर्शनं वैमृधस्यापि ॥ ५ ॥

ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन सर्वाणि हवीꣳष्यासन्नान्यभिमृशेदष्टाभिर्वा ॥ ६ ॥

भा० वृ०—विहव्यैस्तन्त्रेणाभिमर्शनम् ॥ ६ ॥

सू० दी०—व्याख्यातः पूर्वतरेण ॥ ६ ॥

चतुर्होत्रा पौर्णमास्यां हवीꣳष्यासन्नान्यभिमृशेत्प्रजाकामः पञ्चहोत्राऽमावास्यायां स्वर्गकामो नित्यवदेके समामनन्ति ॥ ७ ॥

भा० वृ०—चतुर्होतृपञ्चहोतृभ्यामपि तन्त्रेणाभिमर्शनं यावत्संभवम् ॥ ७ ॥

इत्यष्टमी कण्डिका ।

---

सू० दी०—गतौ ॥ ७ ॥

इत्यष्टमी कण्डिका ।

---

इति द्वितीयः पटलः ।

---

दशहोतारं वदेत्पुरस्तात्सामिधेनीनाम् ॥ १ ॥

भा०वृ०—दशहोत्रादयः पुरस्तादुपरिष्टादिति यस्य चोद्यन्ते तस्याङ्गम्। यथा पुरस्तादनूयाजानामुपरिष्टाद्वेत्येवमादि ॥ १ ॥

सू०दी०—गतः ॥ १ ॥

आङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकैरवन्त्विति सामिधेनीनां प्रतिपदि जपति ॥ २ ॥

भा०वृ०—प्रतिपत्, आरम्भस्तत्र सकृत् ॥ २ ॥

सू०दी०—प्रतिपदि प्रथमायामृच्यारम्भे वा ॥ २ ॥

अनूच्यमानासु दशहोतारं व्याख्यायोच्छुष्मो अग्न इति समिध्यमानम्। समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः। स्वगा देवेभ्य इदं नम इति समिद्धम् ॥ ३ ॥

भा०वृ०—चित्तिः स्रुगित्यादि समिध्यमानं समिद्धमिति चाग्न्यभिमन्त्रणम्। समिध्यमानवतीसमिद्धवतीभ्यामुपलक्षितयाग्नेरभिमन्त्रणं प्रतिपज्जपोत्तरकालविधानादेव सिद्धे समिध्यमानं समिद्धमिति पुनरुपादानादतस्तयोरभावे निवर्तते केचिदनिवृत्तिरिति ॥ ३ ॥

सू०दी०—अनुमन्त्रयत इति शेष उपतिष्ठत इति वा ॥ ३ ॥

मनोऽसि प्राजापत्यमिति स्रौवमाघार्यमाणम् ॥ ४ ॥

भा०वृ०—अनुमन्त्रयत इति शेषः ॥ ४ ॥

सू०दी०—आघारमनुमन्त्रयत इति शेषः ॥ ४ ॥

स्रुच्यमन्वारभ्य वागस्यैन्द्रीत्यनुमन्त्रयते ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—आघारयितुरन्वारम्भ एवाऽऽघारान्वारम्भः। अनुमन्त्रणवचनमन्वारम्भार्थोऽयं मन्त्र इति मा शङ्कीति ॥ ५ ॥

देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टꣳ स्वं दत्तꣳ स्वं पूर्तꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतम्। तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुर्य एवास्मि स सन्यज इति होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाणे ॥ ६ ॥

भा०वृ०—देवाः पितर इति प्रवराङ्गं तन्निवृत्तौ निवृत्तिः सीद होतरित्यत्राप्यानिवृत्तिरिति प्रवरकार्यकरत्वात्तस्य । केचित्तु निवृत्तिरिति सीद होतरित्यत्र यस्यास्मि न तमन्तरेमीति वैलिङ्ग्याद्यस्यर्षेः संतानजोऽस्मि तं नातिक्रामामीति संकीर्तनात्सीद होतरित्यृषिकीर्तनाभावान्निवृत्तिः ॥ ६ ॥

सू०दी०—जपतीति शेषः। प्रवरस्थानापन्नेऽपि सीद होतरित्यत्र गोत्रर्षिसंबन्धाकीर्तनान्नायं जपो योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमीति लिङ्गानुरोधात् ॥ ६ ॥

चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान्हुतꣳ हुतम् ॥ ७ ॥

भा०वृ०—चतुर्होता, प्रयाजाङ्गं प्रयाजानूयाजाज्यभागस्विष्टकृदनुमन्त्रणानि तन्त्रेण वरुणप्रघासेषु प्रतिप्रस्थातुः पश्चादनुष्ठानेऽपि तदुत्तरकाले तन्त्रेणानुमन्त्रणं हुतꣳ हुतमिति भूतनिर्देशात् ॥ ७॥

सू०दी०—अनुमन्त्रयत इति शेषः। सर्वप्रयाजशेषश्चतुर्होता। अतो न प्रतिप्रयाजमावर्तते ॥ ७ ॥

एको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मो द्वौ मम द्वे तस्य त्रयो मम तिस्रस्तस्य चत्वारो मम चतस्रस्तस्य पञ्च मम न तस्य किंचन योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येतैर्वा प्रतिमन्त्रम् ॥८॥

भा०वृ०—वेत्युक्तेर्विकल्पो होत्रायाजमानयोरपि होत्रायाजमानेषु समुच्चय इत्युक्तेऽपि विहृतानुमन्त्रणौ वा एतस्य सूक्तस्य षट् सर्वं वेत्यादिषु विकल्प एव समुच्चय इत्युपदेशः । होत्रायाजमानेष्वित्यविशेषेण सर्वत्र वचनाद्वाशब्दस्य चशब्दार्थोपपत्तेः॥८॥

सू०दी०—हुतं हुतमनुमन्त्रयत इत्यन्वयः । योऽस्मानित्यादेः सर्वत्रानुषङ्गः ॥ ८ ॥

**अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्याज्यभागौ ॥ ९ ॥**

भा०वृ०—स्पष्टम् ॥ ९ ॥

सू०दी०—हुतावनुमन्त्रयत इति शेषः ॥ ९ ॥

**विहृतानुमन्त्रणौ वा ॥ १० ॥**

भा०वृ०—विहृतानुमन्त्रणौ विभक्तानुमन्त्रणौ यदा पठितौ ॥१०॥

सू०दी०—विहृतं व्यस्तमनुमन्त्रणं ययोस्तौ तथोक्तौ ॥ १० ॥

**अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान्भूयासम् । सोमेन यज्ञश्चक्षुष्मान्त्सोमस्याहं देवयज्यया चक्षुष्मान्भूयासमिति विहृतौ ॥ ११ ॥**

भा०वृ०—स्पष्टम् ॥ ११ ॥

सू०दी०—यदा विहृतौ तदाऽऽभ्यां पृथगनुमन्त्रयितव्यौ ॥ ११ ॥

**पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्य ॥ १२ ॥**

भा०वृ०—हविरङ्गं पञ्चहोतेतिप्रतिहविरावृत्तिः । तन्त्रेण वा मध्यवर्तित्वात्पुरस्ताद्धविरवदानस्येति पुरस्तात्कालस्य सर्वसाधारणत्वात्तन्त्रेणोपपत्तिरमध्यवर्तिकालत्वादिति मध्यवर्तित्वे हि पूर्वोत्तरस्य वा नियतत्वादुपसत्सु सुब्रह्मण्यावदिति । यथाऽहर्गणेषूपसत्कालासु सुब्रह्मण्यायामेतावदहे सुत्यामिति सर्वसुत्यासाधार-

णत्वात्मुख्यानिर्देशस्तन्त्रेण सुब्रह्मण्या तु तन्त्रं स्यादिति मीमांसकमताच्चद्वत्पञ्चहोताऽपि ॥ १२ ॥

सू०दी०—सर्वहविरर्थः पञ्चहोता न तु प्रत्येकमावर्तते वीप्साभावात् ॥ १२ ॥

अग्नेरहं देवयज्ययाऽन्नादो भूयासमित्याग्नेयꣳ हुतमनुमन्त्रयते दब्धिरसीत्युपाꣳशुयाजमग्नीषोमयोरित्यग्नीषोमीयमिन्द्राग्नियोरित्यैन्द्राग्नमिन्द्रस्येत्यैन्द्रꣳ सान्नाय्यं महेन्द्रस्येति माहेन्द्रमग्नेः स्विष्टकृत इति सौविष्टकृतम् ॥ १३ ॥

भा०वृ०—सर्वत्रानुमन्त्रयत इति शेषः। दब्धिरसीत्युपांशुयाजमग्नीषोमीयमपीति देवताविशेषानपेक्षयैवोपांशुयाजाङ्गतया दब्धिरसीत्यस्य विहितत्वादग्नीषोमयोरित्यस्य त्वौषधार्थता ॥ १३ ॥

सू०दी०—अग्नीपोमीयेऽप्युपांशुयाजे दब्धिरसीत्येव मन्त्रः। दब्धिरसीत्युपांशुयाजमिति वचनात्। न च लिङ्गविरोधः। यागाभिधानात् ॥ १३ ॥

पुरस्तात्स्विष्टकृतोऽन्यदेवतान्येके समामनन्ति ॥ १४ ॥

भा०वृ०— अग्नेः स्विष्टकृतोऽहं देवयज्ययेत्यस्य पुरस्तादन्यदेवतानां पाठः। शाखान्तरे तानि हविर्विशेषमनपेक्ष्य भवन्ति ॥ १४ ॥

इति नवमी कण्डिका।

सू०दी०—प्राकृते हुतानुमन्त्रणसमाम्नाये स्विष्टकृन्मन्त्रात्पूर्वं प्राकृतीभ्योऽन्यदेवतान्यपि वक्ष्यमाणानि यजूंष्येके शाखिनः समामनन्ति। किंचातस्तानि तु प्रकृतावसंभवात्प्रकरणं बाधित्वा तल्लिङ्गानुरोधेन विकृतिषु निवेशयितव्यानीत्याह ॥ १४ ॥

इति नवमी कण्डिका।

---

इन्द्रस्य वैमृधस्याहं देवयज्यया सपत्नो वीर्यवान्भूयासमिन्द्रस्य त्रातुरहं देवयज्यया त्रातो भूयासं

द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम् । भूमानं प्रतिष्ठां गमेयमित्येके । पूष्णोऽहं देवयज्यया प्रजानिषीय प्रजया पशुभिः सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयमर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमेयमदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीयेन्द्रस्येन्द्रियावतोऽहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति यथालिङ्गं वैकृतीः ॥ १ ॥

भा०वृ०—तान्यनुमन्त्रणानि यथालिङ्गं वैकृतीरिति । देवताविशेषलिङ्गेन विनियुक्तत्वादिन्द्रस्येन्द्रियावादित्यस्यैन्द्राग्नविकारत्वादिन्द्रियाव्यन्नाद इति सिद्धे पुनः पाठो मन्त्रत्वार्थः । ऊहश्चेदमन्त्रः स्यादत एषां भ्रेषे यजुर्भ्रेषप्रायश्चित्तमेषां वैकृतीनां मन्त्रत्वाद्यथालिङ्गं वैकृतीरिति । विकृतौ भवा वैकृत्यः । वैकृतीर्देवता अभिसंधायानुमन्त्रणं वैमृधोऽपि विकृतिरतः प्रियेणेत्यासाद्यते । यद्यपि वैमृधः पौर्णमास्यङ्गं तथाऽपि तदर्थं (वैकृत्यर्थम्) हि वैकृतमन्त्रगणे [इन्द्रस्य वैमृधस्येति मन्त्रस्य] पाठः ॥ १ ॥

सू०दी०—एतैर्यथालिङ्गं वैकृतीर्देवता इष्टा अनुमन्त्रयत इत्यर्थः । एवं चैषां प्रत्यक्षमाम्नानात्सर्वेष्वप्येतद्देवत्येषु हविःषु हविःसामान्यविरोधेऽप्येतान्येवानुमन्त्रणानि भवन्ति न प्राकृतान्यूह्यन्ते ॥ १ ॥

अग्निर्मा दुरिष्टात्पात्विति प्राशित्रमवदीयमानम् ॥ २ ॥

भा०वृ०—व्याख्यातं ब्रह्मत्वे ॥ २ ॥

सू०दी०—हविर्गणादवदानेऽपि सकृदेव मन्त्रः । यथा चैवं तथा ब्रह्मत्वे व्याख्यातम् ॥ २ ॥

सुरूपवर्षवर्ण एहीतीडाम् ॥ ३ ॥

भा०वृ०–सुरूपवर्षवर्ण एहीतीडामवदीयमानामिति प्राशित्रमवदीयमानमिति प्रकृतत्वेनानुगतत्वात्तामाह्रियमाणामित्युत्पत्तिरेवाऽऽहरणमिडाया उत्पत्तिश्चावदानं तदेवाऽऽहरणम् । केचिद्भक्षायाऽऽह्रियमाणायां विकल्पमिच्छन्तीडा धेनुरित्यनेन मन्त्रेणाऽऽहरणरूपेणैव चोदिताहरणस्य विद्यमानत्वाद्देव्या इडाया अभिधानादिडाद्वित्वेऽप्यनूहो वरुणप्रघासेषु । वृष्टिर्वा इडेति वृष्ट्यादिदेवतेडाभिधानाद्वरुणप्रघासेष्विडाद्रव्यद्वित्वेऽपि देवताभेदाभावादिड एहीत्यादीनामनूहः ॥ ३ ॥

सू०दी०–अवदीयमानामित्यनुषङ्गः । सकृदत्रापि मन्त्रः पूर्ववत् ॥ ३ ॥

भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहीतीडाया उपाꣳशूपह्वे सप्त देवगवीर्जपति चिदसि मनासि धीरसि रन्ती रमतिः सूनुः सूनरीत्युच्चैरुपह्वे सप्त मनुष्यगवीः । देवीर्देवैरभि मा निवर्तध्वꣳ स्योनाः स्योनेन घृतेन मा समुक्षत नम इदमुदं भिषगृषिर्ब्रह्मा यद्दद्दे समुद्रादुदचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्निति च ॥ ४ ॥

भा०वृ०––स्पष्टम् ॥ ४ ॥

सू०दी०––देवगव्यभिधायिनो मन्त्रा देवगव्य इत्युच्यन्ते । तथा मनुष्यगव्यः ॥ ४ ॥

उपहूयमानायां वायविडा ते मातेति होतारमीक्षमाणो वायुं मनसा ध्यायेत् ॥ ५ ॥

भा०वृ०–वायविडा ते मातेत्यस्यैव ध्यानमिति । वायविडा ते मातेत्युच्यमानावस्थायामेव वायोर्ध्यानम् । उपदेशोऽधिकं वायुष्टे वत्स इति । वायुर्वत्सो यर्हीत्युपक्रम्य वायुं मनसा ध्यायेदिति

निर्देशाद्वायोर्वत्सरूपत्वनिर्देशेनाभिध्यानं कर्तव्यमिति । वाय-विडा ते मातेत्यस्मादधिकं वायुष्टे वत्स इति ध्यानमित्युपदेशः ॥ ५ ॥

सू०दी०—वायविडा ते माता वायो ते वत्सभूतस्येडा मातेति ध्यानप्रकारविधिर्न तु मन्त्रस्तथा ब्राह्मणे व्यक्तत्वाद्यथा वायुर्वत्स इति प्रकृत्योक्तं वायुं मनसा ध्यायेन्मात्रे वत्समुपावसृजतीति ॥ ५ ॥

**सा मे सत्याऽऽशीरित्याशिःषु । आशीर्म ऊर्जमिति च ॥ ६ ॥**

भा०वृ—जपतीति शेषः ॥ ६ ॥

सू०दी०—जपतीति शेषः । अयं च जपः सोमेष्टिष्वपि भवत्येवैकस्या आशिषो विद्यमानत्वात् । तत्र त्वस्मास्विन्द्र इत्यादि निवर्तयति ॥ ६ ॥

**इडाया अहं देवयज्यया पशुमान्भूयासमित्युपहूताम् । इडा धेनुः सहवत्सा न आगमूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाऽस्मा आगादिति भक्षायाऽऽह्रियमाणाम् ॥ ७ ॥**

भा०वृ०—स्पष्टम् ॥ ७ ।

सू०दी०—उभयत्रानुमन्त्रयत इति शेषः ॥ ७ ॥

**उक्त इडाभक्षो मार्जनी च ॥ ८ ॥**

भा०वृ०—उक्तस्य याजमानस्य कस्यचित्पुनरनुक्रमणाद्यन्नानुक्रान्तं तत्प्रवसद्यजमानेन वक्तव्यमिति केचिदाहुः । आध्वर्यवे कस्य भक्षणमन्त्रस्य मार्जनमन्त्रस्य च पुनर्विधानात्पुनरेवैनैरनुक्रान्तानां प्रवसद्यजमाने प्रयोगाभाव इति केचित् । नत्वेवमिडाभक्षः शेषसंस्कारोऽपि । अतो भक्षाभावान्निवर्तते प्रवसतो भक्षमन्त्रः । मार्जनं दृष्टसंस्कारः । अतो निवर्तते । मार्जनम्, प्रैषाः, प्रत्यगाशिषो न भवन्त्यन्वाहार्यदानं च । वृष्ट्यादिदेवतासंबन्धेनादृष्टार्थत्वे हविःशेषप्रतिपत्तिसंस्कारार्थतया तत्प्रयुक्तत्वादृत्विग्भिरेव सर्वशेषभक्षणं कर्तव्यम् । प्रवसतस्तु यजमानस्य भक्षाभावान्मन्त्रलोपः प्राप्तः । मार्जनं च दृष्टसंस्कारो भक्षयितृसंस्कारस्ततो निवर्तते मार्जनमन्त्रश्च । प्रैषाः प्रत्यगाशिषो न भवन्त्यन्वाहार्यदानं च प्रवसतः । अत एवंविधानामपि प्रयोगः । प्रवसद्यजमाने कथं स्यादि-

त्येवमर्थं पुनरनुक्रमणमुक्त इडाभक्षो मार्जनी चोक्तः संप्रैषोऽन्वाहार्यस्य च दानमिति ॥ ८ ॥

सू०दी०—भक्षो भक्षणम् । मार्जनीशब्देन मार्जनं लक्ष्यते । तदुभयमुक्तमाध्वर्यव एव यजमानस्यापि तन्नेदानीं प्रस्मर्तव्यमिति भावः ॥ ८ ॥

ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्ता संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां म इति बर्हिषि पुरोडाशमासन्नमभिमृशति ॥ ९ ॥

भा०वृ०—अध्वर्युणा बर्हिषि चतुर्धा कृत्वा स्थापितं पुरोडाशं तन्त्रेणाभिमृशेत् ॥ ९ ॥

इति दशमी कण्डिका ।

सू०दी०—चतुर्धा कृत्वा सह निहितं पुरोडाशं तन्त्रेणाभिमृशति ॥ ९ ॥

इति दशमी कण्डिका ।

अथैनं प्रतिदिशं व्यूहत्याशानां त्वाऽऽशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रध्न पाहि भजतां भागी भागं मा भागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिद हविः सोम्याना सोमपीथिनाम् । निर्भक्तोऽब्राह्मणो नेहाब्राह्मणस्यास्तीति ॥ १ ॥

उपहूतो द्यौः पितोप मां द्यौः पिता ह्वयतामग्निरा-ग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायोपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायेत्याग्निध्रभागस्य वैशे-षिकम् ॥ २ ॥

भा०वृ०—कृते व्यूहने व्यादेशस्तमभिमृशता तमभिमृशेदिति । प्रतिदिशं व्यूह्येदं ब्रह्मण इत्यादि स्पृष्ट्वा व्यादेश उपपद्यत इति । आशानामित्यादि नेहाब्राह्मणस्यास्तीत्यन्तेन व्यूहने कृते व्यादेशस्तमभिमृशेदिति ब्राह्मणे विधानात्तं तमभिमृशता व्यादेशः ॥ १ ॥ २ ॥

सू०दी०—व्यूहति विभज्य गमयति सकृदुक्तेन मन्त्रेण ॥ १ ॥

व्यूहनमिति विपरिणामेन संबन्धः । पूर्वं तु व्यूहनं चतुर्णां भागानां साधारणमिदं चाऽऽग्नीध्रभागस्य वैशेषिकमित्यर्थः । तत्त्वाग्नीध्रभागस्येति वचनादिदं ब्रह्मण इत्यादिषु व्यादिष्टेषु भागेष्विति द्रष्टव्यम् ॥ २ ॥

ब्रध्न पिन्वस्वेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति । इयꣳ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीय-माणः स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदने-नातितराणि मृत्युमिति च ॥ ३ ॥

भा०वृ०—बहून्यपि द्रव्याण्येको भागोऽवयवस्तस्माद्दक्षिणासु ब्रध्ने-त्यस्यानूहो विकृतिष्वनेकदक्षिणासु प्रजापतेर्भागोऽसीत्येवोदकस्य पयःशब्देनाभिधानादक्षीरेऽप्यन्वाहार्ये पयस्वानिति मन्त्रानि-वृत्तिः । क्षीरे भवतीत्येक इति वैकल्पिकत्वेऽपि दक्षिणान्तरे चानूहः पाञ्चभौतिकत्वात्सर्वदक्षिणानां पञ्चभूतसमावेशादूर्ज-स्वान्पयस्वानित्यविकारः ॥ ३ ॥

सू० दी०—प्रथममन्त्रस्य सर्वत्राविकारो भागाभिधानात् । द्वितीये

स्वादितः पदचतुष्टयस्यौदनस्थाल्यभिधायिनोऽन्यत्र तदभावे लोपः । सहस्रधाराक्षीयमाणशब्दयोश्च लिङ्गस्याविकार उत्स-विशेषणत्वात् । शेषस्तु यथार्थमूह्यः ॥ ३ ॥

उक्तः संप्रैषोऽन्वाहार्यस्य च दानम् ॥ ४ ॥

भा०वृ०—उक्तः संप्रैष इत्युभौ संप्रैषावुत्तरतः परीतेत्यपि यद्य-प्युक्तः संप्रैष इत्येकवचनान्तस्तथाऽपि यजमान आह दक्षिणत एतेति परनियोगरूपत्वात्प्रैषत्वादुत्तरतः परीतेति प्रतिग्रहीतॄणाम-विशेषेणाध्वर्योरपि प्रैष्यत्वाद्याजमानत्वम् । प्रथम इत्युपदेशः इति यजमान आह दक्षिणत एतेति तत्रैवोक्तत्वात् ॥ ४ ॥

सू०दी०—उक्त इडाभक्ष इतिवद्व्याख्या । संप्रैष इति च दक्षिणत एतोत्तरतः परीतेति द्वयोरपि संप्रैषयोर्ग्रहणम् । तथा तत्र दर्शितत्वात् ॥ ४ ॥

एषा ते अग्ने समिदित्यानूयाजिकीꣳ समिधमाधीय-मानाम् । यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन् । प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम् । सर्वाꣳ-स्तानग्ने संदह याꣳश्चाहं द्वेष्मि ये च मामित्याहिता-यामग्निम् ॥ ५ ॥

भा०वृ०—एषा ते अग्न इत्यावृत्तिर्वरुणप्रघासेषु । समिधमाधीयमाना-मित्याधीयमानसमिदभिमन्त्रणत्वात्प्रतिमन्त्रात्रा पश्चात्समिदाधा-नादेकवचनाच्चाऽऽवृत्तिः ॥ ५ ॥

सू०दी०—गतौ ॥ ५ ॥

वेदिर्बर्हिः शृतं हविरिध्मः परिधयः स्रुचः । आज्यं

यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः। सं मे संनतयो नमन्तामिध्मसंनहने हुत इति संमार्गान्हुतान् ॥ ६॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—संमार्गा इध्मसंनहनानि तेषां च बहुत्वनिर्देश इध्मसंनहने हुत इति चैतदस्तु हुतमिति च मन्त्रानुकरणाद्‌द्रष्टव्यः ॥ ६॥

सप्तहोतारं वदेत्पुरस्तादनूयाजानामुपरिष्टाद्वा ॥ ७ ॥

भा०वृ०—सप्तहोताऽनूयाजाङ्गम् । पुरस्तादनूयाजानामुपरिष्टाद्वे-त्यतोऽननूयाजे न भवति ॥ ७ ॥

इत्येकादशी कण्डिका ।

सू०दी०—सप्तहोतुरनूयाजाङ्गत्वादननूयाज उदयनीये न भवति॥७॥

इत्येकादशी कण्डिका ।

---

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासमित्येतैः प्रति-मन्त्रमनूयाजान्हुता१ हुतम् ॥ १ ॥

भा०वृ०—स्पष्टम् ॥ १ ॥

सू०दी०—गतः ॥ १ ॥

उभौ वाजवत्यौ जपतः ॥ २ ॥

भा०वृ०—न तु व्यूहनमितरामनुसंभिद्येत्यादि वाजवतीभ्यां व्यूहतीति समानकर्तृकत्वेऽपि नानूयाजाङ्गं व्यूहनमनूयाजसंबन्धविधाना-भावात्तस्मादननूयाजेऽपि कार्यमध्वर्योरपि जपो वाजवत्यादीना-मुभौ जपत इति वचनादध्वर्योरपि चातुःस्वर्येण व्यूहनमन्त्र-प्रयोगः ॥ २ ॥

सू० दी०—उभयोरपि याजमानाध्वर्यवकाण्डयोः पाठादिति भावः ॥ २ ॥

वसून्देवान्यज्ञेनाऽऽपिप्रे१ रुद्रान्देवान्यज्ञेनाऽऽपिप्रेमा-

दित्यान्देवान्यज्ञेनाऽऽपिप्रेममिति प्रतिमन्त्रं परिधी नज्यमानान्समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति प्रस्तरमज्यमानम् ॥ ३ ॥

भा० वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०–गतौ ॥ ३ ॥

अग्नेरहमुज्जितिमनूज्जेषमिति यथालिङ्गꣳ सूक्तवाकदेवताः ॥ ४ ॥

भा० दी०—उपांशुदेवतायास्तथाऽऽज्यपानां चोज्जितिर्न । अपरिपाठात् । उपांशुदेवताया एवोज्जितिर्नाऽऽज्यपानामित्युपदेश इति । अपठितत्वेऽपि दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमिति सर्वदेवतानामविशेषनिर्देशाद्यथालिङ्गं सूक्तवाकदेवता इति सूत्रकारवचनाच्चोपांशुदेवताया अप्युज्जितिः । आज्यपानां त्वप्रधानत्वादपरिपठितत्वाच्च निवृत्तिः ॥ ४ ॥

सू०दी०—सूक्तवाके कीर्तिता देवताः सूक्तवाकदेवतास्तास्तल्लिङ्गाभिरुज्जितिभिरुपतिष्ठतेऽनुमन्त्रयते वा । यथालिङ्गमिति समाम्नायसिद्धानां मन्त्राणां लिङ्गवशेन विनियोगादनाम्नाताया उपांशुयाजदेवताया आज्यपानां च नोज्जित्योपस्थानम् । अथवा तन्मन्त्रयोरपि शाखान्तरीयः पाठोऽनुमीयते निर्वापादिष्वेवैन्द्राग्नमन्त्रस्य । कुतः । सूक्तवाकदेवता इत्यविशेषवचनात्सूक्तवाके होता यां यां देवतामभिव्याहरति तां तां यजमानोऽनुमन्त्रयत इति सत्याषाढवचनाच्च ॥ ४ ॥

यदा चास्य होता नाम गृह्णीयादथ ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति ॥ ५ ॥

भा०वृ०—यदाऽस्य यजमानस्य होता नक्षत्रनामग्रहणन्तं कुर्यात्तदनन्तरमेमा अग्मन्निति ब्रूयात् ॥ ५ ॥

सू०दी०—सोमेष्टिष्वाशिष एकत्वादेयमगन्नाशीर्दोहकामेत्यूहः ॥५॥

सा मे सत्याऽऽशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा पण्या-त्पण्यतराऽरेडता मनसा देवान्गम्याद्यज्ञो देवान्गच्छ-त्वदो म आगच्छत्विति सूक्तवाकस्याऽऽशिःषु यत्कामयते तस्य नाम गृह्णाति ॥ ६ ॥

भा०वृ०—स्पष्टम् ॥ ६ ॥

सू०दी०—अविकृत एवायं मन्त्रः सोमेष्टिषु ॥ ६ ॥

रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रम-ग्नीधा प्रस्तरं प्रह्रियमाणम् ॥ ७ ॥

भा०वृ०—रोहितेनेत्याद्यावृत्तिर्वरुणप्रघासेष्वित्यग्नीधा प्रस्तरं प्रह्रियमाण-मिति वर्तमानाभिमन्त्रणत्वात्प्रह्रियमाणकालभेदादावृत्तिः ॥ ७ ॥

सू०दी०—गतः ॥ ७ ॥

दिवः खीलोऽवततः पृथिव्या अध्युत्थितः। तेना सहस्रकाण्डेन द्विषन्तꣳ शोचयामसि। द्विषन्मे बहु शोचत्वोषधे मो अहꣳ शुचमिति प्रस्तरतृणे प्रह्रिय-माणे ॥ ८ ॥

भा०वृ०—जपतीत्यध्याहारः ॥ ८ ॥

सू०दी०—जपतीति शेषः ॥ ८ ॥

वि ते मुञ्चामीति परिधिषु विमुच्यमानेषु ॥ ९ ॥

भा०वृ०—वि ते मुञ्चामीत्यग्निविमोक इति परिधिषु विमुच्यमानेष्वि-त्युक्तेऽप्येष वा अग्नेर्विमोक इति निर्देशाद्वि ते मुञ्चामीति युष्मच्छ-ब्देनाग्नेः प्रधानतया निर्देशाच्च तत्संस्कारता। तथा परिधीना-मपि विमोचनं प्रहरणार्थतया प्राप्तमत उभयार्थत्वेऽप्यग्निसंस्का-

रस्य प्रधानत्वमतः परिधिद्वित्वेऽपि नोह्यते पिण्ड्यायाम्। रश्मीन्भागधानित्यनयोः परिध्यभावे चानिवृत्तिः ॥ ९ ॥

सू०दी०—परिधिषु ततस्ततो देशाद्विमुच्यमानेषु प्रह्रियमाणेष्विति यावत्। विमुच्यमानेष्विति वचनमेष वा अग्नेर्विमोक इति ब्राह्मणव्याचिख्यासया परिधियोगे पूर्वं युनज्मि त्वेति युक्तस्याग्नेरिदानीं परिधिविमोके वि ते मुञ्चामीति विमोकाभिसंधानमेव विमोक इति ॥ ९ ॥

विष्णोः शंयोरिति शंयुवाके। यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नम इति च। इष्टो यज्ञो भृगुभिर्द्रविणोदा य[illegible]भि[illegible] वसुभिराशीर्वान्। अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहाऽऽगमेरिति सꣳस्रावꣳ हुतम् ॥ १० ॥

भा०वृ०—स्पष्टम् ॥ १० ॥

इति द्वादशी कण्डिका।

---

सू०दी०—गताः ॥ १० ॥

इति द्वादशी कण्डिका।

---

इति तृतीयः पटलः।

---

सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति यथालिङ्गं पत्नीसंयाजान्हुतꣳ हुतम् ॥ १ ॥

भा०वृ०—विहृतेज्यायामपि देवपत्नीनां गृहपतेश्च समानमनुमन्त्रणमिति । उपरिष्टाद्वा देवपत्नीभ्य इत्यस्मिन्पक्षे राकादिसंपत्नीयहोमव्यवहितत्वेन गृहपतीज्यायामपि गृहपतेः पश्चात्तन्त्रेणानुमन्त्रणं देवानां पत्नीरग्निर्गृहपतिरिति मन्त्रस्य तन्त्रपाठात्प्रकृतौ मन्त्रविकारानुपपत्तेः ॥ १ ॥

सू०दी०—देवपत्नीनां गृहपतेश्च यागान्तरव्यवायेऽपि समानमनुमन्त्रणं मन्त्रलिङ्गात् ॥ १ ॥

राकाया अहं देवयज्यया प्रजावान्भूयासꣳ सिनीवाल्या अहं देवयज्यया पशुमान्भूयासं कुह्वा अहं देवयज्यया पुष्टिमान्पशुमान्भूयासमिति काम्याः ॥ २ ॥

भा०वृ०—काम्या इत्यकाम्या इत्यप्येता एवोपलक्ष्यन्ते काम्या इत्युक्तेऽपि नित्यपक्ष एता एवाऽऽशिष उपलक्ष्यन्ते । अन्येषां हुतानुमन्त्रणानामनुक्तत्वान्नित्यानामपि फलाशासनरूपहुतानुमन्त्रणोपपत्तेः ॥ २ ॥

सू०दी०—काम्यग्रहणेन काम्यदेवता उपलक्षयति न तु नित्या व्यावर्तयति । तेनावशिष्टमनुमन्त्रणं नित्यत्वेऽपि ॥ २ ॥

राकाया अहं देवयज्यया प्रजावती भूयासꣳ सिनीवाल्या अहं देवयज्यया पशुमती भूयासं कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासमिति पत्न्यनुमन्त्रयते ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०—गतः ॥ ३ ॥

इडाऽस्माननु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्करी वावृधानोप यज्ञमस्थित वैश्वदेवीत्याज्येडाम् ॥ ४ ॥

भा०वृ०—इडाद्वयस्यानूहेनोपहवो वरुणप्रघासेषु देवताभिधाना-

दिति । वृष्ट्यादिदेवतारूपेडाया उपहवाद्वरुणप्रघासेष्वपि देवतैक्यान्न द्विवचनेनोहस्तन्त्रेण च याजमानमनूहेन ॥ ४ ॥

सू०दी०—घृतेनेत्युदकाभिधानान्मांसेडायामप्यनूहः । तथा च ब्राह्मणं-वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति ॥ ४ ॥

अन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसीति ॥ ५ ॥

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—मतः ॥ ५ ॥

पुरा विदेयेति यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात् । तदेवास्य सर्वं वृङ्क्त इति विज्ञायते ॥ ६ ॥

भा०वृ०—यद्यद्भ्रातृव्यस्याभिध्यायेदिति काम्यम् । भ्रातृव्यसंबन्धिनः कस्यचिदात्माभिलक्षितस्य च ध्यानं काम्यम् । पुरा विदेयेतिशब्दान्नामग्रहणं शत्रुद्रव्यस्येति । वेदोऽसि वित्तिरसीत्युक्त्वा शत्रुनाम गृहीत्वा विदेयकर्माऽसीत्यादि । अत्र तु न शत्रोरनर्थकामना यतो विदेयेतिलाभवचनादात्माभिलक्षितध्यानम् । मन्त्रेण वेदाभिमर्शनस्य नित्यत्वेऽपि फलध्यानं काम्यमसत्यपि कामे न मन्त्रलोपो मन्त्रस्य नित्याभिमर्शनसाधनत्वात्पाक्षिकलाभाभिप्रायेण विदेयशब्दोपपत्तेरभिमर्शनावृत्तिर्वरुणप्रघासेषु स्वस्यां वेद्यां निधाय वेदवेद्योः संस्कारत्वादभिमर्शनस्य तं तं वेदं तस्यां तस्यां वेद्यां निधाय पर्यायेणाभिमृशति ॥ ६ ॥

सू०दी०—तत्र विदेयेत्येतच्छब्दात्पूर्वं भ्रातृव्यस्य स्वं यद्यद्गोहिरण्याद्यभिध्यायेदिदं मे स्यादिति तस्य नाम गृह्णीयात् । यथा देवदत्तस्य गां विदेयेति । तत्सर्वमेवास्यापाद्त्त इत्याह श्रुतिः । असति तु कामे यथाम्नातो मन्त्रः ॥ ६ ॥

या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्मेति फलीकरणहोमे हुते मुखं विमृष्टे ॥ ७ ॥

भा०वृ०—मुखविमार्गः फलीकरणहोमाङ्गं तेनोपलक्षणात्फलीकरणहोमे हुते मुखं विमृष्ट इति तत्संबन्धावगतेस्तस्मात्सांनाय्यतन्त्रासु निवर्तते । अनुत्कर्षपक्षे पुनः पुनः क्रियते सवनीयानामिति । न ह्येतेषां प्रासङ्गिकं वैशेषिकमुत्कर्षतीत्यस्मिन्पक्षे प्रतिसवनं फलीकरणभेदात्तद्धोमार्थं मुखविमार्गावृत्तिः ॥ ७ ॥

सू०दी०—मुखविमार्गोऽयं फलीकरणहोमसंयोगात्तदङ्गमतोऽनौषधतन्त्रासु निवर्तते ॥ ७ ॥

वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छत्वदो म आगच्छत्विति समिष्टयजुर्हुतमनुमन्त्रयते । यत्कामयते तस्य नाम गृह्णाति ॥ ८ ॥

भा०वृ०—यत्कामयते तस्य नाम गृह्णातीत्यदःशब्दस्थान उत्तरां देवयज्यामाशास्त इति पुनः पुनर्यज्ञप्राप्तेरपेक्षितत्वाद्यज्ञो म आगच्छत्विति निर्देशोऽन्यदपि यत्कामयते तस्य नाम गृह्णाति ॥ ८ ॥

सू०दी०—गतः ॥ ८ ॥

सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति ॥ ९ ॥

भा०वृ०—पुरोडाशभागं प्राश्नातीत्यर्थः ॥ ९ ॥

इति त्रयोदशी कण्डिका ।

---

सू०दी०—गतः ॥ ९ ॥

इति त्रयोदशी कण्डिका ।

---

दधिक्राव्णो अकारिषमिति सायंदोहम् । इदꣳ हविरिति प्रातर्दोहम् ॥ १ ॥

भा०वृ०—इदꣳ हविरिति सौत्रामणीकः स्वाहाकारान्तः । इदꣳ हविरित्येतावानित्युपदेशः । प्रकरणान्तरपाठितत्वाच्चस्येति ॥ १ ॥

सू०दी०—इदꣳ हविरिति सौत्रामणीपठितः स्वाहान्तो मन्त्रः ॥ १ ॥

नाब्राह्मणः सांनाय्यं प्राश्नीयात् ॥ २ ॥

भा०वृ०—सांनाय्येडायाः सांनाय्ययजमानभागस्य च क्षत्रियवैश्ययोः प्रतिषेधः, नाब्राह्मणः सांनाय्यमश्नीयादिति निषेधात्सोमः खलु वै सांनाय्यमिति सोमतुल्यत्वाद्राजन्यवैश्ययोः सोमपानाभावाच्च निवृत्तिः ॥ २ ॥

सू०दी०—क्षत्रियवैश्यौ न सांनाय्येडायजमानभागौ प्राश्नीतः ॥२॥

अन्तर्वेदि प्रणीतास्वध्वर्युः संततामुदकधाराꣳ स्रावयति । सदसि सन्मे भूया इत्यानीयमानायां जपति ॥ ३ ॥

भा०वृ०—स्पष्टम् ॥ ३ ॥

सू०दी०— गतः ॥ ३ ॥

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सिच्य समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पय इत्यन्तर्वेदि शेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति । या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे ॥ ४ ॥

भा०वृ०—स्पष्टम् ॥ ४ ॥

सू०दी०—यथालिङ्गं व्युत्सिच्य तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपः सिक्त्वा ॥ ४ ॥

उभौ कपालविमोचनं जपतः ॥ ५ ॥

भा०वृ०—सहाध्वर्युणा कपालविमोचनं जपति। यानि घर्मेत्यस्याऽऽध्वर्यवे याजमाने च पाठादुभयोः प्राप्तत्वादुभौ कपालविमोचनमिति सहत्वार्थं जपत इत्युभयोश्चातुःस्वर्यार्थमत उभयोः सह मन्त्रप्रयोगः ॥ ५ ॥

सू०दी०—उभयोरप्याध्वर्यवयाजमानकाण्डयोः पाठादिति भावः॥५॥

विष्णोः क्रमोऽसीति दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान्प्राचः क्रामत्युत्तरमुत्तरं ज्यायाꣳसमनतिहरन्सव्यम् ॥ ६ ॥

भा०वृ०—विष्णुक्रमेषु च सव्यं पादं न पुरस्तान्नयत्यनतिहरन्सव्यं दक्षिणेन पादेन चतुरो विष्णुक्रमानिति वचनात्। इतरथा दक्षिणेनेत्यनर्थकमुभयानुवर्तनस्यावश्यंभावित्वात् ॥ ६ ॥

सू०दी०—विष्णुक्रमा नाम तल्लिङ्गमन्त्रविशिष्टाः पदविक्षेपाः। तान्दक्षिणे वेदिसीम्नि क्रामति। तेषु चोत्तरोत्तरं क्रममधिकान्तरालं क्रामति। न च कदाचित्सव्यं पादं पुरस्तान्नयति ॥ ६ ॥

नाऽऽहवनीयमतिक्रामति ॥ ७ ॥

भा०वृ०—न चाऽऽहवनीयमतिक्रामतीति। यत्रापि परतो वेदिर्वरुणप्रघाससाकमेधपितृयज्ञेषु। दर्शपूर्णमासविहारे दक्षिणे वेद्यन्ते प्राचः क्रामन्ननतिहरन्सव्यमिति विधानादाहवनीयातिक्रमणप्राप्त्यभावान्नाऽऽहवनीयमतिक्रामतीति निषेधानर्थक्याद्यत्राऽऽहवनीयात्परतो वेदिर्वरुणप्रघाससाकमेधपितृयज्ञेषु तत्राप्याहवनीयात्पश्चादेव विष्णुक्रमणसमाप्त्यर्थः प्रतिषेधः इति ॥ ७ ॥

सू०दी०—यत्राप्याहवनीयसीम्नः परतो वेदिः सोमपशुचातुर्मास्येषु तत्रापि न तमतिक्रामति ॥ ७ ॥

अवस्थाय चतुर्थं जपति ॥ ८ ॥

भा०वृ०—तूष्णीमवस्थाय चतुर्थविष्णुक्रमजपो न मन्त्रान्तेन क्रमणम् ॥ ८ ॥

सू०दी०—चतुर्थं तु क्रमं तूष्णीं क्रान्त्वाऽवस्थाय ततो मन्त्रं जपति न तु मन्त्रान्ते क्रामतीत्यर्थः। अथवा तृतीयक्रमं क्रान्त्वा तत्रैवावस्थाय चतुर्थं मन्त्रं जपति न तु तेन क्रामतीत्यर्थः। चतुरो विष्णुक्रमानिति तु मन्त्राभिप्रायं द्रष्टव्यम्। कस्मात्। विष्णोः क्रमत्वेनैषां क्रमाणां स्तवनात्तस्य चतुर्थक्रमाभावात्, व्यक्तवचनाच्च बौधायनादिभिः—यथा तृतीये चतुर्थमनुवर्तयति न चतुर्थाय प्रक्रामतीत्यादि॥ ८॥

उक्तः स्वशाखास्थो विष्णुक्रमकल्पः। अथापरौ शाखान्तरीयौ विकल्पौ दर्शयति—

**विष्णुक्रमान्विष्णवतिक्रमानतिमोक्षानिति व्यतिषक्तानेके समामनन्ति। विनिरूढानेके॥ ९॥**

भा०वृ०—व्यतिषक्तेषु विष्णुक्रमेणावस्थाय विष्णवतिक्रमातिमोक्षजपः। व्यतिषक्तानेके समामनन्तीति व्यतिषङ्गः संसर्गः प्रथमं विष्णुक्रमं कृत्वा विष्णवतिक्रमाणां प्रथमं तथाऽतिमोक्षाणां प्रथमं च जपेत्तथा द्वितीयं विष्णुक्रमं कृत्वा द्वितीयविष्णवतिक्रमातिमोक्षजपस्तथा तृतीये तूष्णीं चतुर्थं विष्णुक्रमेणाऽऽवस्थाय तन्मन्त्रजप एष विष्णुक्रमविष्णवतिक्रमातिमोक्षाणां व्यतिषङ्गपक्षः। विनिरूढपक्षस्यैवं प्रयोगः—अव्यवधानेन विष्णुक्रमचतुष्टयं कृत्वा विष्णवतिक्रमत्रयमतिमोक्षत्रयं च जपेद्विष्णवतिक्रमातिमोक्षाणां देशान्तरविधानाभावादन्त्यविष्णुक्रमदेश एव स्थित्वा तेषां जपस्तदाह—विष्णुक्रमेणावस्थाय विष्णवतिक्रमातिमोक्षजप इति। उत्तरे विहारे विष्णुक्रमाद्यवेदिसंस्कारत्वाद्वरुणप्रघासेष्विति वेद्यां विष्णुक्रमादिकरणेऽपि न वेदिसंस्कारार्थता। विष्णुरेव भूत्वा यजमान इति वाक्यशेषाद्यजमानसंस्कारत्वम्। तस्मादुत्तरे विहारे वरुणप्रघासेषु तस्य मुख्यत्वादन्यतरसंबन्धिनां तत्रैव युक्तत्वादवेदिसंस्कारत्वादिति भाष्यकारेण वेदिसंस्कारनिषेधाद्वेद्यां दक्षिणतो विष्णुक्रमादि न बहिर्वेदीति सिद्धम्॥ ९॥

सू० दी०—अयमर्थः—प्राकृते याजमानकाण्डे त्रीनेतानेकेऽधीयते व्यतिषक्तांश्च तान्यथा प्रथमं विष्णुक्रमपर्यायमुक्त्वाऽथ विष्णवतिक्रमातिमोक्षाणामाद्यौ पर्यायौ ततो द्वितीयमुक्त्वा तेषामपि द्विती-

यावित्यादि । अन्ये तु त्रीनेतानधीयाना विनिरूढानन्योन्यमसंकीर्णानधीयते । यथा समाप्य विष्णुक्रमांस्ततो विष्णवतिक्रमांस्ततोऽतिमोक्षानिति । तदेवमेते पूर्वेण केवलविष्णुक्रमकल्पेन सह त्रयः कल्पा उक्ता भवन्ति । केचित्तु विष्णुक्रमवद्विष्णवतिक्रमातिमोक्षानपि नित्यानिष्ट्वा तेषां व्यतिषङ्गाव्यतिषङ्गमात्रविकल्पमेनमिच्छन्ति । तदयुक्तं विष्णुक्रमवत्तेषां स्वरूपस्यान्यतोऽसिद्धेः । न तावदेषां श्रुतितः सिद्धिः । दर्शपूर्णमासमन्त्रब्राह्मणप्रकरणयोः केवलविष्णुक्रमाणामाम्नानात् । सूत्रेऽपि त एवानन्तरं नित्यवद्विहिता अनुदितास्थ प्रदेशान्तरेषु यथा—पूर्णपात्रं निनयति विष्णुक्रमान्क्रामतीत्यादि । कल्पान्तरेष्वनुपात्ता एव विष्णवतिक्रमादय इति न कुतश्चिदप्येषां स्वरूपसिद्धिं पश्यामः । तस्माद्व्यतिषङ्गादिविशिष्टस्वरूपमेवैषामत्र विकल्पत इति सूक्तमिति । अस्ति केवलो विष्णुक्रमकल्प इति ॥ ९ ॥

**अग्निना देवेन पृतना जयामीति विष्णवतिक्रमाः । ये देवा यज्ञहन इत्यतिमोक्षाः ॥ १० ॥**

भा० वृ०—स्पष्टम् ॥ १० ॥

सू०दी०—गतः ॥ १० ॥

**अगन्म सुवः सुवरगन्मेत्यादित्यमुपातिष्ठते ॥ ११ ॥**

भा० वृ०—उत्तरसूत्रे व्याख्यास्यते ॥ ११ ॥

इति चतुर्दशी कण्डिका ।

---

सू०दी०—गतः ॥ ११ ॥

इति चतुर्दशी कण्डिका ।

---

**उदप्तथं मित्रमहः सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि निम्रोचन्नधरान्कधि । उद्यन्नय वि**

नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणꣳ रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम् । यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक् च सर्वं पापꣳ समूहतामिति च ॥ १ ॥

भा० वृ०— आत्मसंस्कार एवाऽऽदित्योपस्थानं पुत्रनामग्रहणं च तेषामकर्माङ्गत्वादुपस्थानस्य कर्तृसंस्कारत्वसंभवात्पुत्रनामग्रहणं चाऽऽत्मसंबन्धित्वादात्मसंस्कारः ॥ १ ॥

सू०दी०—व्याख्यातः पूर्वेणाऽऽदित्योपस्थानेन ॥ १ ॥

ऐन्द्रीमावृतमन्वावर्त इति प्रदक्षिणमावर्तते ॥ २ ॥

भा० वृ०—स्पष्टम् ॥ २ ॥

सू०दी०—गतः ॥ २ ॥

यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयात् ॥ ३ ॥

भा०वृ०—आमुष्यायणग्रहणेन गोत्रतद्धितेनाभिधानम् । यद्यभिचरेदिदमहमित्यत्रेदमहं देवदत्तस्य गार्ग्यस्येति यत्र त्वन्यदामुष्यायणं तत्र तेनैव यथा वात्स्यस्य प्राणमिति । यथा वैश्यानामिदमहं देवदत्तस्य वात्स्यस्य प्राणं निवेष्टयामीति तेषां प्रातिस्विकगोत्राभावादाचार्यामुष्यायणमनुप्रब्रवीताऽऽचार्यप्रवरं वृणीतेऽतिप्रवरमामुष्यायणात्पृथग्भूतं दर्शयत्यामुष्यायणग्रहणेऽपि पितुर्नामेति हिरण्यकेशिनो देवदत्तस्य याज्ञदत्तेः प्राणं निवेष्टयामीति " जीवति

तु वंश्ये युवा " इति युवप्रत्ययः । यथा गार्ग्यायणस्येति ॥३॥

सू०दी०—आमुष्यायणस्येति गोत्रनिर्देशः । यथा देवदत्तस्य गौतमस्येत्यादि । बबरः प्रावाहणिरित्यादिवत्पितृनिर्देश इत्यन्ये । निमृद्रीयाद्भ्रातृव्यं पीड्यमानं बुद्ध्वा पार्ष्ण्या भूमिं निपीडयेत् ॥ ३ ॥

पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरित्युक्त्वा समहं प्रजया सं मया प्रजेति पुनरुपावर्तते ॥ ४ ॥

भा०वृ०—पुनः प्रसव्यमावर्तत इत्यर्थः ॥ ४ ॥

सू०दी०—स्वस्ति पुनरागच्छतीत्यादिवत्प्रतिनिवृत्तिवचनः पुनःशब्दः । पुनरुपावर्तते प्रसव्य आवर्तत इत्यर्थः । तथोदक्पर्यावर्तते समहं प्रजयेति बौधायनः ॥ ४ ॥

समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याहवनीयमुपसमिन्धे वसुमान्यज्ञो वसीयान्भूयासमित्युपतिष्ठते ॥ ५ ॥

भा०वृ०—वरुणप्रघासेषु समिन्धनावृत्तिराहवनीयभेदात्पृथगवस्थानादिति तन्त्रेणोपस्थानम् ॥ ५ ॥

इति पञ्चदशी कण्डिका ।

---

सू०दी०—गतः ॥ ५ ॥

इति पञ्चदशी कण्डिका ।

---

यो नः सपत्नो योऽरणो मर्तोऽभिदासति देवाः ।

इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंच-
नेति च ॥ १ ॥

भा०वृ०—गतार्थः ॥ १ ॥

सू०दी०—गतः ॥ १ ॥

अग्न आयूꣳषि पवस इत्याग्निपावमानीभ्यां गार्हप-
त्यमुपतिष्ठते । अग्ने गृहपत इति च ॥ २ ॥

भा०वृ०—गतार्थः ॥ २ ॥

सू०दी०—अग्ने गृहपत इति मन्त्रः शतꣳ हिमा इत्यन्तः । गतः शेषः ॥ २ ॥

पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव
इत्यजातस्य । अमुष्मा इति जातस्य ॥ ३ ॥

भा०वृ०—अजातो मृतोऽपीति तन्तव इत्यजातस्येत्यजातग्रहणम् । अमुष्मै ज्योतिष्मतीमिति प्रतिपुत्रमात्रतया पुत्राभावमात्रपरत्वान्मृतपुत्रस्याप्युपलक्षणमत उभयोस्तामाशिषमाशासे तन्तव इति । जीवत्पुत्रभेद आवृत्तिः ॥ ३ ॥

सू०दी०—द्वे एते यजुषी जाताजातयोः पुत्रयोर्नामग्रहणार्थे । तयोः प्रथमेन प्रथममजातस्य पुत्रस्य नाम गृह्णाति तन्तव इति परोक्षनाम्ना । तच्च तज्जन्मार्थं तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायत इति श्रुतेः । अथ द्वितीयेन यजुषा जातस्य नाम गृह्णाति, अमुष्मा इति तदीयनाम्ना । तच्च तत्समृद्ध्यर्थं तेज एवास्मिन्ब्रह्मवर्चसं दधातीति श्रुतेः । तेन जातस्यापि मृतस्य पुत्रस्य न नाम गृह्णाति । तदेवं पुत्रवतो नामग्रहणद्वयं भवति । तद्यथा तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासे देवदत्ताय ज्योतिष्मतीमिति । अपुत्रस्य तु प्रथममेव द्वितीयस्यासंभवात् । पुत्रवतोऽपि द्वितीयमेव न प्रथममिति केचित् । तदयुक्तं तन्तव इत्यजातस्येत्यविशेषोक्तेर्भविष्यत्पुत्रार्थं पुत्रवतोऽपि तदनिवार-

णात्, अजातपुत्रस्येत्यवचनाच्च । व्यक्तोक्तश्च समुच्चयो बौधा-यनेन तामाशिषमाशासेऽमुष्मा अमुष्मा इति । यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्तत इति । बहुपुत्रत्वे तु स्वस्थान-विवृद्ध्या नाम्नां ग्रहणं न त्वभ्यावृत्त्या । यथोक्तं सत्याषाढेन– बहुपुत्रः सर्वेषां पुत्राणां नामान्यनुद्रुत्य ज्योतिष्मतीमित्यन्ततोऽत्र-दधातीति । अन्यथा तामाशिषमाशासे रुद्राय सूर्याय विष्णवे ज्योतिष्मतीमिति । अकृतनाम्नस्तु नक्षत्रनाम ग्राह्यम् । नैत्र ग्राह्यं पुत्र्याः, पुत्रस्येति वचनात् ॥ ३ ॥

**ज्योतिषे तन्तवे त्वाऽसावनु मा तन्वच्छिन्नो दैव्यस्त-न्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति ॥ ४ ॥**

भा०वृ०—देवदत्तानु मा तन्वच्छिन्न इत्यामन्त्रणेन नामधेयग्रहण-मामन्त्रितविभक्त्या । अकृतनाम्नो नक्षत्रनाम ग्राह्यम् । प्रिय-पुत्राभावे ज्योतिषे तन्तवे त्वेति सर्वस्य मन्त्रस्य लोपो मानु-षान्तस्य ॥ ४ ॥

सू०दी०—असाविति संबुद्ध्या नामग्रहणम् । प्रियपुत्रस्येति वचना-ज्जाताजातविभागवचनाच्चाप्रियपुत्रस्यापुत्रस्य च कृत्स्नमन्त्रस्य लोपः । बहुपुत्रस्य चाभ्यावृत्तिः । अनु मा तन्वच्छिन्न इत्येक-वचनादूहप्रतिषेधाच्च ॥ ४ ॥

**अग्ने वह्वे स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योन इति दक्षिणाग्निम् ॥ ५ ॥**

भा०वृ०—स्पष्टम् ॥ ५ ॥

सू०दी०—उपतिष्ठत इति शेषः ॥ ५ ॥

**पूर्ववन्नामग्रहणम् ॥ ६ ॥**

भा०वृ०—स एव मन्त्रः । पूर्ववन्नामग्रहणमिति वचनाज्ज्योतिषे तन्तवे त्वाऽसावनु मेत्यादिमानुषान्तः ॥ ६ ॥

सू०दी०—व्याख्यातः पूर्वतरेण ॥ ६ ॥

ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति ॥ ७ ॥

भा०वृ०—उपवेशनेऽपि पुनर्ज्योतिषे तन्तवे त्वेति यावदुक्तम् ॥७॥

सू०दी०—गतः ॥ ७ ॥

ज्योतिरसि तन्तव इत्युपविश्य जपति ॥ ८ ॥

भा०वृ०—ज्योतिरसि तन्तव इत्यस्यापि लोपः प्रियपुत्राभावे । मध्यमपुरुषाभिधानात् । अतः प्रतिपुत्रमावर्तते ॥ ८ ॥

सू०दी०—उपविश्य जपस्यापि लोपोऽपुत्रस्य मध्यमपुरुषविरोधात् ॥ ८ ॥

वेदमुपस्थ आधायान्तर्वेद्यासीनोऽतिमोक्षाञ्जपति ॥ ९ ॥

भा०वृ०—स्तीर्णेऽपि वेद उपस्थ आधाने न निवर्तते वेदतृणान्युपस्थ आधायेति हिरण्यकेशिमतात् ॥ ९ ॥

सू०दी०—वेदाधानमुपरिष्टाद्वेदास्तरणपक्षाश्रयणेनोक्तमन्यत्र स्तीर्णत्वाद्वेदस्य । आश्वलायनेन तु पूर्वत्रैव स्तरण उक्तं शेषं निधायेति । सत्याषाढस्त्वाह वेदतृणान्युपस्थ आधायेति ॥ ९ ॥

अत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति ॥ १० ॥

भा०वृ०—वेदस्तरणयजमानभागप्राशने अन्योन्यसंबन्धे इति अत्र वा वेदस्तरणं यजमानभागस्य च प्राशनमित्यस्मिन्कालेऽनुष्ठानपक्ष उभयं सहैव कर्तव्यं नान्यतरस्य कालान्तरेऽनुष्ठानमत्र वा यजमानभागं प्राश्नीयादित्यत्र वाशब्दग्रहणात् ॥ १० ॥

सू०दी०—यदा त्वत्र तदा सहैवोभयोरुत्कर्षो नान्यतरस्य ॥ १० ॥

कस्त्वा युनक्ति स त्वा मुञ्चत्विति यज्ञं विमुञ्चति ॥ ११ ॥

भा०वृ०—यज्ञविमोको मन्त्रेणैव स त्वा विमुञ्चत्वितिमन्त्रोच्चारणेनैव विमोकः। केचित्त्वत्रेक्षन्ते विहारं योगे तथादृष्टत्वात्॥ ११॥

सू०दी०—मन्त्रोच्चारणमेव विमोकः॥ ११॥

अग्ने व्रतपते व्रतमचारिषमिति व्रतं विसृजते॥ १२॥

भा०वृ०—यथोपेतं तथा व्रतविसर्गः। य एवमामन्त्रितश्चरिष्यामीति तस्यैव युक्तं चरितं मयेत्येवमाख्यातुमिति। यो यद्देवतासंबन्धमुपैति स तत्तद्देवतासंबन्धेनैव विसृजेदिति केचित्सर्वमन्त्रानिह विभागाकरणादग्ने व्रतपते व्रतमचारिषमिति प्रदर्शनार्थत्वात्। विसर्गस्यापि निवृत्तिर्व्रतोपायनाभावे सोमे प्रायणीयादिषु व्रतानां विद्यमानत्वात्सोमे यावदवभृथम्। केचित्तु प्रथमेनैव व्रतविसर्गः। सर्वेषामेकस्यैव पाठात्॥ १२॥

सू०दी०—यैर्यजुर्भिः प्राग्व्रतमुपेतं तैरेव विसृजते। विकारमात्रेण विशेषः॥ १२॥

यज्ञो बभूवेति यज्ञस्य पुनरालम्भं जपति॥ १३॥

भा०वृ०—यज्ञो बभूवेति पुनरालम्भार्थत्वाद्यत्र विरमणं दर्शपूर्णमासयोस्तत्रान्ते लोपो यज्ञो बभूवेत्यस्य। यस्याश्च विकृतेरनिष्टः पुनःपुनः प्रयोगो यथा प्रायश्चित्तार्थायाः पाथिकृत्यादेर्न तत्र च पुनरालम्भमन्त्रः॥ १३॥

सू०दी०—विकृतावपि यत्र पुनः क्रियेष्टा तत्रैव पुनरालम्भस्य जपोऽन्वर्थत्वाद्यथा पश्चाग्रयणादिषु॥ १३॥

गोमानिति प्राङुदेत्य गोमतीं जपति॥ १४॥

भा०वृ०—प्राङुदेत्य पुरो गत्वा गोमतीजपः॥ १४॥

सू०दी०—सर्वेष्टिपशुषु नित्यो गोमतीजपः॥ १४॥

अत्र वा यजमानभागं प्राश्नीयात्॥ १५॥

भा०वृ०—स्पष्टम्॥ १५॥

सू०दी०—गतः ॥ १५ ॥

यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति दर्शपूर्णमासाभ्याꣳ सोमेन पशुना वेष्ट्वा जपति ॥ १६ ॥

भा०वृ०—पुनर्दर्शपूर्णमासग्रहणान्न विकृतिषु यज्ञ शं च म इति । इतरथा विकृतावप्यनुष्ठाने दर्शपूर्णमासग्रहणमनर्थकं सोमे वृष्टिरसीत्यस्य पुरस्तात्पशौ तु पुनर्वचनं क्रमार्थमिह सोमेन पशुना वेष्ट्वेति सिद्धे पशौ नियमः । आशासानः सुवीर्यमिति चोपस्थाय यज्ञ शं च म इति जपतीति वचनं यज्ञ शं च मात्पूर्वं यूपोपस्थानार्थम् । सर्वत्र कुर्वन्त्युपदेशेनेति । सर्वत्र विकृतिष्वपि कुर्वन्ति प्राप्तत्वात्तदिह पशौ विधानमन्यस्य प्राकृतस्य याजमानस्य निवृत्त्यर्थम् । दर्शपूर्णमासविकारत्वादेव पशौ सिद्ध इह पशौ विधानमितरयाजमानपरिसंख्यानार्थम् । दर्शपूर्णमासग्रहणमनुवादमात्रम् । बौधायनमतिश्च पशौ विधानं क्रमार्थमेव यूपोपस्थानस्यातः प्राकृतमपि विकल्पेन याजमानं क्रियते । पशौ व्याख्यानभेदेन पक्षद्वयसिद्धेः ॥ १६ ॥

सू०दी०—अधिकारादेव सिद्धेः पुनर्दर्शपूर्णमासग्रहणं तद्विकारेषु मा भूदिति ॥ १६ ॥

वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामिति ष्ट्वाऽप उपस्पृशति । तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ॥ १७ ॥

भा०वृ०—वृष्टेरेष कालः इष्टिप्रकृतीनां न परतो ब्राह्मणभोजनादूर्ध्वं यज्ञ शं च मानन्तरं प्रयोगः । इष्ट्वा वेतिवचनात्पौर्णमासे दर्शे चाऽऽवृत्तिरितरथा दर्शान्ते स्याद्वक्ष्यमाणो वेष्ट्वा वेति तन्त्रसमाप्तेः कालभेदेन प्रयोगभेदात्प्रतिप्रयोगमावृत्त्यर्थमिष्ट्वेति वचनमितरथैकाधिकारसाधनत्वादुभयोरन्ते स्याद्वक्ष्यमाणो वेष्ट्वा वेति तत्राधिकारसाधनभूतकृत्स्नयागसमाप्तेः । सोमेष्टीनां सोमार्थ-

विद्युद्वृष्ट्योः प्रसङ्गः सर्वयज्ञेषु दर्विहोमेष्वित्युपदेशः । यज्ञशब्दस्य स्वतो यागेष्वेव प्रवृत्तत्वात् ॥ १७ ॥

सू०दी०—ग्रन्थोऽयं विद्युदसीत्यादिना व्याख्यातः ॥ १७ ॥

**ब्राह्मणाःस्तर्पयितवा इति संप्रेष्यति ॥ १८ ॥**

भा०वृ०—यज्ञतृप्त्यर्थं ब्राह्मणभोजनं वाजसनेयिश्रुतेः । यज्ञतृप्तिर्यज्ञसाकल्यम् ॥ १८ ॥

सू०दी०-ऋत्विजः संनिधानात्तांस्तर्पयितवै तर्पयत भोजनादिभिः । तेषां च तर्पणं यज्ञसमृद्ध्यर्थं यज्ञमेव तर्पयाति, इति वाजसनेयिश्रुतेः ॥ १८ ॥

**प्रवसन्काले विहारमभिमुखो याजमानं जपति ॥ १९ ॥**

भा०वृ०—प्रवसन्याजमानं पूर्वेद्युः पूर्वेद्युःकालमुत्तरेद्युरुत्तरेद्युःकालम् । अन्यत्र सूत्रे यथाकालवचनात्पुरुषानियमश्च प्रवसतोऽपि ब्रह्मचर्यादि भोजनं च मन्त्रेण । प्रवसतोऽपि तत्पुरुषाश्रयमिति पुरुषसंस्कारद्वारेण क्रत्वर्थम् । परार्थानामों निर्वपेत्येवमादीनामकरणं पुरोडाशाभिमर्शनादीनां च जप एवाऽऽदित्योपस्थानादीनां च प्रवसतोऽपि संभवतामपि जप एव वचनाद्यथेतरेषामभिधेयाभावे प्रयोग एवमारोह पथो जुहु देवयानानिति । एवमादीनां जुह्वादिसंनिधानाभावेऽपि यथा जप एवमभिमर्शनादीनाम् । संस्पर्शकर्माणि तु भारद्वाजेनाध्वर्योर्बद्धानि क्रत्वर्थानि मन्त्रवत्कार्याण्यथवा संस्पर्शकर्माण्यासन्नाभिमर्शनादीनि ॥ १९ ॥

सू०दी०—प्रवसन्देशान्तरे वसन् स्वे स्वे काल औपवसथ्येऽहानि यजनीये च विहारदेशमभिमुखो याजमानाध्वर्यवकाण्डोक्तान्सर्वानपि याजमानमन्त्राञ्जपति । तदीयानि तु कर्माण्यध्वर्युः करोति । तथा च भारद्वाजादयः—यानि संस्पृश्य कर्माण्यध्वर्युस्तानि कुर्यादिति । यानि तु संभवन्ति तानि स्वयमेव तत्र कुर्यात् । यथाऽपामुपस्पर्शनमादित्योपस्थानमित्यादि ॥ १९ ॥

**प्राचो विष्णुक्रमान्क्रामति ॥ २० ॥**

भा०वृ०—गोमतीविष्णुक्रमाणां तु क्रियावचनादिति समन्त्रकक्रियानुष्ठानं नित्यं न तु जपमात्रम् । केचित्त्वनाशिषामकरणानां

च प्रयोगोऽन्येषामप्यप्रयोगः । अवचनाद्वीप्सायाः प्रतिपद्येव याजमानमित्युपदेश इति प्रवसन्काले काल इति वीप्साया अवचनान्मुख्यानुष्ठानकाल एव प्रवसद्याजमानम् ॥ २० ॥

सू०दी०—दक्षिणवेद्यन्तालाभान्मा लोपिषत विष्णुक्रमाः । प्राञ्चो विहाराभिमुखाः क्रमिष्यन्त इत्यारम्भः ॥ २० ॥

प्राङुदेत्य गोमतीं जपति जपति ॥ २१ ॥

भा०वृ०—प्राक्त्वविधानं विष्णुक्रमगोमत्योर्विहाराभिमुखक्रिया मा भूदिति ॥ २१ ॥

इति षोडशी कण्डिका ।

इति चतुर्थः पटलः ।

इति श्रीमत्कौशिकेनाग्निचिता रामेण रचितायामापस्तम्बसूत्रधूर्तस्वामिकृतभाष्यवृत्तौ चतुर्थः प्रश्नः ।

समाप्तश्चतुर्थः प्रश्नः ।

---

सू०दी०—प्राङुदेत्य ततो विहाराभिमुख एव स्थितो जपति॥२१॥

इति षोडशी कण्डिका ।

---

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां चतुर्थः पटलः ।

---

इति चतुर्थः प्रश्नः ।

# अथाऽऽपस्तम्बदर्शपूर्णमासप्रयोगः ।

---

**यजमानः**—अन्वाधानदिने प्रातरग्निहोत्रं हुत्वा कृतक्षौरो विहाराद्बहिरीशान्यां प्राङ्मुखो यज्ञोपवीती द्विराचम्य गार्हपत्यस्य पश्चाद्दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिः पत्न्या सह प्राणानायम्य देशकालाद्यनुकीर्त्य ..

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शेन यक्ष्ये ।**
इति संकल्प्य ( **पूर्णमासेन यक्ष्ये**–इति पौर्णमास्यां संकल्प्य )
**विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि** । इत्युपस्पृश्य
**अस्यां दर्शेष्ट्यामध्वर्युं त्वामहं वृणे** ( **पूर्णमासेष्ट्याम्**—इति पूर्णिमायाम् ) इत्यध्वर्युं वृत्वैवमेव ब्रह्माणं होतारमाग्नीध्रं च वृणुयात् ।

---

१ पुरुषार्थयज्ञोपवीते सत्यपि दर्शपूर्णमासाङ्गतया प्राप्तं कर्मार्थं वस्त्रस्य यज्ञोपवीतमवश्यं संपादनीयम् । तदेवाऽऽम्नायते—" निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते " तै० सं० २ । ५ । ११ । इत्यत्र " कुरुते " इत्यनेनोपवीतं विहितम् । भाष्यकारा अप्येतदेव तैत्तिरीयसंहितायां प्रथमकाण्डीयप्रथमानुवाके बभाषिरे । " पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयते । " कुरुते, इति ' लिङर्थे लेट् ' पा० ३–४–७ । इति सूत्रासिद्धः । तदुक्तं भट्टपादैः—" पञ्चमेन लकारेण विध्यर्थश्छन्दासि स्मृतः " तं० वा० १।३।१०।
२ अत्राऽऽचमनं तु तैत्तिरीयारण्यके श्रूयमाणमेव कार्यम् । न च तत्र श्रूयमाणमाचमनं ब्रह्मयज्ञप्रकरणे विद्यमानं कथमन्यत्राऽऽक्रष्टुं शक्यमिति वाच्यम् । भट्टपादैरेवास्याः शङ्काया निवारितत्वात् । एवं हि ते तन्त्रवार्तिके वार्तिकयांबभूवुः । " तथाऽऽचमनविधिरपि दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुख उपविश्य स्वाध्यायमधीयीतेति यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते तथाऽपि वेदोच्चारणसंबन्धात्तदङ्गत्वेनाधिगतावज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात्तदङ्गं भवति " इति । तदाचमनं त्वेवम्—" हस्तावनिज्य, त्रिराचम्य, द्विः परिमृज्य, सकृदुपस्पृश्य, सव्यं पाणिं पादौ च प्रोक्ष्य, शिरः, चक्षुषी, नासिके, श्रोत्रे, हृदयमेतानि क्रमेणाऽऽलभ्याप उपस्पृशेत् " ।

अध्वर्युः—वृतोऽस्मि कर्म करिष्यामि ।

इति ब्रूयादेवमेव वृता ब्रूयुः । ततो गार्हपत्यादाहवनीयार्थं ज्वलन्तमग्निमुद्धृत्य दक्षिणाग्निं यथायोनि प्रणीयाऽऽहवनीयं च प्रणीय विहारस्योत्तरत उपविश्य

देवा गातुविदो गातुं यज्ञाय विन्दत ।

मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् । इति जपित्वा

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम ।

मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम ।

इत्याहवनीयं महद्भिर्यज्ञियकाष्ठैः प्रज्वालयेत् ।

यजमानः—अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने ।

आदित्यं ज्योतिषां ज्योतिरुत्तमं१ श्वो यज्ञाय रमतां देवताभ्यः ।

वसून्रुद्रानादित्यानिन्द्रेण सह देवताः ।

ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ।

इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः ।

---

१ अग्निं गृह्णामीत्यस्या ऋचः सद्यस्कालायां पौर्णमास्यां लोपः कार्यः । श्वो यज्ञायेति श्वःशब्दघटितत्वात् । ननु श्वःशब्दस्य स्थाने "अद्य यज्ञाय रमताम्" इति ब्रूम इति चेन्न, सूत्रकारेणैवोहप्रतिषेधस्योक्तत्वात् । "न प्रकृतावूहो विद्यते" आप० प० सू० ३ । ४८ । सूत्रार्थः—अध्ययनविध्यधीतानां मन्त्रवाक्यानां स्वाध्यायपाठावधृतस्वरूपाणामर्थवशाद्रूपान्तरकरणमूहः । स प्रकृतौ न विद्यते न क्रियते । प्रकृतौ मन्त्रा यत्राभिधातुं समर्थास्तत्र नेति । विकृतिषु अद्य यज्ञायेत्यूहः कार्यः । २ इमामूर्जमित्यस्या अप्यृचः सद्यस्कालायां पौर्णमास्याममावास्यायां संनयतोऽप्यसंनयतोऽप्येवमेव लोपः कार्यः पूर्वोक्तन्यायात् । पञ्चदशीमिति लिङ्गविरोधोऽपि स्पष्ट एव । यदा त्वल्पाऽपि पञ्चदशी स्यात्तदा न लोपः । विकृतिषु तु इमामूर्जं प्रथमामित्यूहः कार्यः ।

अग्निर्हव्यवाडिह तानावहत्वामावास्यꣳ हविरिदमेषां मयि ।[1]
इत्याहवनीयेऽन्वाधीयमाने जपित्वा ।

अन्तराग्नी पशवो देवसꣳसदमागमन् ।
तान्पूर्वः परिगृह्णामि स्व आयतने मनीषया ।
इत्यन्तराऽग्नी तिष्ठञ्जपेत् ।

अध्वर्युः—मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरुगोपमस्तु मह्यं वातः पवतां कामे अस्मिन् ।
इति गार्हपत्यं महद्भिर्यज्ञियैः काष्ठैः प्रज्वालयेत् ।

यजमानः—इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः ।
ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ।
इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः ।
तान्पूर्वः परिगृह्णामि स्व आयतने मनीषया ।
इति गार्हपत्यमन्वाधीयमानमुपतिष्ठेत ।

अध्वर्युः—मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारावनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः ।
इति दक्षिणाग्निं महद्भिर्यज्ञियैः काष्ठैः प्रज्वालयेत् ।

यजमानः—अयं पितृणामग्निरवाड्ढव्या पितृभ्य आ ।
तं पूर्वः परिगृह्णाम्यविषं नः पितुं करत् ।
इत्यन्वाहार्यपचनमन्वाधीयमानमुपस्थाय विहारस्योत्तरत उपविश्य
इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि ।
इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि ।
इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमि ।
इत्यन्वाहितेषु जपेत् ।

---

१ पौर्णमासꣳ हविरिदमेषां मयि, इति पौर्णमास्याम् । विकृतिषु तु आग्रयणीयꣳ हविः, इत्यादिनामवतीष्विष्टिषु तेन तेन नाम्नोपलक्षणं कर्मणः कार्यम् ।

अध्वर्युः—इषे त्वोर्जे त्वा, इति पलाशशाखां शमीशाखां वा छित्वाऽप
उपस्पृश्य

इमां प्राचीमुदीचीमिषमूर्जमभिसꣳस्कृताम् ।
बहुपर्णामशुष्काग्राꣳ हरामि पशुपामहम् । इति शाखामाहरेत् ।

यजमानः—पयस्वतीरोषधयः पयस्वद्वीरुधां पयः ।
अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज ॥

इत्यप आचम्य पुनः शुद्ध्यर्थमाचम्य, आहिताग्निरपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य दक्षिणेनाऽऽहवनीयमुदङ्मुखोऽवस्थाय व्रतमुपैष्यन्त्समुद्रं मनसा ध्यात्वाऽग्नीन्देवानाभिसंधाय ( व्रतꣳ समुद्र तदुपैष्यामि, इति )

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
वायो व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
आदित्य व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
इति जपित्वा

सम्राडसि व्रतपा असि व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासम् । इत्यादित्यमुपतिष्ठेत ।

अध्वर्युः—वायवः स्थोपायवः स्थ, इति तया षडवराध्यान्वत्सानपाकृत्य
देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या महेन्द्राय देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशꣳसः ॥ इति गोचराय गाः प्रस्थाप्य

---

१ असोमयाजिनोऽमावास्यायां पौर्णमास्यां च शाखाछेदनादिशाखोपगूहनान्तं कर्म न कार्यं सांनाय्याभावात् ।

सोमयाजिनः पौर्णमास्यां शाखाच्छेदनादिशाखोपगूहनान्तं कर्म न कार्यम् । पौर्णमास्यां सांनाय्याभावात् ।

२ असोमयाजिनाऽमावास्यायां पयस्वतीरित्यारभ्याऽऽदित्योपस्थानान्तं कर्म " आदित्येभ्यो यज्ञं प्रब्रवीमि " इतिजपानन्तरं कार्यम् ।

शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः ।
रुद्रस्य हेतिः परि वो वृणक्तु । इति प्रस्थिता अनुमन्त्र्य
ध्रुवा अस्मिन्गोपतौ स्यात बह्वीः । इति यजमानगृहानभ्येत्य
यजमानस्य पशून्पाहि, इति पुरस्तात्प्रतीचीं पश्चात्प्राचीं वा शाखामुपगूह्य
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ।
इत्युत्तरेण गार्हपत्यं निहितमसिदमश्वपर्शुं वाऽऽदाय
यज्ञस्य घोषदसि, इति गार्हपत्यमभिमन्त्र्य
प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ।
इति गार्हपत्येऽसिदं प्रतितप्यासिदं कमण्डलुं चाऽऽदाय
प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति
कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे । उर्वन्तरिक्षमन्विहि ।
इति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरेत्तद्यथा—

---

१ महेन्द्रयाजिनोऽपि शतं महेन्द्रायेति न वक्तव्यम् । शतसंवत्सरसंबन्धिदोहनाभिधानेनाऽऽवर्तमानप्रयोगनिर्देशस्यासमवेताभिधायित्वात् । २ अनसोऽन्यागारस्य वाऽप्रत्यगग्राम् । ३ अनसः पुरस्तादन्यागारस्य वा परतो वा प्रागग्राम् । ४ अश्वपर्शोः प्रतितपनं नास्ति । न पर्शुमिति सूत्रात् १ । ३ । ४ । आ० श्रौ० सू० ५ मन्त्रपूर्वकमेव सर्वं बर्हिराहर्तव्यम् । इति मुख्यः पक्षः । गौणपक्षस्तु, यत्र यत्र मन्त्रपूर्वकक्रियाया असंभवस्तत्र तत्र लौकिकरीत्या तां क्रियां संपाद्य पश्चान्मन्त्राः प्रयोक्तव्या इति । संभवन्ती क्रियाऽपि तत्र कार्या । तया हि संस्कृतं द्रव्यं यज्ञियं भवति । तथा च भारद्वाजोऽप्याह—"छिन्ने छेदनमन्त्रा लूने लवनमन्त्रा दुग्धे दोहनमन्त्राः पिष्टे पेषणमन्त्राः, इति । कात्यायनोऽपीममेवार्थं कल्पयांबभूव—"खातलूनच्छिन्नावहतपिष्टदुग्धदग्धेषु यजुष्क्रियासंभवात्"

कर्कः—सूत्रार्थस्तु खाते यूपावटे, लूने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु, पिष्टेषु तण्डुलेषु, दुग्धे पयसि दग्धे महावीरे । तत्र यजुष्क्रिया, कुत एतद्द्वाराभावात् । क्रियाद्वारको मन्त्र इति । एतच्चासंभवविषय एव द्रष्टव्यम् ।

याज्ञिकाः—एतेषु यूपावटादिषु लोकसिद्धेष्वपि गृहीतेष्वपि यजुष्क्रिया यजुर्युक्ता क्रिया यथाकथंचित्कर्तव्या । कुतः ? संभवात् । संभवति हि यथाकथंचिद्यजुष्क्रिया । अथवा, असंभवादिति सूत्रच्छेदः । अन्यस्याः क्रियायाः कर्ममध्येऽसंभवात् । यदा च पशौ यूपाहरणार्थं संनिकृष्टेऽलाभाद्देशान्तरे विप्रकृष्टे गम्यते तदा प्रधानकालविरोधो भवति यदा चैकदीक्षापक्षस्तदा महावीरोखादिकमेकेनाह्ना निष्पादयितुं न शक्यत इत्याहुः ।

देवानां परिषूतमसि वर्षवृद्धमसि, इति यावदलं परिगृह्य
अतिसृष्टो गवां भागः । इत्येकां द्वे तिस्रो वा नाडीरुत्सृज्याप उप-
स्पृश्य, इदं देवानाम्, इति परिगृहीतानभिमृश्य
इदं पशूनाम्, इत्यतिसृष्टानभिमृश्य
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
बर्हिर्देवसदनमारभे । इति विशाखेषु दर्भान् संस्पृश्य
देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यक्, इति सव्यहस्तेन बर्हिर्गृहीत्वा
पर्व ते राध्यासम्, इत्यसिदं पर्वण्यभिनिधाय
आच्छेत्ता ते मा रिषम्, इति संनखं मुष्टिं लुत्वाऽप उपस्पृश्य
पृथिव्याः संपृचः पाहि, इत्यनधो निदध्यात् । स प्रस्तरः । देवस्य
त्वेत्यादि पृथिव्याः संपृचः पाहीत्यन्तं त्रिरावर्तयेत् । तदेकं निधनमेवं
त्रीणि निधनानि लुत्वा

देवबर्हिः शतवल्शं विरोह, इत्यालवानभिमृश्य
सहस्रवल्शा वि वयं रुहेम, इत्यात्मानं प्रत्यभिमृश्याप उपस्पृश्य
अदित्यै रास्नाऽसि इति शुल्बं कृत्वा
अयुपिता योनिः, इति प्रतिसंदध्यादेवं त्रिधातु पञ्चधातु वा शुल्बं
कृत्वा

अदित्यै रास्नाऽसि, इत्युदगग्रं वितत्य
सुसंभृता त्वा संभरामि, तस्मिन्निधनानि संभृत्य प्रतिनिधनं
मन्त्रमावर्तयित्वा

अलुभिता योनिः, इत्युत्तमे निधने प्रस्तरमत्याधाय
इन्द्राण्यै संनहनम्, इति संनह्य
पूषा ते ग्रन्थिं ग्रथ्नातु, इति ग्रन्थिं कृत्वा
स ते माऽऽस्थात्, इति पुरस्तात्प्रत्यञ्चं पश्चात्प्राञ्चं वा ग्रन्थिमुपगूह्य
आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः ।
बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे । इति बर्हिरालभ्य

इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे, इत्युदादाय

बृहस्पतेर्मूर्ध्ना हरामि, इति शीर्ष्णि अधिनिधाय

प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवं-हन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे । उर्वन्तरिक्ष-मन्विहि । इति प्रत्येत्य

अदित्यास्त्वोपस्थे सादयामि, इत्यन्तर्वेदि परिधिदेशेऽनधः सादयित्वा

बर्हिरसि देवंगमम्, इत्यासन्नमभिमन्त्र्य

देवंगममसि, इति यथोपसादनकाले प्राचीनमुपसादयितुं योग्यं भवे-त्तथाऽनधो निधाय तूष्णीं दर्भदेशं गत्वा

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा

तासां पर्व राध्यासं परिस्तरमाहरन् ।

इति परिस्तरणमुष्टिमाहृत्य पर्वण्यसिदमधिनिधाय

अपां मेध्यं यज्ञियꣳ सदेवꣳ शिवमस्तु मे

आच्छेत्ता वो मा रिषं जीवानि शरदः शतम् । इति च्छित्वाऽप उपस्पृश्य

अपरिमितानां परिमिताः संनह्ये सुकृताय कम् ।

एनो मा नि गां कतमच्च नाहं पुनरुत्थाय बहुला भवन्तु ।

इति संनह्य तूष्णीं परिभोजनीयार्थान्दर्भानुलपराज्यर्थांश्च च्छित्वाऽप उप-स्पृश्य संनह्याऽऽहृत्य निधाय त्रिधातु पञ्चधातु वा तूष्णीं शुल्बं कृत्वा

अदित्यै रास्नाऽसि इत्युदगग्रं वितत्य

---

१ एतस्मिन्समये पौर्णमास्यां सोमयाजिनाऽसोमयाजिना च पयस्वती-रित्यारभ्याऽऽदित्योपस्थानान्तं कार्यम् । प्रयोगस्तु प्राक्प्रादर्श्येव । २ असिदाधिनि-धानं राध्यासमिति पदोच्चारणानुपदमेव कार्यम् । तल्लिङ्गाभिधाने क्रियानुष्ठानमिति हेतुः सर्वत्रात्रोह्यः । ३ आच्छेत्ता, इति पदोच्चारणानुपदमेवाऽऽच्छेदनं कार्यम् । ४ संनह्य इति पदोच्चारणानुपदमेव संनहनं कार्यम् ।

खादिरं पालाशं वैकविंशतिदारुमिध्मं तूष्णीं छित्वाऽप उपस्पृश्य

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् ।
ततस्त्वामेकविंशतिधा संभरामि सुसंभृता ।
त्रीन्परिधींस्तिस्रः समिधो यज्ञायुरनुसंचरान् ।
उपवेषं मेक्षणं धृष्टिं संभरामि सुसंभृता ” इति शुल्ब इध्मं संभृत्य

कृष्णोऽस्याखरेष्ठो देव पुरश्चर सघ्यासं त्वा

इति संनह्य पुरस्तात्प्रत्यञ्चं पश्चात्प्राञ्चं वा ग्रन्थिमुपगुह्यानधो निधायेध्मप्रव्रश्चनानि च पूर्वं बर्हिःस्थापिते देशे निधाय

त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः ।
अच्छिद्रं यज्ञमन्वेषि विद्वान्त्वया होता संतनोत्यर्धमासान् ।

दर्भाणां वत्सजान्वाकृतिं धान्यावपनार्थं तृणपुञ्जसंनिवेशविशेषाकृतिं वा त्रिवृच्छिरसं वा वेदं कृत्वा शुल्बात्प्रादेशं परिवास्याप उपस्पृश्य वेदपरिवासनानि[1] निधाय देवस्य त्वेत्यादि प्रागुत्तरात्परिग्राहात्कृत्वाऽन्तर्वेदि[2] शाखायाः पलाशान्यसर्वाणि प्रशात्य मूलतः शाखां परिवास्य

उपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् ।
इन्द्राय हविः कृण्वन्तः शिवः शग्मो भवासि नः । इत्युपवेषं कृत्वा तृतीयस्यै दिवो गायत्रिया सोम आभृतः
सोमपीथाय संनयितुं वक्ल मन्तरमाददे ।

---

१ सोमयाजिनोऽसोमयाजिनश्च पौर्णमास्यां तु वेदपरिवासननिधानानन्तरं यस्य कस्य चिद्यज्ञियकाष्ठस्य मन्त्रेणोपवेषः कार्यः । वेदिकरणं तु यथाप्रयोगशास्त्रमग्रे वक्ष्यते । अन्तर्वेदि शाखाया इत्यारभ्य हव्यशोधन इति यजमानानुमन्त्रणान्तं कर्म नास्ति । सांनाय्याभावात् । २ असोमयाजिनोऽमावास्यायां ‘ प्रागुत्तरात्परिग्राहाद्वेदिकर्म कृत्वा यस्य कस्यचिद्यज्ञियकाष्ठस्य मन्त्रेणोपवेषः कार्यः । अन्तर्वेदि शाखाया इत्यारभ्य हव्यशोधन इत्यन्तं यजमानानुमन्त्रणान्तं कर्म नास्ति ।

इति परिवासनशकलमादाय प्रज्ञातं निधाय त्रिवृद्दर्भमयं पवित्रं कृत्वा

¹वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् ।

इति शाखाया मूले दर्भाणां मूलानि शाखाया अग्रे दर्भाणामग्राणि विना ग्रन्थिं लङ्घयेत् ।

**यजमानः**—त्रिवृत्पलाशे दर्भ इयान्प्रादेशसंमितः ।

यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे ।

इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः ।

आप्याययन्तौ संचरतां पवित्रे हव्यशोधने ।

इति शाखापवित्रयोः सङ्गे क्रियमाणेऽनुमन्त्रयेत् । समूहन्त्यग्न्यगारमुपलिप्यन्त्यायतनानि अलं कुर्वाते यजमानः पत्नी च नवे सांनाय्यकुम्भ्यौ यावच्छर्करं गामयेनाऽऽलिप्ते भवतः ।

इत्यन्वाधानम् ।

अमावास्यायामपराह्ण आश्वलानीयैरग्निहोत्रचन्द्रिकायां प्रदर्शितरीत्याऽनुष्ठेयः पिण्डपितृयज्ञः । एवमेवाऽऽपस्तम्बीयैरपि स्वसूत्रानुसारम् । ततो भोजनममाषममा॑ समाज्येनाश्नीयातां तदभावे दध्ना पयसा वा । तिलवर्जं सर्वं कौषधान्यवर्जम् ।

**यजमानः**—पयस्वतीरोषधयः पयस्वद्वीरुधां पयः ।

---

१ पवित्रपलाशयोरभिधानपक्षे शमीशाखायां निवृत्तिः । पयसि चरुं दधनि चरुमिति तदुभयप्राधान्यात् । इमौ पर्णं च दर्भं च देवाना॑ हव्यशोधनौ, इति पवित्राभिधानादनिवृत्तिर्वा । पलाशे दर्भ इति पलाशस्याधिकरणत्वेन निर्देशात्पवित्रपरत्वान्मन्त्रस्यानिवृत्तिः । इत्युभयथा विदुषां प्रवृत्तेः सत्त्वान्निवृत्त्यनिवृत्त्योर्विकल्प एव रमणीयः । वयं तु यथापरम्परमनुष्ठेयमिति वदामः । एतेन तृतीयस्यै दिवो, इमौ पर्णं चेत्यादयोऽपि व्याख्याता वेदितव्याः ।

२ समूहन्तीति बहुवचने चोदिते यजमानः पत्नी च प्रवृत्ते कर्मणि अध्वर्योः सहायभूतौ । अलंकरणमायतनानां नाऽऽत्मनोः कुर्वाते इत्यात्मनेपददर्शनात् । आदधीयातामिति दर्शनादग्निसमवेतत्वेऽप्याधानस्य ।

३ सोमयाजिनोऽसोमयाजिनश्च पौर्णमास्याम् । अमावास्यायामसोमयाजिनश्च नवे सांनाय्येत्यादिकुम्भीसंस्कारो नास्ति । सांनाय्याभावात् ।

**अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज ।**

प्राणाय स्वाहा । इति प्राणाग्निहोत्रकाले प्रथमं ग्रासं भक्षयेत् ।

पत्न्यपि प्रथमग्रासं पयस्वतीति मन्त्रेण भक्षयेत् । यवाग्वा[1] पयसा वा स्वयं यजमानः पर्वण्यग्निहोत्रं जुहुयात् । अग्निहोत्रोच्छेषणमातञ्चनार्थं निदध्यात् ।

नास्यैताꣳ रात्रिं कुमाराश्च न पयसो लभन्ते । हुते सायमग्निहोत्रे सायंदोहं दोहयेत् ।

अध्वर्युः—आहवनीयं परिस्तीर्य सांनाय्यपात्राणि प्रक्षाल्योत्तरेणाऽऽहवनीयं दर्भान्सꣳस्तीर्य

**कुम्भीꣳ शाखापवित्रम्**, **अभिधानीं निदाने**, **दारुपात्रं दोहनम्**, **अयस्पात्रं** दारुपात्रं वा पिधानार्थम्, **अग्निहोत्रहवणीमुपवेषम्**, **पर्णवल्कं च तृणं चेति** द्वंद्वं न्यञ्चि पात्राणि प्रयुज्य समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वा

**पवित्रे स्थो वैष्णव्यौ वायुर्वो मनसा पुनातु ।**

इति तृणं काष्ठं वाऽन्तर्धाय ( दर्भयोर्दात्रस्य च मध्ये कृत्वा ) तेन सह च्छित्त्वा ( नखेन न च्छिन्द्यात्, न नखेनेति सूत्रात् ) ।

**विष्णोर्मनसा पूते स्थः ।**

इत्यद्भिरनुमृज्य तत्पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्याम्—

**देवो वः सवितोत्पुनातु**, इति प्रथममुत्पूय

**अच्छिद्रेण पवित्रेण**, इति द्वितीयमुत्पूय

**वसोः सूर्यस्य रश्मिभिः**, इति तृतीयमुत्पूय

**आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये**

---

१ संनयतो यजमानस्य तु यवाग्वैव होमः । न पयसा । एवं व्यवस्थितविकल्पोऽयम् । विवृतोऽयं विषयो भाष्यवृत्तौ प्रथमे प्रश्न एकादशकण्डिकासूत्रभाष्यवृत्तौ ।

प्रोक्षिताः स्थ । इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै ।

इति सपवित्रेण पाणिना सर्वाभिरद्भिस्त्रिः प्रोक्ष्य सकृन्मन्त्रेण द्विस्तूष्णीम्, प्रज्ञाते पवित्रे निदध्यात् ।

यजमानः—आपो देवीः शुद्धाः स्थेमा पात्राणि शुन्धत ।

उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धत ।

देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः ।

गां दोहपवित्रे रज्जुꣳ सर्वा पात्राणि शुन्धत ।

इति प्रोक्ष्यमाणान्यभिमन्त्र्य

एता आचरन्ति मधुमद्दुहाना प्रजावतीर्यशसो विश्वरूपाः ।

बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गावः ।

इति गा आयतीः प्रतीक्षेत ।

अध्वर्युः—निष्टप्तꣳ रक्षो निष्टप्तोऽघशꣳसः । इत्याहवनीये सान्नाय्यपात्राणि प्रतितप्य

धृष्टिरसि ब्रह्म यच्छ, इत्युपवेषमादाय

निरूढं जन्यं भयं निरूढाः सेना अभीत्वरीः ।

इत्याहवनीयादुदीचोऽङ्गारान्ना(ना)हवनी[या]यतन एव निरुह्य

मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि

परमेण धाम्ना दृꣳहस्व मा ह्वाः । तेषु कुम्भीमधिश्रित्य

भृगूणामङ्गिरसां तपसा तप्यस्व, इति प्रदक्षिणमङ्गारैः पर्यूह्य

वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् ।

इति तस्यां कुम्भ्यां प्रागग्रꣳ शाखापवित्रमत्याधाय कुम्भीमन्वारभ्य वाचं नियम्य पवित्रं वा धारयन्स्यात् ।

दोग्धा—अदित्यै रास्नाऽसि, इत्यभिधानीमाददीत ।

यजमानः—त्रयस्त्रिꣳशोऽसि तन्तूनां पवित्रेण सहाऽऽगहि ।

शिवेयꣳ रज्जुरभिधान्यघ्न्यामुपसेवताम् ।

इत्यादीयमानामभिमन्त्रयेत ।

दोग्धा—पूषाऽसि, इति वत्सं बध्नीयात्।

अध्वर्युः—उपसृष्टां मे प्रब्रूतात्। इति दोग्धारं संप्रैषं दद्यात्।

दोग्धा—उपसृजामि, इत्यध्वर्युमामन्त्र्य

अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः।

इति वत्समुपसृजेत्।

यजमानः—अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः

ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम्।

इत्युपसृष्टामनुमन्त्रयेत्।

अध्वर्युः—गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्ट। इति यजमानं संप्रैषं कुर्यात्।

यजमानः—सांनाय्यं मा विलोपि यद्युपसृष्टां विहारं चान्तरेण व्यवेयात्तदा ब्रूयात्।

दोग्धा—उपसीदामि, इति यजमानमामन्त्र्य

अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः।

ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम्।

इत्युपविश्य दारुपात्रे दुह्यात्। अत्र दोहने शूद्रस्याभ्यनुज्ञानात्तस्य मन्त्राः सन्त्येव।

यजमानः—द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम्।

धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधातु।

इति दुह्यमानामनुमन्त्र्य

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ सुवर्विदम्।

तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्यजमानममृतत्वे दधातु।

इति धाराघोषं चानुमन्त्रयेत्।

दोग्धा—दुग्धं पयोऽध्वर्यव आहरेत्।

---

१ एकेन निदानेन गोः पादौ बद्ध्वा, अन्येन निदानेन गोः पूर्वपादसमीपे वत्सं बध्नीयादेवं सर्वगोदोहनेऽनुसंधातव्यम्।

**अध्वर्युः—कामधुक्षः प्र णो ब्रूहि महेन्द्राय हविरिन्द्रियम् ।**

इति दोग्धारं पृच्छेत् ।

**दोग्धा—गङ्गाम्,** इति निर्दिश्य

**यस्यां देवानां मनुष्याणां पयो हितम् ।** इति प्रत्याह ।

**अध्वर्युः—सा विश्वायुः,** इति निर्दिष्टां गामनुमन्त्र्य

**देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा ।**

इति कुम्भ्यां तिरः पवित्रमासिच्य ( पय आदायाऽऽसिञ्चति )

**हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवी-भ्याम् ।** इति विप्रुषोऽनुमन्त्रयेत् ।

**यजमानः—अग्नये बृहते नाकायेदं न मम । द्यावापृथिवीभ्यामिदं न मम ।** इति त्यजेत् ।

**दोग्धा—पूषाऽसि,** इति वत्सं बध्नीयात्

**अध्वर्युः—उपसृष्टां मे प्रब्रूतात्,** इति दोग्धारं संप्रैषं दद्यात् ।

**दोग्धा—उपसृजामि ।** इत्यध्वर्युमामन्त्र्य

**अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः ।** इति वत्समुत्सृजेत् ।

**यजमानः—अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः ।**

**ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम् ।**

इत्युपसृष्टामनुमन्त्रयेत् ।

**अध्वर्युः—गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्ट,** इति यजमानं संप्रेष्येत् ।

**यजमानः—सांनाय्यं मा विलोपि,** यद्युपसृष्टां विहारं चान्तरेण व्यवेयात्तदा ब्रूयात् ।

**दोग्धा—उपसीदामि,** इति यजमानमामन्त्र्य

**अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः ।**

ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुपं वः सदेयम् ।

इत्युपविश्य दारुपात्रे दुह्यात् ।

यजमानः—द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधातु ।

इति दुह्यमानामनुमन्त्र्य

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ सुवर्विदम् ।

तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्यजमानममृतत्वे दधातु ।

इति धाराघोषं चानुमन्त्रयेत् ।

दोग्धा—दुग्धं पयोऽध्वर्यव आहरेत् ।

अध्वर्युः—कामधुक्षः प्र णो ब्रूहि महेन्द्राय हविरिन्द्रियम् । इति दोग्धारं पृच्छेत् ।

दोग्धा—यमुनाम्, इति निर्दिश्य

यस्यां देवानां मनुष्याणां पयो हितम् । इति प्रत्याह ।

अध्वर्युः—सा विश्वव्यचाः । इति निर्दिष्टां गामनुमन्त्र्य

देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवा ।

इति कुम्भ्यां तिरः पवित्रं पय आसिच्य

हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम् । इति विप्रुषोऽनुमन्त्रयेत् ।

यजमानः—अग्नये बृहते नाकायेदं न मम । द्यावापृथिवीभ्यामिदं न मम ।

दोग्धा—पूषाऽसि, इति वत्सं बध्नीयात् ।

अध्वर्युः—उपसृष्टां मे प्रब्रूतात्, इति दोग्धारं संप्रैषं दद्यात् ।

दोग्धा—उपसृजामि इत्यध्वर्युमामन्त्र्य

अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः ।

इति वत्समुपसृजेत् ।

यजमानः—अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः।
ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम्। इत्युपसृष्टामनुमन्त्रयेत्।

अध्वर्युः—गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्ट, इति यजमानं संप्रेष्येत्।

यजमानः—सांनाय्यं मा विलोपि। यद्युपसृष्टां विहारं चान्तरेण व्यवेयात्तदा ब्रूयात्।

दोग्धा—उपसीदामि, इति यजमानमामन्त्र्य
अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः।
ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम्।
इत्युपविश्य दारुपात्रे दुह्यात्।

यजमानः—द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम्। धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधातु।
इति दुह्यमानामनुमन्त्र्य
उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ सुवर्विदम्।
तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्यजमानममृतत्वे दधातु।
इति धाराघोषं चानुमन्त्रयेत्।

दोग्धा—दुग्धं पयोऽध्वर्यव आहरेत्।

अध्वर्युः—कामधुक्षः प्र णो ब्रूहि महेन्द्राय हविरिन्द्रियम्। इति दोग्धारं पृच्छेत्।

दोग्धा—सरस्वतीम्, इति निर्दिश्य
यस्यां देवानां मनुष्याणां पयो हितम्, इति प्रत्याह।

अध्वर्युः—सा विश्वकर्मा, इति निर्दिष्टां गामनुमन्त्र्य
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा।
इति कुम्भ्यां तिरः पवित्रं पय आसिच्य

हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्। इति विप्रुषोऽनुमन्त्रयेत्।

यजमानः—अग्नये बृहते नाकायेदं न मम। द्यावापृथिवीभ्यामिदं न मम। इति तिस्रो दोहयित्वा

बहु दुग्धि महेन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पताम्।

इति त्रिवारं दोग्धारं प्रति संप्रैषमुक्त्वा वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहनेऽप आनीय

संपृच्यध्वमृतावरी रूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये

इति कुम्भ्याꣳ संक्षालनमानीयाविष्यन्दयन्सुशृतं कृत्वा

दृꣳह गा दृꣳह गोपतिं मा वो यज्ञपती रिषत्। इति बर्त्म कुर्वन् प्रागुद्वास्योदक्प्रागुदग्वा

सोमेन त्वाऽऽतनच्मि महेन्द्राय दधि। इति दध्ना शीतबुध्नं पय आतञ्च्य

यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनु संतनोमि। इत्यग्निहोत्रोच्छेषणमन्ववधाय

अयं पयः सोमं कृत्वा स्वां योनिमपिगच्छतु।

पर्णवल्कः पवित्रꣳ सौम्यः सोमाद्धि निर्मितः। इति परिवासनशकलमन्ववधाय

आपो हविःषु जागृत यथा देवेषु जाग्रथ। एवमस्मिन्यज्ञे यजमानाय जागृत। इत्ययस्पात्रे दारुपात्रे वाऽप आनीय

अदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम्।

अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते। इति तेनापिदध्यात्।

यजमानः—अमृन्मयं देवपात्रं यज्ञस्याऽऽयुषि प्रयुज्यताम्।

तिरः पवित्रमतिनीता आपो धारय माऽतिगुः। इति जपेत्।

अध्वर्युः—यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वाऽपिधाने क्षिप्त्वा

विष्णो हव्यꣳ रक्षस्व, इति कुम्भीमनधो निधाय

**इमौ पर्णं च दर्भं च देवानाᳬ हव्यशोधनौ ।**

**प्रातर्वेषाय गोपाय विष्णो हव्यᳬ हि रक्षसि ।** इति प्रज्ञातᳬ शाखापवित्रं निधाय ।

**वायवः स्थोपायवः स्थ ।** इति तयैव शाखया दर्भैर्वा षट्कृत्वः प्रातर्दोहाय वत्सान्मातृभ्यः सकाशात्पृथक्कृत्य

**परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु ।**
**अपाᳬ रस ओषधीनाᳬ सुवर्णा निष्का इमे यजमानस्य सन्तु**
**कामदुघा अमुत्रामुष्मिँल्लोके ।** इत्यग्नीधे संप्रैषं कुर्यात् ।

**आग्नीध्रः**—तूष्णीं गार्हपत्यदक्षिणाग्न्याहवनीयानुदगग्रैः प्रागग्रैश्च दर्भैः परिस्तृणीयात् । अथवाऽध्वर्युः स्वस्मादन्यस्य परिस्तरितुरवचनात्स्वयमात्मानमनुजानीयादितिवदात्मन एव संस्कारार्थः संप्रैषः । तेन स्वयमेव प्रैषमुक्त्वा पूर्वोक्तक्रमेण तूष्णा गार्हपत्यादीन्परिस्तृणीत । अथवा

**परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु ।**
**अपाᳬरस ओषधीनाᳬ सुवर्णा निष्का इमे यजमानस्य सन्तु**
**कामदुघा अमुत्रामुष्मिँल्लोके ।**

इति गार्हपत्यदक्षिणाग्न्याहवनीयानुदगग्रैः प्रागग्रैश्च दर्भैः प्रत्यग्नि मन्त्रमावर्त्य परिस्तृणीयात् ।

**यजमानः**—**उभावग्नी उपस्तृणते देवता उपवसन्तु मे**
**अहं ग्राम्यानुपवसामि मह्यं गोपतये पशून् ।**
इति सायं परिस्तीर्यमाणेषु जपित्वा

---

१ आरण्यं सायमाशेऽश्नात्यमाषममाᳬसमपि वा काममा मर्गादा मधुन आ प्राशातिकात् । अपो वा न वा किंचित् । न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यात् । आरण्यायोपवत्स्यन्नपोऽश्नाति न वा । अमावास्यां रात्रिं जागर्ति अपि वा सुप्यादुपरि त्वेव न शयीत । अपि वोपरि शयीत ब्रह्मचारी त्वेव स्यात् । आहवनीयागारे गार्हपत्यागारे वा शेते ।

**आपस्तम्बीययजमानः**—कर्ममध्ये यदा जञ्जभ्यते तदा प्रायश्चित्तार्थम्—
**मयि दक्षक्रतू** इति ब्रूयात् ।

**आश्वलायनीयो यजमानः**—कर्ममध्ये क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकगन्धमाघ्राय, अक्षिस्पन्दने कर्णध्वनने चैतस्मिन्निमित्तषट्के—
**सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू ॥** इति जपेत् ।

देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह माऽवत इद१ शकेयं यदिदं करोम्यात्मा करोत्वात्मने।

इदं करिष्ये भेषजमिदं मे विश्वभेषजा अश्विना प्रावतं युवम्।

इति जपित्वोपवसेत्। सद्यस्कालायां तु देवा देवेष्विति मन्त्रो जप्य उभावग्नी इति तु न जप्यः। अन्वाधानदिने सायं यद्यपरिस्तीर्णा भवेयुरग्नयस्तदा यजनीयेऽहनि हस्तावनेजनानन्तरं पूर्वोक्तपरिस्तरणान्यतमप्रकारेण परिस्तीर्याः।

इत्यन्वाधानदिनकृत्यम्।

यजमानः—प्रागुदयाद१मावास्यायास्तन्त्रं प्रक्रमयेत्। तत्रोदितहोमेऽपि प्रागुदयात्प्रक्रमोऽमावास्यायाः। तन्त्रमध्येऽपि स्वकालेऽग्निहोत्रं जुहुयात्।

अध्वर्युः—कर्मणे वां देवेभ्यः शकेयम्। इति हस्ताववनिज्य

यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्य।

इति गार्हपत्यात्प्रक्रम्य संततामुलपराजीमाऽऽहवनीयाद्दास्तीर्य तूष्णीं दक्षिणामुत्तरां चाऽऽस्तीर्य दक्षिणेनाऽऽहवनीयं पूर्वं ब्रह्मणोऽपरं यजमानस्येत्यासने प्रकल्प्योत्तरेण गार्हपत्याहवनीयौ दर्भान्स२स्तीर्य

स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च

---

१ उदित आदित्येऽग्निहोत्रादनन्तरं पौर्णमास्यास्तन्त्रं प्रक्रमयेत्। अग्रे समानम्।

२ आश्वलायनीययजमानस्य पौर्णमास्याम् ३० (आग्नेयानि ८। अग्नीषोमीयानि ११। ऐन्द्रवैमृधानि ११ + ११ + ८ = ३०)

आश्वलायनीययजमानस्य दर्शे (असोमयाजिनः) १९ (आग्नेयानि ८ ऐन्द्राग्नानि ११ = १९)

आपस्तम्बीययजमानस्य दर्शे ( ,, ,, ) १९ ( ,, ,, )

आश्वलायनीय-सोमयाजिनः दर्शे ८ (आग्नेयान्यष्टौ)

आपस्तम्बीययजमानस्य सोमयाजिनः ८ ( ,, ,, )

,, ,, पौर्णमास्यामसोमयाजिनः १९ (आग्नेयानि ८ ऐन्द्रवैमृधानि ११ = १९)

शम्या चोलूखलं च मुसलं च दृषच्चोपला च ।

इति द्वंद्वं न्यञ्चि दशापराणि पात्राणि प्रयुज्य ( अपराणि गार्हपत्यमुत्तरेण ) ।

स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्र-हरणमिडापात्रं प्रणीताप्रणयनम् ।

इति दश पूर्वाणि पात्राणि प्रयुज्य ( पूर्वाणि–आहवनीयमुत्तरेण )

योक्त्रं मदन्तीं मेक्षणं वेदाग्राणि अन्वाहार्यस्थालीमुपवेषं पिष्टलेपफलीकरणपात्रं कुम्भीं[१] शाखापवित्रमभिधानीं निदाने दारुपात्रं दोहनम् इति तान्युत्तरेण द्वंद्वं न्यञ्चि प्रयुञ्जीत ।

अध्वर्युयजमानौ—भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे । इति-ब्रह्माणं वृणीताम् ।

---

१ " सोमयाजिनोऽसोमयाजिनः पौर्णमास्यामसोमयाजिनश्चामावास्यायां पिष्टलेपफलीकरणपात्रं दर्भं च " इत्यासादनम् । कुम्भ्यादिदोहनपात्रान्तानां पात्राणां निवृत्तिः । सांनाय्याभावात् । पात्रासादनानन्तरं समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वा

पवित्रे स्थो वैष्णवी वायुर्वो मनसा पुनातु । इति तृणं काष्ठं वाऽन्तर्धाय ( दर्भयोर्दात्रस्य च मध्ये कृत्वा ) तेन सह छित्त्वा ( नखेन न छिन्द्यात्—न नखेनेति सूत्रात् )

विष्णोर्मनसा पूते स्थः, इत्यद्भिरनुमृज्य ब्रह्माणं वृणीयात् । ब्रह्मवरणमेवाध्वर्युयजमानकर्तृकं पवित्रकरणं तु अध्वर्युकर्तृकमेव )

ब्रह्मा—प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्धि-हारं प्रविश्य समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाऽऽहवनीयं परीत्य दक्षिणत आहवनीयस्योदङ्मुखः स्थित्वा

निरस्तः परावसुः । इति स्वायतनादङ्गुष्ठोपकनिष्ठिकाभ्यां दर्भं नैर्ऋत्यां निरस्याप उपस्पृश्य

इदमहमर्वावसोः सदने सीदामि । इत्युपविश्य

बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय, इति जपेत् ।

यजमानः—तूष्णीं निरसनोपवेशने कृत्वा स्वासन उपविशेत् ।

अध्वर्युः—वानस्पत्योऽसि देवेभ्यः शुन्धस्व ।

---

१ आपस्तम्बब्रह्मा—वृतो वेदेरुत्तरतस्तिष्ठन्

अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुक्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वेदेवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणां बृहस्पते यज्ञं गोपाय । इति जपित्वाऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

निरस्तः पराग्वसुः सह पाप्मना । इत्यङ्गुष्ठोपकनिष्ठिकाभ्यां स्वासनात्तृणं प्रत्यग्दक्षिणा निरस्याप उपस्पृश्य

इदमहमर्वाग्वसोः सदने सीदामि प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्यै, इत्युपविशेत् ।

आहवनीयमभ्यावृत्याऽऽस्ते । कर्मणि कर्मणि वाचं यच्छेत् । मन्त्रवत्सु वा कर्मसु याथाकामी तूष्णीकेषु । यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् ।

इति प्रणीताप्रणयनं चमसमद्भिः परिक्षाल्य सायंदोहकालिकपवित्रान्तर्हितं चमसमपरेण गार्हपत्यं निधाय

अनया पृथिव्याऽपो ग्रहीष्यामि । इति पृथिवीं मनसा ध्यात्वा

को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय वः । इति तस्मिंश्चमस उपबिलमप आनीय

अनया पृथिव्याऽपो गृह्णामि, इति पृथिवीं मनसा ध्यात्वा

देवो वः सवितोत्पुनातु, इति प्रथममप उत्पूय

अच्छिद्रेण पवित्रेण, इति द्वितीयमुत्पूय

वसोः सूर्यस्य रश्मिभिः, इति तृतीयमुत्पूय

आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ । इत्यभिमन्त्र्य

ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ । इति संप्रैषं कुर्यात् ।

ब्रह्मा—भूर्भुवः स्वर्बृहस्पति प्रसूतः । इति जपित्वा

ओ ३ म् प्रणय, इत्यतिसृजेत् ।

अध्वर्युयजमानौ—प्रणीयमानासु सतीष्वप्सु हविष्कृदेहीति प्रैषोच्चारणपर्यन्तं वाचं यच्छतः ।

अध्वर्युः—को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञꣳ सꣳसादयन्तु नः ।

इरंमदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यश्वतीः ।

इति समं प्राणैर्धारयमाणः स्फ्येनोपसंगृह्य स्फ्यमधस्तात्कृत्वाऽविषिञ्चन्हरेत् ।

---

१ असोमयाजिनः सोमयाजिनः पौर्णमास्याममावास्यायामसोमयाजिनश्च सायंदोहकालिकपवित्राभावात्तात्कालिककृतपवित्रान्तर्हितमिति विशेषोऽनुसंधातव्यः ।

२ आपस्तम्बब्रह्मा—प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।

सप्तऋषीणाꣳ सुकृतां यत्र लोकास्तत्रेमं यज्ञं यजमानं च धेहि ।

इत्युपांशु जपमुक्त्वा—ओ ३ म् प्रणय, इत्युच्चैरभ्यनुजानीयात् ।

अनया पृथिव्याऽपः प्रणयानि, इति हरणसमये पृथिवीं मनसा ध्यायेत्।

यजमानः—भूश्च कश्च वाक्चक्चर्च गौश्च वट् च खं च धूश्च नूश्च पूश्चै-काक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीः ब्रह्मपूताः स्थ।

को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै।

याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः।

ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे।

इति प्रणीताः प्रणीयमाना अनुमन्त्रयेत्।

अध्वर्युः—को वो युनक्ति स वो युनक्तु। इत्युत्तरेणाऽऽहवनीयमसंस्पृष्टा दर्भेषु सादयित्वा दर्भैरभिच्छाद्य

संविशन्तां दैवीर्विशः पात्राणि देवयज्यायै। इति सपवित्रेण पाणिना पात्राणि संमृश्य ( संमर्शनेऽसंभवतां पात्राणां मन्त्रमावर्तयेत् )।

वानस्पत्याऽसि दक्षाय त्वा। इत्यग्निहोत्रहवणीमादाय

वेषाय त्वा, इति शूर्पमादाय

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः, इत्याहवनीये गार्हपत्ये वा प्रतितप्य

यजमान हविर्निर्वप्स्यामि, इत्यामन्त्रयेत्।

यजमानः—ओ३म् निर्वप इत्युच्चैरनुजानीयात्।

अध्वर्युः—उर्वन्तरिक्षमन्विहि, इति शकटायाभिप्रव्रज्य ( शकटं त्वपरेण गार्हपत्यं प्राग्गीषमुदग्गीषं वा नद्धयुगं व्रीहिमद्यवमद्वाऽवास्थितं भवेत्। )

---

१ प्रणीता अपः " को वोऽयोक्षीत्स वो विमुञ्चतु " इति मन्त्रोच्चारणरूपविमोकपर्यन्तम्, आहवनीयस्योत्तरेण स्थितास्तत्स्थानान्न कम्पयेयुर्न प्रेरयेयुः। ( अन्यत्र न नयेयुः )।

२ प्रवसति यजमाने 'यजमान' इत्यस्य स्थाने "अग्ने" इत्यग्निमामन्त्रयेत्।

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः । इति दक्षिणामुत्तरां वा युगधुरमभिमृश्य

त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमम् । इत्युत्तरामीषामालभ्य जपित्वा

विष्णुस्त्वाऽक्रꣳस्त । इति सव्ये चक्रे दक्षिणं पादमत्याधाय

अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वाः । इति शकटमारुह्य

उरु वातय, इति परीणाहमपगच्छाद्य

मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिꣳसिषम् । इति पुरोडाशीयान्प्रेक्ष्य

निरस्तꣳ रक्षो निरस्तोऽघशꣳसः । इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्योप उपस्पृश्य

ऊर्जाय वः पयो मयि धेहि । इति निरस्तमभिमन्त्र्य

चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः । इति दशहोतारं व्याख्याय

शूर्पे पवित्रे निधाय तस्मिञ्छूर्पे

यच्छन्तां पञ्च । इति व्रीहीणां यवानां वा मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि । इत्यग्निहोत्रहवण्या त्रिर्यजुषा तूष्णीं चतुर्थं निर्वपेत्पवित्रवत्याऽग्निहोत्रहवण्या वा निर्वपेत् ।

यजमानः—अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे ।
आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य ।
इति हविर्निरुप्यमाणमभिमन्त्रयेत् ।

अध्वर्युः—निरुप्तेष्वन्वोप्य ।

---

१ आश्वलायनीययजमानस्य पौर्णमास्याम् ।

यच्छन्तां पञ्च—इति व्रीहीणां यवानां वा मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या-

मग्नीषोमाभ्यां जुष्टं निर्वपामि। इत्यग्निहोत्रहवण्या त्रिर्यजुषा तूष्णीं चतुर्थं निर्वपेत्।

यजमानः–अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य। इति हविर्निरुप्यमाणमभिमन्त्रयेत्।

अध्वर्युः—निरुप्तेष्वन्वोप्य

यच्छन्तां पञ्च–इति व्रीहीणां यवानां वा मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्राय वैमृधाय जुष्टं निर्वपामि, इत्यग्निहोत्रहवण्या त्रिर्यजुषा तूष्णीं चतुर्थं निर्वपेत्।

यजमानः–अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य। इति हविर्निरुप्यमाणमभिमन्त्रयेत्।

अध्वर्युः—निरुप्तेष्वन्वोप्यायं विशेषः, अन्यद्यावत्पुनर्विशेषोक्तिसमानम्।

आपस्तम्बीयस्य यजमानस्यासोमयाजिनः पौर्णमास्यामग्नीषोमीयः पुरोडाशो न विद्यतेऽत एवाग्नीषोमीयपुरोडाशनिर्वापादि सर्वं लुप्यत एव। अन्यदिन्द्रवैमृधतन्त्रमाश्वलायनीयवत्।

आपस्तम्बीययजमानस्य सोमयाजिनस्तु आश्वलायनीयवदाग्नेयाग्नीषोमीयेन्द्रवैमृधतन्त्रं कार्यम्। इति पौर्णमास्यां विशेषः।

असोमयाजिनो दर्शे- आश्वलायनीययजमानस्याऽऽपस्तम्बीयस्य च समानमेव। तद्यथा

यच्छन्तां पञ्च, इति व्रीहीणां यवानां वा मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्राग्निभ्यां जुष्टं निर्वपामि। इत्यग्निहोत्रहवण्या त्रिर्यजुषा तूष्णीं चतुर्थं निर्वपेत्।

यजमानः— अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे। आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य। इति हविर्निरुप्यमाणमभिमन्त्रयेत्।

अध्वर्युः—निरुप्तेष्वन्वोप्यान्यत्पूर्ववद्यावद्विशेषोक्ति, इति ज्ञेयम्।

इदं देवानाम्। इति निरस्तानभिमृश्य

इदमु नः सह, इत्यवशिष्टानभिमृश्य

स्फात्यै त्वा नारात्यै, इति निरस्तानेवाभिमन्त्र्य

इदमहं निर्वरुणस्य पाशात्, उपनिष्क्रम्य ( किंचिच्चलित्वा )

स्वरभिव्यख्यम्। इति प्राङ्प्रेक्ष्य ( प्राङ्—प्राचीं दिशम् )

सुवरभिविख्येषम्, इति सर्वं विहारमनुवीक्ष्य

वैश्वानरं ज्योतिः, इत्याहवनीयं वीक्ष्य

स्वाहा द्यावापृथिवीभ्याम्। इति स्कन्नानभिमन्त्र्य

दृ९ हन्तां दुर्या द्यावापृथिव्योः। इति प्रत्यवरोह्य

उर्वन्तरिक्षमन्विहि, इत्याहृत्य

अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्य९ रक्षस्व[1]। इत्यपरेणाऽऽहवनीयमुपसादयेत्।

यदि शकटस्थानीयायाः पात्र्याः सकाशान्निर्वपेत्तदेवम्। पात्र्या दक्षिणतः स्फ्यमुपधाय पात्र्यां पुरोडाशीयानोप्य तां शकटस्थानस्थामालभ्य

अह्रुतमसि हविर्धानं दृ९हस्व मा ह्वाः, इत्यन्ताञ्छकटमन्त्राञ्जपित्वा ( तत्रोरु वातायेत्यस्य मन्त्रस्य लोपः—शकटमन्त्राभावात् परिणाहस्य च शकटाङ्गाभावाच्च ) मित्रस्य त्वा चक्षुषा प्रेक्ष इत्यारभ्याग्ने हव्य९ रक्षस्वेत्यन्तं कार्यम्।

यजमानः—कस्त्वा युनक्ति स त्वा युनक्तु इति सर्वं विहारमनुवीक्षेत।

अध्वर्युः—सशूकायामग्निहोत्रहवण्यामप आनीय

देवो वः सवितोत्पुनातु—इति प्रथममुत्पूय

अच्छिद्रेण पवित्रेण—इति द्वितीयमुत्पूय

---

१ अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्य९ रक्षस्वाग्नीषोमौ हव्य९ रक्षेथामिन्द्र वैमृध हव्य९ रक्षस्व, इति पौर्णमास्यां विशेषः।

अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्य९ रक्षस्वेन्द्राग्नी हव्य९ रक्षेथाम्। इति दर्शे विशेषः।

वसोः सूर्यस्य रश्मिभिः—इति तृतीयमुत्पूय

आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ । इत्यभिमन्त्र्य

ब्रह्मन् प्रोक्षिष्यामि, इति ब्रह्माणमामन्त्रयेत् ।

ब्रह्मा—भूर्भुवः स्वर्बृहस्पतिप्रसूतः । इति जपित्वा

ओं प्रोक्ष, इत्यतिसृजेत् ।

अध्वर्युः—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामि, इति सकृन्मन्त्रेण द्विस्तूष्णीं हविः प्रोक्ष्य पर्यावर्त्य ( स्वात्मानं दक्षिणमावर्त्य ) पात्राण्युत्तानानि कृत्वा

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै, इति सपवित्रेण पाणिना सकृन्मन्त्रेण द्विस्तूष्णीं पात्राणि प्रोक्ष्य

प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, इति कृष्णाजिनमादाय

अवधूतꣳ रक्षोऽवधूता अरातयः । इत्युत्करे कृष्णाजिनमूर्ध्वग्रीवं

---

१ आपस्तम्बब्रह्मा—प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तऋषीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ।
इत्युपांशु जपमुक्त्वोच्चैः—
ओं ३ प्रोक्ष, इत्यध्वर्युमनुजानीयात् ।

२ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां वो जुष्टं प्रोक्षामीन्द्राय वैमृधाय वो जुष्टं प्रोक्षामि । इति पौर्णमास्यां विशेषः ।
दर्शे तु—
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यां वो जुष्टं प्रोक्षामि । इति विशेषः ।

बर्हिष्ठाद्विशसनं त्रिरवधूय

आदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु इत्युत्तरेण गार्हपत्यमुत्करदेशे वा कृष्णाजिनं प्रतीचीनग्रीवमुत्तरलोमोपस्तीर्य पुरस्तात्प्रतीचीं भसदमुपसमस्यानुत्सृजन्कृष्णाजिनम् ।

अधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्तु ।

इति तस्मिन्नुलूखलमधिवर्त्य ( अधिवर्त्य—प्रतिष्ठाप्य ) अनुत्सृजन्नुलूखलम् ।

अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि ।

तस्मिन्नुलूखले त्रिर्यजुषा तूष्णीं चतुर्थꣳ हविरोप्य

अद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्व ।

इति मुसलमादाय

हविष्कृदेहि—हविष्कृदेहि—हविष्कृदेहि—

इति हविष्कृतमाह्वयेत्

हविष्कृत्—अवं रक्षो दिवः सपत्नं वध्यासम् । इति व्रीहीनवहन्यात् ।

अध्वर्युः—उच्चैः समाहन्तवै, इत्यग्नीधे संप्रैषं कुर्यात् ।

अग्नीत्—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति शम्यामादाय

इषमा वदोर्जमा वद द्युमद्वदत वयꣳ संघातं जेष्म ।

इति दृषदुपले समाहनन्द्विर्द्विषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयेत् । यत्र पर्यायसमाप्तिस्तत्रोपक्रमः । त्रिरावृत्तिर्मन्त्रस्य ।

अध्वर्युः—वर्षवृद्धमसि, इत्युलूखलस्य पुरस्तादुत्तरतो वा शूर्पमुपहृत्य

---

१ यथाऽवधूयमानस्य बर्हिः पृष्ठभागो भवत्यन्तर्लोमभागस्तथेत्यर्थः ।

२ भसदमुपसमस्य—भसत्कटिप्रदेशः । उपसमस्य द्विगुणीकृत्य । कटिप्रदेशं पुरस्ताद्भागेनाधस्तात्प्रतीचीं गमयित्वाऽनन्तरप्रदेशेन सह द्विगुणितां कृत्वेत्यर्थः ।

३ समाहन्तवै—इत्यत्र " कृत्यार्थे तवैकेन्केन्यत्वनः " इति पाणिनिसूत्रात् कृत्यार्थे तवैप्रत्ययः । समाहन्तवै समाहन्तव्यं ताडनीयमित्यर्थः ।

वर्षवृद्धाः स्थ, इत्यवहतान्पुरोडाशीयानभिमन्त्र्य

प्रति त्वा वर्षवृद्धं वेत्तु, इति पुरोडाशीयाञ्छूर्प उद्रोप्य

परापूतꣳ रक्षः परापूता अरातयः—इत्युत्करे शूर्पेण तुषान्प्रोह्य

प्रविद्धꣳ रक्षः पराध्माता अमित्राः, इति तुषान्प्रस्कन्दतोऽनुमन्त्र्य मध्यमे पुरोडाशकपाले तुषानोप्य

रक्षसां भागोऽसि, इत्यधस्तात्कृष्णाजिनस्योत्तरमपरमवान्तरदेशं वाऽऽवपेत्।

यजमानः—रक्षोभ्य इदं न मम, इति त्यागमुक्त्वाऽप उपस्पृशेत्॥

अध्वर्युः—अद्भिः कपालꣳ संस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य

वायुर्वो विविनक्तु, इति सतुषवितुषान्पृथक्कृत्य

देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु इति पात्र्यां तण्डुलान्प्रस्कन्द्य

अदब्धेन वश्चक्षुषाऽवपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाऽऽशिषमाशासे। इत्यवेक्ष्य तण्डुलानादाय तूष्णीमुलूखले न्युप्य

त्रिष्फली कर्तवै, इति पत्नीꣳ संप्रेष्येत्॥

पत्नी[1]-देवेभ्यः शुन्धध्वम्, देवेभ्यः शुन्धध्वम्, देवेभ्यः शुम्भध्वम्॥

इति मन्त्रत्रयान्ते सुफलीकृतान्कुर्यात्तूष्णीं वा। फलीकरणं नाम कणापाकरणार्थस्तण्डुलावघातः।

अध्वर्युः—फलीकरणं प्रज्ञातं निधाय तण्डुलान्प्रक्षाल्य[2]

त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते।

रक्षसां भागधेयमापस्तत्प्रवहतादितः।

इति प्रक्षालनोदकं त्रिर्निनीयाप उपस्पृशेत्।

---

१ अनारम्भुक्त्वादिना पत्न्यामविद्यमानायां सत्यां कमप्यवहन्तारं परिकर्मिणं संप्रेष्येत्। ततः स एवावहन्यात्।

२ लोकसिद्धपात्रेण तण्डुलान्प्रक्षाल्य निनयनं यस्मात्कस्माच्चिदपि पात्रात्कार्यम्। सांप्रदायिकास्तु प्राशित्रहरणेनोलूखलेन वा प्रक्षालनोदकं निनयन्ति।

यजमानः—रक्षोभ्य इदं न मम, इति त्यागं कृत्वाऽप उपस्पृशेत् ।

अध्वर्युः—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति कृष्णाजिनमादाय

अवधूतꣳ रक्षोऽवधूता अरातयः । इत्युत्करे कृष्णाजिनमूर्ध्वग्रीवं बहिष्टाद्विशसनं त्रिरवधूय

अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु, इत्युत्तरेण गार्हपत्यमुत्करदेशे वा कृष्णाजिनं प्रतीचीनग्रीवमुत्तरलोमोपस्तीर्य

पुरस्तात्प्रतीचीं भसदमुपसमस्यानुत्सृजन्कृष्णाजिनम् ।

दिवस्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्तु ।

इति कृष्णाजिन उदीचीनकुम्ब्याꣳ शम्यां निधाय शम्यामनुत्सृजन्

धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु । इति शम्यायां दृषदमत्याधाय दृषदमनुत्सृजन्

धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु । इति दृषद्युपलामत्याधाय

अꣳशवः स्थ मधुमन्तः, इति तण्डुलानभिमन्त्र्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपामि धान्यमसि धिनुहि देवान् । इति यावन्तस्तण्डुलाः सकृत्पेष्टुं शक्यन्ते तावतस्तण्डुलान्दृषदि त्रिर्यजुषा तूष्णीं चतुर्थमध्युप्य

---

१ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधिवपामीन्द्राय वैमृधाय जुष्टमधिवपामि धान्यमसि धिनुहि देवान् इति पौर्णमास्यां विशेषः । दर्शे तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपामीन्द्राग्निभ्यां जुष्टमधिवपामि धान्यमसि धिनुहि देवान् ।

इति विशेषः ।

प्राणाय त्वा, इति प्राचीमुपलां ( प्राप्य )

अपानाय त्वा, इति प्रतिचीमुपलां प्रोह्य

व्यानाय त्वा, मध्यदेशे व्यवधार्य

प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा, इति संततं प्रेष्य

दीर्घामनु प्रसितिमायुषे धाम्, इति प्राचीमन्ततोऽनुप्रेह्य

देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु । इति कृष्णाजिने पिष्टानि प्रस्कन्द्य

अदब्धेन वश्चक्षुषाऽवेक्षे, इत्यवेक्ष्य

असंवपन्ती पिंष्टाणूनि कुरुतात्, इत्यवशिष्टतण्डुलार्थं पत्न्या दास्या वा प्रैषं कुर्यात् ।

पत्नी दासी वा—पिष्टानि चाणूनि कुर्यात् ।

अध्वर्युः—पिष्टलेपं प्रज्ञातं निधाय

धृष्टिरसि ब्रह्म यच्छ, इत्युपवेषमादाय

रक्षसः पाणिं दहाहिरसि बुध्न्यः, इत्युपवेषमभिमन्त्र्य

अपाग्नेऽग्निमामादं जहि, इत्याहवनीयात्प्रत्यञ्चावङ्गारौ निर्वर्त्य

निष्क्रव्याद्ꣳ सेध, इति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्याप उपस्पृश्य

आ देवयजं वह—इति दक्षिणमवस्थाप्य

ध्रुवमसि पृथिवीं दृꣳहाऽऽयुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह । इति तस्मिन्नङ्गारे मध्यमं पुरोडाशकपालमुपधाय

निर्दग्धꣳ रक्षो निर्दग्धा अरातयः, इति कपालेऽङ्गारमत्याधाय

धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूह ।

इति मध्यमस्य पुरस्ताद्द्वितीयम् ।

धरुणमसि दिवं दृꣳह चक्षुर्दृꣳह श्रोत्रं दृꣳह सजातानस्मै यज-

---

१ दासी—वेतनमगृहीत्वा द्विजशुश्रूषैव धर्म इति मन्यमाना शूद्रजातीया कुलपरम्परया द्विजशुश्रूषार्थं द्विजगृहे स्थिता दासीत्युच्यते ।

मानाय पर्यूह तस्माद्द्वितीयात्पुरस्तात्तृतीयम् ।

चिदसि विश्वासु दिक्षु सीद, इति मध्यमस्य दक्षिणतश्चतुर्थम् ।

परिचिदसि विश्वासु दिक्षु सीद, मध्यमस्योत्तरतः पञ्चमम् ।

मरुताꣳ शर्धोऽसि मध्यमस्य पश्चात्षष्ठम् ।

धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह, इति दक्षिणस्य पुरस्तात्सप्तमम् ।

चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह, इत्युत्तरस्य पुरस्तादष्टमम् । एवमष्टौ कपालान्युपधाय एता आचरन्ति—इत्यादि संक्षालननिनयनान्तं प्रातर्दोहकर्म कृत्वा तत्रेदमनुसंधातव्यं यच्छाखापवित्रनिधानं तदुदगग्रं कार्यमिति ।

भृगूणामङ्गिरसां तपसा तप्यध्वम्, इति वेदेन कपालेष्वङ्गारानध्युह्य मदन्तीरभिश्रित्य प्रक्षालितायां निष्टप्तोपवातायां पवित्रवत्यां पात्र्याम् ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम-

---

१ पौर्णमास्याम्—अपाग्नेऽग्निमामादं जहीत्याद्यङ्गारनिर्वर्तनादिविधिनाऽऽग्नेयवदग्नीषोमीयस्याष्टौ कपालान्युपधाय, नैर्ऋत्यां वायव्यामैशान्यां चितः स्थोर्ध्वचितः, अनेन मन्त्रेणैकैकं कपालं यथायोगमुपदध्यात् । एवं मैन्द्रवैमृधस्यापि ज्ञेयम् ।

दर्शे ऐन्द्राग्नस्याप्येवमेव कपालोपधानम् ।

२ पौर्णमास्याम्—एता आचरन्ति, इत्यादिर्दोहनविधिर्नास्ति । सांनाय्याभावात् । अमावास्यायाम्—असोमयाजिनोऽपि नास्ति । सांनाय्याभावात् ।

३ पौर्णमास्याममावास्यायां च भृगूणामिति मन्त्रः प्रतिकपालयोगमावर्तयेत् ।

४ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टꣳ संवपाम्यग्नीषोमाभ्यां जुष्टꣳ संवपामीन्द्राय वैमृधाय जुष्टꣳ संवपामि ।

इति पौर्णमास्याम् ।

दर्शे तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टꣳ संवपामीन्द्राग्निभ्यां जुष्टꣳ संवपामि । इति विशेषः ।

अग्नये जुष्टं संवपामि । इति कृष्णाजिनात्पिष्टानि त्रियंजुषा तूष्णीं चतुर्थं समोप्य वाचं नियम्य

देवो वः सवितोत्पुनातु, इति पिष्टानि प्रथममुत्पूय

अच्छिद्रेण पवित्रेण, इति पिष्टानि द्वितीयमुत्पूय

वसोः सूर्यस्य रश्मिभिः, इति पिष्टानि तृतीयमुत्पूय

प्रणीताभिः संयुत्य स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य

समापो अद्भिरग्मत समोषधयो रसेन सं रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वम् । इति पिष्टेष्वानीय

अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वम्, इति तप्ताभिरद्भिरनुपरिप्लाव्य

जनयत्यै त्वा संयौमि, इति मेक्षणेन संयुत्य

मखस्य शिरोऽसि, इति पिण्डं कृत्वा

अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं पुरोडाशं कृत्वा

इदमहं सेनाया अभीत्वर्यै मुखमपोहामि, इति वेदेन कपालेभ्योऽङ्गारानपोह्य

घर्मोऽसि विश्वायुः, इत्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रित्याङ्गुलीः प्रक्षाल्य

---

१ पौर्णमास्याम्—पिण्डकरणानन्तरम्—यथाभागं व्यावर्तध्वम् । इत्याग्नेयं विभज्य । यथाभागं व्यावर्तेथाम् । इत्यग्नीषोमीयैन्द्रवैमृधौ विभजेत् । ततः, इदमग्नीषोमयोः, इदमिन्द्रस्य वैमृधस्य, इत्यन्तयोरेव निर्देशपूर्वकाभिमर्शो नाऽऽग्नेयस्य निर्देशाभिमर्श इति ।

दर्शे तु—

यथाभागं व्यावर्तेथाम् , इति विभज्य समौ पिण्डौ कृत्वेति सूत्राद्यथा प्रतिदैवतं समं विभजनं स्यात्तथा विभागकरणमिति गम्यते । ततः, इदमग्नेः, इदमिन्द्राग्न्योः, इत्यभिमृशेत्, इति विशेषः ।

२ पौर्णमास्यामपि पुरोडाशकरणमेवमेव । अमावास्यायामप्येवमेव ।

३ इदमहं सेनाया अभीत्वर्यै मुखमपोहामि, इति मन्त्रं प्रतिकपालयोगमुक्त्वाऽङ्गारानपोहेत् ।

४ घर्मोऽसि विश्वायुः, इत्याग्नेयवत्प्रतिपुरोडाशं मन्त्रमावर्तयेत् ।

उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्, इति पुरोडाशं प्रथयन्सर्वाणि कपालानि प्रथयित्वाऽङ्गुलीः प्रक्षाल्य

त्वचं गृह्णीष्व, इत्यद्भिः श्लक्ष्णीकृत्याङ्गुलीः प्रक्षाल्य सायंदोहकुम्भीमानीय

अन्तरितꣳ रक्षोऽन्तरिता अरातयः, इति सर्वाणि हवीꣳषि त्रिः पर्यग्नि कृत्वा तदुल्मुकं निरस्याप उपस्पृश्य पुनरुल्मुकानि गृहीत्वा

देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधिनाके, इत्युल्मुकैः परितप्य

अग्निस्ते तनुवं माऽतिधागग्ने हव्यꣳ रक्षस्व, इति दर्भैर्ज्वलद्भिस्तृणादिभिर्वाऽभिज्वाल्य

अविदहन्तः श्रपयत, इत्याग्नीध्रं संप्रेष्य वाचं विसृजेत ।

आग्नीध्रः—हवीꣳषि सुशृतानि कुर्यात् ।

अध्वर्युः—सं ब्रह्मणा पृच्यस्व, इति वेदेन पुरोडाशे साङ्गारं भस्माध्यूह्य, अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्यैकीकृत्य स्फ्येनान्तर्वेदि तिस्रो लेखाः प्राचीरुदीचीर्वा लिखित्वा तास्त्रसꣳस्यन्दयंस्त्रिर्निनयेत्त्रिदेवम् ।

---

१ उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्, इति प्रतिपुरोडाशप्रथनमावृत्तिः कार्या ।

२ त्वचं गृह्णीष्व, इति प्रतिपुरोडाशमावर्तयेत् ।

३ पौर्णमास्यां सायंदोहकुम्भीनयनं नास्ति । सांनाय्याभावात् । असोमयाजिनोऽमावास्यायां च नास्ति ।

४ देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधिनाके, इति परितपनमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

५ अग्निस्ते तनुवं माऽतिधागग्ने हव्यꣳ रक्षस्व, इत्यभिज्वलनमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

६ सं ब्रह्मणा पृच्यस्व, इति भस्माध्यूहनमन्त्रं प्रतिपुरोडाशमावर्तयेत, इति ।

एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा,

इत्येतैः प्रतिमन्त्रं प्रत्यगपवर्गमुदकं निनयेत् ।

यजमानः— एकतायेदं न मम, द्वितायेदं न मम, त्रितायेदं न मम,

इति प्रतिमन्त्रं त्यागं कुर्यात् ।

इत्यापस्तम्बीयदर्शपूर्णमासप्रयोगीयः प्रथमः प्रश्नः ।

---

अथाऽऽपस्तम्बीयदर्शपूर्णमासयोर्द्वितीयः प्रश्नः ।

अध्वर्युः—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति स्फ्यमादाय

इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजाः ।

इत्यभिमन्त्र्य हरस्ते मा प्रतिगाम् इति दर्भेण स्रुववत्संमृज्य दर्भमुत्करे निरस्याप उपस्पृश्यापरेणाऽऽहवनीयम्

एकं द्वे त्रीणि चत्वारि, इति स्फ्यकृतेन मानेन यजमानमात्रीं प्रागपवर्गां वेदिं कृत्वा

वेदेन वेदिं विविदुः पृथिवीꣳ सा पप्रथे पृथिवी पार्थिवानि ।

गर्भं बिभर्ति भुवनेष्वन्तरततो यज्ञो जायते विश्वदानिः ।

इति पुरस्तात्स्तम्बयजुष उपरिष्टाद्वा[1] वेदेन वेदिं त्रिः संमृज्यात् ।

यजमानः—चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये ।

मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामान् ।

इति वेदिꣳ संमृज्यमानामनुमन्त्रयेत ।

अध्वर्युः—पृथिव्यै वर्मासि, इति वेदेः पूर्वार्धे त्रितृतीयदेश उदगग्रं प्रागग्रं वा दर्भं निधाय

---

१ उपरिष्टान्नाम स्तम्बयजुषो हरणादुपरिष्टात्खनिप्रत्यवेक्षणात्प्राग्वेदेन वेदिं त्रिः संमृज्यात् ।

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम् ।

इति स्फ्येन तृणं प्रहृत्याप उपस्पृश्य

अपहतो ररुः पृथिव्यै, इति स्फ्येन सतृणान्पांसूनपादाय

व्रजं गच्छ गोस्थानम्, इति हरेत् ।

यजमानः—यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः ।

यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि ।

इति स्तम्बयजुर्ह्रियमाणमनुमन्त्रयेत ( स्तम्बयजु—सतृणाः पांसवः । )

अध्वर्युः—वर्षतु ते द्यौः, इति वेदिं यजमानं वा प्रत्यवेक्ष्य

बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि

यं च वयं द्विष्मस्तमतो मा मौक् ।

इत्युत्करे[1] स्तम्बयजुर्निवपेत् ।

आग्नीध्रः—अररुस्ते दिवं मा स्कान्, इत्युत्करे न्युप्तं स्तम्बयजुरुपयञ्जलिना गृह्णीयात् ।

यजमानः इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् ।

मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीषु ।

इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत ।

अध्वर्युः—अपाररुम देवयजनं पृथिव्याः, इति द्वितीयं प्रहृत्याप उपस्पृश्य

अपहतोऽररुः पृथिव्यै देवयजन्यै, इति स्फ्येन सतृणान्पांसूनपादाय

व्रजं गच्छ गोस्थानम् । इति हरेत् ।

यजमानः—यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः ।

---

१ उत्करो नाम—वेदिप्रदेशादुत्तरतः पुरस्ताद्विहितोऽयम्देशो [illegible] देशे न्युप्तं स्तम्बयजुः स देश उत्करः ।

यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि।

इति स्तम्बयजुर्ह्रियमाणमनुमन्त्रयेत।

अध्वर्युः—वर्षतु ते द्यौः, इति वेदिं यजमानं वा प्रत्यवेक्ष्य

बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्। इत्युत्करे स्तम्बयजुर्निवपेत्।

आग्नीध्रः—अवबाढꣳ रक्षः, इत्युत्करे द्वितीयं न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात्।

यजमानः—इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम्।

मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीषु।

इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत।

अध्वर्युः—(३) अररुर्द्यां मा पप्तत्, इति स्फ्येन तृतीयं प्रहृत्याप उपस्पृश्य

अपहतोऽररुः पृथिव्या अदेवयजनः। इति स्फ्येन सतृणान्पांसूनपादाय

व्रजं गच्छ गोस्थानम् इति हरेत्।

यजमानः—यो मां हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः।

यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि।

इति स्तम्बयजुर्ह्रियमाणमनुमन्त्रयेत।

अध्वर्युः—वर्षतु ते द्यौः, इति वेदिं यजमानं वा प्रत्यवेक्ष्य

बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्। इत्युत्करे स्तम्बयजुर्निवपेत्।

आग्नीध्रः—अवबाढोऽघशꣳसः, इत्युत्करे तृतीयं न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात्।

यजमानः—इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम्।

**मेधावी दिक्षु मनसा तपस्वयन्तर्दूतश्चरति मानुषीषु ।**

इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत ।

अध्वर्युः—तूष्णीं चतुर्थं छित्त्वाऽप उपस्पृश्य तूष्णीं स्फ्येन दर्भशेषेण सह सतृणान्पांश्रूनपादाय तूष्णीं हृत्वा तूष्णीं वेदिं यजमानं वा प्रत्यवेक्ष्य तूष्णीमुत्करे निवपेत् ।

यजमानः—**यो मां हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः ।**

**यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि ।**

इति स्तम्बयजुस्तूष्णीं ह्रियमाणमप्यनुमन्त्रयेत[1] ।

आग्नीध्रः—**अवबाढा यातुधानाः**, इत्युत्करे चतुर्थं न्युप्तं स्तम्बयजुरार्यञ्जलिना गृह्णीयात् ।

यजमानः—**इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् ।**

**मेधावी दिक्षु मनसा तपस्वयन्तर्दूतश्चरति मानुषीषु**, इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत ।

अध्वर्युः—**द्रप्सस्ते द्यां मा स्कान्**, इति खनिं प्रत्यवेक्ष्य ( खनिः—यतः पांसव उपात्ताः स प्रदेशः )

**वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा**, इति स्फ्येन दक्षिणतो दक्षिणश्रोणिमारभ्य दक्षिणांसपर्यन्तं वेदे स्वीकारचिह्नीभूतां रेखां कृत्वा

**रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा**, इति स्फ्येन पश्चाद्दक्षिणश्रोणिमारभ्योत्तरश्रोणिपर्यन्तं वेदेः स्वीकारचिह्नीभूतां रेखां कृत्वा[2] ।

---

१ स्तम्बयजुषस्तूष्णीं हरणेऽपि यो मा हृदा, इति मन्त्रेण यजमानेनानुमन्त्रणमवश्यं कार्यम् । स्तम्बयजुर्ह्रियमाणमित्यविशेषवचनात् ।

२ अत्रोदकस्पर्शनं विद्वांसो विकल्पयन्ति तद्रीतिश्चेत्थं—
रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदनानिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत् । ३ । ९ । इतिपरिभाषासूत्राद्रौद्रे कर्मणि कृतेऽपामुपस्पर्शनं प्राप्तं, तच्च रौद्रराक्षसेत्यत्र मीमांसारीत्याऽऽग्नेयमितिवदेकदेवतासंबन्धित्वावगमाद्रुद्रास्त्वा परिगृह्णन्त्विति बहुरुद्रसंबन्धे नापामुपस्पर्शनम् । निमित्तं संख्याया अविवक्षितत्वादुदकस्पर्शनं कार्यमित्यन्ये हविः क्षायतीतिवत् ।

अदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा, इति स्फ्येनोत्तरत उत्तरश्रोणिमारभ्योत्तरांसपर्यन्तं वेदेः स्वीकरचिह्नभूतां रेखां कुर्यात्।

यजमानः— यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामि, इति वेदिं परिगृह्यमाणामनुमन्त्रयेत।

अध्वर्युः—अपारुरम देवयजनं पृथिव्या अदेवयजनो जहि। इति स्फ्येन वेदिभूमेरुपरितनां मृदमुद्धन्यात्।

यजमानः—यदुद्धनन्तो जिहिंसिम पृथिवीमोषधीरपः।
अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात्।
यदुद्घ्नन्तो जिहिंसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः।

मा तेन हेड उपगाम भूम्याः शिवा नो विश्वैर्भुवनेभिरस्तु, इत्युद्धन्यमानामनुमन्त्रयेत।

आग्नीध्रः—अध्वर्युणा वेदिभूमेरुपरितनीमुद्धृतां मृदमुत्करे त्रिर्निवपेत्।

अध्वर्युः—इमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे।
इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु।
इत्याग्नीध्राय संप्रैषं कुर्यात्।

आग्नीध्रः—देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः।

इति द्व्यङ्गुलसंमितां (द्व्यङ्गुलादिवकल्पसंमितां वा) पुरीषवतीं खात्वाऽप उपस्पृश्य वेदिं दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा कृत्वा प्राञ्चौ वेद्यंसावुन्नीय तथा प्रतीच्यौ श्रोणी उन्नीय पुरस्तात्तनीयसीं कृत्वा तथा च पश्चात्प्रथीयसीं कृत्वा मध्ये संनततरां कुर्यात्।

यजमानः—भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयांसि।
यज्ञिया यज्ञं वि च यन्ति शं चौषधीराप इह शक्करीश्च।
इति वेदिं क्रियमाणामनुमन्त्रयेत।
अध्वर्युः—ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि, इति ब्रह्माणमामन्त्रयेत।

ब्रह्मा— भूर्भुवःस्वर्बृहस्पतिप्रसूतः, इति जपित्वा ।
ॐ परिगृहाण, इत्यतिसृजेत् ।

अध्वर्युः— ऋतमसि, इति दक्षिणतः पूर्वोक्तप्रकारेण रेखां कृत्वा
ऋतसदनमसि, इति पश्चात्पूर्वोक्तप्रकारेण रेखां कृत्वा
ऋतश्रीरसि, इत्युत्तरतः पूर्वोक्तप्रकारेण रेखां कुर्यात् ।

यजमानः—यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामि
इति वेदिं परिगृह्यमाणामनुमन्त्रयेत ।

अध्वर्युः—धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य
विसृपो विरप्शिन् , इति स्फ्येन वेदिं प्रत्यगपवर्गं योयुप्य
उदादाय पृथिवीं जीरदानुर्यामैरयन्चन्द्रमसि स्वधाभिस्तां
धीरासो अनुदृश्य यजन्ते, इति वेदिमनुवीक्ष्य पश्चार्धे वेदेर्वि-
तृतीयदेशे स्फ्यं तिर्यञ्चꣳ स्तब्ध्वा
प्रोक्षणीरासादयेध्मावर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि पत्नीꣳ
संनह्याऽऽज्येनोदेहि । इत्याग्नीध्राय संप्रैषं कुर्यात् ।

आग्नीध्रः—प्रोक्षणीरभिपूर्य, उदञ्चꣳ स्फ्यमपोह्य, दक्षिणेन स्फ्यमसꣳस्पृष्टा
उपनिनीय
ऋतसधः स्थ, इति यजमानस्य द्वेष्यं (पापं) मनसा ध्यायन् स्फ्यस्य
वर्त्मनि प्रोक्षणीरासादयेत् । ( अत्र ऋतसधः स्थ पापघ्न्य इति
याज्ञिककल्पाः )

यजमानः—ईडेऽन्यक्रतूरहमपो देवीरुपब्रुवे दिवा नक्तं च सस्रुषी-
रपस्वरीः । इति प्रोक्षणीरासाद्यमाना अनुमन्त्रयेत ।

---

१ आपस्तम्बब्रह्मा—बृहस्पते परिगृहाण वेदिꣳ स्वगावो देवाः सद-
नानि सन्तु । तस्यां बर्हिः प्रथताꣳ साध्वन्तर्हिꣳस्रा नः पृथिवी देव्यस्तु,
देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणाꣳ सुकृतां यत्र
लोकस्तत्रेमं यज्ञं यजमानं च धेहि । इत्युपांशूक्त्वोच्चैः, ॐ ३म्, परि-
गृहाण, इत्यनुजानीयात् ।

२ योयुप्य—निम्नोन्नतसमीकरणार्थं विघट्य

**आग्नीध्रः—शतभृष्टिरसि वानस्पत्यो द्विषतो वधः।** इति द्वेष्यं (पाप्मानं) मनसा ध्यायन्पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्य हस्ताववनिज्य स्फ्यस्याग्रमप्रतिमृशन्स्फ्यं प्रक्षाल्योत्तरेणाऽऽहवनीयं प्रागग्रं दक्षिणमिध्ममुत्तरं बर्हिरुपसादयेत् ।

**यजमानः—ऊर्णाम्रदसं प्रथमानꣳ स्योनं देवेभ्यो जुष्टꣳ सदनाय बर्हिः। सुवर्गे लोके यजमानꣳ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्।** इति बर्हिरासाद्यमानमनुमन्त्रयेत ।

**आग्नीध्रः—घृताचीरेताग्निर्वो ह्वयति देवयज्यायै,** इति ससुवप्राशित्राः स्रुच आदाय

**प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः,** इत्याहवनीये गार्हपत्ये वा प्रतितप्य, **अनिशिताः स्थ सपत्नक्षयणीः,** इति तप्ताः सप्राशित्राः स्रुचोऽभिमन्त्र्य विभक्तैरविभक्तैर्वा वेदाग्रैः—

**गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ संमार्ज्मि ।**

इति प्राचीनमुदीचीनं वोत्तानं स्रुवं वेदाग्रैरन्तरतोऽभ्याकारं सर्वतोबिलमभिसमाहारं वेदाग्रमूलैर्दण्डं च संमृज्य

**वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मि।**

इति प्राचीमुदीचीं वोत्तानां जुहूं वेदाग्रैरन्तरतोऽभ्याकारं प्राचीं वेदाग्रमध्यैर्बाह्यतः प्रतीचीं वेदाग्रमूलैर्दण्डं च संमृज्य

**चक्षुः श्रोत्रं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मि।**

इत्युदीचीमेवोत्तानामुपभृतं वेदाग्रैरन्तरतोऽभ्याकारं प्रतीचीं वेदाग्रमध्यैर्बाह्यतः प्राचीं वेदाग्रमूलैर्दण्डं च संमृज्य

**प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मि।**

इति स्रुववद्ध्रुवां संमृज्य

**रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहꣳ संमार्ज्मि।**

इति स्रुववत्प्राशित्रहरणं संमृज्य, तूष्णीं वा स्रुववदेव संमृज्याऽऽप्रयोगसमाप्तेः संमृष्टपात्राण्यसंमृष्टपात्रैर्न संस्पर्शयेत् ।

**अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि ।** इति पुनः प्रतितप्य प्रोक्षण्यग्रेणोत्करं जघनेन वा दर्भेषु सादयित्वा स्रुक्संमार्जनान्यद्भिः सꣳस्पृश्य

दिवः शिल्पमवंततं पृथिव्याः ककुभिं श्रितम् ।
तेन वयꣳ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहा ॥

इति यस्मिन्नग्नौ प्रतितपनं तस्मिन्नग्नौ प्रहरेदुत्करे न्यसेत् ।

यजमानः—प्रजापतय इदं न मम, इत्यग्नौ प्रहरणपक्षे त्यागो न न्यासपक्षे त्यजेत् ।

आग्नीध्रः—वेदमाज्यस्थालीं योक्त्रं पवित्रे चाऽऽदाय ( मौञ्जं दाम पवित्रे चाऽऽदायेति वा )

आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम् ।
अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम् ।

इत्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां तिष्ठन्तीं वा पत्नीं मौञ्जेन दाम्नाऽन्यतरतः पाशेन योक्त्रेण वा संनह्येत् ( संनह्येत्—योक्त्रान्ते पाशं प्रतिमुच्य विरमेत् । )

पत्नी—उत्तरेण नाभिं शिखाकृतिं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थाय

अग्ने गृहपत उप मा ह्वयस्व, इति गार्हपत्यमुपस्थाय
देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसीः, इति देवपत्नीरुपस्थाय तस्माद्देशादपक्रम्य
सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इति दक्षिणत उदीच्युपविश्य
इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा ।
अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय । इति जपेत् ।

---

१ याज्ञिकसंप्रदायस्तु प्रकृतावग्नौ प्रहरणमेव विकृतौ तूत्करे त्यागः ।

२ योक्त्रम्—बलीवर्दनियोजनार्थं शम्यायां प्रतिमुक्तरज्जुविशेषः । यदा च याज्ञिका इमां रज्जुं गृह्णन्ति तदा योक्त्रं पवित्रे चाऽऽदायेति वक्तव्यम् । यदा तु तां न गृह्णन्ति मौञ्जमेव दाम स्वी कुर्वन्ति तदा तु मौञ्जं दाम पवित्रे चाऽऽदायेति वक्तव्यम् । ये तु दाम गृहीत्वा योक्त्रं पवित्रे चाऽऽदायेति वदन्ति ते स्वाज्ञानविलसितमेव प्रकटयन्ति ।

यजमानः—युक्ता मे यज्ञमन्वासातै, इति पत्नीꣳ संप्रेष्येत् ।

अग्नीध्रः—पूषा ते बिलं विष्यतु इति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्रावाज्यं विलाप्य

अदितिरस्यच्छिद्रपत्रा, इत्याज्यस्थालीमादाय

महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्यायै इति तस्यां पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्य

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे ।

इति दक्षिणाग्नावधिश्रित्य वेदेन भस्म प्रमृज्य

इषे त्वा, इति दक्षिणार्धे गार्हपत्यस्याधिश्रित्य

ऊर्जे त्वा, इत्यपादाय वेदेन भस्म प्रमृज्य वेदेनोपयम्य पत्न्या उपहरेत् ।

पत्नी—तदाज्यमनुच्छ्वसन्ती निमील्य तूष्णीं वीक्ष्य

महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे, सुप्रजास्त्वाय ।

इति वीक्षेत ।

आग्नीध्रः—तेजोऽसि, इत्युत्तरार्धे गार्हपत्यस्याधिश्रित्य

तेजसे त्वा, इत्यपादाय वेदेन भस्म प्रमृज्य

( अनालम्भुकत्वादिना पत्न्यामसंनिहितायां गार्हपत्यस्योत्तरार्धाधिश्रयणमपादानं च लुप्यते । तदीक्षणाभावात् । तदा योक्त्रं मौञ्जं दाम वा स्वकाले दक्षिणतःपाशमुदगग्रं शुल्वं पश्चाद्वेदेरन्तर्वेदि वा तूष्णीं निदध्यात् ।)

तेजोऽसि तेजोऽनुप्रेहि, इति हुत्वा

अग्निस्ते तेजो माविनैत्, इत्याहवनीयेऽधिश्रित्य वेदेन भस्म प्रमृज्य

अग्नेर्जिह्वाऽसि सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव ।

इति स्फ्यस्य वर्त्मन्त्सादयेत् । ( वर्त्मन्—वर्त्मनि )

अध्वर्युयजमानौ—तदाज्यं तूष्णीं निमील्य वीक्ष्यानुच्छ्वसन्तौ ।

---

१ उच्छ्वासे—इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे । इति प्रायश्चित्तीमृचं जपेत् । आश्वलायनीयजमानस्त्विमामेव ऋचं स्वशाखाधर्मेण पठेत् ।

आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाऽऽज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाऽभिघारयामि तस्य ते भक्षीय । इत्यवेक्षेयाताम् ।

अध्वर्युः—शुक्रमसि, इत्युदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं प्रथममुत्पूय

ज्योतिरसि, इति पूर्ववद्द्वितीयमुत्पूय,

तेजोऽसि, इति पूर्ववत्तृतीयमुत्पूय,

देवो वः सवितोत्पुनातु, इत्याज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीः प्रथममुत्पूय,

अच्छिद्रेण पवित्रेण, इति पूर्ववद्द्वितीयमुत्पूय,

वसोः सूर्यस्य रश्मिभिः, इति पूर्ववत्तृतीयमुत्पुनीयात् ।

यजमानः—अद्भिराज्यमाज्येनापः सम्यक्पुनीत सवितुः पवित्रैः । ता देवीः शक्करीः शाक्करेणेमं यज्ञमवत संविदानाः । इत्याज्यं प्रोक्षणीश्चोत्पूयमाना अभिमन्त्रयेत ॥

अध्वर्युः—शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि । इत्याज्यस्थाल्या बिलेन समं जुह्वा बिलं धारयमाणो जुहूं वेदेनोपयम्य, अनिष्कासिना स्रुवेणान्तर्वेद्याज्यं भूयो जुह्वां प्रथमं गृहीत्वा

ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ॥

इति पूर्ववद्द्वितीयमाज्यं जुह्वां गृहीत्वा

---

१ पुनराहारम्—पुरत आरभ्य पश्चात्कृत्वा पुरतः समाप्तिः, एवं त्रिः ।

२ अनिष्कासिना—शेषरहितेन । निष्कासः शेषः । पुराणलेपप्रतिषेधार्थं नैतत् । अपि तु आज्यशेषेण स्थापनीय इत्यर्थमिति निष्कासशब्दसामर्थ्यादिति ब्रूमः ।

अर्चिस्त्वाऽर्चिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ।

इति पूर्ववत्तृतीयमाज्यं जुह्वां गृहीत्वा

पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि ।

इति पूर्ववच्चतुर्थं जुह्वां गृहीत्वा

पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि ।

( इति पञ्चावत्तिनो यजमानस्य पूर्ववत्पञ्चमं गृहीत्वा विहारसमीप आसादयेत् )

यजमानः—चतुरवत्ती यजमानश्चतुर आज्यग्रहणमन्त्रानध्वर्युणा सह जपेत् ।

पञ्चावत्ती चेत्पञ्चाऽऽज्यग्रहणमन्त्रानध्वर्युणा सह जपेत् ।

अत्राध्वर्युयजमानावुभावपि चातुःस्वर्येणैव जपतः ।

तत्राध्वर्युराज्यग्रहणमन्त्रं चातुःस्वर्येण जपित्वाऽऽज्यं गृह्णीयात् ।

अध्वर्युः—पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि ।

इत्याज्यस्थाल्या मध्यदेश उपभृतं धारयमाण उपभृतं वेदेनोपयम्य, अनिष्कासिना स्रुवेणान्तर्वेद्याज्यमस्थीय उपभृति प्रथमं गृहीत्वा

पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि ।

इति पूर्ववदुपभृति द्वितीयं गृहीत्वा

पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि ।

इति पूर्ववदुपभृति तृतीयं गृहीत्वा

पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि, इति पूर्ववदुपभृति चतुर्थं गृहीत्वा

( धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामि । )

( इति पञ्चावत्तिन यजमानस्य गृहीत्वा )

चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ।

इति पूर्ववदुपभृति पञ्चमं गृहीत्वा

ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि ।

इति पूर्ववदुपभृति षष्ठं गृहीत्वा

क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि ।

इति पूर्ववदुपभृति सप्तमं गृहीत्वा

**विशे त्वा यन्त्राय धर्त्राय गृह्णामि ।**

इति पूर्ववदुपभृति अष्टमं गृहीत्वा विहारसमीप आसाद्य

( **सुवीर्याय त्वा गृह्णामि** । इति पञ्चावत्तिन यजमानस्य गृह्णीयात् । )

**यजमानः**—अध्वर्युणा सहेमानाज्यग्रहणमन्त्राञ्जपेत् । ( अध्वर्युस्तु पूर्ववदेव चातुःस्वर्येणैव मन्त्रानुक्त्वाऽऽज्यं गृह्णीयात् । )

**अध्वर्युः**—**सुप्रजास्त्वाय त्वा गृह्णामि,** इति वेदेन सहाऽऽज्यस्थाल्या उत्तरतो भूमौ प्रतिष्ठितायां ध्रुवायामन्तर्वेदि भूयिष्ठमाज्यमनिष्कासिना स्रुवेण प्रथमं गृहीत्वा

**रायस्पोषाय त्वा गृह्णामि** । इति पूर्ववद्ध्रुवायामाज्यं द्वितीयं गृहीत्वा

**ब्रह्मवर्चसाय त्वा गृह्णामि** । इति पूर्ववद्ध्रुवायामाज्यं तृतीयं गृहीत्वा

**भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामि ।**

इति पूर्ववद्ध्रुवायामाज्यं चतुर्गृहीतं गृहीत्वा विहारसमीप आसादयेत् ।

( पञ्चावत्तिनो यजमानस्य )—

( **कामाय त्वा गृह्णामि** । इति पूर्ववद्ध्रुवायामाज्यं पञ्चमं गृहीत्वा विहारसमीप आसादयेत् । ) चतुर्गृहीतप्रभृतीन्येतान्याज्यान्युत्करे नाऽऽसादयेत् । अन्तर्वेदि गृहीतं ध्रुवागतमाज्यं न पश्चाद्धरेत् ।

**यजमानः**—अध्वर्युणा सहेमानाज्यग्रहणमन्त्राञ्जपेत् । अध्वर्युस्तु प्राग्वदेव चातुःस्वर्येणैव ब्रूयात् ।

**अध्वर्युः**—**आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ ।**

इति प्रोक्षणीरभिमन्त्र्य

**ब्रह्मन्प्रोक्षिष्यामि** । इति ब्रह्माणमामन्त्रयेत ।

ब्रह्मा[1]—भूर्भुवः स्वर्बृहस्पतिप्रसूतः । इति जपित्वा
ओं ३ प्रोक्ष । इत्यतिसृजेत् ।

अध्वर्युः—विस्रस्येध्मम्—
कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा ।
इति सकृन्मन्त्रेण द्विस्तूष्णीमिध्मं प्रोक्ष्य
वेदिरसि बर्हिषे त्वा स्वाहा ।
इति सकृन्मन्त्रेण द्विस्तूष्णीं वेदिं प्रोक्ष्य
बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा । इति सकृन्मन्त्रेण द्विस्तूष्णीं बर्हिः
प्रोक्ष्यान्तर्वेदि पुरोग्रन्थि ऊर्ध्वाग्रं बर्हिरासादयेत् ।

यजमानः—अग्निश्रेम बर्हिरन्तः पृथिव्याः सꣳरोहयन्त ओषधी-
र्विवृक्णाः ।
यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु ।
सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीश्च ।
वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा
अदब्धाः ।
इत्यन्तर्वेदि बर्हिरासन्नमनुमन्त्रयेत ।

अध्वर्युः—दिवे त्वा, इत्यासन्नबर्हिषोऽग्रं प्रोक्ष्य
अन्तरिक्षाय त्वा, इति मध्यं प्रोक्ष्य
पृथिव्यै त्वा, इति मूलं प्रोक्ष्य, स्रुच्यग्राणि मूलानि च क्लेदयित्वा
पोषाय त्वा, इति स्रुग्बिलाग्रयोरुपरिन्यस्तन्युब्जहस्तेन प्रत्यगपवर्गं
ग्रन्थिं प्रत्युक्षेत् ।

अध्वर्युयजमानौ—प्राचीनावीतिनौ भूत्वा
अध्वर्युः—स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत ।

---

१ आपस्तम्बब्रह्मा—
प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ।
इत्युपांशु जपमुक्त्वोच्चैः—ओं ३ भू. प्रोक्ष इत्यनुजानीयात् ।

इति प्रोक्षणीशेषं दक्षिणायै श्रोणेरोत्तरस्याः संततं निनीय यज्ञोपवीती भूत्वाऽप उपस्पृशेत् ।

**यजमानः**–पितृभ्यो बर्हिषद्भ्य इदं न मम । इति त्यागं कृत्वा यज्ञोपवीती भूत्वाऽप उपस्पृशेत् ।

**अध्वर्युः**—पूषा ते ग्रन्थिं विष्यतु, इति पुरस्तात्प्रत्यञ्चमुपगूढं ग्रन्थिं प्रागपवर्गं विस्रस्य ( यदि संनहनकाले पश्चात्प्रागुपगूढो ग्रन्थिस्तं पुच्छे गृहीत्वा पश्चादाकृष्य विस्रस्य )

विष्णोः स्तूपोऽसि, इति प्रस्तरमाहवनीयं प्रति बर्हिषः सकाशात्कर्षन्निव शनैरपादाय

अयं प्राणश्चापानश्च यजमानमपिगच्छताम् ।

यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने ।

यजमाने प्राणापानौ दधामि । इति तस्मिन्प्रस्तरे पवित्रे अपिसृज्य

प्राणापानाभ्यां त्वा सतनुं करोमि । इत्यग्रेणाऽऽहवनीयं प्रस्तरमाहृत्य यजमानाय प्रयच्छेत् ।

**यजमानः**—ब्रह्मणे प्रयच्छेत् ।

**ब्रह्मा**—प्रस्तरं धारयति ।

**यजमानः**—स्वयमेव वा धारयेन्न ब्रह्मणे प्रयच्छेत् ।

**अध्वर्युः**—परिभोजनीयदर्भैर्वा वेदिमन्तर्धाय दक्षिणतः संनहनं शुल्बं प्राचीनं प्रागुदीचीनं वा निधाय

ऊर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः ।

इति बहुलमनतिदृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वाऽग्रैर्मूलान्यभिच्छादयन्धातौ धातौ मन्त्रमावर्तयन्बर्हिषा वेदिं[१] स्तृणीयात् ।

**यजमानः**—चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।

सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् ।

---

१ प्रस्तरस्य शनैरपादानं सूत्रयताऽऽचार्येण प्रस्तरस्येतस्ततः करणं निन्दितमिति गम्यते । सूत्रकारोऽपि साक्षाद्विवक्त एव " नो धौतीत्यादिना । "

शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि।

इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वाऽऽयुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्व।

इत्यास्तीर्यमाणां वेदिमनुमन्त्रयेत।

अध्वर्युः—प्रस्तरपाणिः—

गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडितः।

इत्युदगग्रमन्योन्यसंस्पृष्टं मध्यमं परिधिं परिदध्यात्।

यजमानः—ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुवित्। इति परिधीयमानं मध्यमं परिधिमनुमन्त्रयेत।

अध्वर्युः—इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः।

इति प्रागग्रमन्योन्यसंस्पृष्टं दक्षिणं परिधिं परिदध्यात्।

यजमानः—उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुवित्।

इति परिधीयमानं दक्षिणं परिधिमनुमन्त्रयेत।

अध्वर्युः—मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः। इति प्रागग्रमन्योन्यसंस्पृष्टमुत्तरं परिधिं परिदध्यात्।

यजमानः—अभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवित्।

इति परिधीयमानमुत्तरं परिधिमनुमन्त्र्य

अस्मिन्यज्ञ उप भूय इन्नु मेऽविक्षोभाय परिधीन्दधामि।

धर्ता धरुणो धरीयानग्निर्द्वेषाꣳसि निरितो नुदातै।

इत्यनया सकृदन्ते सर्वान्परिधीननुमन्त्रयेत।

अध्वर्युः—सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याः।

इत्याहवनीयमभिमन्त्र्योपर्याहवनीये प्रस्तरं धारयन्नग्निं काष्ठैर्बलवन्तं कुर्यात् ।

यजमानः—युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ।

इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ।
यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो ।
तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे ।
तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने ।
ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभन्यज्ञहनः पिशाचाः ।

इति चाऽऽहवनीयमनुमन्त्रयेत ।

अध्वर्युः—आघारसमिधौ गृहीत्वा मध्यमं परिधिमुपस्पृश्य

वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमह्यग्ने बृहन्तमध्वरे ।

इति दक्षिणामाघारसमिधं पूर्वाघारसमाप्तिप्रदेश ऊर्ध्वाग्रामाधाय

समिदस्यायुषे त्वा, इति तूष्णीं वोत्तरामाघारसमिधमुत्तराघारसमाप्तिप्रदेश ऊर्ध्वाग्रामाधाय समावनन्तर्गर्भौ दर्भौ विधृतित्वेन कल्पयित्वा

विशो यन्त्रे स्थः, इत्यन्तर्वेद्युदगग्रे ते विधृती निदध्यात् ।

यजमानः—विच्छिंनद्मि विधृतीभ्याꣳ सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनानहꣳ स्वानामुत्तमोऽसानि देवाः ।

विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम् ।
सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती
प्राणान्मयि धारयतं प्रजां मयि धारयतं पशून्मयि धारयतम् ।

इति विधृती आसाद्यमाने अनुमन्त्रयेत ।

अध्वर्युः—वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीद। इति तयोर्विधृत्योरुपरि प्रस्तरꣳ स्थापयेत्।

यजमानः—अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम्।

स दाधार समिधो विश्वरूपास्तस्मिन्त्स्रुचो अध्यासादयामि।

इति प्रस्तरमासाद्यमानमनुमन्त्रयेत।

अध्वर्युः—जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद।

इति तस्मिन्प्रस्तरे प्रागग्रां परस्परमसꣳस्पृष्टां जुहूꣳ सादयेत्।

यजमानः—आरोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः।

हिरण्यपक्षाजिरा संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः।

जुहूरसि घृताची गायत्र्याम्नी कविभिर्जुषाणा।

अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानाग्नेयेन शर्मणा दैव्येन। इति जुहूमासाद्यमानामनुमन्त्रयेत।

अध्वर्युः—उपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद। इति प्रस्तर उत्तरेण जुहूं प्रागग्रामसꣳस्पृष्टामुपभृतꣳ सादयेत्।

यजमानः—अवाहं बाध उपभृता सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः।

दोहै यज्ञꣳ सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः। सुभृदस्युपभृद्घृताची त्रैष्टुभेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानैन्द्रेण शर्मणा दैव्येन। इत्युपभृतमासाद्यमानामनुमन्त्रयेत।

अध्वर्युः—ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद । इति प्रस्तर उत्तरेणोपभृतं प्रागग्रामसंस्पृष्टां ध्रुवामासादयेत् ।

यजमानः—यो मा वाचा मनसा दुर्मरायुर्हृदाऽरातीयादभिदासदग्ने । इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः ।

ध्रुवाऽसि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः । अव्यथमाना यज्ञमनु यच्छस्व सुनीती यज्ञं नयास्युप देवान्दैव्येन शर्मणा दैव्येन । इति ध्रुवामासाद्यमानामनुमन्त्रयेत ।

अध्वर्युः—ऋषभोऽसि शाक्वरो घृताचीनाꣳ सूनुः प्रियेण नाम्ना प्रिये सदसि सीद । इति दक्षिणेन जुहूमुत्तरेण वा, उत्तरेण वा ध्रुवां स्रुवꣳ सादयेत् ।

यजमानः—स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके ।

दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः ।

अयꣳ स्रुवो अभिजिहर्ति होमाञ्छताक्षरश्छन्दसाऽऽनुष्टुभेन । सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्येन ॥ इति स्रुवमासाद्यमानमनुमन्त्रयेत ।

अध्वर्युः—पूर्वस्थापितस्थले तूष्णीमाज्यस्थालीमासादयेत् ।

यजमानः—इयꣳ स्थाली घृतस्य पूर्णाऽच्छिन्नपयाः शतधार उत्सः । मारुतेन शर्मणा दैव्येन । इत्याज्यस्थालीमासाद्यमानामनुमन्त्रयेत ।

अध्वर्युः—एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम् । इति स्रुचोऽभिमन्त्र्य

विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानि ।

इति स्रुग्गतान्याज्यान्यभिमन्त्र्य वेदमाज्यस्थालीं पात्रीꣳ स्रुवं चाऽऽदाय—इदमहꣳ सेनाया अभीत्वर्यै मुखमपोहामि। इति वेदेन कपालवत्पुरोडाशादङ्गारानपोह्य

सूर्यज्योतिर्विभाहि महत इन्द्रियाय, इति पुरोडाशमभिमन्त्र्य

आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम्।

खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽग्नये जुष्टमभिघारयामि।

इत्याग्नेयं पुरोडाशमभिघार्य

यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान्त्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यम्।

इति प्रातर्दोहमभिघार्य तूष्णीꣳ सायंदोहमभिघार्य

स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि ते।

इति पात्र्यामुपस्तीर्य

आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम्।

इत्यपर्यावर्तयन्पुरोडाशमुद्वास्य वेदेन भस्म प्रमृज्य

तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः।

इति पात्र्यां प्रतिष्ठाप्य हस्तं प्रक्षाल्य (यवमयश्चेत्तं पुरोडाशं तूष्णीं प्रतिष्ठाप्य)

---

१ इदमहꣳ सेनाया इतिमन्त्रं प्रतिपुरोडाशमावर्तयेत्पौर्णमास्याममावास्यायां समानमिदम्।

२ सूर्यज्योतिरिति मन्त्रं प्रतिपुरोडाशमावर्तयेत्। पौर्णमास्याममावास्यायाम्।

३ पौर्णमास्याम्—तूष्णीमग्नीषोमीयमैन्द्रं वैमृधं पुरोडाशमभिघार्य, अमावास्यायामाग्नेयमाप्यायतामिति मन्त्रेणाभिघार्य, तूष्णीमैन्द्राग्नमभिघार्य।

४ यस्त आत्मेत्यादिसायंदोहाभिघारणान्तं कर्म पौर्णमास्यां नास्ति सांनाय्याभावात्। असंनयतोऽमावास्यायामपि नास्ति सांनाय्याभावादेव।

५ स्योनं त इत्यादि प्रतिष्ठापनान्तमग्नीषोमीयस्य वैमृधस्य च कार्यम्। असंनयतोऽमावास्यायामाग्नेयस्यैन्द्राग्नस्य स्योनं त इत्यादिप्रतिष्ठापनान्तं कार्यम्।

दृꣳह गा दृꣳह गोपतिं मा वो यज्ञपती रिषत् । इत्युदक्प्रात-दोहमुद्वास्य१

इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्, इति स्रुवगृहीतेनाऽऽज्येन कपालानि प्रत्यज्य२

देवस्त्वा सविता मध्वाऽनक्तु इति स्रुवगृहीतेनाऽऽज्येन पुरोडाश-मक्त्वोपरिष्टात्पुरोडाशस्याधस्तादञ्जनमाज्याक्तेन हस्तेन कुर्यात्३ ।

यजमानः—तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिः ।

इति पुरोडाशमज्यमानमनुमन्त्रयेत४ ।

अध्वर्युः—अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता ।

इत्यपरेण स्रुचः पुरोडाशम्, स्रुचामुत्तरतो दोहौ६, पुरोडाशस्योत्तरतो वा अपि वा हस्ते कुम्भ्यौ धृत्वा वेदिमध्ये पूर्वं शृतमपरं दधि संश्लि-ष्यानन्तरं विभज्य दक्षिणस्यां श्रोण्यां शृतमुत्तरस्यां दध्येवमासादयेत् । सकृन्मन्त्रमुक्त्वा सर्वेषां हविषामासादनासंभवे प्रतिहविर्द्रव्यं मन्त्रमा-वर्त्याऽऽसादयेत् । तथैकेन दक्षिणेन हस्तेनाऽऽसादनासंभवे हस्तद्वये-नाऽऽसादयेत् । कर्मणे वां देवेभ्यः शकेयमिति मन्त्रलिङ्गात् ।

---

१ पौर्णमास्यामसंनयतोऽमावास्यायां च प्रातर्दोहोद्वासनं नास्ति सांनाय्या-भावात् ।

२ इरा भूतिरितिमन्त्रं प्रतिकपालयोगमावर्तयेत्पौर्णमास्याममावास्यायां च ।

३ पौर्णमास्यामसंनयतोऽमावास्यायां च—देवस्त्वा सवितेति मन्त्रं प्रति-पुरोडाशमावर्तयेत् ।

४ पौर्णमास्यामसंनयतोऽमावास्यायां च तृप्तिरसीति पुरोडाशानुमन्त्रणमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

५ पौर्णमास्याम्—पृथिवी होता द्यौरध्वर्यू रुद्रोऽग्नीत्, बृहस्पतिरुपवक्ता, इत्यपरेण स्रुचः पुरोडाशानासादयेत् । असंनयतोऽमावास्यायां पुरोडाशावासा-दयेत् । मन्त्रस्तु अग्निर्होतेत्यादिरेव ।

६ पौर्णमास्यामसंनयतोऽमावास्यायां दोहासादनं नास्ति सांनाय्याभावात् ।

यजमानः—यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताᳪ शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः प्रजापतिरसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताᳪ शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः ।

इत्याग्नेयं पुरोडाशमासन्नमभिमृश्य

इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवोऽचिकित्सन् ।
तेन देवा अवतोप मामिहेषमूर्जं यशः सह ओजः सनेयᳪ शृतं मयि श्रयताम् । इत्यासन्नं प्रातर्दोहमभिमृश्य
यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः ।

---

१ पौर्णमास्याम्—असंनयतोऽमावास्यायां चाऽऽग्नेयपुरोडाशाभिमर्शनानन्तरम्—
अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः ।
तेन लोकान्त्सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याम् ।
इति सर्वाणि हवीᳪष्यभिमृश्य

यो नः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् ।
अप तमिन्द्रो वैमृधो भुवनान्नुदतामहं प्रजां वीरवतीं विदेय ।
इत्यैन्द्रवैमृधमभिमृश्य, ममाग्ने वर्च इति मन्त्रैः—
पृथिवी होता, द्यौरध्वर्युः, रुद्रोऽग्नीत् , बृहस्पतिरुपवक्ता,
इति सर्वाणि हवीᳪष्यासन्नान्यभिमृशेत् ।

असंनयतः—अमावास्यायाममृतत्वमश्यामित्यस्यानन्तरम्—
यो नः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् ।
अप तमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेय ।
इत्यैन्द्राग्नमभिमृश्य ममाग्ने वर्च इति मन्त्रैरग्निर्होतेति मन्त्रैश्च सर्वाणि हवीᳪष्यासन्नान्यभिमृशेत् ।

इदं तच्छुक्रं मधु वाजिनीं वद्येनोपरिष्टाद्दधिनोन्महेन्द्रं दधिमान्धिनोतु ।

इत्यासन्नं दध्यभिमृश्य—

अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः ।
तेन लोकान्त्सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याम् ।

इति सर्वाणि हवींष्यभिमृश्य ( पूर्वमभिमृष्टान्यपि पुनरभिमृशेत् । )

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम ॥ १ ॥
मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ २ ॥
मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारावनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः ॥ ३ ॥
मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्च नाहं विश्वेदेवासो अधि वोचता मे ॥ ४ ॥

देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ५ ॥

अग्निर्मन्युं प्रतिनुदन्पुरस्तादर्दब्धो गोपाः परि पाहि नस्त्वम् ।
प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा विनेशत् ॥ ६॥
धाता धातॄणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहम् ।
इमं यज्ञमश्विनो भा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ७ ॥

उरुव्यचा नो महिषः शर्म यꣳ सदस्मिन्हवे पुरुहूतः पुरुक्षु।
स नः प्रजायै हर्यश्व मृडयेन्द्र मा नो रीरिषो मा परादाः ॥ ८ ॥
ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे
तान्।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजम-
क्रन् ॥ ९ ॥
अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः।
इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं
त्वा ॥ १० ॥
अग्निर्होता, अश्विनाध्वर्यू, त्वष्टाऽग्नीत्, मित्र उपवक्ता।
इति सर्वाण्यासन्नानि हवींष्यभिमृशेत्।

अध्वर्युः—अयं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु।
स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु।
इत्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय, वेद्यन्तान्परिस्तरणीयशेषदर्भैः परिस्तीर्य, होतृषदनमुत्तरश्रोणिसमीपे परिभोजनीयदर्भैः कल्पयित्वा सामिधेन्यर्थमिध्माधानादि प्रक्रम्य
होतरेहि, इति होतारमामन्त्रयेत।

होता—प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्य पूर्वेणोत्करमपरेण प्रणीताः प्रपद्याभिहततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसंमितावङ्कसंमितौ वा, द्यावापृथिव्योः संधिमीक्षमाणस्तिष्ठेत्।

अध्वर्युः—अग्नये समिध्यमानायानुब्रू३हि। इति होतारं संप्रेष्य होत्रा सामिधेनीषूच्यमानासु प्रणवे प्रणवे समिधमाधाय, समिद्धो अग्न आहुतेति ज्ञात्वा, एकामनूयाजसमिधमवशेष्य सर्वमिध्मशेषमभ्यादध्यात्परिधानीयायां वा (परिधानीया नाम— अ.जुहोताद्दुवस्यत—इति ऋक्)

---

१ अग्नये समिध्यमानायेति प्रैषस्य सामिधेन्यङ्गत्वात्सामिधेनीस्वर एव प्रयोज्यः।

यजमानः—सामिधेनीनां पुरस्तात्-

चित्तिः स्रुक्, चित्तमाज्यम्, वाग्वेदिः, आधीतं बर्हिः, केतो अग्निः, विज्ञातमग्निः, वाक्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युः ।

इत्युक्त्वा सामिधेनीनां प्रथमर्क्त्रगारम्भे—आङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकैरवन्तु । इति जपित्वा सामिधेनीषूच्यमानासु—
चित्तिः स्रुक्, चित्तमाज्यं, वाग्वेदिः, आधीतं बर्हिः, केतो अग्निः, विज्ञातमग्निः, वाक्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युः । इति व्याख्याय

उच्छुष्मो अग्ने यजमानायैधि नि शुष्मो अभि दासते ।
अग्ने देवेद्धमन्विद्ध मन्द्रजिह्वामर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय, इति समिध्यमानशब्दघटितऋचा समिध्यमानमग्निमनुमन्त्रय

समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नमः ।
इति समिद्धशब्दघटितऋचा समिद्धमग्निमनुमन्त्रयेत ।

होता—नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति पण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च वाक्समस्थितयज्ञः साधुच्छन्दांसि प्रपद्येऽहमेव मां देवदत्तशर्माणम् । इति स्वं मामाऽऽदिश्य (देवदत्तशर्माणमित्यत्र होता स्वं नाम निर्दिशेत् ।)

भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाघ्यं वाचो अशान्ति वह । इत्यङ्गुल्यप्राण्यवकृष्य
जातवेदो रमया पशून्मयि, इति प्रतिसंधाय
वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः ।

तदग्ने वाचः प्रथमं मसीय येनासुराँ अभिदेवा असाम ।

ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्।

जपित्वा।

हि३म् (उच्चैः) भूर्भुवः स्वरो३म्। इत्युपांशु जपित्वा

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति

---

(१) अग्निहोतृशास्त्रे यानि जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु प्रयोक्तव्यानि, मन्त्राश्च कर्मकरणा उपांशु प्रयोक्तव्यास्तान्येवं स्मर्यन्ते—.

उपांशुत्वं नाम—करणवदशब्दममनःप्रयोगत्वम्।

जपो नाम—जपमुच्चारणं विद्यात्कत्वर्थमपि तद्भवेत्।
अर्थतः कार्यलाभश्चेदर्थ एव क्रतोर्भवेत्॥ १॥

अनुमन्त्रणं नाम—मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥ २॥
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम्।

आप्यायनम्—अद्भिः संस्पर्शनाधिक्यात्तदेवाऽऽप्यायनं स्मृतम्॥ ३॥

उपस्थानम्—उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम्।
बाह्यं कार्यं यदेतेषु मन्त्रकाले क्रियेत तत्॥ ४॥

कर्मकरणा मन्त्राः—कर्मणः करणास्ते स्युर्विहितार्थप्रकाशनात्।
मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु॥ ५॥

मन्त्राः—इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः।
लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः॥ ६॥

इत आरभ्य प्रयाजसमाप्तिपर्यन्तं मन्द्रस्वर एव प्रयोक्तव्यः।

मन्द्रस्वरो नाम—"मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्" इति पाणिनीयशिक्षायाम्। यश्चोरसि स्थाने शब्दस्य प्रयोग उपलभ्यते स मन्द्रः स्वरः। संनिकृष्टस्य श्रवणप्राप्तः स मन्द्र इत्यर्थः।

(२) आश्वलायनसूत्रानुयायिनाम्—

१ सामिधेनीरारभ्य प्रयाजसमाप्तिपर्यन्तं मन्द्रः स्वरः।

२ आज्यभागावारभ्य स्विष्टकृत्पर्यन्तं स्विष्टकृत्समाप्तिपर्यन्तं वा मध्यमः स्वरः। यः कण्ठस्थाने शब्दप्रयोग उपलभ्यते स क्रौञ्चक्रुष्टस्वरयोर्मध्यतनत्वान्मध्यमः स्वरः।

३ स्विष्टकृतमारभ्य स्विष्टकृत्समाप्त्यनन्तरं वा शंयुवाकसमाप्तिपर्यन्तमुत्तमः स्वरः। दूरस्थस्य श्रवणयोग्यः क्रौञ्चः स्वरः। संनिकृष्टश्रवणयोग्यः क्रुष्टः स्वरः।

सुम्नयो ३म् प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयो३म् प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयो३मग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषो३र्तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्यो३स नः पृथुश्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यो३मीळेऽन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषो३ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळतो ३ वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहो३मग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतो२ समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहो३ समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर । त्वं हि हव्यवाळसो३माजुहोतादुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनो३माजुहोतादुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनो३माजुहोतादुवस्यताग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनो ३मग्ने महाँ असि ब्राह्मणभारत । इति निगदे-

---

यः शिरःस्थाने शब्दप्रयोग उपलभ्यते स तारक्रुष्टापरपर्याय उत्तमः स्वरः ।

४ शंयुवाकादूर्ध्वं हौत्रसमाप्तिपर्यन्तं मन्द्रः स्वरः ।

आपस्तम्बीयानाम्—

१ सामिधेनीषु मध्यमः स्वरः ।

२ ततः प्रागाज्यभागाभ्यां मन्द्रः स्वरः ।

३ प्राक् स्विष्टकृतो मध्यमः स्वरः ।

४ स्विष्टकृतमारभ्य शंयुवाकसमाप्तिपर्यन्तं क्रुष्टः स्वरः (क्रुष्ट उक्तः) ।

५ पत्नीसंयाजे ध्यान उपांशुर्वा स्वरः ।

अत्राऽऽश्वलायनसूत्रवृत्तिकृत्—अध्वर्युवशात्स्विष्टकृत्स्वरविकल्पं ब्रूते समाण्डारस्तु पत्नीसंयाजस्वरं होतृवशाद्विकल्पं ब्रूते । इति स्वरविषयेऽत्र कः पन्थाः शास्त्रीयः कतमः स्वरः कैः समाश्रयणीय इति तु शास्त्रतः सम्यङ्निर्णीय परस्ताद्धौत्रविचारे प्रतिपादयिष्यामः ।

१ अस्त्यत्र यजमानकर्तृकमनुमन्त्रणम् ।

२ अस्त्यत्राध्वर्युकर्तृकं समिदाधानं यजमानकर्तृकमनुमन्त्रणं च ।

वेमाय यजमानस्याऽऽर्षेयान्प्रवृणीते यावन्तः स्युः परं परं प्रथमम्। ( काश्यपावत्सारासित इति ) अवसाय

यजमानः—देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टꣳ स्वं दत्तꣳ स्वं पूर्तꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतम्।

तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुर्य एवास्मि स सन्यजे। इति होत्रा यजमानप्रवरे प्रक्रियमाणे जपेत्।

होता—देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाट्, इत्यवसाय

अध्वर्युः—वेदेनाग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरं परिधिसंधिमन्ववहृत्य

प्रजापतये, इति मनसा ध्यायन्

स्वाहा, इत्युच्चारयन् दक्षिणाप्राञ्चमृजुꣳ संततं ज्योतिष्मति, बह्वावाघारमाघारयेत्, सर्वाणीध्मकाष्ठानि सꣳस्पर्शयेच्च।

यजमानः—मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश। इति स्रौवमाघारमाघार्यमाणमनुमन्त्र्य

प्रजापतय इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं मति देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।

इति स्रुवेणाऽऽज्यस्थाल्याः सकाशादाज्यमादाय ध्रुवामाप्याय्य

अग्नीत्परिधीꣳश्चाग्निं च त्रिस्त्रिः संमृड्ढि, इत्याग्नीध्रं संप्रैषं कुर्यात्।

---

( १ ) ३ परं परं प्रथमम्—यो यः पर ऋषिस्तं तं प्रथमं वृणीते पितामहं पितरं पुत्रमिति। अध्वर्युणा प्रक्रियमाणे प्रवरे पूर्व पूर्वं प्रथमम्। तत्सहकारिवशाद्धोतुरपि स्यादिति परं परं प्रथममित्युच्यते। ( काश्यपः पितामहः।...

अवत्सारः—पिता।.... .... ....

असितः—पुत्रः। ) इति क्रमशो ज्ञेयम्।

आग्नीध्रः—स्फ्यसहितैरिध्मसंनहनैः स्फ्यरहितैरिध्मसंनहनैर्वाऽनुपरिक्रामं परिधीन्यथापरिधितमन्वग्रं त्रिस्त्रिः संमृज्य

अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय, इति त्रिरग्निं प्राञ्चं संमृज्यात् ।

होता—आरपात्रं जुहूर्देवानां चमसो देवपानोऽराँ इवाग्ने नेमिर्देवाँस्त्वं परिभूरस्याऽऽवह देवान्यजमानाय, इत्यवसाय

अग्निमग्न आ३वह, सोममा३वह, अग्निमा३वह विष्णुम् (उपांशु) आ३वह महेन्द्रमा३वह देवाँ आज्यपाँ आ३वह, अग्निं होत्रायाऽऽवह, स्वं महिमानमा३वह, आवह जातवेदः सुयजा यज, इत्यावाह्य यथास्थितमूर्ध्वजानुरुपविश्य

अदितिर्माताऽस्यान्तरिक्षान्मा च्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथंतरेण साम्ना गायत्रेण च्छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं हन्मि । इत्युदग्वेदेर्व्युह्य तृणानि भूमौ प्रादेशं कुर्यात् ।

अध्वर्युः—भुवनमसि विप्रथस्वाग्ने यष्टरिदं नमः, इत्यग्रेण ध्रुवां जुहूं वा नमस्काराञ्जलिं कृत्वा

जुह्वेह्यग्निस्त्वा ह्वयति देवयज्यायै, इति दक्षिणहस्तेन जुहूमादाय

---

१ अनुपरिक्रामम्—तं तं परिधिदेशं गत्वा ।

२ यथापरिधितम्—येन क्रमेण परिहिताः परिधयस्तेन क्रमेण । अन्वग्रं मूलादारभ्याऽऽग्रात् ।

३ अत्र प्लुतः पाणिनिप्रणीतव्याकरणस्मृत्यैव विहितः "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" इत्यनया । ननु "आदिं प्लावयन्" इत्याचार्येणैव विहितः कथमन्यशास्त्रविहित इत्युच्यते । ब्रूमः । यद्यत्र स्वातन्त्र्येणाऽऽचार्यस्य प्लुतिविधानमिष्टं स्यात्तर्हि प्लावयेदित्येव ब्रूयात् । न तु प्लावयन् । प्लावयन्निति सूत्रितत्वादयमनुवाद इति प्रतीमः । अत्रानुवादस्तु आम्नानस्य प्राबल्यख्यापनार्थः ।

४ उपांशुदेवतानाम्, आवह, स्वाहा, अया, प्रिया धामानि, इदं हविः, महो ज्यायः, इत्युच्चैरिति सूत्रात्, आ३वह, इत्युच्चैर्निर्देशः ।

उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै, इति सव्यहस्तेनो-
पभृतमादाय

**सुयमे मे अद्य घृताची भूयास्तꣳ स्वावृतौ सूपावृतौ ।**

इत्युपभृति जुहूमत्याधाय ( अत्यादधज्जुहूमुपभृति मुखेनाभिहृत्या-
भिमुखं हृत्वाऽत्यादध्यात्। तथा [illegible] एवोपावहरेत्।
सर्वत्रैवमत्याधानोपावहरणे भवतः । न च संशिञ्जयेत् । नाभिदेशे
च स्रुचौ धारयेत् )

**अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतम् ।** इत्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरं[1] दक्षिणेन पदा दक्षिणाऽतिक्रम्योदक्सव्येन सव्येन पदा दक्षिणाऽतिक्रम्य दक्षिणेन प्रत्याक्रम्य वा

**विष्णोः स्थानमसीत इन्द्रो अकृणोद्वीर्याणि ।** इत्युदङ्मुखोऽव-स्थायान्तर्वेद्यां दक्षिणं पादं संस्थाप्य तत्पार्ष्णी च बहिष्ठेन सव्यपदा-ङ्गुलिना स्पृशन्नप्रह्वन्दक्षिणं परिधिसंधिमन्ववहृत्य ( आरभ्य ) । यजमानेनान्वारब्धः—

**समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रा-वान्त्स्वाहा**

इति प्राञ्चमुदञ्चमृजुꣳ संततं ज्वलत्यग्नौ सर्वाणीध्मकाष्ठानि संस्पर्श-यन्नाघारमाघारयेत् । ( अत्राऽऽघारे मन्त्रादावारम्भः कार्यः । )

**यजमानः**—वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽविश,....

इति स्रुच्यमाघारमाघार्यमाणमनुमन्त्र्य

इन्द्रायेदं न मम, इति त्यागं कुर्यात् ।

**अध्वर्युः**—आघारं हुत्वा तदुपरि श्रावित्वा—

बृहद्भाः, इति स्रुचमुद्गृह्य ।

---

१ पदा प्रस्तारमनवक्रम्यानवक्रम्य। अन्तरा प्रस्तरं न कुर्यादित्यर्थः। प्रस्तरे पदं न स्थापनीयम्। अतिक्रमणमपि न कार्यमित्यर्थः।

**पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज**, इत्यसंस्पर्शयन्स्रुचौ, अग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रम्यानवक्रम्य प्रस्तरं सव्येन पदा प्रत्याक्रम्य दक्षिणेन पदा वा प्रत्याक्रम्य ( एते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतः । अत्र मन्त्रवती भवतोऽन्यत्र तूष्णीं भवतः ) ।

**मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम्** । इति जुह्वाऽऽज्येन ध्रुवां द्विस्त्रिर्वा समज्य ( अङ्क्त्वा )

**उन्नीतꣳ रायः** । इति स्रुवेण ध्रौवमाज्यमादाय ।

**सुवीराय स्वाहा**, इति जुहूमभिघार्य जुह्वा आज्यमादाय

**यज्ञेन यज्ञः संततः**, इति ध्रुवां प्रत्यभिघार्याऽऽयतने स्रुचौ सादयित्वा

**क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णोः स्थाने तिष्ठामि**

इतीध्मसंनहनानि स्फ्य उपसंगृह्य वेद्याश्च तृणमभ्यन्तमादाय प्रवरं वक्तुं वेद्या उत्तरत एव पूर्वाभिमुखोऽवतिष्ठेत ।

आग्नीध्रः—इध्मसंनहनान्यन्वारभ्य

**क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णोः स्थाने तिष्ठामि ।**

इत्यध्वर्योरपरभागे पूर्वाभिमुखोऽवतिष्ठेत ।

अध्वर्युः—**ब्रह्मन् प्रवरायाऽऽश्रावयिष्यामि**, इति ब्रह्माणमामन्त्रयेत ।

---

( १ ) अभ्यन्तम्-अविगतान्तं मध्यवर्ति असंबन्धं तस्याऽऽप्रक्षेपं, वेद्यां तृणमपिसृजतीति लिङ्गात् । वेदिमध्यात्तृणमसंसृष्टमुपादाय वेद्यां तृणमपिसृजतीति प्रक्षेपविधानात् । न मुच्यते वेद्या इत्युपदेशः । अपिसृजतीति हस्तविमोचनमात्रतयाऽप्युपपत्तेः । एवं च वेदिस्थवेद्यसंबन्धं तृणं ग्राह्यमित्येकः पक्षः । वेदिस्थमेव तृणं वेदिसंबन्धं ग्राह्यमित्यपरः पक्षः ।

ब्रह्मा—भूर्भुवः स्वर्बृहस्पतिप्रसूतः, इति जपित्वा
ओ३म् आश्रावय, इत्यतिसृजेत् ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात् । (होतृकर्तृकमनुमन्त्रणमत्रास्ति )

आग्नीध्रः—अस्तु श्रौ३षट्, इत्यपरेणोत्करं दक्षिणामुखस्तिष्ठन् प्रत्याश्रावयेत् ।

होता—आश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसाय ।
इति आश्रावयेत्याग्नीध्रं प्रति ब्रुवन्तमध्वर्युमनुमन्त्रयेत ।

अध्वर्युः—अग्निर्देवो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवत्-
अमुवदमुवदिति यथार्षेयो यजमानः । यथा—असितवद्वत्सारवत्कश्यपवत् ।
इत्यूर्ध्वज्ञुमासीनं होतारं वृत्वा
ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारः, इत्युक्त्वा
होतुर्नामोपांशूक्त्वा
मानुषः, इत्युच्चैरुक्त्वा यदव्यन्तमात्तं तृणं तद्वेद्यां प्रत्यपिसृजेत् ।

यजमानः—देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टꣳ स्वं दत्तꣳ स्वं पूर्तꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रो-

---

( १ ) आपस्तम्बब्रह्मा—वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येषु देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ।

इत्युपांशु जपमुक्त्वा, ओ३म् आश्रावय, इत्युच्चैरनुजानीयात् ।

( २ ) आश्रावय, अयं प्रैषोऽग्नीधेऽध्वर्युणा प्रयोक्तव्यः । तत्र प्लुतिनियम इत्थम्—आ३श्रा३वय, इति । प्रमाणं चास्य—"अग्नीत्प्रेषणे परस्य च" । सूत्रार्थस्त्वेवम्—अग्नीधः प्रेषण आदेः प्लुतस्तस्मात्परस्य चेति महाभाष्ये नियमेनात्रोक्तत्वात् ।

त्साऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्ब-
न्धुर्य एवास्मि स सन्यजे । इत्यध्वर्युणा प्रवरे प्रव्रियमाणे जपेत् ।

होता—देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण
द्यावापृथिवी मां पातामग्निर्होताऽहं मानुषः । इति प्रवृण्वानमध्वर्युमनुमन्त्र्य

मानुष इत्यध्वर्योः श्रुत्वा

उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुद्स्थाममृताँ अनु, इत्युत्थाय

षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः ।
सिनन्ति पाकमतिधीर एति, इति जपित्वा

ऋतस्य पन्थामन्वेमि होता, इत्यध्वर्युसमीपं गत्वा

इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा
अङ्गिरसो दिवम् । इत्यंसेऽध्वर्युं पार्श्वस्थेन दक्षिणेन पाणिनाऽऽग्नीध्रं चांसेऽङ्कदेशेन सव्येन पाणिना वाऽन्वारभ्य

संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढि, इति संमार्गतृणैस्त्रिरभ्यात्मं मुखं सकृन्मन्त्रेण द्विस्तूष्णीं संमृज्योदकं स्पृष्ट्वा स्वासनस्य पश्चादवस्थाय

अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः । इति होतृषदनमभिमन्त्र्य

निरस्तः परावसुः, इत्यङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरस्याप उपस्पृश्य

---

१ पार्श्वस्थेन पाणिना—इत्यत्र " दक्षिणं प्रतीयादनादेशे " इति परिभाषासूत्राद्दक्षिणः पाणिः प्रत्येतव्यः । पार्श्वस्थेनेत्यस्यायमर्थः—कनिष्ठिकाप्रदेशेन स्थितः, न न्यग्भूतो नोत्तान इत्यर्थः ।

२ अङ्कदेशेन—अङ्कदेशोऽपि पूर्वपरिभाषासूत्रेण दक्षिण एव गृह्यते । सव्येन वा, इति सूत्राच्च पाणिनोरुणा वा सह विकल्पः ।

इदमहमर्वावसोः सदने सीदामि, इति दक्षिणोत्तरिणोपस्थेनोपविश्य

देवबर्हिः स्वासस्थं त्वाऽध्यासदेयम्, इति जपित्वा

अभिहिष होतः प्रतरां बर्हिषद्भव, इति जानुशिरसा बर्हिरुपस्पृश्य

भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये। सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः।

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः।

यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः।

विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य।

प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि।

अराधि होता निषदा यजीयानभिप्रयांसि सुधितानि हि ख्यत्।

यजामहै यज्ञियान्हन्त देवाँ ईळामहा ईड्याँ आज्येन।

तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम।

ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्। इति

जपित्वा प्रदीप्ते इध्मे।

अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता यो अग्निम्। होतारमवृथाः, इति जपित्वा

घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान्यजाम यज्ञियान्। इति निगदशेषं समापयेत्। अग्निर्होतेत्यारभ्य यज्ञियानित्यन्तोऽयमेकः स्रुगादापननिगदः।

---

१ दक्षिणोत्तरिणा—दक्षिणं च तदुत्तरं च दक्षिणोत्तरम्। तद्यानुपस्थो दक्षिणोत्तरी उपस्थः। तेनोपविशेत्। एतदुक्तं भवति—दक्षिणोत्तरेणोपस्थं कुर्यात्।

"दक्षिणं चोपविश्योरुं वामगुल्फोपरि न्यसेत्।

वामोरुं दक्षिणं गुल्फं तच्चोपस्थमुदीरितम्" ॥ इत्यभियुक्तोक्तिः।

अध्वर्युः— होत्रा, अग्निर्होतेत्यस्मिन्निगदे, उच्यमाने तत्रस्थे घृतवतीशब्दे श्रूय-
माणे जुहूपभृतावादाय दक्षिणा सक्रदतिक्रम्य दक्षुखस्तिष्ठन्
आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात्।

आग्नीध्रः—अपरेणोत्करं दक्षिणाभिमुखस्तिष्ठन् स्फ्यं संमार्गांश्च धारयन्
अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत्।
सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः।

अध्वर्युः—समिधो यज, इति प्रथमं प्रयाजं प्रति होतारं संप्रेष्येत्।

होता—ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु ३ वौ-
३षट्, इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुम-
न्त्रयेत।

अध्वर्युः—होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं पुरस्तात्प्रथमं प्रयाजं जुह्वा
जुहुयात्।

यजमानः—पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता।
इति चतुर्होतारं व्याख्याय

समिद्भ्योऽग्नय इदं न मम, इति त्यागं कृत्वा
वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु।
एको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मः॥
इति हुतं प्रथमं प्रयाजमनुमन्त्रयेत।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत्।

---

१ सर्वेषामध्वर्युप्रभृतीनां प्रचरतां हविरादानादिप्रदानान्तं वाग्यमनं नियम्यते सूत्रकारेण। नियमविध्यपराधे च पुनराश्रावणादि व्याहृतिजपो वा प्रायश्चित्तं सूच्यते। तस्मात् प्रायश्चित्तभिया प्रचरद्भिः सर्वैर्वाग्यतैर्भवितव्यम्। एवं सर्वत्र ज्ञेयम्।

२ ये यजामहे—इत्यत्र वौषडित्यत्र च, व्यन्तु वौ, इत्यत्र चाऽऽचार्येण प्लुतो विहितः—"तयोरादी प्लावयेत, याज्यान्तं च" इत्याभ्यां सूत्राभ्याम्। अत्रत्य एव प्लुतो ये यज्ञकर्मणीत्यादिप्लुतिविधायकसूत्रैर्व्याकरणेऽनूद्यते।

३ आघारसंभेदो नाम—आघारसंगमः। पूर्वोत्तराघारयोर्मेलनमित्यर्थः।

अध्वर्युः—यज, इति द्वितीयं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता—ये३ यजामहे तनूनपादग्न आज्यस्य वेतू३ वौ३षट्,
इति वषट्कारमुक्त्वा।

वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ( ये३ यजामहे नराशंसो अग्न आज्यस्य वेतू३ वौ३ षट्, अयं प्रयाजो द्वितीयप्रयाजतनूनपात्स्थाने वसिष्ठशुनकात्रिवध्यश्वराजन्यानां द्वितीयो वक्तव्यः । अनुमन्त्रणं पूर्ववत् । )

अध्वर्युः—होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं दक्षिणतो द्वितीयं प्रयाजं जुह्वा जुहुयात् ।

यजमानः—तनूनपातेऽग्नय इदं न मम, इति त्यागं कृत्वा
ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु । द्वौ मम द्वे तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, इति हुतं द्वितीयं प्रयाजमनुमन्त्रयेत ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—यज, इति तृतीयं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता—ये३ यजामह इळो अग्न आज्यस्य व्यन्तु३ वौ३षट्,
इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं पश्चात्तृतीयं प्रयाजं जुह्वा निःशेषं जुहुयात् ।

यजमानः—इळ्भ्योऽग्नय इदं न मम, इति त्यागं कृत्वा
वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु ।
त्रयो मम तिस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इति हुतं तृतीयं प्रयाजमनुमन्त्रयेत ।

अध्वर्युः—त्रीन्प्रयाजान्, जुहूमिष्ट्वाऽर्धमौपभृतस्थस्याऽऽज्यस्य जुह्वामानीय आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात् ।

**आग्नीध्रः**—**अस्तु श्रौ३षट्**, इति पूर्ववत्प्रत्याश्रावयेत् ।

**अध्वर्युः**—**यज**, इति चतुर्थं प्रयाजं प्रति होतारं संप्रेष्येत् ।

**होता**—**ये३ यजामहे बर्हिरग्न आज्यस्य वेतू ३ वौ३षट्**, इति वषट्कारमुक्त्वा

**वागोजः सह ओजो मयि प्राणापानौ** इति वषट्कारमुपांश्वनुमन्त्रयेत ।

**अध्वर्युः**—होत्रा वौषडित्युक्तेऽपेरणाऽऽघारसंभेदमुत्तरतश्चतुर्थं प्रयाजं जुह्वा जुहुयात् ।

**यजमानः**—**बर्हिषेऽग्नय इदं न मम**, इति त्यागं कृत्वा

**शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु । चत्वारो मम चतस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मः**, इति हुतं चतुर्थं प्रयाजमनुमन्त्रयेत ।

**अध्वर्युः**—**आ३श्रा३वय**, इत्याग्नीध्रं प्रति संप्रैषं कुर्यात् ।

**आग्नीध्रः**—**अस्तु श्रौ३षट्**, इति पूर्ववत्प्रत्याश्रावयेत् ।

**अध्वर्युः**—यज, इति पञ्चमं प्रयाजं प्रति होतारं संप्रेष्येत् ।

**होता**—**ये३ यजामहे स्वाहाऽग्निं स्वाहा सोमं स्वाहाऽग्निं स्वाहा विष्णुं (उपांशु) स्वाहा महेन्द्रं स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु ३ वौ३षट्**, इति वषट्कारमुक्त्वा

**वागोजः सह ओजो मयि प्राणापानौ**, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

---

(१) पौर्णमास्याम् असोमयाजिनः सोमयाजिनश्च—

**ये ३ यजामहे स्वाहाऽग्निं, स्वाहा सोमं, स्वाहाऽग्निं, स्वाहा विष्णुं (उपांशु) स्वाहाऽग्नीषोमौ स्वाहेन्द्रं वैमृधं स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु ३ वौ३षट्** । इति विशेषः ।

(२) आपस्तम्बयजमानस्यासोमयाजिनः सोमयाजिनश्च विष्णुयागः, अमावास्यायां नास्ति तस्मात्तत्कीर्तनमप्युत्तमप्रयाजादिषु नास्तीति ज्ञेयम् ।

(३) अमावास्यायामसोमयाजिनः स्वाहा महेन्द्रमित्यस्य स्थाने स्वाहेन्द्राग्नी इति ब्रूयादन्यत्स्वाहा देवा आज्यपेत्यादि समानम् ।

**अध्वर्युः**—होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं मध्ये पञ्चमं प्रयाजं जुह्वा सशेषं जुहुयात् ।

**यजमानः**—स्वाहाकाराय।ग्नय इदं न मम, इति त्यागं कृत्वा

**हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतां पञ्च मम न तस्य किंचन योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।**

इति हुतं पञ्चमं प्रयाजमनुमन्त्रयेत ।

**अध्वर्युः**—पूर्वोक्तेन प्रकारेण प्रत्याक्रम्य जुह्वाऽऽज्यशेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघार्य औपभृताज्ये निःशेषं जुह्वाऽऽज्यमानीय स्वायतने जुहूपभृतौ सादयित्वा तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

**आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।**
**सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥**

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

**अग्नयेऽनुब्रूहि** । इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

**होता**—**अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् । कविर्विप्रेण वावृधो३म् ।**

इति पुरोनुवाक्यां ब्रूयात् । इत आरभ्याऽऽस्विष्टकृतो मध्यमेन स्वरेण प्रयोक्तव्यम् ।

**अध्वर्युः**—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

**आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।**
**सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥**

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीऽऽयाज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय जुह्वामानीय

---

(१) पौर्णमास्याम्—अग्निः प्रत्नेनेत्यस्याः पुरोनुवाक्यायाः स्थाने होता, **अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा
आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत् ।

**आग्नीध्रः**—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत् ।

**अध्वर्युः**—अग्निं यज, इति याज्यायै होतारं संप्रेष्येत् ।

**होता**—ये ३ यजामहेऽग्निं जुषाणो अग्निराज्यस्य वेतु ३ वौ३षट्, इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

**अध्वर्युः**—होत्रा वौषडित्युक्ते ज्योतिष्मदग्नेरुत्तरार्धपूर्वार्धेऽग्नये जुहुयात् ।

**यजमानः**—अग्नय इदं न मम, इति त्यागं कुर्यात् ।

**अध्वर्युः**—प्रत्याक्रम्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय
आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

---

१ अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान्भूयासम् ।
इत्याग्नेयमाज्यभागं हुतमनुमन्त्रयेत् ।

इदमनुमन्त्रणं प्रत्याज्यभागमनुमन्त्रणकरणपक्षः सूत्रोक्तो गृहीतश्चेदेव भवति । द्वयोरप्याज्यभागयोर्युगपदेवानुमन्त्रणं सूत्रकृतोक्तमस्ति । युगपदनुमन्त्रणपक्षस्तु अग्रे प्रदर्शितरीत्या स्वीकार्यः ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

सोमायानुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत्।

होता— सोमं गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृळीको न आविशो३म्।

इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्॥

इति पुरोनुवाक्यां ब्रूयात्।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्॥

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत्।

अध्वर्युः—सोमं यज, इति याज्यायै होतारं संप्रेष्येत्।

---

१ पौर्णमास्याम्। सोम गीर्भिष्ट्वेत्यस्याः पुरोनुवाक्यायाः स्थाने होता त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतो३म्। इति पुरोनुवाक्यां ब्रूयात्।

होता—ये३ यजामहे सोमं जुषाणः सोम आज्यस्य हविषो वेतू३ वौ३षट्, इति वषट्कारमुक्त्वा

वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते ज्वलदग्नेर्दक्षिणार्धपूर्वार्धे पूर्वाज्यभागेन समं सोमाय जुहुयात् ।

यजमानः—सोमायेदं न मम, इति त्यागं कृत्वा

अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासम् । इति हुतावाज्यभागावनुमन्त्रयेत ।

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्याऽऽज्यभागार्थं गृहीते जुहूपभृतौ स्वायतने स्विष्टकृद्यागसमाप्तिपर्यन्तं न निदध्यात् । हस्त एव धारयेदित्यर्थः । ( पश्चाद्वर्तिनस्तु पुनरेकदा तूष्णीं ध्रुवास्थमित्यारभ्य प्रस्तरबर्हिषी समज्येत्यन्तं कुर्यात् ) ।

यजमानः—अन्त्येऽहनि व्रतलोपप्रायश्चित्तार्थं व्रातपतीष्टिस्थान आपस्तम्बयजमानः पूर्णाहुतिमित्यत्र स्रुवाहुतिमिति वदेत् । पूर्णाहुतिं होष्यामि ।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं जुह्वां चतुर्वारं स्रुवेण गृहीत्वा, अग्नये व्रतपतये स्वाहा, इति जुहुयात् ।

यजमानः—अग्नये व्रतपतय इदं न मम, इति त्यागं कृत्वा संभावितसमस्तदोषनिर्हरणार्थं सर्वप्रायश्चित्तं करिष्ये ।

अध्वर्युः—आज्यस्थाल्या आज्यं स्रुवेण तूष्णीं जुह्वां सकृद्गृहीत्वा भूर्भुवः सुवः स्वाहा । इति जुहुयात् ।

यजमानः—प्रजापतय इदं न मम, इति त्यागं कृत्वा

---

( १ ) सोमस्याऽऽज्यभागस्य पृथगनुमन्त्रणपक्षे—
सोमेन यज्ञश्चक्षुष्मान्त्सोमस्याहं देवयज्यया चक्षुष्मान्भूयासम् ।
आग्नेयाज्यभागटिप्पणी समवलोकनीया ।

अग्निर्होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता।
इति पुरस्ताद्धविरवदानस्य पञ्चहोतारं वदेत्।

अध्वर्युः—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
अग्नयेऽनुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत्।

होता—अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्। इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत्।
भरतमुद्धरेममनुषिञ्चावदानानि ते प्रत्यवदास्यामि।
नमस्ते अस्तु मा मा हिꣳसीः।

इत्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रेर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य (पञ्चावत्तिनः पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः)। तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय
आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः।
आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः।
इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—अग्निं यज, इति याज्यायै होतारं संप्रेष्येत् ।

होता—ये३ यजामहेऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहाँ३ वौ३षट् । इति वषट्कारमुक्त्वा

वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन्नाघारसंभेददेशे हुत्वाऽऽज्यशेषमन्ववस्रावयेत् । (एवं क्रमश्चरुपुरोडाशादितन्त्रे न द्रवद्रव्यतन्त्रे ) ( यदा वीतार्चिर्लेलायतीवाग्निरथाऽऽहुतीर्जुहुयात् ) ।

यजमानः—अग्नय इदं न मम, इति त्यागं कृत्वा

अग्नेरहं देवयज्ययाऽन्नादो भूयासम् । इत्याग्नेयं पुरोडाशं हुतमनुमन्त्रयेत ।

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

( उपांशु ) विष्णवे ( उच्चैः ) अनुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ॥

होता— ( उपांशु ) विष्णुम्, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ्ळमस्य पांसुरे । ( उच्चैः ) ओ३म् इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः— ( उपांशु ) विष्णुं ( उच्चैः ) यज, इति याज्यायै होतारं संप्रेष्येत् ।

होता— ( उच्चैः ) ये ३ यजामहे, ( उपांशु ) विष्णुम् ।
त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ।
प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नामा ३ । ( उच्चैः )

वौ३षट्, इति वषट्कारमुक्त्वा

वागोजः सह ओजो मयि प्राणापानौ,
इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुच्याघारस्योपरि जुह्वग्रेण जुहुयात् ।

यजमानः—विष्णव इदं न मम, इति त्यागं कृत्वा

दब्धिरस्यदब्धो भूयासं पाप्मानं दभेयम् ।

इत्युपांशुयाजं हुतमनुमन्त्रयेत् ।

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

---

१ अमावास्यायां माहेन्द्रयागोऽसंनयतो नास्ति । पौर्णमास्यां सांनाय्यप्रसङ्ग एव नास्त्यनाम्नानात् ।

पौर्णमास्यामयं विशेषोऽत्रानुसंधातव्यः—उपांशुयाजानुमन्त्रणानन्तरम्—

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

अग्नीषोमाभ्यामनुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता—अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूव-थो३म् ।

इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् ।

भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि ।

नमस्ते अस्तु मा मा हिꣳसीः, इत्यग्नीषोमीयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य ( पञ्चावत्तिनः पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः )। तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
यद्वदानानि तेऽवद्यन्विलोमाकार्षमात्मनः ।

आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः ॥
इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा
आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात् ।

आग्नीध्रः—अस्तु श्रौ३षट्, पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—अग्नीषोमौ यज, इति याज्यायै होतारं संप्रेष्येत् ।

होता—ये३ यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३न्वौ-३षट्, इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ ।
इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन्स्रुच्याघारोपरि उपांशुयाजहोमसंनिहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत् ।

यजमानः—अग्नीषोमाभ्यामिदं न मम, इति त्यागं कृत्वा
अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् ।
इत्यग्नीषोमीयं पुरोडाशं हुतमनुमन्त्रयेत ।

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय
आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

इन्द्राय वैमृधायानुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत्।

होता—वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। यो अस्माँ अभिदासत्यधरं गमया तमो३म्। इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत्। भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि। नमस्ते अस्तु मा मा हिꣳसीः।

इत्यैन्द्रवैमृधस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय (पञ्चावत्तिनः पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः) जुह्वामवधाय हस्तं प्रक्षाल्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः।

इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत्।

अध्वर्युः—इन्द्रं वैमृधं यज, इति याज्यायै होतारं संप्रेष्येत्।

होता—ये३ यजामहे इन्द्रं वैमृधं मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः। सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व ३ वौ३षट्॥

महेन्द्रायानुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता—महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
स्तोमैर्वत्सस्य वावृधो३म् । इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् ।
भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि ।
नमस्ते अस्तु मा मा हिꣳसीः । इति शृतस्य (प्रातर्दोहस्य) मध्यात्स्रुवेणाऽऽदाय जुह्वां निधाय पूर्वार्धाद्द्वितीयं स्रुवेणाऽऽदाय जुह्वां निधाय (पश्चार्धात्तृतीयं पञ्चावत्तिनोऽवदानं ततो जुह्वां निधानम्) ।

---

इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुगतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन् स्रुच्याघारोपरि अग्नीषोमीयहोमसंनिहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत् ।

यजमानः—इन्द्राय वैमृधायेदं न मम, इति त्यागं कृत्वा
इन्द्रस्य वैमृधस्याहं देवयज्यया सपत्नो वीर्यवान्भूयासम् ।
इत्यैन्द्रवैमृधं पुरोडाशं हुतमनुमन्त्रयेत । ततः पार्वणहोमः ।

१ तथा च—असोमयाजिनः—अमावास्यायामुपांशुयाजानुमन्त्रणानन्तरम्—

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय
आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
इन्द्राग्निभ्यामनुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता—इन्द्राग्नी अवसाऽऽगतमस्मभ्यं चर्षणीसह । मा नो दुःशंस ईशतो३म् ।
इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् ।
भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि ।
नमस्ते अस्तु मा मा हिꣳसीः ।
इत्यैन्द्राग्नस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य (पञ्चावत्तिनः पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः । ) तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय
आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य
यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः ।
आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः ।
इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा
आ३श्रा३ वय, इत्याग्नीध्रं संप्रैषं कुर्यात् ।

आग्नीध्रः—अस्तु श्रौ३षट् , पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः— इन्द्राग्नी यज, इति याज्यायै होतारं संप्रेष्येत् ।

होता—ये३ यजामह इन्द्राग्नी गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णै३र्वौषट् ।
इति वषट्कारमुक्त्वा
वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत्।
भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि।
नमस्ते अस्तु मा मा हिꣳसीः। इति दधिमध्यादवदानं स्रुवेणाऽऽदाय जुह्वां निधाय, पूर्वार्धाद्द्वितीयमवदाय जुह्वां निधाय (पश्चार्धात्तृतीयं पञ्चावत्तिनोऽवदानं ततो जुह्वां निधानम्)। तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वमानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।
इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः।
आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः।
इति तन्त्रेण शृतं दधि च प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत्।

अध्वर्युः—महेन्द्रं यज, इति याज्यायै होतारं संप्रेष्येत्।

---

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन् स्रुच्याघारोपरि उपांशुयाजहोमसंनिहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत्।

यजमानः—इन्द्राग्निभ्यामिदं न मम, इति त्यागं कृत्वा
इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्।
इत्यैन्द्राग्नं पुरोडाशं हुतमनुमन्त्रयेत। ततः पार्वणहोमः।
आपस्तम्बीययजमानस्य संनयदसंनयतोरमावास्यायामुपांशुयाजस्याभावादाग्नेयानन्तरमसंनयता, ऐन्द्राग्नो यागः कर्तव्यः। संनयतस्तु, आग्नेयानन्तरं माहेन्द्र एवेति ज्ञेयम्।

होता—ये३यजामहे महेन्द्रं भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नॄंश्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणा३इ वौ३षट्, इति वषट्कारमुक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत।

अध्वर्युः—होत्रा वौषडित्युक्ते स्रुच्याघारस्योपरि उपांशुयाजहोमसंनिहितं स्रुङ्मुखेण जुहुयात्। (द्रवद्द्रव्याणि सर्वाणि स्रुङ्मुखेण जुहुयात्।)

यजमानः—महेन्द्रायेदं न मम, इति त्यागं कृत्वा
महेन्द्रस्याहं देवयज्ययां जेमानं महिमानं गमेयम्।
इति माहेन्द्रं सांनाय्यमनुमन्त्रयेत।

अध्वर्युः—प्रत्याक्रम्य स्वासन उपविश्य स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय
अमावास्यां सुभगां सुशेवां धेनुरिव भूय आप्यायमाना।
सा नो दोहताꣳ सुवीर्यꣳ रायस्पोषꣳ सहस्रिणम्।
अपानाय सुराधसेऽमावास्यायै स्वाहा, इति जुहुयात्।

यजमानः—अमावास्याया इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—आज्यस्थाल्या आज्यं स्रुवेण जुह्वां षड्वारं सप्तवारं वा गृहीत्वा
दर्श ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन।
नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्स्वाहा।
इति जुहुयात्।

---

(१) अमावास्यायामसंनयतोऽप्येवमेव पार्वणहोमः। पौर्णमास्यां संनयदसंनयतोस्त्वयं विशेषः—
ऋषभं वाजिनं वयं पूर्णमासं यजामहे।
स नो दोहताꣳ सुवीर्यꣳ रायस्पोषꣳ सहस्रिणम्।
प्राणाय सुराधसे पूर्णमासाय स्वाहा, इति जुहुयात्।
(२) यजमानः—पूर्णमासायेदं न मम, इति त्यागं कुर्यात्।

यजमानः—नारिष्ठाभ्यामग्निवायुभ्यामिदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू ।

एतद्वां तेन प्रीणानि तेन तृप्यतमꣳहहौ स्वाहा ॥ २ ॥

इति जुहुयात् ।

यजमानः—नारिष्ठाभ्यामग्निवायुभ्यामिदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—अहं देवानाꣳ सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति ।

अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयꣳ स्वाहा ॥ ३ ॥

इति जुहुयात् ।

यजमानः—नारिष्ठाभ्यामग्निवायुभ्यामिदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः ।

मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या स्वाहा ॥ ४ ॥

इति जुहुयात् ।

यजमानः—नारिष्ठेभ्यः सोममरुद्भ्य इदं न मम, (नारिष्ठेभ्यो देवसोममरुद्भ्य इति वा)।

अध्वर्युः—ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हविषामाज्यस्य ।

अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् ।

स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा ॥ ५ ॥ इति जुहुयात् ।

यजमानः—नारिष्ठाय ब्रह्मण इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते ।

परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहा ॥ ६ ॥

इति जुहुयात् ।

यजमानः—नारिष्ठाय ब्रह्मण इदं न मम ( नारिष्ठायाग्नय इदं न मम, इति वा ) इति त्यागं कुर्यात् ।

ततो यदि सप्तवारमाज्यं गृहीत्वा यागं चिकीर्षेत्तर्हि, अध्वर्युणा ग्राहयेत् ।

अध्वर्युः—सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहा ॥ ६ ॥

इति जुहुयात् ।

यजमानः—नारिष्ठायाग्नय इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहा ।

इति जुहुयात् ।

यजमानः—नारिष्ठाय ब्रह्मण इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य

अग्नये स्विष्टकृतेऽनुब्रू३हि, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता—पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठो३म् । इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।

सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य सर्वेषाꣳ हविषामुत्तरा-

र्धात्सकृत्स्कृत्स्विष्टकृते प्रधानावदानाद्भूयिष्ठमवदाय जुह्वामवधाय प्रतिहविरवदानं हस्तं प्रक्षाल्य ( पञ्चावत्तिनो द्विरवदाय ) तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेनं यज्ञंयज्ञं प्रतिं देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थं उरुधारा पृथिवी यज्ञे अस्मिन्।

इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय

आप्यायतां ध्रुवा घृतेनं यज्ञंयज्ञं प्रतिं देवयद्भ्यः।

सूर्याया ऊधोऽदित्या उपस्थं उरुधारा पृथिवी यज्ञे अस्मिन्।

इति ध्रुवामाप्याय्य न हविः प्रत्यभिघार्य, दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा

आ३श्रा३वय, इत्याग्नीध्रं संप्रैषं कुर्यात्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत्।

अध्वर्युः—अग्निं स्विष्टकृतं यज। इति याज्यायै होतारं संप्रेष्येत्।

होता—ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रिया धामान्ययाट्

---

(१) पौर्णमास्याम्—

ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाट् (उपांशु) विष्णोः (उच्चैः) प्रिया धामान्ययाळग्नीषोमयोः प्रिया धामान्ययाळिन्द्रस्य वैमृधस्य प्रिया धामान्ययाड्देवानामाज्यपानामित्यादि समानम्। असंनयतः, अमावास्यायां च

ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाट् (उपांशु) विष्णोः (उच्चैः) प्रिया धामान्ययाडिन्द्राग्न्योः प्रिया धामान्ययाड्देवानामित्यादि समानम्।

आपस्तम्बीययजमानस्य संनयदसंनयतोऽमावास्यायामुपांशुयाजाभावाद्विष्णोः प्रियेत्युपांशु देवतानामकीर्तनं नास्ति।

सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाट् (उपांशु) विष्णोः

(उच्चैः) प्रिया धामान्ययाण्महेन्द्रस्य प्रिया धामान्ययाड्देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्टं हि यज्वा ।

ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्या३ वौ३षट् ।

इति वषट्कारमुक्त्वा

वागोजः सह ओजो मयि प्राणापानौ, इति वषट्कारमुपांश्वनुमन्त्रयेत ।

( ये३ यजामहेऽग्निं स्विष्टकृतमिति याज्यां वौषडित्यन्तामनुच्छ्वसन्नेव पठेत् । उच्छ्वसन्नेव पिपठिषेच्चेदर्धर्चे यज्येत्यन्त उच्छ्वसन्नेव पठेत् । नान्यत्रोच्छ्वासः कर्तव्यः ) ।

अध्वर्युः—होत्रा वौषडित्युक्ते—स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं हविः स्थगयन्निव स्रुक्पार्श्वेन तद्धविराहिंसन् अग्नेरुत्तरार्धपूर्वार्धे इतराहुतिभिरसंसक्तं हुत्वाऽऽज्यशेषमन्ववस्रावयेत् ।

यजमानः—अग्नये स्विष्टकृत इदं न मम, इति त्यागं कृत्वा

अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम् ।

इति सौविष्टकृतमनुमन्त्रयेत ।

अध्वर्युः— प्रत्याक्रम्य स्वासन उपविश्य जुह्वामप आनीय

वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् ।
स नः पितरं पितामहं प्रपितामहꣳ स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहा ।

इत्यन्तःपरिधि निनीयाऽऽयतने जुहूपभृतौ सादयेत्[१]।

**यजमानः—अग्नये वैश्वानरायेदं न मम, इति त्यागं कुर्यात्।**

**इति दर्शपूर्णमासप्रयोगीयद्वितीयः प्रश्नः।**



(१) वैश्वानरे हविरिदमित्यनेन यदपां निनयनं तत्प्राचीनावीतिना कार्यमिति केचिदस्मदीया वावदूकाः परशास्त्रावलोकनेन स्वपाण्डित्यं प्रकटयन्तः प्राहुः। तदसंगतम्—स नः पितरमितिमन्त्रस्य-वैश्वानरप्रधानतोक्तेर्वैश्वानरे हविरिदमिति च निनयनरूपहोमाधिकरणत्वेन वैश्वानराभिधानाच्च। यद्यधिकरणत्वेन होमाधिकरणं सिद्धं न देवता, इति चेत् 'स पिन्वमानः' इत्येवास्तु। पितृलिङ्गमात्रेणैव यदि सैव देवता गृह्यते तर्हि जीवत्पितृकस्य निवर्तेत। न चेष्टापत्तिरिति वाच्यम्। लिङ्गतो देवता कदाचिद्विकल्पिता स्यात्। न च सर्वथा कर्मनिवृत्तिः। न च वा पितरि सत्यपि पितरं पिन्वमान इति भाविनीं वृत्तिमाश्रित्य वक्तुं बुद्धिमतामुचितम्। तस्माच्छब्दं निरपेक्षं प्रमाणयताऽऽहिताग्निना, अग्नये वैश्वानरायेदं न ममेति त्यागो वक्तव्यः। अध्वर्युर्विदाऽध्वर्युणा निनयनमुपवीतिनैव कार्यम्।

# अथाऽऽपस्तम्बीयदर्शपूर्णमासयोस्तृतीयः प्रश्नः ।

अध्वर्युः—प्राशित्रपात्रमुपस्तीर्याऽऽग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्य-(भङ्क्त्वा)प उपस्पृश्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य

अव्यायो यवमात्रादाव्याधात्कृत्यतामिदम् ।

मा रूरुपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविः ॥

इत्याग्नेयस्य पुरोडाशस्य मध्याद्यवमात्रं पिप्पलमात्रं वा प्राशित्रमवदाय प्राशित्रपात्रे निदध्यात् । ततो हस्तं प्रक्षालयेत् । सांनाय्यात्प्राशित्राबदानं नास्तीत्यवगन्तव्यम् ।

यजमानः—अग्निर्मा दुरिष्टात्पातु सविताऽघशꣳसाद्यो मेऽन्ति दूरेऽरातीयाति तमेतेन जेषम् । इति प्राशित्रमवदीयमानमनुमन्त्रयेत ।

अध्वर्युः—अभिघार्यानभिघार्य वा प्राशित्रमग्रेणाऽऽहवनीयं ब्रह्मणे परिहरेत् ।

ब्रह्मा—मित्रस्य त्वा चक्षुषा प्रतीक्षे । इति प्राशित्रमाह्रियमाणमीक्षित्वा

---

( १ ) पौर्णमास्यामङ्गुष्ठेनोपमध्यमयेत्यारम्य हस्तं प्रक्षालयेदित्यन्तं प्रतिपुरोडाशमावर्तयेत् । अमावास्यायामसोमयाजिनोऽप्येवमेवेति ज्ञेयम् ।

( २ ) आपस्तम्बब्रह्मा—मित्रस्य त्वा चक्षुषा प्रेक्षे, । इति प्राशित्रमवदीयमानं प्रेक्ष्य

ऋतस्य पथा पर्येहि, इत्यग्रेणाऽऽहवनीयं परिह्रियमाणं प्रेक्ष्य

सूर्यस्य त्वा चक्षुषा प्रतिपश्यामि, इत्यासन्नमाह्रियमाणं प्रेक्ष्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि

इति तदञ्जलिना प्रतिगृह्य

पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे । इत्यन्तर्वेदि व्यूह्य तृणानि प्रागदण्डꣳ सादयित्वा

अदब्धेन त्वा चक्षुषाऽवेक्षे, इत्यवेक्ष्य

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदाय

अग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्र-

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि** । इति तदञ्जलिना प्रतिगृह्य
**पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे**
इत्यन्तर्वेदि कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकानिष्ठिकाभ्यां गृहीत्वा
**अग्नेष्ट्वाऽऽस्येन प्राश्नामि बृहस्पतेर्मुखेन** । इति दन्तैरपीडयन्प्राश्याऽऽचम्य
**सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शमयन्तु चक्षुः श्रोत्रं प्राणान्ये मा हिंसीः**, इत्यपः पीत्वाऽऽचम्य
**इन्द्रस्य त्वा जठरे दधामि** इति नाभिमालभ्य प्राशित्रहरणं प्रक्षाल्य प्रक्षालितेनानेन प्राशित्रहरणेनाऽऽत्मानमभिमुखेन हस्तेन च तथाभूतेनाऽऽत्मनः पुरतस्त्रिरपः सिञ्चेत् ।

---

**स्य त्वा जठरे सादयामि**
इति प्राशित्रं दन्तैरनभिमृद्य निगीर्य
**या अप्स्वन्तर्देवतास्ता इद२ँ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा**
इत्यद्भिः प्राशित्रमन्तर्णीत्वाऽऽचम्य
**वसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामि**
इति नाभिदेशमभिमृश्य
**वाङ्म आसन्** । इति मुखमभिमृश्य
**नसोः प्राणः**, इति नासिके अभिमृश्य
**अक्ष्योश्चक्षुः**, इति चक्षुषी अभिमृश्य
**कर्णयोः श्रोत्रम्**, इति श्रोत्रे अभिमृश्य
**बाह्वोर्बलम्**, इति बाहू अभिमृश्य
**ऊर्वोरोजः**, इत्यूरू अभिमृश्य
**अरिष्टा विश्वान्यङ्गानि तनूः**, इत्यवशिष्टान्यभिमृश्याप उपस्पृश्य प्रक्षाल्य प्राशित्रमद्भिः पूरयित्वा
**दिशो जिन्व**, इति पराचीनर्भकप्रयत्नेन निनीय
**मां जिन्व**, इति पुनरपो गृहीत्वा हृदयाभिमुखं निनयेत् ।

अध्वर्युः—इडापात्रमुपस्तीर्य

मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् ।

दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखाम् ॥

इत्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवदायेडायामवधायाव-दानदेशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयमवदायेडायामवधाय, पश्चार्धात्तृतीयं पश्चावत्तिनाम् । पूर्वार्धाच्च यजमानभागमिडायामवधाय हस्तं प्रक्षाल्य

मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसं-भिन्दन्नवद्याम्येकतोमुखाम् ॥

इति शृतस्य दक्षिणार्धात्प्रथममवदानं स्रुवेणाऽऽदायेडायामवधायाव-दानदेशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयं स्रुवेणाऽऽदायेडायामवधाय पश्चात्पश्चावत्तिनां तृतीयम् ।

पूर्वार्धाच्च यजमानभागं स्रुवेण पात्रान्तरे गृहीत्वेडायां निधाय तथा

मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् ।

दक्षिणार्धादसंभिदन्नवद्याम्येकतोमुखाम् ॥

इति दध्नो दक्षिणार्धात्प्रथममवदानं स्रुवेणाऽऽदायेडायामवधायावदान-देशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयं स्रुवेणाऽऽदायेडायामवधाय पश्चा-र्धात्पश्चावत्तिनां तृतीयम् । पूर्वार्धाच्च यजमानभागं स्रुवेण पात्रान्तरे गृहीत्वेडायां निदध्यात् । सौविष्टकृतावदानादैडावदानं ज्यायः कार्यम् ।

यजमानः—सुरूपवर्षवर्ण एहीमान्भद्रान्दुर्यां अभ्येहि मामनुव्रतान्युं शीर्षाणि मृढ्व मृड एडादित एहि सरस्वत्येहि रन्तिरसि रमति-

(१) पौर्णमास्यां "मनुना दृष्टा"मिति मन्त्रं प्रतिपुरोडाशमावर्त्यान्यत्सर्वं हस्तं प्रक्षाल्येत्यन्तं कुर्यात् । असंनयतोऽमावास्यायामप्यैन्द्राग्नं पुरोडाशं प्रत्यप्येवमेव मनुना दृष्टामित्यादि कार्यम् ।

(२) पौर्णमास्यां सर्वपुरोडाशेभ्योऽवत्तं यजमानभागम् । इति विशेषः । अमावास्यायामसंनयतोऽप्येवमेव ।

**रसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं तेऽशीय ।**

इतीडामवदीयमानामनुमन्त्रयेत ।

अध्वर्युः—अवत्तं पुरोडाशीयं यजमानभागमीषद्दीर्घं कृत्वाऽऽज्येन सर्वतोऽ-ञ्जनं कृत्वा ध्रुवायाः समीपं गमयित्वा तथा च शृतदध्नोर्यजमानभाग-माज्येन सर्वतोऽङ्क्त्वा ध्रुवायाः समीपं गमयित्वाऽभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमिडामनुत्सृजन्नेव पश्चाद्गत्वा होतुर्दक्षिणत आसीनः प्राङ्मुखो होतुः प्रदेशिन्या उत्तमे पर्वणी स्रुवेणाऽञ्ज्यात् ।

होता—इडामादाय तयाऽध्वर्युमतिक्रामन्तं दक्षिणतो ह्वेडामन्तराऽध्वर्युमा-त्मानं च कुर्या ¹।

अध्वर्युः—अपि वा होत्रे, इडामदत्त्वा प्राचीमिडामपोह्य स्वयं पश्चाद्गत्वा होतुर्दक्षिणत उदङ्मुख आसीनः स्रुवेण होतुरङ्गुल्याः प्रदेशिन्याः पर्वणी अञ्ज्यात् ।

**होता—वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामि ।**

इत्युत्तरपर्वलेपमुत्तरे, ओष्ठे अभ्यात्मं (आत्माभिमुखं पाणितलं कृत्वा), निमृज्याधरपर्वलेपमधरे, ओष्ठे ।

**मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामि,** इति निमृज्यो-दकं स्पृष्ट्वाऽञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादिडाया उद-गङ्गुलिं पाणिमुपधायावान्तरेळामवदापयीताध्वर्युम् ।

अध्वर्युः—होतुः पुरस्तात्प्रत्यङ्मुख आसीन उपस्पृष्टोदकस्य होतुर्हस्ते इडागताज्यलेपादुपस्तीर्यावान्तरेळामवदायावदध्यात् ।

होता—अङ्गुल्यङ्गुष्ठयोर्मध्येन प्रदेशेन स्वयमिडाया अवान्तरेडामाददीत ।

अध्वर्युः—इडागताज्यलेपादभिघारणं कुर्यात् । पश्चावत्तिनां द्विरभिघारणं कुर्यात् ।

होता—प्रत्यालभ्यामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्याङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्याऽऽस्यसंमितां प्राणसंमितां वा कृत्वा

**इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्मॉं इळा ह्वयतां सह**

---

( १ ) दक्षिणतः—गृहीतावान्तरेळेन मुष्टिना दक्षिणेन पाणिना, अवा-न्तरेळाया दक्षिणस्यां दिशि इळापात्रं गृहीत्वा.

दिवा बृहताऽऽदित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनो-पास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोप-हूता सह पृथिव्या रथंतरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथि-व्या रथंतरेणाग्निना उपहूता गावः सहाशिर उप मां गावः सहा शिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखाभक्ष उप मां सखाभक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयताम् । इत्युपांशु—

इळोपहूतोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता । मानवी घृत-पदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यज-मान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः । इत्युच्चैरिळामुपह्वयीत ।

**अध्वर्युयजमानौ**—उपहूयमानामिडामन्वारभेताम् ।

**अध्वर्युः**—दैव्या अध्वर्यव उपहूता इति होतुर्वाक्यमभिज्ञाय,
उपहूतः पशुमानसानि, इति जपेत् ।

**यजमानः**—भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहि ।
इतीडाया उपांशूपहवे जपित्वा
चिदसि, मनाऽसि, धीरसि रन्ती रमतिः सूनुः सूनरी ।
देवीर्देवैरभि मा निवर्तध्वꣳ स्योना स्योनेन घृतेन मा समु-क्षत नम इदमुदं भिषगृषिर्ब्रह्मा यद्दधे समुद्रादुदचान्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन् । इत्युच्चैरुपहवे जपित्वा

वायविडा ते माता, इति होतारमीक्षमाणो वायुं मनसा ध्यात्वा, उपहू-तोऽयं यजमान इति होतुर्वाक्यमभिज्ञाय
उपहूतः पशुमानसानि

सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहयतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयम् । आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम् । संजयन्क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान् ॥ इति जपित्वा, इडाया अहं देवयज्यया पशुमान्भूयासम् । इत्युपहूतामिडामनुमन्त्र्य

इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाऽभ्यस्माꣳ आगात् । इति भक्षायाऽऽह्रियमाणामनुमन्त्रयेत ।

यजमानपञ्चमा इडायाः स्वं स्वं भागं भक्षणार्थं गृह्णीयुः ।

होता— इळे भागं जुषस्व नः पिन्व गा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रास्व । तस्य नो दास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः । सर्वपुरुषा इति वा । अवान्तरेडां प्राश्याऽऽचम्य तूष्णीमिडाभागं भक्षणार्थं गृहीतं प्राश्याऽऽचम्य वाग्यत आस्त आ मार्जनात् ।

ब्रह्मा—तूष्णीमिडाभागं प्राश्याऽऽचम्य वाग्यत आस्त आ मार्जनात् ।

अध्वर्युयजमानाग्नीध्राः—इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणाः ।

---

(१) आपस्तम्बब्रह्मा—इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणाः ॥ इति स्वभागं प्राश्येत्यादि समानम् ।

इतीडायाः स्वस्वभागं प्राश्याऽऽचम्य वाग्यता आसत आ मार्जनात् ।
मन्त्रावृत्तिः प्रतिपुरुषम् ।

अध्वर्युयजमानाग्नीध्राः—मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् । इत्यन्तर्वेदि स्थिते प्रस्तरे मार्जयेयुः । ( मार्जनं नामान्तर्वेद्यवस्थिते प्रस्तरे जलमासिच्य तस्याधस्ताद्धस्तेन जलं गृहीत्वा शिरस्यानयनम् । ) मन्त्रावृत्तिश्च प्रतिपूरुषम् । होतृब्रह्माणावेवं मार्जयतः । आहवनीयपरिस्तरणैरञ्जलिमुदकधारणसमर्थं कृत्वाऽन्येन केनचित्परिकर्मिणाऽपामासेचनम् ।

अध्वर्युः—आग्नेयं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं वा कृत्वा चतुर्धा कुर्यात् ।

यजमानः— ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्ताꣳ संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां मे । इत्यध्वर्युणा चतुर्धा कृतं बर्हिषि सन्नं पुरोडाशं तन्त्रेणाभिमृश्य, आशानां त्वाऽऽशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रध्न पाहि भजतां भागी भागं माऽभागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिदꣳ हविः सोम्यानाꣳ सोमपीथिनाम् । निर्भ-

(१)आपस्तम्बब्रह्मा–मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् । इत्यन्तर्वेदि स्थिते प्रस्तरे मार्जयेत् । मार्जनं तूक्तमेव ।

क्तोऽब्राह्मणो नेहाब्राह्मणस्यास्ति । सकृदुक्तेन मन्त्रेण प्रतिदिशं विभागपूर्वकं गमयित्वा, इदं ब्रह्मणः, इद९ होतुः, इदमध्वर्योः, इदमग्नीधः, इति प्रत्येकमादिश्य, उपहूता द्यौः पितोप मां द्यौः पिता ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायोपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय । इत्याग्नीध्रभागस्य पुनर्व्यूहनं कुर्यादिदं व्यूहनमाग्नीध्रभागस्य मन्त्रपूर्वकं वैशेषिकम् ।

**अध्वर्युः**—**इदं यजमानस्य,** इति यजमानभागं निर्दिश्य कस्मिंश्चिदेकस्मिन् पात्रे सकृदुपस्तीर्याऽऽग्नीध्रभागं द्वेधा कृत्वैकं भागं पात्रेऽवधाय पुनरुपस्तीर्यापरभागमवधाय द्विरभिघार्याग्नीधे तत्पात्रं प्रयच्छेत् । अपि वा कस्मिंश्चित्पात्रे द्विरुपस्तीर्य द्विराधाय द्विरभिघार्य तत्पात्रमग्नीधे प्रयच्छेत् ।

**आग्नीध्रः**—विहाराद्बहिर्गत्वा पात्रस्थं स्वभागं गृहीत्वा **अग्नेराग्नीध्रमस्यग्नेः, शामित्रमसि नमस्ते अस्तु मा मा हि९सीः** । इति भक्षयित्वाऽऽचामेत् ।

**अध्वर्युः**—यथास्थानमासीनाभ्यां ब्रह्मयजमानाभ्यां तयोर्भागौ वेदेन हृत्वा प्रयच्छेत् ।

**ब्रह्मा**—दत्तं स्वभागं प्राशित्रहरणे निदध्यात् ।

**यजमानः**—प्राशित्रहरणस्य पश्चात्कुशेषु स्वभागं निदध्यादयं नियम आपस्तम्बीययजमानस्य नास्ति । यत्र क्व वा निहितेऽपि न प्रत्यवायः ।

**अध्वर्युः**—स्रुवेण होतुर्भागं होत्रे प्रयच्छेत्तथा स्वभागं जुह्वा स्वस्मै प्रयच्छेत् ।

**होता**—तूष्णीं भक्षयित्वाऽऽचामेत् ।

---

(१) अत्राग्नीद्भागस्य षडवत्तसंपादनं हस्त एव कैश्चिदलब्धैरनाघ्रातसूत्रग्रथितमीमांसावाक्यकुसुमैः क्रियते तदनादर्तव्यम् । कुतः ? पृथक्पात्राभ्यामितरयोरित्यापस्तम्बवचनात् । पृथक्शब्देतरशब्दस्वारस्यात्परिहरणसमभिव्याहारोऽप्यत्र मानं भवितुमर्हति तेनायमर्थो यदन्यस्मै परिहरणं तत्पात्रेणैव । नन्वग्नीधे परिहरणं नोक्तम् । मैवम् । प्रदानं विना भक्षणस्यानुपपन्नत्वात्षडवत्तं संपाद्य परिहरतीत्यर्थः प्रकरणादवसीयते ।

अध्वर्युः—अन्तरिक्षस्य भागोऽसि, इति स्वभागं प्राश्याऽऽचम्य दाक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचेत्क्षीरे पचेदित्येके।

ब्रह्मा—दक्षिणाग्नौ स्थितमन्वाहार्यं गत्वा प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च। इत्यन्वाहार्यमवेक्ष्य प्राणापानौ मे पाहि कामाय त्वा, इत्यस्पृशन्नन्वाहार्यमवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां पुलककलामात्रमन्वाहार्याद्गृहीत्वा प्राशित्रहरणस्थस्वभागे निदध्यात्।

अध्वर्युः—अन्वाहार्यमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासादयेत्।

यजमानः—ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसत्प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके। इदꣳ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः। स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदनेनातितराणि मृत्युम्। इत्यन्वाहार्यमासन्नमभिमृशेत्।

अध्वर्युः—दक्षिणसद्भ्य उपहर्तवै, इति यजमानं संप्रेष्येत्।

यजमानः—दक्षिणत एत ब्राह्मणा अयं च ओदनः, इति तेभ्योऽन्वाहार्यं दद्यात्।

ऋत्विजः—दक्षिणां प्रतिग्रहीष्यन्तः सप्तदशकृत्वो घ्राणयोरन्तराकर्षणरूपं निःश्वासं कुर्युः।

---

(१) अन्वाहार्यः—दक्षिणाग्नौ पक्व ओदनो दक्षिणार्थः।

(२) महान्—यथर्त्विग्भ्यः पर्याप्तो भवति।

(३) अपरिमितः—प्रस्थादिना तण्डुलमानप्रतिषेधः।

(४) आपस्तम्बब्रह्मा—ब्रह्मन् ब्रह्माऽसि ब्रह्मणे त्वा हुताद्य मा मा हिꣳसीरहुतो मह्यꣳ शिवो भव। इत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशेत्।

अध्वर्युराग्नीध्रश्च-देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणे ब्रह्मण ओदनम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु।

इत्यन्वाहार्यं प्रतिगृह्णीयाताम्।

होतृब्रह्माणौ[१]—क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु।

इत्यन्वाहार्यं प्रतिगृह्णीयाताम्।

यजमानः—उत्तरतः परीत इति दाक्षिणतः स्थितानृत्विजः संप्रैष्येत्।

अध्वर्युः—हविःशेषानुद्वास्य ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीत्परिधीꣳश्चाग्निं च सकृत्सकृत्संमृड्ढि।

इति ब्रह्माणमाग्नीध्रं च संप्रैष्येत्।

ब्रह्मा[२]—बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि। भूर्भुवः स्वर्बृहस्पतिप्रसूतः। इति जपित्वा, ॐ प्रतिष्ठ, इत्यतिसृजेत्।

आग्नीध्रः—ब्रह्मणाऽनुज्ञातः—एषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहा।

इत्यानुयाजिकीं समिधमादध्यात्।

---

(१) आपस्तम्बब्रह्माऽपि देवस्येत्यारभ्य गृह्णात्वित्यन्तेन मन्त्रेण प्रतिगृह्णीयात्।

(२) आपस्तम्बब्रह्मा—देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि। इत्युपांशूक्त्वा, ॐ प्रतिष्ठ, इत्युच्चैरनुजानीयात्।

यजमानः—एषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि। इत्याधीयमानामानुयाजिकीं समिधमनुमन्त्र्य, अग्नय इदं न मम

इति त्यागं कृत्वा

यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन्। प्रजां च तस्य मूलं च नीचैर्देवा निर्वृश्चत। अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन। यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम्। सर्वा᳟स्तानग्ने संदह या᳟श्चाहं द्वेष्मि ये च माम्।

इत्यग्निमनुमन्त्रयेत।

आग्नीध्रः—पूर्ववत्परिधीन्त्सकृत्सकृत्संमृज्य, अग्ने वाजजिद्वाजं त्वा ससृवा᳟सं वाजं जिगिवा᳟सं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय।

इति सकृदग्निं प्राञ्चं संमृज्यात्।

अध्वर्युः—इध्मसंनहनान्यद्भिः स᳟स्पृश्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हि᳟सीरेतदस्तु हुतं तव स्वाहा। इत्यग्नौ प्रहृत्येध्मसंनहनान्यप उपस्पृशेत्।

यजमानः—भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम, इति त्यक्त्वाऽप उपस्पृश्य वेदिर्बर्हिः श्रित᳟ हविरिध्मः परिधयः स्रुचः। आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः सं मे संनतयो नमन्तामिध्मसंनहने हुते। इतीध्मसंनहनानि हुतान्यनुमन्त्र्य महाहविर्होता, सत्यहविरध्वर्युः, अच्युतपाजा अग्नीत्, अच्युतमना उपवक्ता,
अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गाता।
इति पुरस्तादनूयाजानां वदेत्।

अध्वर्युः—औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽ-दङ्मुखः स्थित्वा **आ३श्रा३वय**, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—**अस्तु श्रौ३षट्**, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—**देवान् यज**, इति होतारं संप्रैष्येत् ।

होता—**देवं बर्हिर्वसुवने वसुधेयस्य वेतू३ वौ३षट्, वागोजः सह ओजो मयि प्राणापानौ** । इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्त आघारसंभेदात्प्रदेशपूर्वभागे समिधि अनुयाजं जुहुयात् ।

यजमानः—**अग्नय इदं न मम**, इति त्यागं कृत्वा
**बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम्** ।
इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः—**आ३श्रा३वय**, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—**अस्तु श्रौ३षट्**, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—**यज**, इति होतारं संप्रैष्येत् ।

होता—**देवो नराशंसो वसुवने वसुधेयस्य वेतू३ वौ३षट्**, इति वषट्कारमुक्त्वा
**वागोजः सह ओजो मयि प्राणापानौ**, इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते, आघारसंभेदस्य पूर्वभागे प्रथमानुयाजात्प्रत्यक्समिधि द्वितीयानुयाजं जुहुयात् ।

यजमानः—**अग्नय इदं न मम । नराशंसस्याहं देवयज्यया पशुमान्भूयासम्**, इति हुतमनुयाजमनुमन्त्रयेत ।

---

(१) इयमनुयाजस्य याज्या तथाऽप्यस्याः पूर्वमागूर्न वक्तव्या । एवमेव सर्वासामनुयाजयाज्यानाम् ।

"आगूर्याज्यादिरनुयाजवर्जम्" (आश्व० श्रौ० सू० १ । ५ । ४)
वृत्तिः—सर्वत्र सर्वासामनुयाजवर्जितानां याज्यानामादावागूर्भवति ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—यज, इति होतारं संप्रैष्येत् ।

होता–देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाडयाँ अपिप्रेर्ये ते होत्रे अमत्सत ताँ ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट्, इति वषट्कारमुक्त्वा ( अमत्सतेत्यत्रावसायानवसाय वा यजेत ) । वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते द्वितीयानुयाजस्यापरेणोत्तममनुयाजमारम्येतरावनुयाजौ संसर्जयन्प्राक्संस्थं जुहुयात् ।

यजमानः—अग्नय इदं न मम । इति त्यागं कृत्वा, अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम् ।

इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः—प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । इति दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूं किंचिदुद्यम्य, अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः ।

इति सव्येन हस्तेनोपभृतमधो नियम्य

उद्ग्राभं च । इति जुहूं किंचिदुद्यम्य

निग्राभं च । इति दक्षिणेन हस्तेनोपभृतं निगृह्य

ब्रह्म देवा अवीवृधन् । इति दक्षिणेन हस्तेन जुहूं प्राचीं गमयित्वा

अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् । इति सव्येन हस्तेनोपभृतं प्रतीचीं बहिर्वेदि निरस्याप उपस्पृश्य तां प्रोक्ष्यैनामभ्युदाहरेत् ।

यजमानः—वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् ।

अथा सपत्ना२ इन्द्रो मे निग्राभेणाधराः२ अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् । इत्येतान्मन्त्रानध्वर्युणा सह जपेत् ।

वाजस्य मा, इत्यारभ्य नान्व्यस्यतामित्यन्तान्मन्त्रांश्चतुःस्त्रयेणाध्वर्युः यजमानौ जपतः ।

अध्वर्युः—वसुभ्यस्त्वा । इति जुह्वाज्यलेपेन मध्यमपरिध्येकदेशमञ्ज्यात् ।

यजमानः—वसून्देवान्यज्ञेनापिप्रेम् । इत्यज्यमानमध्यमं परिधिमनुमन्त्र्य वसुभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—रुद्रेभ्यस्त्वा । इति जुह्वाज्यलेपेन दक्षिणपरिध्येकदेशमञ्ज्यात् ।

यजमानः—रुद्रान्देवान्यज्ञेनापिप्रेम् । इत्यज्यमानं दक्षिणं परिधिमनु-मन्त्र्य

रुद्रेभ्य इदं न मम । इति त्यागं कुर्यात् ।

अध्वर्युः—आदित्येभ्यस्त्वा । इति जुह्वाज्यलेपेनोत्तरपरिध्येकदेशमञ्ज्यात् ।

यजमानः—आदित्यान्देवान्यज्ञेनापिप्रेम् । इत्यज्यमानमुत्तरपरिधिमनु-मन्त्र्य

आदित्येभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—वेद्यामेव बहिः प्रस्तराज्जुहू२ सादयित्वा

संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम् । इति विधृतीभ्या२ सह प्रस्तारमपादाय बर्हिषि विधृती अपिसृज्य, अक्त२ रिहाणा वियन्तु वयः । इति प्रस्तराग्रं जुह्वामङ्क्त्वा प्रजां योनिं मा निर्मृक्षम् । इत्युपभृति प्रस्तरमध्यमङ्क्त्वा आप्यायन्तामाप ओषधयः । इति ध्रुवायां प्रस्तरमूलमञ्ज्यात् । एवं त्रिः कार्यम् ।

यजमानः—समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहा । इत्यज्यमानं प्रस्तरमनुमन्त्रयेत ।

अध्वर्युः—आयुषे त्वा । इत्युक्तस्य प्रस्तरस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां सह शाखया प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीनः

आ३श्रा३वय ।

इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट् , इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः—इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि, इति होतारं संप्रैष्येत् ।

होता—इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्योरोमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि इत्यवसाय

अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । ( उपांशु ) विष्णुः ( उच्चैः ) इदं हविरजुषतावीवृधत महो ज्यायोऽकृत ।

---

(१) पौर्णमास्यां शाखाया अभावात्केवलं प्रस्तरं गृहीत्वा, अमावास्यायामसोमयाजिनोऽप्येवमेव ।

(२) पौर्णमास्याम्—अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामिन्द्रो वैमृध इदं हविरजुषतावीवृधत महो ज्यायोऽकृत, इत्येतदुपांशुयाजदेवतायाः कीर्तनानन्तरमुक्त्वा देवा आज्यपा इत्यादि समानम् ।

अमावास्यायामसोमयाजिनः । उपांशुयाजदेवतायाः कीर्तनानन्तरम् ।

इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । इत्युक्त्वा देवा आज्यपा इत्यादि समानम् ।

महेन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानो दत्तात्रेयशर्मा हस्तः ।
इति यजमाननाम निर्दिश्य,

( अत्र यजमाननाम सांव्यवहारिकं नाक्षत्रं च ब्रूयात् । तथा च होतुर्गुरुश्चेद्यजमानः स्यात्तत्संनिधावुपांशु तन्नामनी ब्रूयात् । )

आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसस्पातामिह गतिर्वामस्येदं नमो देवेभ्यः ।
इति ब्रूयात् ।

अध्वर्युः—अनूच्यमाने सूक्तवाके, अग्निरिदꣳ हविरजुषतेति होतुरभिज्ञाय मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरय । इति तिर्यञ्चं हस्तं धारयन् कर्षन्निव सह शाखया प्रस्तरमाहवनीये प्रहरेत् ।

यजमानः—अग्नय इदं न मम । अग्नेरहमुज्जितिमनूज्जेषम् । सोमायेदं न मम । सोमस्याहमुज्जितिमनूज्जेषम् । अग्नय इदं न मम । अग्नेरहमुज्जितिमनूज्जेषम् । विष्णव इदं न मम । महेन्द्रायेदं न मम । महेन्द्रस्याहमुज्जितिमनूज्जेषम् । देवेभ्य आज्य-

---

१ पौर्णमास्यां केवलं प्रस्तरमेवाऽऽहवनीये प्रहरेत् । अमावास्यायामसोमयाजिनोऽप्येवमेव ।

२ पौर्णमास्याम्—विष्णव इदं न मम । ततः—अग्नीषोमाभ्यामिदं न मम । अग्नीषोमयोरहमुज्जितिमनूज्जेषम् । इन्द्राय वैमृधायेदं न मम ।

पेभ्य इदं न मम । अग्नये स्विष्टकृत इदं न मम । अग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषम् । यदा चास्य होता नाम गृह्णीयाचदा, एमा अगमन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवान्गम्याज्जुष्टा-

---

इन्द्रस्य वैमृधस्याहमुज्जितिमनूज्जेषम् । ततो देवेभ्य आज्यपेभ्य इत्यादि समानम् । अमावास्यायामसोमयाजिनः, विष्णव इदं न मम, इत्यनन्तरम् । इन्द्राग्निभ्यामिदं न मम ।

इन्द्राग्नियोरहमुज्जितिमनूज्जेषम् । ततो देवेभ्य आज्यपेभ्यः । इत्यादि समानम् । अमावास्यायामापस्तम्बीययजमानस्य विष्णुयागाभावप्रयुक्तो विष्णव इदं न ममेत्यस्याप्यभावः ।

अस्त्यत्र काचित्संशयभूमिका सा चैवम्—उपांशुयाजदेवताया आज्यपानां देवतानां चोज्जितिमन्त्रेणानुमन्त्रणमस्ति वा न वा । अस्तीत्याह यथालिङ्गमिति सूत्रकारवचनात् । शाखान्तरीयकल्पकारैः स्पष्टमुक्तत्वाच्च । यथाऽऽह बौधायनः—अग्नेरहमुज्जितिमनूज्जेषमिति यथेष्टम् । यथेष्टं नाम यथादेवतं यजनम् । यथादेवतमन्यदिति कात्यायनः । तस्मादापस्तम्बसूत्रानुसारिभिरपि उपांशुयाजदेवताया आज्यपानां देवतानां चोज्जितिमन्त्रेणानुमन्त्रणं कार्यम् । अयमभिप्रायः पूर्वपक्षिणः, होता यां यां देवतां सूक्तवाकेऽनुब्रूते तां देवतां यजमान उज्जितिमन्त्रेणानुमन्त्रयेतेत्यर्थः । अत्र ब्रूमः—आपस्तम्बसूत्रे तु यथालिङ्गमित्युक्तत्वादेव तैः सूक्तवाकान्तर्गतसर्वदेवतानामनुमन्त्रणं न कार्यमिति सिध्यति । यथालिङ्गमिति यथाम्नानमित्यर्थः । तैत्तिरीयके तु उपांशुदेवताज्यपदेवतावर्जमेवाऽऽम्नानं श्रूयते । तथैवानुमन्त्रणं सूत्रकाराभिप्रेतमिति यथालिङ्गशब्देनाऽऽह । यदि सर्वा देवता सूक्तवाकीया अनुमन्त्रयितुमिष्टाः स्युस्तर्हि शाखान्तरीयवद्यथेष्टमित्येव ब्रूयात् । लिङ्गं ज्ञापकम् । यथोज्जितिमन्त्राणां ज्ञापकं तथाऽनुमन्त्रयेत । ज्ञापकमाम्नानं तत्सूक्तमेव । न हि शाखान्तरीयविधीन् दृष्ट्वा स्वशास्त्रमन्यथयितुं युक्तम् । भाष्यकारस्तु यथाबौधायनकल्पं बभाषे तैत्तिरीयके । गुणोपसंहारन्यायेनानुक्तदेवतानामप्यनुमन्त्रणं कर्तुक्षसे चेद्यथालिङ्गमित्यस्यैवार्थकल्पनाप्रयासो वृथा । गुणानुपसंहरामीत्येव ब्रूहि आचर च न कश्चिद्दोष इत्यनुज्ञामात्रं न विधिरिति विभाव्यताम् । तस्मादापस्तम्बीयानां तत्सूत्रानुयायिनां चोपांशुदेवताया आज्यपानां देवतानां चानुमन्त्रणमुज्जितिमन्त्रेण कार्यमेवेति न विधिरिति ज्ञेयम् । उपदेशमते त्वस्तीति रामाण्डारप्रभृतयः प्रतिपन्नाः ।

र्जुष्टतरा पण्यात्पण्यतराऽरेडता मनसा देवान् गम्याद्यज्ञो देवान् गच्छतु यज्ञो म आगच्छतु

इति सूक्तवाकमनुमन्त्रयेत।

अध्वर्युः—होतुराशीर्वचनकाले न्यञ्चं हस्तं पर्यावर्तयन् अग्नीद्गमय, इत्याग्नीध्रं संप्रेष्येत्।

आग्नीध्रः—रोहितेन त्वाऽग्निर्देवतां गमयतु। हरिभ्यां त्वेन्द्रो देवतां गमयतु। एतशेन त्वा सूर्यो देवतां गमयतु, इत्येतैस्त्रिभिमन्त्रैस्त्रिरञ्जलिना यथोद्यतः सर्वः प्रस्तरोऽग्निं गमितः स्यात्तथोद्यम्य प्रहरेत्।

यजमानः—रोहितेन त्वाऽग्निर्देवतां गमयतु। हरिभ्यां त्वेन्द्रो देवतां गमयतु। एतशेन त्वा सूर्यो देवतां गमयतु। इत्यग्नौ प्रह्रियमाणं प्रस्तरमनुमन्त्रयेत।

आग्नीध्रः—अनुप्रहर, इत्यध्वर्युमाह।

अध्वर्युः—यत्प्रस्तरात्तृणमपात्तं तत् स्वगा तनुभ्यः, इत्याहवनीये प्रहरेत्।

यजमानः—तनुभ्य इदं न मम। इति त्यागं कृत्वा

दिवः खीलोऽवततः पृथिव्या अध्युत्थितः। तेना सहस्रकाण्डेन द्विषन्तꣳ शोचयामसि। द्विषन्मे बहु शोच त्वोषधे मो अहꣳ शुचम्।

इति प्रस्तरतृणे प्रह्रियमाणे जपेत्।

अध्वर्युः—एतदेतदेतत्, इति त्रिरङ्गुल्या निर्दिश्य तृणम्

आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि।

इत्याग्निमभिमन्त्र्य

ध्रुवाऽसि। इत्यन्तर्वेदि पृथिवीमभिमृशेत्।

आग्नीध्रः—संवदस्व, इत्यध्वर्युमाह।

अध्वर्युः—अगानग्नीत्, इत्याग्नीध्रं पृच्छेत्।

आग्नीध्रः—अगन्, इत्यध्वर्युमाह।

अध्वर्युः—श्रा३वय, इत्याग्नीध्रमाह।

आग्नीध्रः—श्रौ३षट्, इत्यध्वर्युमाह।

अध्वर्युः—मध्यमं परिधिमन्वारभ्य

स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रू३हि।

इति होतारं संप्रैष्येत्।

होता—तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्ति-रस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे।

इति ब्रूयात्।

अध्वर्युः—अनूच्यमाने शंयुवाके

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः।

तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै।

इति मध्यमं परिधिमाहवनीये प्रहृत्य

यज्ञस्य पाथ उप समितम्। इति दाक्षिणोत्तरौ परिधी युगपत्प्र-हृत्य उत्तरार्धस्य परिधेरग्रमङ्गारेषूपगूहेत्।

यजमानः—वि ते मुञ्चामि रशना वि रश्मीन्वि योक्त्रा यानि परि चर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु।

इति परिधिषु विमुच्यमानेषु जपित्वा

अग्नय इदं न मम, इति त्यागं कृत्वा विष्णोः शंयोरहं देव-यज्यया यज्ञेन प्रतिष्ठां गमेयम्।

यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः। इति जपेत्।

अध्वर्युः—यजमान प्रथत, इति परिधीन्समभ्यज्य जुहूमुपभृतोऽग्रमवधाय संस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा।

इति संस्रावेणाभिजुहुयात्।

यजमानः—वसुभ्यो रुद्रेभ्य आदित्येभ्यः संस्रावभागेभ्य इदं न मम। इति त्यागं कृत्वा।

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वान्।
अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहाऽऽगमेः। इति संस्रावं हुतमनुमन्त्रयेत ।

ऋत्विजः—हविःशेषानत्रैव भक्षयेयुः ।

अध्वर्युः—जुहूपभृद्गतानाज्यलेपान्प्रक्षाल्य, सस्रुवे जुहूपभृतावादद्यात् ॥

होता— वेदोऽसि वेदो विदेय । इति वेदं गृह्णीयात् ।

आग्नीध्रः—स्फ्यमाज्यस्थालीमुदकमण्डलुं चाऽऽदद्यात् ।

अध्वर्युः—अग्रेण गार्हपत्यं दक्षिणेनाऽऽग्नीध्रप्रथमो गच्छेत् ।

होता—उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य धामभिरुद-
स्थाममृताँ अनु ।
इत्युत्थायोत्तरेण गार्हपत्यमाग्नीध्रप्रथमः प्रत्यागच्छेत् ।

आग्नीध्रः—अग्रेण गार्हपत्यं होत्रध्वर्य्वोरग्रे गच्छेत् । आग्नीध्रप्रथमाः प्रत्यगा-
च्छेयुरिति सूत्रादाग्नीध्रस्याग्रे गमनं प्राप्तम् ।

अध्वर्युः—अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी
सुम्ने मा धत्तम् । इति कस्तम्भ्यां जुहूपभृतौ सादयित्वा (कं
शकटं तद्यत्र स्तभ्यते स्थाप्यते सा कस्तम्भी ।
धुरि धुर्यौ पातम् । इति युगधुरोः प्रापयेत् । यदि पात्र्या निर्वप-
त्तर्हि अग्नेर्वामपन्नेत्यादियजुषा धुरि धुर्यावित्यादियजुषा च स्फ्ये
स्रुचौ सादयेत् ।

अध्वर्युः—अपरेण गार्हपत्यं दक्षिणत ऊर्ध्वज्ञुरुपविशेत् ।
होता—अपरेण गार्हपत्यमध्वर्योरुत्तरत उपस्थेनोपाविशेत् ।
आग्नीध्रः—अपरेण गार्हपत्यमध्वर्योरुत्तरतो दक्षिणाभिमुखः स्फ्यं गृहीत्वो-
र्ध्वज्ञुरुपविशेदेतेनार्थाद्धोतुरुपवेशनमुभयोर्मध्ये सिद्धं भवति ।
अध्वर्युः—सव्यहस्त उपभृतं कृत्वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण
गृहीत्वा जुह्वां गृह्णन् सोमायानुब्रू३हि, इति होतारं संप्रेष्य पुनः
स्रुवेण त्रिवारमाज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत् ।
होता—आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य
संगथो३म् । इति मन्द्रस्वरेण पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—आ३श्रा३वय । इत्याग्नीध्रं संप्रेष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट् , इति प्रत्याश्रावयेत् ।

अध्वर्युः—सोमं यज, इति होतारं संप्रैष्येत् ।

होता—ये३ यजामहे सोमं सं ते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्वा३ वौ३षट् । इति मन्द्रेणोक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते गार्हपत्यस्याग्नेरुत्तरार्धे जुहुयात् ।

यजमानः— सोमायेदं न मम । इति त्यागं कृत्वा
सोमस्याहं देवयज्यया सुरेता रेतो धिषीय । इति हुतमनुमन्त्रयेत ।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् त्वष्ट्रेऽनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारं स्रुवेणाऽऽज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत् ।

होता—इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलो३म् । इति मन्द्रस्वरेण पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत् ।

अध्वर्युः—त्वष्टारं यज, इति होतारं संप्रैष्येत् ।

होता—ये३ यजामहे त्वष्टारं तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्वि रराणस्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट् । इति मन्द्रेणोक्त्वा
वागोजः सह ओजो मयि प्राणापानौ । इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडिरुक्ते गार्हपत्याग्नेरुत्तरार्धे सोमाहुतेर्दक्षिणत उत्तरतो वा जुहुयात् ।

यजमानः—त्वष्ट्र इदं न मम, इति त्यागं कृत्वा त्वष्टुरहं देवयज्यया पशूनां रूपं पुषेयम् । इति हुतमनुमन्त्रयेत ।

अध्वर्युः—आहवनीयतः, गार्हपत्ये परिश्रितेऽपरिश्रिते वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् देवानां पत्नीभ्योऽनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारं स्रुवेणाऽऽज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत् ।

होता—देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतो३म् । इति मन्त्रेण पुरोनुवाक्यामनुब्रूयात् ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत् ।

अध्वर्युः—देवानां पत्नीर्यज, इति होतारं संप्रैष्येत् ।

होता—ये३ यजामहे देवानां पत्नीरुत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् । आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीना३ वौ३षट् । इति मन्त्रेणोक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते गार्हपत्याग्नेरुत्तरार्धे जुहुयात् ।

यजमानः—देवानां पत्नीभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् राकाया अनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारं स्रुवेणाऽऽज्यं जुह्वां गृह्णन् चतुर्गृहीतं संपादयेत् ।

होता—राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यो३म् । इति पुरोनुवाक्यां मन्त्रेण ब्रूयात् ।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत् ।

---

(१) आपस्तम्बानामप्ययमेव क्रमस्तत्सूत्रे तूभयथा दर्शनात् । केचिदभियुक्ता अनन्तरमेव ( राकादियागानन्तरं ) देवपत्नीयागं कुर्वन्ति ।

( २ ) राकासिनीवालीकुहूदेवत्यका यागा आश्वलायनीयानां कामप्रयुक्ताः । आपस्तम्बीयानां विकल्पः । अकामेनाप्यनुष्ठातव्या इति ।

अध्वर्युः—राकां यज, इति होतारं संप्रेष्येत्।

होता—ये३ यजामहे राकां यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपाऽऽगहि सहस्रपोषं सुभगे रराणा३ वौ३षट्।

इति मन्त्रेणोक्त्वा, वागोजः सह ओजो मयि प्राणापानौ। इत्युपांशु वषट्कारमनुमन्त्रयेत।

अध्वर्युः— होत्रा वौषडित्युक्ते गार्हपत्ये जुहुयात्।

यजमानः—राकाया इदं न मम, इति त्यागं कृत्वा

राकाया अहं देवयज्यया प्रजावान् भूयासम्। इत्यनुमन्त्रयेत।

पत्नी—राकाया अहं देवयज्यया प्रजावती भूयासम्। इत्यनुमन्त्रयेत।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् सिनीवाल्या अनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारमाज्यं स्रुवेण जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत्।

होता—सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नो३म्। इति मन्त्रेण पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत्।

अध्वर्युः—सिनीवालीं यज, इति होतारं संप्रेष्येत्।

होता—ये३ यजामहे सिनीवालिं या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी। तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतना३ वौ३षट्, इति मन्त्रेणोक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत।

अध्वर्युः—होत्रा वौषडित्युक्ते गार्हपत्ये जुहुयात्।

यजमानः—सिनीवाल्या इदं न मम, इति त्यागं कृत्वा सिनीवाल्या अहं देवयज्यया पशुमान्भूयासम्। इत्यनुमन्त्रयेत।

पत्नी—सिनीवाल्या अहं देवयज्यया पशुमती भूयासम्। इत्यनुमन्त्रयेत।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन्कुह्वा अनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारं स्रुवेणाऽऽज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत्।

होता—कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेमो३म्। इति मन्त्रेण पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत्।

अध्वर्युः—कुहूं यज, इति होतारं संप्रेष्येत्।

होता—ये३ यजामहे कुहूं कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु। सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातू३ वौ३षट्। इति मन्त्रेणोक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत।

अध्वर्युः—होत्रा वौषडित्युक्ते गार्हपत्ये जुहुयात्।

यजमानः—कुह्वा इदं न मम, इति त्यागं कृत्वा

कुह्वा अहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् इत्यनुमन्त्रयेत।

पत्नी—कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासम्,। इत्यनुमन्त्रयेत।

अध्वर्युः—तूष्णीमाज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय जुह्वां गृह्णन्, अग्नये गृहपतयेऽनुब्रू३हि, इति होतारं संप्रेष्य पुनस्त्रिवारं स्रुवेणाऽऽज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत्।

होता—अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावो३म्। इति मन्त्रेण पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः—आ३श्रा३वय, इत्याग्नीध्रं संप्रेष्येत्।

आग्नीध्रः—अस्तु श्रौ३षट्, इति प्रत्याश्रावयेत्।

अध्वर्युः—अग्निं गृहपतिं यज, इति होतारं संप्रेष्येत् ।

होता—ये३ यजामहेऽग्निं गृहपतिं हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे । सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवांसी ३ वौ३षट्, इति मन्द्रेणोक्त्वा वागोजः सह ओजो मयि प्राणापानौ, इत्युपांशु वषट्कारमनुमन्त्रयेत ।

अध्वर्युः—होत्रा वौषडित्युक्ते सोमत्वष्ट्राहुत्योर्मध्ये जुहुयात् ।

यजमानः—अग्नये गृहपतय इदं न मम, इति त्यागं कृत्वा देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम् । इत्यनुमन्त्रयेत ।

अध्वर्युः—स्रुवेण होतुः प्रदेशिन्या उत्तमे पर्वणी अञ्ज्यात् ।

होता—वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामि । इत्युत्तरपर्वलेपमुत्तर ओष्ठेऽभ्यात्ममात्माभिमुखं पाणितलं कृत्वा निमृज्य मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामि । इत्यधरपर्वलेपमधर ओष्ठे निमृज्योदकं स्पृष्ट्वाऽऽज्यं पाणितलेऽवदापयीत ।

अध्वर्युः—उपस्पृष्टोदकस्य होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्येदाग्नीध्रस्य हस्ते षडाज्यबिन्दूनिडामवद्येत् ।

अध्वर्युराग्नीध्रः पत्नी च—उपहूयमानामाज्येडामन्वारभेरन् ।

होता—इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहताऽऽदित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहूता सह पृथिव्या रथंतरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथंतरेणाग्निना उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयताम् । इत्युपांशु

इळोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता। मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः। य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावा-पृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे। उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः, इति मन्त्रेणाऽऽज्येडामुपह्वयेत।

यजमानः—इडाऽस्माननुवस्तां घृतेन यस्याः पदे पुनते देवयन्तः। वैश्वानरी शक्करी वावृधानोप यज्ञमस्थित वैश्वदेवी, इत्याज्येडा-मनुमन्त्रयेत।

होताऽऽग्नीध्रश्च—स्वां स्वां स्वस्वहस्तस्थामाज्येडां तूष्णीं प्राश्याऽऽचामेताम्।

अध्वर्युः—अस्मिन् काले स्रुवेणाऽऽज्यं गृहीत्वा पत्न्या[1]मन्वारब्धायां सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम्। संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेता२ँ स्वाहा। इति गार्हपत्ये जुहुयात्।

यजमानः—दिवि ज्योतिषे, अजराय परमात्मन इदं न मम, इति त्यागं कृत्वाऽन्तर्वेदि वेदं निधाय वेदोऽसि वित्तिरसि पाप्मनो व्यावृत्तिं विदेय कर्मासि करुणमसि क्रियास२ँसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिन२ँ रायस्पोष२ँ सहस्रिणं वेदो ददातु वाजिनम्। इति वेदमभिमृशेत्।

---

१ पत्न्यामनन्वारब्धायामपि संपत्नीयहोमो न निवर्ततेऽपि तु पत्न्यामनालम्भु-कावस्थायां विद्यमानायामपि संपत्नीयहोमो भवत्येव, अनालम्भुकत्वादिना पत्न्या-मविद्यमानायाम्—आशासाना महीनां पयआज्यावेक्षणादिलोपवदस्य संपत्नीय-स्यापि, इति लोपभ्रान्तिः स्यात्तां निवर्तयितुं होमोऽपि भवत्येवेत्याह। अन्वारब्धा-यामिति कर्तरि निष्ठायां कथमिदमिति चेत्तत आह—पत्न्यभावेऽपि न निवर्तते होमः। अप्रविशन्त्या अपि पत्न्याः फलं विद्यत एवेति पत्न्याश्चानालम्भुकायाः कर्तृत्वान्वयाभावेऽप्यपूर्वान्वयाधिकारस्य विद्यमानत्वात्। न च पत्नीसंयाजाङ्गं संपत्नीयहोमः।

होताऽध्वर्युर्वा—वेदं पत्न्यै प्रदाय वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनिताऽसि सनेयं घृतेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वा । इति पत्नीं वाचयेत् । यदि पत्नी प्रजा मे स्यादिति कामयेत तदा वेदस्य जानुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत । कामनाभावेऽपि वाचनं भवत्येव ।

होता—प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाऽबध्नात्सविता सुशेवः । ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि । इति पत्न्या योक्त्रं विमुच्य तद्योक्त्रं द्विगुणं कृत्वा प्रत्यग्गार्हपत्यात्प्राक्पाशं निधाय योक्त्रस्योपरिष्टाद्वेदतृणान्युदगग्राणि निधाय वेदतृणेभ्यः पुरस्तात्तृणैः संश्लिष्टं पूर्णपात्रं निधायाभिमृशन् पूर्णपात्रमभिमृशन्तीम्—पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः । इति वाचयित्वा

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा । इति पूर्णपात्रादुदकमुदुक्षन्नुदुक्षन्तीं पत्नीं वाचयित्वा योक्त्रस्याधस्तात्पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् माऽहं प्रजां परासिचं या नः सयावरीः स्थ न । समुद्रे वो निनयानि स्वं पाथो अपीथ । इति पत्नीं वाचयेत् ।

अध्वर्युः—दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय चतुर्गृहीत आज्ये फलीकरणानोप्य अग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहा । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः—अग्नये, अदब्धायवे, अशीततनव इदं न मम । इति त्यागं कृत्वा या सरस्वती विशो भगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्म, इति फलीकरणहोमे हुते मुखं विमृश्याप उपस्पृशेत् ।

अध्वर्युः—चतुर्गृहीत आज्ये पिष्टलेपानोप्य उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा ।

यजमानः—विश्वेभ्यो देवेभ्य इदं न मम, । इति त्यजेत् ।

अध्वर्युः—जुह्वां त्रिःकृत्व आज्यं गृहीत्वा या सरस्वती विशो भगीना तस्यै स्वाहा । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः—सरस्वत्यै विशो भगीनाया इदं न मम, इति त्यजेत् ।

अध्वर्युः—या सरस्वती वेशभगीना तस्यै स्वाहा । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः—सरस्वत्यै वेशभगीनाया इदं म मम, इति त्यागं कुर्यात् ।

अध्वर्युः—इन्द्रोऽपानस्य केहमनसो वेशान् कुरु सुमनसः स जातान्त्स्वाहा । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः—इन्द्राय सुमनस इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—पत्न्याः सयोक्त्रेऽञ्जलौ तूष्णीं पूर्णपात्रमानयेत् ।

पत्नी—समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम । इत्यानीयमाने पूर्णपात्रे जपित्वा तदुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन मुखं विमृज्य पुष्टिमती पशुमती गृहमेधिनी भूयासम् । इत्युत्तिष्ठेत् ।

अध्वर्युः—यथेतमाहवनीयं गच्छेत् ।

होता—वेदतृणानि दक्षिणेन हस्तेनाग्रप्रदेशे गृहीत्वाऽविधुन्वन्—तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया

कृतान्। अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्। इति गार्हपत्यादारभ्य सव्येन हस्तेन संततं स्तृणन्नाहवनीयं गत्वा शेषं निधाय प्रत्यगुदगाहवनीयादवस्थायाऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यमादाय–अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयासा वयसा कृतोऽयासन्हव्यमूहिषे या नो धेहि भेषजं स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—अयसेऽग्नय इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा–अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्तधामभिः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—देवेभ्य इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा–इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूहळमस्य पांसुरे स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—विष्णव इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा भूः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वा स्रुवेणाऽऽज्यं गृहीत्वा भुवः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—वायव इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेणाऽऽदाय स्वः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित्वा स्रुवेणाऽऽज्यं गृहीत्वा भूर्भुवः स्वः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—प्रजापतय इदं न मम, इति त्यागं कुर्यात्।

होता—पूर्ववत्स्थित एव, ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च। यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः। इत्युपस्थाय तीर्थेनैव निष्क्रामेत्।

अध्वर्युः—आज्यस्थाल्या जुह्वां स्रुवेण वाऽऽज्यं गृहीत्वाऽऽसीनो दक्षिणं जान्वाच्य वक्ष्यमाणमन्त्रैः सर्वप्रायश्चित्तान्याहवनीये ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानां हविषामाज्यस्य। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा॥ १॥ इति जुहुयात्।

यजमानः—ब्रह्मण इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा॥ २॥ इति जुहुयात्।

यजमानः—यज्ञायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम्। अरायो अस्मां अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा॥ ३॥ इति जुहुयात्।

यजमानः—मरुद्भ्य इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते। अयं समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः स्वाहा॥ ४॥ इति जुहुयात्।

यजमानः—ऋभुभ्य इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं स्वाहा॥ ५॥ इति जुहुयात्।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय

सूर्य्ँ स्वाहा ॥ ६ ॥ इति जुहुयात्।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आऽप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ७ ॥ इति जुहुयात्।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके स्वाहा ॥ ८ ॥ इति जुहुयात्।

यजमानः—वरुणायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः स्वाहा ॥ ९ ॥ इति जुहुयात्।

यजमानः—वरुणायेदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासि सीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ १० ॥ इति जुहुयात्।

यजमानः—अग्नीवरुणाभ्यामिदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुणँ रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा ॥ ११ ॥ इति जुहुयात्।

यजमानः—अग्नीवरुणाभ्यामिदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—त्वमग्ने अयाऽस्ययासन्मनसा हितः। अयासन्हव्यमूहिषेऽया नो धेहि भेषजँ स्वाहा ॥ १२ ॥ इति जुहुयात्।

यजमानः—अग्नये, अयस इदं न मम, इति त्यागं कुर्यात् ।
( अग्नय इदमिति वा )

अध्वर्युः—प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहा ॥ १३ ॥ इति जुहुयात् ।

यजमानः—प्रजापतय इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—इष्टेभ्यः स्वाहा ॥ १४ ॥ इति जुहुयात् ।

यजमानः—इष्टेभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—वषडनिष्टेभ्यः स्वाहा ॥ १५ ॥ इति जुहुयात् ।

यजमानः—अनिष्टेभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—भेषजं दुरिष्टयै स्वाहा ॥ १६ ॥ इति जुहुयात ।

यजमानः—दुरिष्टया इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—निष्कृत्यै स्वाहा ॥ १७ ॥ इति जुहुयात् ।

यजमानः—निष्कृत्यां इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—दौराध्यै स्वाहा ॥ १८ ॥ इति जुहुयात् ।

यजमानः—दौराध्यां इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—दैवीभ्यस्तनूभ्यः स्वाहा ॥ १९ ॥ इति जुहुयात् ।

यजमानः—दैवीभ्यस्तनूभ्य इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—ऋध्यै स्वाहा ॥ २० ॥ इति जुहुयात् ।

यजमानः—ऋध्या इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—समृद्ध्यै स्वाहा ॥ २१ इति जुहुयात् ।

यजमानः—समृद्ध्यां इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ॥ २२ ॥ इति जुहुयात् ।

यजमानः—अग्नय इदं न मम। अपसेऽग्नय इदं न मम, इति वा त्यागं कुर्यात्।

अध्वर्युः—यदस्मिन्यज्ञेऽन्तरगाममन्त्रतः कर्मतो वा। अनयाऽऽहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आतृपन्तां घृतेन स्वाहा॥ २३॥ इति जुहुयात्।

यजमानः—देवेभ्य इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—आज्ञातमनाज्ञातममतं च मतं च यत्। जातवेदः संधेहि त्वꣳ हि वेत्थ यथातथꣳ स्वाहा॥ २४॥ इति जुहुयात्।

यजमानः—अग्नये जातवेदस इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि। अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वꣳ स्विष्टꣳ सुहुतं करोतु स्वाहा॥ २५॥ इति जुहुयात्।

यजमानः—अग्नये स्विष्टकृत इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु स्वाहा॥ २६॥ इति जुहुयात्।

यजमानः—अग्नये स्विष्टकृत इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यतं इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि स्वाहा॥ २७॥ इति जुहुयात्।

यजमानः—इन्द्राय मघवत इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः स्वाहा॥ २८॥ इति जुहुयात्।

यजमानः—इन्द्राय वृत्रघ्न इदं न मम, इन्द्रायाभयंकरायेदं न मम इति वा त्यागं कुर्यात्।

अध्वर्युः—आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः।

यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा ॥ २९ ॥ इति जुहुयात्।

यजमानः— इन्द्राय हरिवत इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वᳪ हि वेत्थ यथातथᳪ स्वाहा ॥ ३० ॥ इति जुहुयात्।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वᳪ हि वेत्थ यथातथᳪ स्वाहा ॥ ३१ ॥ इति जुहुयात्।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाᳪ ऋतुशो यजाति स्वाहा ॥ ३२ ॥ इति जुहुयात्।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—यद्विद्वाᳪसो यदविद्वाᳪसो मुग्धाः कुर्वन्त्यृत्विजः। अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताᳪ स्वाहा ॥ ३३ ॥ इति जुहुयात्।

यजमानः—अग्नये श्रद्धायै देव्या इदं न मम। अग्नये श्रद्धाया इति वा त्यागं कुर्यात्।

अध्वर्युः—अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य। सन्वन्त्सनिᳪ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रᳪ स्वाहा ॥ ३४ ॥ इति जुहुयात्।

यजमानः—अग्नये जातवेदस इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता पुरुत्रा। तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या स्वाहा ॥ ३५ ॥ इति जुहुयात्।

यजमानः—वरुणेन्द्रसवितृविष्णुविश्वदेवमरुद्भ्य इदं न मम,। इति त्यागं कुर्यात् ।

अध्वर्युः—यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहा ॥ ३६ ॥ इति हुत्वाऽप उपस्पृशेत् ।

यजमानः—भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम, रुद्रायेदं न मम, इति वा त्यागं कृत्वा, अप उपस्पृशेत् ।

अध्वर्युः—उद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतꣳ स्वाहा ॥ ३७ ॥ इति जुहुयात् ।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ॥ ३८ ॥ इति जुहुयात् ।

यजमानः—वरुणायेदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—भूः स्वाहा ॥ ३९ ॥ इति जुहुयात् ।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—भुवः स्वाहा ॥ ४० ॥ इति जुहुयात् ।

यजमानः—वायव इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—सुवः स्वाहा ॥ ४१ ॥ इति जुहुयात् ।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः—भूर्भुवः सुवः स्वाहा ॥ ४२ ॥ इति जुहुयात् ।

यजमानः—प्रजापतय इदं न मम, इति त्यागं कुर्यात् ।

(एता द्विचत्वारिंशदाहुतयो दर्शपूर्णमासयोः सर्वप्रायश्चित्तत्वेन दर्शपूर्णमासाध्वर्युसूत्र एव सूत्रकारेण सूत्रिताः । ततः पुनः सिंहावलोक-

नन्य.येन प्रायश्चित्तसूत्रे, इष्टेभ्यः स्वाहेत्यष्टावाहुतीर्दर्शपूर्णमासिकैः सर्वप्रायश्चित्तैर्विकल्पयेरन्, इति सूत्रयांबभूव। तस्माद्द्विचत्वारिंशदाहुतयोऽथवाऽष्टावाहुतयोऽध्वर्युणा दर्शपूर्णमासयोर्होतव्या इति फलितम्। ताश्चाष्टौ, इष्टेभ्यः स्वाहेत्यारभ्य समृद्ध्यै स्वाहेति पर्यन्तं होतव्या इति द्विचत्वारिंशदाहुतिष्वेव प्राक्पठितास्तत एवावगन्तव्याः। )

**यजमानः**—**ऋक्तो यज्ञभ्रेषप्रायश्चित्तं करिष्ये**। इति संकल्पयेत्।

**ब्रह्मा**—गार्हपत्यस्य पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्य स्रुवेणाऽऽज्यमाज्यस्थाल्या गृहीत्वा **भूः स्वाहा**, इति गार्हपत्ये जुहुयात्।

**यजमानः**—**अग्नय इदं न मम**, इति त्यागं कृत्वा

**यजुष्टो यज्ञभ्रेषप्रायश्चित्तं करिष्ये**, इति संकल्पयेत्।

**ब्रह्मा**—दक्षिणाग्नेः पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **भुवः स्वाहा**, इति दक्षिणाग्नौ जुहुयात्।

**यजमानः**—**वायव इदं न मम**, इति त्यागं कृत्वा

**सर्वतो यज्ञभ्रेषप्रायश्चित्तं करिष्ये**, इति संकल्पयेत्।

**ब्रह्मा**—आहवनीयस्य पश्चादुपविश्योपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा

**भूर्भुवः स्वः स्वाहा**, इत्याहवनीये जुहुयात्।

**यजमानः**—**प्रजापतय इदं न मम**, इति त्यागं कुर्यात्।

**अध्वर्युः**—तूष्णीमाज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा

**आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रतिदेवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्।** इति ध्रुवामाप्याय्य, अन्तर्वेदिगतं सर्वं बर्हिर्गृहीत्वाऽन्तर्वेद्यूर्ध्वस्तिष्ठन् बर्हिर्ध्रुवाया अधस्तात्कृत्वा **देवा गातुविदो गातुं वित्त्वा गातुमित**

(१) आपस्तम्बीययजमानगृहेऽध्वर्युरेव जुहुयात्। न ब्रह्मा जुहुयात्। तदा— **भूर्भुवः सुवः स्वाहा**, इति **भूर्भुवः स्वः स्वाहा**, इति स्थाने पठनीयः।

मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा। इति बर्हिरनुप्रहृत्य वाते धाः स्वाहा, इति ध्रुवया समिष्टयजुर्जुहुयात्।

यजमानः—देवेभ्यो गातुविद्भ्यो ब्रह्मण इदं न मम, इति त्यागं कुर्यात्।

अध्वर्युः—प्रवसति यजमाने यजमानभागं प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेन। इति ध्रुवायामवधाय देवा गातुविद इत्यादि पूर्ववज्जुहुयात्।

यजमानः—वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छतु यज्ञेश्वरप्रसादो म आगच्छतु। इति समिष्टयजुर्हुतमनुमन्त्र्य, सं यज्ञपतिराशिषा, इति स्वभागं प्राश्याऽऽचम्य दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत्। इति सायंदोहं प्राश्याऽऽचम्य, इदꣳहविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये। आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा। इदꣳ हविः, इति वा प्रातर्दोहं प्राश्याऽऽचामेत्।

अध्वर्युः—अग्निस्तृणीहि परि धेहि वेदिं जामिं मा हिꣳसीरमुया शयाना। होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्ने। इति होतृषदनैर्वेदिमभिस्तीर्य तूष्णीमन्तर्वेदि प्रणीता आसाद्य को वो योक्षीत्स वो विमुञ्चतु। इति मन्त्रमुक्त्वा प्रणीतासु संततामुदकधाराꣳ स्रावयेत्[1]।

यजमानः—सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः। इति प्रणीतासूदकधा-

---

(१) पौर्णमास्यां सायंदोहप्रातर्दोहप्राशनं नास्ति। अमावास्यायामसोमयाजिनोऽपि नास्ति सांनाय्याभावात्।

रायामानीयमानायां जपित्वा प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्। दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिमार्जयन्ताम्। इति तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपः सिक्त्वा समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः। इत्यन्तर्वेदि प्रणीताशेषं निनीय यद्‌प्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति। या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्म। इति मुखं विमृशेत्। एष वै दर्शपूर्णमासयोरवभृथः।

अध्वर्युः—यं देवा मनुष्येषूपवेषमधारयन्। ये अस्मदपचेतसस्तान-स्मभ्यमिहाकुरु। उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम्। द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुरु। इत्युपवेषमुत्करे पुरस्ता-त्प्रत्यञ्चमुपगूहेत्। (उपवेषगूहनं त्वेवम्—अनेन मन्त्रेणोपवेषमुत्करे पूर्वभागे प्रत्यगग्रं गूढं कुर्यात्। अग्रमुत्करे प्रवेश्य मूलं बहिर्नाव-शेषयेत्। किंतु स्थविष्ठान्मूलादारभ्य कृत्स्नं प्रवेशयेदित्यर्थः)

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्। इति गणरूपेण प्रथितानां कपालानां समूहनं कृत्वा संख्यायोद्वासयेत्।

यजमानः—यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्। इत्यध्वर्युणा सह जपेत्।

---

(१) पौर्णमास्यां प्रतिकपालयोगं मन्त्रमावर्त्य संख्यायोद्वासयेत्कपालानि, अमावास्यायामसोमयाजिन ऐन्द्राग्नस्याप्येवमेव मन्त्रावृत्तिर्यजमानोऽप्येवमेव मन्त्र-मावर्तयेत्।

ब्रह्मा[१]—तूष्णीं स्वभागं प्राश्याऽऽचम्य प्रत्यगुदगाहवनीयादवस्थाय, आज्यस्थाल्याः स्रुवेणाऽऽज्यमादायाऽऽग्नीध्रेणान्वारब्धः सन्, अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—अयसेऽग्नय इदं न मम, इति त्यागं कुर्यात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा, अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—देवेभ्य इदं न मम, इति त्यागं कुर्यात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—विष्णव इदं न मम, इति त्यागं कुर्यात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा भूः स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—अग्नय इदं न मम, इति त्यागं कुर्यात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा भुवः स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—वायव इदं न मम, इति त्यागं कुर्यात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा स्वः स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः—सूर्यायेदं न मम, इति त्यागं कुर्यात् ।

---

(१) आपस्तम्बब्रह्मा-दिवो भागोऽसि, इति स्वभागं प्राश्याऽऽचम्य, अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मन्निषद्य । सन्वन्त्सनि९ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् । प्र णो यच्छ्यभिवस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या । इत्याहवनीयमुपस्थाय यथेतं प्रत्येयात् ।

ब्रह्मा—पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा भूर्भुवः स्वः स्वाहा। इत्याहवनीये जुहुयात्।

यजमानः—प्रजापतय इदं न मम, इति त्यागं कुर्यात्।

ब्रह्माऽऽग्नीध्रश्च—ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च। यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः। इत्युपस्थाय यथेतं निष्क्रामेयाताम्।

यजमानः—विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्मः॥ १॥ विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मः॥ २॥ विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु विक्रमे निर्भक्तः स यं द्विष्मः॥ ३॥ इति दक्षिणे वेद्यन्ते सव्यं पादं पुरस्तान्नातिहरन्दक्षिणेन पदा, उत्तरोत्तरं क्रममधिकान्तरालं प्राचस्त्रीन्विष्णुक्रमान् ( पादविक्षेपान् ) प्रक्रम्य तत्रैव स्थित्वा ( तूष्णीं चतुर्थं पादं क्रान्त्वाऽवस्थाय वा ) विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः॥ ४॥ इति जपित्वा तत्रैव स्थित्वा, अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्येनानबाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनानक्रामामि॥ १॥ इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान्भ्रातृव्यानधरान्पादयाम्येनानबाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनानक्रामामि॥ २॥ विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना

वषट्कारेण वज्रेणापरजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे मत्यैनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि ॥ ३ ॥ इति विष्णुक्रमाञ्जपित्वा तत्रैव स्थित्वा ये देवा यज्ञहनः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः। ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषोऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। ग्रहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि ॥ ये देवा यज्ञहनो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनम्। इत्यतिमोक्षाञ्जपित्वा दक्षिणाऽतिक्रम्य, अगन्म सुवः सुवरगन्म संदृशस्ते मा च्छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षि सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहं पाप्मानं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः सं ज्योतिषा भूवम्। उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः। दिवैनान्विद्युता जहि

निम्रोचन्नधरान्कृधि। उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य। उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य हरिमाणं च नाशय। शुकेषु मे हरिमाणꣳ रोपणाकासु दध्मसि। अथो हारिद्रवेषु मे हरिमाणं निदध्मसि। उदगादयमादित्यो विश्वेन सहसा सह। द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम्। यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै निम्रुक्च सर्वं पापꣳ समूहताम्। इत्यादित्यमुपस्थाय, ऐन्द्रीमावृतमन्वावर्ते, इत्यात्मानं प्रदक्षिणमावर्त्य पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीः, इत्युक्त्वा समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः। इति प्रसव्यमात्मानमावर्त्य, आहवनीयमग्रेण गत्वाऽऽहवनीयस्य प्रत्यगुदगुपविश्य, समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासम्। इत्याहवनीयं समिन्धनैः प्रज्वाल्योत्थाय वसुमान्यज्ञो वसीयान् भूयासम्। यो नः सपत्नो योरणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन। इत्याहवनीयमुपस्थाय गार्हपत्यस्य पश्चादुपविश्य तूष्णीं गार्हपत्यं समिन्धनैः प्रज्वाल्योत्थाय, अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्। दधत्पोषꣳ रयिं मयि। अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमाः। इति गार्हपत्यमुपस्थाय तत्रैव स्थित्वा तामाशिषमाशासे रामचन्द्रशर्मणे ज्योति-

(१) अत्र स्वपुत्रनाम ब्रूयात्।

ष्मतीम् । इति पुत्रेणानुक्त्वा पुत्राणां द्वित्वे बहुत्वे तु प्रतिपुत्रनाम राम-चन्द्रस्थान ऊहयित्वा ज्योतिष्मतीमित्यन्तं यजुरावर्त्य ज्योतिषे तन्तवे त्वा रामचन्द्रशर्मन्ननु मा तन्वच्छिन्नो दैव्यस्तन्तुर्मा मनु-ष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषात् । इति प्रियपुत्र-नाम गृहीत्वा प्रियपुत्राणां द्वित्वे बहुत्वे तु प्रतिप्रियपुत्रनाम रामचन्द्र-स्थाने, आमन्त्रणविभक्त्योहयित्वा मानुषादित्यन्तं यजुरावर्त्य (प्रियपुत्राभावे च यजुर्लोपः कार्यः) दक्षिणाग्नेः पश्चादुपविश्य तूष्णीं दक्षिणाग्निं समिन्धनैः प्रज्वाल्योत्थाय, अग्ने वह्ने स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योनः । इति दक्षिणा-ग्निमुपस्थाय ज्योतिषे तन्तवे त्वा रामचन्द्रशर्मन्ननु मा तन्व-च्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषात् । इति प्रियपुत्रेत्यादि प्राग्वन्निर्णयेनाऽऽवर्त्य ज्योतिषे तन्तवे त्वा, इत्यन्तर्वेद्युपविश्य ज्योतिरसि तन्तवे, इति जपित्वा, पुत्राभाववता यजमानेनायं जपो न कर्तव्यः । पुत्राणां द्वित्वे बहुत्वे च प्रतिपुत्रं जपावृत्तिः कार्या, वेदशेषमुपस्थ आधाया-न्तर्वेद्यासीनः—ये देवा यज्ञहनः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषः पृथि-व्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरो-चने दिवः । ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषोऽ-न्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी

(१) अजातपुत्रो मृतपुत्रस्तथाऽप्रियपुत्रः—तामाशिषमाशासे तन्तवे ज्योति-ष्मतीमिति मन्त्रं ब्रूयात् । न द्वितीयम् । तस्यासंभवात् । तथा ज्योतिषे तन्तवे त्वाऽसावनु, ज्योतिरसि तन्तवे, इति मन्त्रद्वयलोपः । यस्य तु बहुपुत्रमध्ये कश्चि-न्मृतः, सन्त्यन्येऽन्यो वा स तु मन्त्रद्वयं ब्रूयात् । केचित्पुत्रवतः मन्त्रद्वयमपीच्छन्ति । बहुपुत्रत्वे तु स्वस्थानविवृद्ध्या नाम्नां ग्रहणं नत्वभ्यावृत्त्या तद्यथा तामाशिषमा-शासे रुद्राय सूर्याय विष्णवे ज्योतिष्मतीमिति ।

वियन्ति । गृहैश्च सर्वैः प्रजया न्वग्ने सुवो रुहाणास्तरता रजाꣳसि । ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषो दिव्यधासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः । तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनम् । इत्यतिमोक्षाञ्जपित्वा दक्षिणाऽतिक्रम्य कस्त्वा युनक्ति स त्वा विमुञ्चतु इति यज्ञं विमुच्य, अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । वायो व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । आदित्य व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । इति व्रतं विसृज्य यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम् । इति यज्ञस्य पुनरालम्भं जपित्वा प्राङुत्क्रम्य गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिद प्रमृष्यः । इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् । इति गोमतीं जपित्वा यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्व । इति जपित्वा गार्हपत्यस्य पश्चादुपविश्य वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् । इत्यप उपस्पृश्य ब्राह्मणाꣳस्तर्पयितवै । इति पारिकर्मिणः संप्रेष्येत् । अनेन दर्शयागेन भगवानग्निरूपःपरमेश्वरः प्रीयताम् । इत्युक्त्वा विहाराद्बहिरागत्य द्विराचामेत् ।

**यजमानः**—देशान्तरे वसन्नौपवसथ्येऽहनि यजनीये चाहनि विहारदेशमभिमुखो याजामानाध्वर्यवकाण्डोक्तान्सर्वानपि याजमानमन्त्रांश्च जपेत् ।

इति दर्शपूर्णमासयोस्तृतीयः प्रश्नः ।

---

(१) पौर्णमासेन—इति पौर्णमास्याम् ।

# दर्शपूर्णमासप्रयोगसंभारस्मरणम् ।

| संभारनाम | प्रयोजनम् |
|---|---|
| अग्न्यागारम् | विहाराद्यर्थम् । |
| अग्न्यायतनम् | अग्निस्थापनाद्यर्थम् । |
| जायापती | कर्मानुष्ठानार्थम् । |
| ऋत्विजः | याजनार्थम् । |
| उदकम् | आचमनाद्यर्थम् । |
| दर्भासनम् | उपवेशनार्थम् । |
| शरावाः | अग्निप्रणयनाद्यर्थम् । |
| दर्भाः | पवित्राद्यर्थम् । |
| यज्ञियकाष्ठानि | अग्निसमिन्धनाद्यर्थम् । |
| पलाशशाखा | वत्सापाकरणार्थम् । |
| असिदः | दर्भाद्याहरणार्थम् । |
| दर्भमुष्टयः | प्रस्तराद्यर्थम् । |
| रज्जुद्वयम् | दर्भसमिद्बन्धनार्थम् । |
| परिधयो बाहुमात्राः | आहवनीयपरिधानार्थाः । |
| अरत्निमात्राः सामिधेन्यः | आहवनीयसमिन्धनार्थम् । |
| आघारसमिद्द्वयम् | आघारार्थम् । |
| अनूयाजसमित् | अनूयाजार्थम् । |
| परिवासनशकलम् | सायंदोहप्रक्षेपार्थम् । |
| सवत्साः षड् गावः | सांनाय्यसंपादनार्थम् । |
| दोग्धा | गोदोहनार्थम् । |
| गोशकृत् | कुम्भीलेपनाद्यर्थम् । |
| दधि | आतञ्चनार्थम् । |
| स्फ्यः | वेद्युद्धननादिकार्यार्थम् । |
| कपालानि | पुरोडाशाधिश्रयणार्थम् । |
| अग्निहोत्रहवणी | प्रोक्षणाद्यर्थम् । |
| शूर्पम् | निर्वापाद्यर्थम् । |
| कृष्णाजिनम् | व्रीह्यवघाताद्यर्थम् । |
| शम्या | दृषदद्याधानाद्यर्थम् । |

| संभारनाम | प्रयोजनम् |
|---|---|
| उलूखलम् | व्रीह्यादिहविरावपनार्थम् । |
| मुसलम् | अवहननार्थम् । |
| दृषदुपले | व्रीह्यादिहविःपेषणार्थम् । |
| स्रुवः | आज्यावदानाद्यर्थम् । |
| जुहूः | होमसाधनम् । |
| उपभृत् | प्रयाजानूयाजाज्यधारणार्थम् । |
| ध्रुवा | सर्वयज्ञाद्याज्यग्रहणार्थम् । |
| वेदः | वेदिसंमार्जनाद्यर्थम् । |
| निर्वापपात्री | निर्वापपिष्टसंवपनाद्यर्थम् । |
| आज्यस्थाली | आज्यनिर्वापार्थम् । |
| प्राशित्रहरणम् | प्राशित्रावदानाद्यर्थम् । |
| इडापात्रम् | इडावदानार्थम् । |
| प्रणीताप्रणयनम् | अपां प्रणयनार्थम् । |
| योक्त्रम् | पत्न्याः कटिबन्धनार्थम् । |
| मदन्तीपात्रम् | जलतापनार्थम् । |
| मेक्षणम् | पिष्टसंयवनाद्यर्थम् । |
| वेदाग्राणि | पात्रसंमार्गार्थम् । |
| अन्वाहार्यस्थाली | अन्वाहार्यचरुश्रपणार्थम् । |
| उपवेषः | अङ्गारनिरूहणार्थम् । |
| पिष्टलेपफलीकरणपात्रम् | पिष्टलेपफलीकरणस्थापनार्थम् । |
| कुम्भीद्वयम् | पयःश्रपणार्थमेका । अन्या च सायंदोहार्थम् । |
| दोहनपात्रम् | गोदोहनार्थम् । |
| अभिधानी निदाने च | गोबन्धनार्थमभिधानी । निदाने च गोः पादबन्धनार्थं वत्स-बन्धनार्थं च |
| पिधानपात्रम् | दधिकुम्भ्यपिधानार्थम् । |
| यजमानभागपयःपात्रम् | याजमानशृतावदानार्थम् । |
| यजमानभागदधिपात्रम् | याजमानदध्यवदानार्थम् । |
| अग्नीद्भागपात्रम् | तद्भागस्थापनार्थम् । |

| संभारनाम | प्रयोजनम् |
| --- | --- |
| परिश्रयणम् | देवपत्नीयागसमये गार्हपत्यप्रच्छादनार्थम् । |
| संदंशत्रयम् | अङ्गारग्रहणार्थम् । |
| कस्तम्भी | शकटस्थापनार्थम् । |
| शकटः | व्रीह्यादिस्थापनार्थम् । |
| व्रीहयः | पुरोडाशार्थम् । |
| तण्डुलाः | अन्वाहार्यचर्वर्थम् । |
| आज्यम् | होमार्थम् । |
| इध्मप्रव्रश्चनानि | दक्षिणाग्नावभ्याधानार्थम् । |
| पिण्डपितृयज्ञपात्री | पिण्डपितृयज्ञियहविर्निर्वापार्थम् । |
| शिक्यम् | सायंदोहकुम्भीस्थापनार्थम् । |
| अरणीद्वयम् | (उत्तरारणी, अधरारणी) अग्निसंपादनार्थम् । |
| मन्थोपमन्थौ | मन्थनार्थम् । |
| चत्वार ऋत्विजः । | होता, ब्रह्मा, अध्वर्युः, अग्नीत् । |

येन चान्येनार्थो भवति तदपि संग्राह्यमिति यावत् ।

इति यावत्स्मरणं द०-पू०-प्र०-सं०-स्मरणम् ।

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ६ | ६ | भवन्ति परि- | भवान्त्विति परि- |
| ६ | १७ | पुरश्चरं | पुरश्चर |
| ६ | २० | विद्वांस्त्वया | विद्वाꣳस्त्वया |
| ७ | ११ | नार्थो | नार्थी |
| १८ | २६ | पृथुमात्री | पृथमात्री |
| १९ | ४ | परिगृह्णात्यमृतं | परिगृह्णात्यृतं |
| १९ | ५ | विपरातौ | विपरीतौ |
| १९ | ९ | संद्गृढि | संमृड्ढि |
| १९ | १९ | गार्हत्ये | गार्हपत्ये |
| १९ | २९ | निष्टपामीति | निष्टपामीति |
| २० | ३ | तिष्ठन्ती | तिष्ठन्तीं |
| २४ | ११ | स्रुचमुद्गृह्य | स्रुचमुद्गृह्य |
| २४ | २० | र्विष्णो | र्विष्णोः |
| २५ | २० | मनुष्या | मनुष्मा |
| २६ | ११ | —घारवभि | —घारमभि |
| २६ | २२ | अमावास्यायां | अमावास्यायां |
| २७ | २ | ते परि | ते । परि |
| २७ | ४ | उपहोमानꣳ | उपहोमानां |
| ३१ | २९ | अस्माँ | अस्माꣳ |
| ३१ | ३१ | अयँ | अयꣳ |
| ३२ | २४ | देवाँ | देवाꣳ |
| ३३ | १५ | जनाँ | जनाꣳ |
| ३३ | १७ | शाश्वती | शश्वती |
| ३३ | २० | सख्या | संख्या |
| ३४ | ४ | वशाँ | वशाꣳ |
| ३४ | ११ | याऽनु | वाऽनु |
| ३४ | १८ | ब्रूम | ब्रूमे |

